# प्रस्तावना



अयि सुरभारतीसेवासंस्कृताऽन्तःकरणाः प्रतीक्ष्यचरणाः भारतीप्रसादाऽऽसादितलब्धवैदुष्या भारतीया महानुभावाः विद्वांसः। जानन्त्येव तत्र भवन्तः श्रीमन्तः विद्वद्गणाऽग्रगण्यस्य कविमूर्धन्यस्य सुगृहीतनामधेयस्य कालिदासकृतिवर्यस्य विश्वसाहित्यसंसदि कीदृशी लब्धकाष्ठा प्रतिष्ठाऽस्तीति। यद्यपि सन्ति संस्कृतकाव्यसंसारे भारविमाघश्रीहर्षबाणभट्टादयो बहवः सूरयः कविकर्मनिर्वहणप्राप्तकीर्तयः, परन्तु तेषामस्य कविकुलगुरोः कालिदासस्य यादृशी विज्ञजनेषु समज्ञा वरीवर्त्ति, न तादृशीति, तत्तद्ग्रन्थप्रचारमाकलय्य निःशङ्कमेव शक्यते वक्तुम्।

तत्तत्कवीनां तत्तद्विषयवैशिष्ट्यप्रतिपादनाऽभिनिविष्टे—

"उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥" इति,

श्लोकेऽस्मिन् "अभ्यर्हितं पूर्वम्" इति न्यायेन तत्र भवतः कालिदासस्यैवाऽभिधान पूर्वोपात्तं दृश्यते। कालिदासस्य कृतिषु प्रसादगुणस्य यादृश आस्वाद आसाद्यते, तादृशो भारतीयानाम्न केषा चिदपि कवीनाम्। शब्दाऽर्थयोर्निरवद्यत्वं गुणालङ्कृतत्वमलङ्कारचमत्कारश्च यथाऽस्य महाकवेः उपलभ्यते, न तथाऽन्येषा कवीनामित्यपि सहृदयधौरेयसम्मत मतम्।

व्यङ्ग्याऽर्थस्य चार्थान्तराऽतिशायने सम्यग्रूपेण रसप्रकर्षप्रकाशने च यादृशी सरसताऽस्य कविवरस्य न तादृशी अपरेषामित्यपि निर्विवादो दोषाज्ञाना छन्दः।

विस्तृतविषयस्य मिताऽर्थताऽऽपादने, तथाऽपि वर्ण्यविषयस्य सुष्टुक्रमस्थापनपूर्वकमतिशयरोचकत्वनिर्माणे च यादृशमस्य कवेः कौशलं, न तथाविधमन्यदीयम्।

अकृत्रिमभावेन लोकोत्तराऽऽनन्दप्रदाने यथाऽस्य महाकवेः निष्णातत्वं, न तथाऽन्येषा कवीनामित्यपि न तिरोहितमेव काव्याऽर्थभावनाविपक्विमप्रज्ञाशालिनां प्रज्ञवर्याणाम्। कालिदासस्य कान्तासम्मितशब्दकदम्बैः सहृदयहर्षद्योतकत्वेन—

"माहिषं दधि सशर्करं पयः कालिदासकविता नवं वयः।
शारदेन्दुरबला च कोमला स्वर्गशेषमुपभुञ्जते जनाः॥" इति,

अयं श्लोको रसिकरसनानर्त्तकभूतो वर्तते। षष्ठशतकोद्भवेन बाणभट्टेन महाकविनाऽपि कालिदासस्य महत्त्वमुद्भावितम्। तथा हि—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥" इति,

साम्प्रतं कालिदासनाम्ना प्रचलिता ग्रन्थास्त्वेते—१ अभिज्ञानशाकुन्तलं, ालविकाग्निमित्रं, ३ विक्रमोर्वशीयं च, इति रूपकत्रयम् । १ कुमारसम्भवं, वंश च, इति महाकाव्यद्वयम् । १ मेघदूतम् , २ ऋतुसंहार, ३ शृङ्गारतिलकं इति खण्डकाव्यत्रितयम् । यद्यपि नलोदयादयो बहवो ग्रन्था अपि कालिदासी- श्रूयन्ते, परन्तु न ते किलाऽस्मदुद्दिष्टमहाकविप्रणीताः । कालिदासाऽभिधाना अपि : कवयः सम्भूताः । एकादशशतकोद्भवस्य महाराजाऽधिराजस्य भोजस्याऽपि एकः कालिदास आसीदिति बल्लालकविप्रणीतात् भोजप्रबन्धात् अवसीयते । सत्स्वपि बहुषु ग्रन्थेषु कालिदासस्य युरोपराष्ट्रियप्रतिष्ठाया बीजमभिज्ञानशा- लं नाटकमभूत् । यदा सर विलियम जोन्साख्येन आङ्ग्लविदुषा तस्याऽनुवादो तः, तदा तं दृष्ट्वा यूरोपदेशीया विद्वांसः पर विस्मयरसमाविष्टाः । अतिशयमो- जस्ते महाकवये कालिदासाय "भारतीय शेक्सपीयर" इत्युपाधिं च प्रदत्तवन्तः । पश्यन्तु महानुभावाः ! यूरोपीयाना विदुषां कीदृशं श्लाघनीयं गुणग्रहणप्रवण- स्ति, अनेनैव गुणग्राहकत्वमहिम्ना ते उन्नतिशिखरमारूढा वर्तन्ते । एकत्र ते पीया विद्वांसः, ये नाम स्वदेशोद्भवाना का कथा ? यत्र कुत्रस्यानामपि विदुषा- नेशं गुणगणग्रहणप्रकाशनोद्यताः सन्ति । अपरत्र ते भारतीया विद्वांसः येषां त्रमपि न तादृशी अभिरुचिर्वर्त्तते । अस्य फलमपि पारवश्यरूपं प्रत्यक्ष- दृश्यते ।

हन्त ! सन्ततमपि नितान्तमेव चेखिद्यते अशान्तं भूत्वा मामकीनं स्वान्तम् । द्देशीया जनाः महापुरुषाणां सत्कारात्मकं व्यापारं लेशमात्रमपि नाऽवगच्छन्ति । कालिदासस्यैव किं? भगवत्पादशङ्कराचार्यस्य, महाराजाऽधिराजस्य विक्रमस्य स्य च, विद्वन्मूर्धन्यस्य वाचस्पतिमिश्रस्य, श्रीहर्षस्य, बाणभट्टस्य, भारवेः, स्य च, इत्यादीनां बहूनां प्रातःस्मरणीयानां महानुभावानां स्वरूपमस्मद्दे- ः विद्वद्भिर्नावगणितम् ।

यूरोपदेशे शेक्सपीयराऽभिख्यस्य एकस्यैव कविवरस्य कृतीनां समालोचना- ः अपरिमिता ग्रन्था वर्त्तन्ते । परमस्मद्देशे अनितरसाधारणधिषणाविभ- कवितारमणीकमनरमणस्य वाग्देवतावतारस्य महाकविकालिदासस्य पिष्टपेष- दृत्वव्यापारं प्रकाशयन् हिन्दीभाषालेखकोऽपि निरङ्कुशताप्रकाशनात्मकेन ग्रन्थेन

सतामसतां वा दोषाणामुद्भावनेनैव स्वीयां दोषज्ञतां सार्थकयन् समालोचनस्य परां काष्ठां प्रतिष्ठापयति ।

स च महाकविः कालिदासः कस्मिन् समये, कतमं देशं, कतमं वंशं च स्वजनुषाऽलञ्चकार, विषयेऽस्मिन् निर्णयात्मकमितिवृत्तमस्मद्देशीयानामन्येषां पुरातनविदुषामिव अज्ञानघनसन्तमसग्रस्तत्वमित्येतत् नितान्तमेव शोचनीयं विद्यते ।

अत्र विषये मतद्वयं वर्त्तते—पुरातनमर्वाचीनञ्च । पुरातनमताऽनुयायिनः संस्कृतपण्डिताः, अर्वाचीनमताऽनुवर्तिनः आङ्ग्लदेशवास्तव्याः तदनुसारिणो भारतीया विद्वांसश्च ।

"धन्वन्तरिक्षपणकाऽमरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति श्लोकानुसारेण कालिदासः विक्रमसंवत्संस्थापकस्य उज्जयिनीनायकस्य महाराजाऽधिराजस्य विक्रमाऽऽदित्यस्य नवसु रत्नेषु अन्यतममेकमुज्ज्वलं रत्नमिति आद्यं मतम् ।

चरममताऽनुयायिनस्तु नवरत्नपरिगणिता विद्वत्परम्परा नितान्तमेवार्वाचीनामत एव न प्रामाणिकीं मन्यन्ते । तत्राऽनेकविधा विप्रतिपत्तयो वर्तन्ते, अत्र तु तासां दिग्दर्शनमेव करोमि ।

केचन न कोऽपि विक्रमादित्याऽभिधानो नरपतिरिति वदन्ति । अपरे च विक्रमादित्य इति पदवी न कस्याऽपि नृपस्य नामधेयमिति प्रतिपादयन्ति । केचित् कालिदासस्य सत्तां तृतीयशताब्द्यामासीदिति कथयन्ति । कालिदासः पञ्चमशताब्द्याः पूर्वार्द्धे प्रथमकुमारगुप्तसमये आसीदिति प्रसिद्ध ऐतिहासिक वी० ए० स्मिथमहाशयः । एवं केचित्सुधियः कालिदासस्य स्थितिमष्टमे, तथा परे द्वादशे शतके समर्थयन्ते । पाश्चात्यविदुषामपि सरविलियम जोन्साभिख्यो महोदयस्तु अस्मदीयं पुरातनं मतमेव प्रमाणीकरोति । अत्राऽहं साम्प्रतं किमपि न लिखामि । परमेतद्वक्तव्यस्य चावश्यकतां पश्यामि—यत् "नह्यमूला जनश्रुतिः" इति नयेन परम्परागतां जनश्रुतिं खण्डयितुं बलवत्तरा युक्तिरपेक्षिताऽस्तीति ।

कालिदासो ब्राह्मण आसीदित्यत्र तु नो मताऽनैक्यम् । कालिदासस्य विषये यथा कालाऽधिकरणो विवादो बहुविधः, तथैव देशाऽधिकरणोऽपि । कालिदासं केचिन्मालवीयमपरे काश्मीरदेशीयमन्ये पञ्चनदजनपदजमेके विद्वांसश्च वङ्गाऽभिजनं मन्यन्ते । एवं कालिदासस्य विषये बहुविधाः किंवदन्त्यो विस्तृताः तत्तद्देशेषु

। सर्वासामपि चर्चया ग्रन्थाकृतिवर्धनभीरुरहं छात्राणामुपयोगाऽभावेन च विर
मे अस्माद्व्यापारात् ।

कालिदासेन शिवपुराणमाश्रित्य प्रणीतमिदं कुमारसम्भवम् । कुमारसम्भवस्य
व कालिदासप्रणीत तदुत्तरभागस्तु प्रक्षिप्त इति पाश्चात्यविदुषा मतम् ।
तदन्ये न मन्यन्ते । तथा हि–यदि कविसार्वभौमेण कालिदासेनाऽन्यान्य
काव्यवत् सप्तसर्गान्तमष्टमसर्गान्तमेव वा कुमारसम्भवाख्यमिदं काव्यं प्रणीतं
, नाधिकं, तदाऽस्य कुमारसम्भवनामभागिता न स्यात्, किन्तु शिव
भिधेयभागिता स्यात् । किञ्च सप्तमसर्गान्ते–"कौतुकागारमागात्" इत्यभिद
। कविना तदुत्तरं तत्स्थाने वर्णनीयमस्तीत्युपक्षिप्तम्, तच्च तावत्पर्यन्तस्यैव
सङ्गत न स्यात् तथा द्वितीयसर्गे तारकवधोपायज्ञानार्थमेव देवाना ब्रह्म-
ने गमनेन तारकवध एव ग्रन्थस्य प्रधानफलतया वर्णनीय इत्यपि तत्सर्गा-
प्रतिभाति । पार्वतीपरमेश्वरयोर्विवाहपर्यन्तस्यैव वर्णनीयत्वे शिवविवाहोप-
कथा देवैः प्रस्ताविता स्यात् । अन्यच्च पूर्वं महामहोपाध्याय कोलाचल
ल्लिन सूरिविरचितमस्य व्याख्यानं सप्तसर्गान्तमेवोपलब्धम्, तदानीं सप्तसर्गा-
कुमारसम्भव काव्यमिति पाश्चात्त्यविद्वत्सु प्रसिद्धिरासीत्, अथ चाष्टमसर्गव्या-
नस्य लाभे काव्यमिदमष्टमसर्गान्तमेवेति तैः मन्यते । एतावता मल्लिनाथ-
नाथ न... नु ल... दुत्तर ग... न प्रामाण्यमित्यपि वक्तु न शक्यते, बहू-
पि ग्रन्थाना तैरव्याख्याततत्वेनाऽप्रामाण्यापत्तेः। अष्टमसर्गव्याख्यानमिव काला-
... पि व्याख्यानं कदाचिदुपलभ्येतेत्येतदपि कल्पयितुं शक्यत्वाच्च ।
किञ्च मल्लिनाथादिभिरपि कुमारसम्भवकाव्यस्य "आशीर्नमस्क्रिया वस्तु निर्देशो
त..." इति वस्तुनिर्देशरूपस्य महाकाव्यलक्षणस्याऽत्राभिधानात्, "सर्गैर्द्वा-
भर्युक्तमष्टादशभिरप्युते" तिमहाकाव्यस्य द्वादशसर्गाऽन्यूनत्वलक्षणप्रतिपादनाच्च
र्गान्ते "कुमारसम्भवे महाकाव्ये" इत्यादिलेखनस्य प्रायशः सर्वत्र पुस्तकेषु
च अवशिष्टभागोऽपि तेनैव प्रणीत इति प्रतीयते । अन्यथाऽस्य काव्यस्य
काव्यत्व कथकार स्यात् । एवञ्च कालिदासकविविषये "अस्ति कश्चिद् वाग्
" इतीतिहासस्य लोकप्रसिद्ध्या ऋतुसंहारनिर्माणोत्तरं तेन सर्वप्रथममस्य
... निर्माण कृतमनन्तरञ्च रघुवंशादिमहाकाव्य तेन व्यरचीति पुरातने-
... मतेन तावतैव विरच्य कवेर्निधनादिकल्पना त्वप्रामाणिक्येव ।
अथ च शिशुपालवधादिवत् तारकवधादिसंज्ञाभागित्वमस्य काव्यस्य शङ्कयितुं

न शक्यम्, कुमारस्य सम्भवो नाम भूतिर्महिमा चेति सम्भवपदस्य तन्त्रोच्चारितत्वेनोत्पत्तिमहिमातिशयरूपार्थद्वयस्योपन्यासेन कुमारस्योत्पत्तिमहिमातिशयरूपतारकवधयोर्द्वयोरर्थयोर्वर्णनीयतया शिशुपालवधादौ तदुभयाभावाच्च न तद्वत् संज्ञाप्रसक्तिरित्यपि सुधिभिर्विभावनीयमिति ।

अपरे त्वित्थमाहुः । ननु काव्ये यत् साध्यं तदनुसारेणैव काव्यसंज्ञा कर्तव्या, यथा युधिष्ठिरविजय, जानकीहरण, शिशुपालवधप्रभृतीनाम् । अत्र तु तारकासुरनिग्रहः काव्ये साध्यतया निर्दिष्टः, "तस्मिन् विप्रकृताः काले तारकेण दिवौकसः" ( २, १ ) इत्युपक्रमात्, तस्मात्तारकवध इत्येव संज्ञा कर्तव्या, तत्पर्यन्तश्च काव्यं प्रवर्तयितव्यम् । नचैतत् कृतम् । तस्मादसमञ्जसमिदं काव्यम् । अपि च कुमारोत्पत्तिपर्यन्तमपि न काव्यं कृतम्, तस्मादनुपपन्नमिदं नामापीति । अत्रोच्यते । नात्र तारकासुरनिग्रहः काव्येसाध्यः । "तदिच्छामो विभो ! स्रष्टुं सेनान्यं तस्य शान्तये" ( २, ५१ ) इति देवैः कुमारसृष्टिमात्रस्यैव ब्रह्माणं प्रति प्रार्थितत्वात् । तारकासुरनिग्रहस्तु कुमारोद्भवप्रस्तावकतया निमित्तत्वेनोपक्षिप्तः । यथा किरातार्जुनीये दुर्योधनजयः । तस्मात् कुमारसम्भव इत्येव संज्ञा युक्ता । नचैवं सति तत्पर्यन्तं काव्यं प्रवर्तयितव्यमिति वाच्यम् ।

"उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥" ( २-६६ )

इति ब्रह्मणः प्रतिवचनेन शम्भोश्चित्ताकर्षणमात्रस्यैव परमसाध्यत्वेन प्रतिपादनात् । कारणपौष्कल्ये कार्यस्यावश्यम्भाव एव ब्रह्मणस्तथानिर्देशे हेतुरिति चावगन्तव्यम् । शम्भोश्चित्ताकर्षणं पुनरष्टमे सर्गे विस्तरतः प्रतिपादितम् । यथोक्तमन्त्यश्लोके "समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः शतमगमदृतूनां साग्रमेका निशेव ॥ न तु सुरतसुखेभ्यश्छिन्नतृष्णो बभूव ज्वलनइव समुद्रान्तर्गतस्तज्जलौघैः"॥ इति। ८, ९१

उक्तञ्च पञ्चमसर्गान्ते देवीं प्रति देवेनैव "अद्यप्रभृत्यनवताङ्गि ! तवास्मि दासः क्रीतस्तपोभि"रिति । तस्मादुमारूपेणेत्युपक्रमात्, अद्यप्रभृतीति परामर्शात्, समदिवसनिशीथमित्युपसंहाराच्च, शम्भोश्चित्ताकर्षणमात्र एव तात्पर्यम् । तदुक्तं यथा-

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च, लिङ्गं तात्पर्यनिर्णये ॥" इति ।

तथा चात्राऽष्टमसर्गे सम्भोगवर्णनेन कुमारोत्पत्तेर्बिन्दूपक्षेपोऽपि कृत इति च मन्तव्यम् । यस्त्वत्र तारकासुरनिग्रहपर्यन्तं चिकीर्षितमिदं काव्यं निजसम्भोग-

वर्णनेन कुपिताया देव्याः शापादसम्पूर्णं जनितमिति कैश्चिदुक्तं, तदप्युक्तरीत्या परिहृतं वेदितव्यम्। कवेश्चिकीर्षाया एतत्पर्यन्तत्वस्य समर्थितत्वात्। किञ्च पार्वती-परमेश्वरयोः शरीरग्रहणमात्रमपि लोकानुग्रहार्थमेव। यथोक्तमत्रैव-"विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः" ( ६-२६ ) इति।

देव्या अपि शरीरग्रहणादिकं लोकानुग्रहार्थमेवेति देवीमाहात्म्यादिषु तत्र तत्र प्रतिपादितम्। त्रिविधा हि लोके जनाः मुक्ताः, मुमुक्षवः, सक्ताश्चेति। तत्र मुक्ताना कृतकृत्यत्वादेतयोर्लीलायिताना सञ्चिन्तनश्रवणादिभिः परब्रह्मानुभवतुल्यः परमाह्लादो भवतीत्यनुग्रहो भूयानेव। मुमुक्षूणा तु लीलायितश्रवणानुसन्धानादिभिरन्तःकरणशुद्धिरूपो महानुग्रहः स्पष्ट एव। सक्ताना कामिना तु चित्तावर्जनं सम्भोग शृङ्गारानुगृहीतकथाश्रवणेनैव सुकरमिति लीलागृहीतशरीरौ भगवन्ताविम प्रकारमारब्धवन्तौ। येन केनापि प्रकारेण भगवति मनसः प्रणिधानमेव मुक्तिकारणमित्युक्तं भागवते

"काम क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा।
नित्य हरौ विदधतो यान्ति तन्मयता हि ते"। इति,

महाकविकालिदासोऽपि कामिना चित्तं पार्वतीपरमेश्वरपादारविन्दात्मकं विधातुमेवोष्टमे सर्गे वात्स्यायनशास्त्रानुसारिणीं पदवीमुररीचकार। तस्माल्लोकोत्तरलौकिकनायकव्यवहारमखिलजनानुग्रहार्थमनुकुर्वतोरेतयोर्महानटयोस्तदनुगुणाना प्रबन्धाना निर्माणतद्व्याख्यानश्रवणादिभिरनुग्रह एव भूयानाविर्भवति। तदनुबद्धानि वचनानि तु स्तुतावेव पर्यवस्यन्ति।

अत्र भूमिकायामनेकविषयाणामुल्लेखनस्यातीवाऽभिलाषे विद्यमानेऽपि अनुकूलसमयाऽभावेन ग्रन्थविस्तरभीरुतया च साम्प्रतमेतावतैव च विरतो भवामि अस्मादायासात्। मयि न तादृशी योग्यता, यादृशी टीकाकृतामपेक्षिता, तत्राऽपि कविकुलगुरोः कालिदासस्य कुमारसम्भवे महाकाव्ये मामकं टीकोट्टङ्कनं साहसमेव सूचयति, परं नाऽयं स्वगौरवप्रकाशनाऽर्थं मदीयः प्रयासः; अपि तु-अपरिपक्वमतीना परिक्षाम्बुधि तितीर्षूणा छात्राणामेव विबोधनार्थम्।

एतदप्यहं जाने, यदत्र सत्वरतानिबन्धना अनवधानतामूलका योग्यताऽभावप्रभवा न्यूनत्वबीजाश्च अनेके दोषाः सञ्जाताः भवेयुरिति, तथाऽपि गुणप्रकाशनैकव्रतोपेताना परदोषोद्घाटनवाचयमाना सदाचारपरायणाना प्रतीक्ष्यचरणानामार्याणा विद्वद्वर्याणा पुरतः प्रणिपातपुरःसरं क्षमालाभार्थं दोषनिरासोपदेशप्राप्त्यर्थं च मुहुर्मुहुरभ्यर्थये।

अन्ते च यस्य कृपाकटाक्षमन्तरा किम्बहुना तृणमपि चलितुं न शक्नोति, तं निःसीमपरमकारुणिकं परब्रह्मपरमेश्वरमुमामहेश्वरं कोटिशः प्रणम्य, अहं यैः सुहृद्वरैरत्र प्रोत्साहितो, यथोचितविचारैश्च सम्भावितः, सहजसौहार्देनानुमोदितो, निर्व्याजस्नेहेन प्रेरितश्चाभूवम्, तेषां स्वनामधन्यानां सर्वेषामपि धन्यवादपुरस्सरमुपकारभारं वहन् स्वान्तेवासिने साहित्यरत्नाय पण्डित श्री श्यामनारायण पाण्डेय साहित्यशास्त्रि महोदयाय मदीयसूचनानुसारेण स्वल्पमधुरभाषापद्यरचनया स्वपरितोषमावेदयामि।

अथ च संशोधनादिसकलमपि कार्यजातं सम्यक् सम्पादयते प्रियशिष्याय काव्यतीर्थ पण्डित श्रीशेषराज शास्त्रि महोदयाय शतशः आशीर्वादं वितन्वन्, विद्याविलासमुद्रणाधिपतिभ्यः श्रेष्ठि श्रीजयकृष्णदासमहानुभावेभ्योऽनेकान् धन्यवादान् वितरामि। यैश्च विद्यार्थिजनोपकाराय मुद्रयित्वा प्रकाशतां नीतोऽयं ग्रन्थ इति।

---

वाराणसी
वसन्त पञ्चमी
१९९४

विदुषामनुवरो
भारद्वाज-
गङ्गाधर शास्त्री।

श्रीगुरुः शरणम्

मुझ पर कदाचित् उस दिवस
अतिशय मुदित निखिलेश था।
गुरुदेव गङ्गाधर सुधी का
जब मिला आदेश था ॥ १ ॥

कर रोम-रोम प्रसन्न, मन
सानन्द, आयसु—मोद से।
पद्यानुवाद कुमारसम्भव—
का किया आमोद से ॥ २ ॥

सामर्थ्य मुझ में है कहाँ
मुझमें न कोई शक्ति है।
अनुवाद यह केवल सुधी—
गुरुदेव ही की भक्ति है ॥ ३ ॥

पाठक पढ़ें समझें अगर
बहलाव मनका हो गया।
तो पद्य रचने का परिश्रम
सफल जन का हो गया ॥ ४ ॥

विनीत-शिष्य
**श्रीश्यामनारायण पाण्डेय**
साहित्यरत्न, साहित्यशास्त्री

# सर्गसप्तकपरिमितस्य कुमारसम्भवस्य कथासारः

## प्रथमसर्गे—

हिमाऽऽलयवर्णनम् । तस्य मेनया सह विवाहः । मैनाकोत्पत्तिः । दाक्षायणी देहपरित्यागपूर्वकं मेनाया पार्वतीजन्म । तद्रूपवर्णनम् । हिमालयगृहे नारदाऽऽगमनम् । नारदकृतपार्वतीपरमेश्वरयोर्भाविविवाहसूचनम् । हिमालयस्य नारदवचनात् वरान्तराऽन्वेषणतो निवृत्तिः । विधुरस्य हरस्य हिमवत्सानुप्रदेशे तपश्चरणम् । पितुराज्ञया पार्वत्या सखीसमेतया तत्परिचर्या च ।

## द्वितीयसर्गे—

तारकाऽसुरविप्रकृताना देवाना ब्रह्मलोकगमनम् । तत्र भगवतो ब्रह्मणः देवकर्तृकस्तुतिः । ततः प्रसादाऽभिमुखस्य ब्रह्मणः संप्रश्नः । ततः इन्द्रप्रेरितस्य गुरो तारकाऽसुरोपद्रववर्णनम् । ब्रह्मदेवस्य शिवसुतसकाशात् तारकाऽसुरवधकथनम् । ततः शिवसुतोत्पत्त्यर्थं देवेन्द्रकर्तृक स्मरस्मरणं, तदागमनञ्च ।

## तृतीयसर्गे—

इन्द्रमदनयोः संलापः । कामस्य पार्वत्या हराऽनुरागाऽर्थं प्रतिज्ञाकरणम् । तदर्थं समित्रपरिग्रहस्य तस्य हराश्रमप्रवेशः । तदागमनेन हराश्रमस्थितिपरिवर्तनवर्णनम् । हरे कामकर्तृकशरप्रक्षेपवर्णनम् । हरस्य तृतीयनेत्राग्निना स्मरदाहश्च ।

## चतुर्थसर्गे—

रतिविलापः । मरणोद्यताया रत्या आकाशवाण्या आश्वासनम् । कामस्य भूयो देहप्राप्तिसमयकथनं च ।

## पञ्चमसर्गे—

हताशाया गिरिजाया विषादः । पशुपतिप्राप्त्यर्थं कृततपोनिश्चयाः पार्वत्या मेनाकर्तृको निषेधः । तन्निष्फलत्वम् । पितुः प्राप्ताऽनुमतेः गौर्यास्तपस्तप्तु गौरीशिखरगमनम् तत्र तीव्रतपश्चरणम् । तपःसन्तुष्टेन शिवेन तत्परीक्षार्थं ब्रह्मचारिस्वरूपेण तत्राऽऽगमनम् । तयोःसंलापः । ब्रह्मचारिकृतहरनिन्दाश्रवणेन पार्वत्याः स्थानान्तरप्रयाणप्रयासः । शिवस्य स्वस्वरूपेणाऽविर्भावः । स्वस्य पार्वतीवश्यत्वसूचनं च ।

## षष्ठसर्गे—

हिमवतः पार्वतीयाचनाऽर्थं शिवकर्तृकं सप्तर्षिस्मरणम् । तेषामोषधिप्रस्थप्रस्थानम् । विवाहमुहूर्तस्य स्थिरीकरणम् । सप्तर्षीणां हराऽन्तिकमागत्य हिमवद्वृत्तोदन्तविज्ञापना च ।

## सप्तमसर्गे—

वधूवरयोर्वैवाहिकवेशवर्णनम् । वरयात्रिकाणाममराणामुपस्थितिः । उमामहेश्वरयोर्विवाहः । मदनस्य पुनरुज्जीवनम् । वधूवरयोः कौतुकाऽगारप्रवेशश्च ।

---

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतं

# कुमारसम्भवम्

भारद्वाज-पण्डित-श्रीगङ्गाधरशास्त्रिप्रणीत-

'पुंसवनी' टीकासहितम् ।

## प्रथमः सर्गः ।

अथ तत्रभवान् महाधीमान् कविकुलचूडामणिः प्राज्ञजनस्तुत्यजनिः चूडान्त-प्रतिभाविकासः कालिदासः सत्काव्यस्य सर्वजनाऽभिलाषविषयचतुर्वर्गफलप्राप्तिहेतु-तया पार्वतीपरमेश्वरयोरनवद्यमव्ययचरित्रपवित्रमतिशयरुच्य कुमारसम्भवाऽभिख्यं महाकाव्यं चिकीर्षः "आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" इति शास्त्रात् आदौ प्रस्तुतविषयाऽनुकूल वस्तु निर्दिशति—

**अस्त्युत्तरस्यां दिशि देवतात्मा, हिमालयो नाम नगाऽधिराजः ।**
**पूर्वाऽपरौ तोयनिधी वगाह्य, स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥**

उत्तर दिशा में देव सम गिरिराज हिमगिरि राजता ।
वह फैल पश्चिम पूर्व वन भू-मानदण्ड विराजता ॥ १ ॥

गिरीश्वरस्य दौहित्रं गिरीशस्य प्रियं सुतम् ।
षाण्मातुरानुजं देवं द्वैमातुरमुपास्महे ॥ १ ॥

या देवीं श्रुतिरूपिणीं भगवतीं मायेति वेदान्तिनो
भोगोत्पत्तिकरं प्रधानमिति या जानन्ति सत्साङ्ख्यकाः ।
ब्रह्माभिन्नतमाऽपवर्गफलदा चैतन्यसम्पादिनी
सैवाम्बा विबुधैकवेद्यसुगुणा कुर्यात् कृतौ मङ्गलम् ॥ २ ॥

ज्ञानाज्ञानविचारतो मधुरिपो ! कार्यं कृतं यन्मया
कुर्वे कर्म यदप्यहं निजधिया शौरे ! करिष्यामि यत् ।
तत्सर्वं च समर्पयामि भगवन् ! त्वत्पादपद्मद्वये
स्वामिन् ! कृष्ण ! न चास्ति मेऽत्र कृतिता कापि त्वदीयैव सा ॥३॥

यस्योपकारपरिशोधनमत्र किं स्यात् दुःशक्यमेव खलु मे जननान्तरेऽपि ।

यो मद्विधेऽल्पगुणकेऽपि दयालुरासीत् तं तातपादमनिशं प्रणमामि भक्त्या ॥४॥
संसारसागरसमुत्तरणैकसेतु श्लाघ्यं कवीन्द्रगुरुदेवमहं नमामि ।
यत्पादपङ्कजयुगार्चनकर्मणैव मत्सन्निभा अपि भवन्ति बुधप्रकल्पाः ॥ ५ ॥
श्रीमत्सद्गुरु **राम शास्त्रि** करुणासम्प्राप्तविद्यालवो
भारद्वाजकुलाब्धिकौस्तुभमणेर्दामोदरस्यात्मजः ।
प्राज्ञः कोऽपि कुमारसम्भवमहाकाव्येऽत्र **गङ्गाधरः**
टीका "**पुंसवनो**"मिमां वितनुते बोधाय विद्यार्थिनाम् ॥ ६ ॥

**अन्वयः**—उत्तरस्यां दिशि हिमालयो नाम नगाऽधिराजः पूर्वापरौ तोयनिधी वगाह्य पृथिव्या मानदण्ड इव स्थितोऽस्ति ।

**व्याख्या**—उत्तरस्याम्=उदीच्याम्, दिशि=आशायाम्, देवतात्मा=देवतास्वरूपः, हिमालयो नाम=हिमालय इति प्रसिद्धः, नगाऽधिराजः=पर्वताऽधिराजः पूर्वाऽपरौ=पूर्वपश्चिमौ, तोयनिधी=समुद्रौ, वगाह्य=प्रविश्य, पृथिव्याः=भूमेः, मानदण्ड इव=परिच्छेददण्ड इव, स्थितः=अवस्थितः, अस्ति=वर्तते। अत्रास्तीति वर्तमाननिर्देशेन परमेश्वरश्वशुरस्यास्य नित्यत्वमुक्तम् ।

**व्युत्पत्तिः**-"उत्तरस्यां दिशी"त्यनेन हिमालयस्य देवभूमित्वं "देवतात्मे"-त्यनेन स्थावरात्मत्वाऽभावश्च, ज्ञायते, वक्ष्यति च "पितुः प्रदेशास्तव देवभूमयः" (५-४५)इति । देवतात्मा=दीव्यतीति देवः, देव एव देवता, स्वार्थे तल् "तलन्तं स्त्रियाम्"इत्यनुशासनादस्य पदस्य स्त्रीलिङ्गत्वम् , देवता आत्मा यस्य सः देवतात्मा । इदं तु वक्ष्यमाणचेतनकृत्यविवाहादिघटनार्थमुक्तम् । "उत्तरस्यां दिशि देवभूमयः दक्षिणस्यां दिश्यसुरभूमयः, मध्ये मनुष्यभूमय"इति पुराणप्रसिद्धिः । हिमालयः = हिमानामालयः । नगाऽधिराजः=न गच्छन्तीति नगाः, अधिको राजा अधिराजः"कुगतिप्रादयः" इति समासः, "राजाहः सखिभ्यष्टच्" इति समासान्तष्टच् , नगानामधिराजो नगाऽधिराजः । पूर्वाऽपरौ=पूर्वश्चाऽपरश्च पूर्वाऽपरौ तौ । तोयनिधी=तोयानां निधिः तोयनिधिः, तौ। वगाह्य='अवगाह्य' इत्यत्र भागुरिमतेन अल्लोपः। मानदण्डः=मानस्य दण्डः मानदण्डः, "मानम्" इत्यत्र भावे ल्युट् ।अथवा मीयतेऽनेनेति मानं, करणे ल्युट् , मानश्चाऽसौ दण्डो मानदण्डः=आयामपरिच्छेदकदण्डः । पूर्वपश्चिमसमुद्रावगाहित्वं च हिमालयस्य ब्रह्माण्डपुराणेउक्तम्-"कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ । पूर्वपश्चिमगावेतावर्णवान्तरुपस्थितौ" इति ॥

अत्र पताकावृत्तनायकभूतस्य हिमवतो निर्देशात् वस्तुनिर्देशः । वस्तुनिर्देश-

मात्रोपक्रमेष्वपि काव्येषु कवेर्मानसिको नमस्क्रियात्मको मङ्गलाचारः कल्पनीयः। तस्य शिष्टाचारसिद्धत्वात् । अत्र प्रकृतस्य = प्रकरणेन प्रस्तुतस्य उपमेयस्येत्यर्थः, तादृशस्य हिमालयस्य उभयसमुद्रव्याप्तिसाम्यात्, परात्मना=पृथिवीमानदण्डत्वेन सम्भावनात् उत्प्रेक्षाऽलङ्कारः । तल्लक्षण च साहित्यदर्पणे यथा—

"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति ।

अस्मिन् सर्गे प्रायेण वृत्तमुपजातिः । कुत्र चिदिन्द्रवज्रोपेन्द्रवज्रे च । इन्द्रवज्रालक्षणं—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" । उपेन्द्रवज्रालक्षणम्—"उपेन्द्रवज्रा जतजास्ततो गौ" इति । इन्द्रवज्रोपेन्द्रवज्रयोः साङ्कर्याच्च उपजातिर्भवति । उक्तं च—

"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ।

अत्र च श्लोके प्रथमतृतीयौ चरणाविन्द्रवज्राया, द्वितीयचतुर्थौ चरणावुपेन्द्रवज्राया ज्ञेयौ ।

अस्य महाकाव्यस्य नाम कुमारसम्भव, तदर्थस्तु—कुमारस्य ( स्कन्दस्य ) सम्भवः ( उत्पत्तिर्महिमातिशयश्च ) यत्र तत् । इत्थं व्यधिकरणबहुव्रीहिसम्भवं कुमारसम्भवपद ज्ञेयम् । षष्ठीतत्पुरुषाश्रयणे तु लक्षणापत्तेर्दुर्वारता इति बोध्यम् महाकाव्यलक्षणं च—

"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" इति ।

**भावार्थः**—उत्तरककुभि देवतास्वरूपः हिमालयनामकः पर्वतश्रेष्ठः पूर्वसमुद्रादारभ्य पश्चिमसमुद्रपर्यन्त विस्तीर्णः, भूमेः परिच्छेदको दण्डः ( गज ) इव वर्तत इत्यर्थः । मानदण्डो हि मेयेन तुल्यपरिमाणो भवतीति यावत् ।

भाषा—उत्तर दिशा में देवतास्वरूप हिमालय नामक पर्वतों का राजा पूर्व और पश्चिम समुद्र में प्रविष्ट होकर पृथ्वी के मानदण्ड की तरह विद्यमान है ॥१॥

अतः परं षोडशभिः श्लोकैर्हिमालयं वर्णयति । तत्र पर्वताऽधिराजत्वं निर्वोढुमाह—

**यं सर्वशैलाः परिकल्प्य वत्सं, मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च, पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥**

**गो-भूमि हिम गिरि-वत्स दोग्धा गिरि सुमेरु बना चतुर ।**
**पृथु-आज्ञया दोहन किया गिरि वृन्दने मणिगण प्रचुर ॥ २ ॥**

**अन्वयः**—सर्वशैलाः यं वत्सं परिकल्प्य दोहदक्षे मेरौ दोग्धरि स्थिते (सति)

भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां धरित्रीं दुदुहुः ।

**व्याख्या**—सर्वशैलाः=सकलपर्वताः मन्दरादय इत्यर्थः, यं=हिमालयं, वत्सं परिकल्प्य=वत्सत्वेन कल्पयित्वा दोहदक्षे=दोहननिपुणे, मेरौ=सुमेरौ, दोग्धरि=दोहके, स्थिते = वर्तमाने ( सति ), भास्वन्ति=कान्तिमन्ति ("महौषधीः" इत्यस्याऽपि विशेषणमेतत्, तत्र च "कान्तिमतीः" इति पर्यायः प्रदेयः) रत्नानि=मरकतपद्मरागादिमणीन् स्वजातिश्रेष्ठवस्तूनि च, महौषधीश्च=सञ्जीविन्यादीश्च, पृथूपदिष्टां=वैन्योपदिष्टां, धरित्रीं=पृथिवीं, दुदुहुः दुग्धवन्तः ॥

**व्युत्पत्तिः**—नचाऽत्र 'यम्' इत्यस्य साकाङ्क्षपदस्य तच्छब्दोपादानाऽभावेन प्रयुक्तत्वेन "यत्तदोर्नित्यसम्बन्ध" इति न्यायस्य उल्लङ्घितत्वेन च दोषत्व शङ्क्यम्, पूर्वमेवाऽध्याहृततच्छब्देन हिमालयशब्देनैवाकाङ्क्षानिवृत्तेः । तदुक्तम्—

"यत्तदादेरुपादानं क्रियाभ्याससमुच्चयौ ।
क्रियासमभिहारश्च वाक्यार्थान् युज्यते मिथः" इति ।

सर्वशैलाः=सर्वे च ते शैलाः सर्वशैलाः "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति समासः । दोहदक्षे=दोहनं दोहः, दुह्धातोः "अकर्त्तरि च कारके सञ्ज्ञायाम् ॥ ३।३।१९॥" इति घञ्, दोहे दक्षो दोहदक्षस्तस्मिन् । दोग्धरि=दोग्धीति दोग्धा तस्मिन्, 'ण्वुल्तृचौ" इति दुह्धातोस्तृच् । "स्थिते सति" इत्यत्र "यस्य च भावेन भावलक्षणम्" इति सप्तमी । पृथूपदिष्टां=पृथुनोपदिष्टा पृथूपदिष्टा, ताम् । पृथुर्नाम नारायणांशभूतो राजा, तेनोपदिष्टाम् ।

"वेनो नामाभवद्राजा दुश्शीलो दुष्पराक्रमः । तं शप्त्वा मुनयो जग्मुः पीडितास्तदुपद्रवैः ॥
राजाभावात्ततो जाता धरित्री दुर्जनाकुला । ततस्ते मुनयः सर्वे सञ्चिन्त्य मनसा हरिम् ॥
ममन्थुस्तस्य वेनस्य गतप्राणं कलेवरम् । तस्मादभून्महातेजा अरणेरिव पावकः ॥
नारायणांशसम्भूतः पृथुः पृथुपराक्रमः" ॥ श्री० भा० ॥ ४ ॥

इति भागवतप्रसिद्धायाः पृथूत्पत्तेः सक्षेपः । गोरूपधरामिति शेषः । धरित्रीमित्यत्र अपादानाऽविवक्षायाम् "अकथितं च" इति गौणकर्मत्वम् । भास्वन्ति=प्रशस्ता भा अस्ति येषां तानि भास्वन्ति "तदस्यास्त्यस्मिन्निति मतुप्" इति भाश्शब्दान्मतुप् । भास्वन्ति च भास्वत्यश्च भास्वन्ति "नपुंसकमनपुंसकेनैकवच्चाऽस्यान्यतरस्याम्" इति नपुंसकैकशेषः । रत्नम्="रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । महौषधीः=मह्यन्ते पूज्यन्ते इति महत्यः । "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च" इति शतृवन्निपातः, ततः स्त्रीत्वविवक्षायां "उगितश्च" इति

ङीप् । महत्यश्च ता ओषध्यः, महौषध्यः, ता महौषधीः । "ओषध्यः फलपाकान्ता" इत्यमरः । महौषधीश्च=सञ्जीवनीप्रभृतीश्च, दुग्धत्वेन परिणताः इति शेषः । "ताः क्षीरपरिणामिनीः" इति विष्णुपुराणम् । दुह्धातोः "दुहियाचि०" इत्यादिना द्विकर्मकत्वम् । दुहेः स्वरितेत्त्वेऽपि अकर्त्रभिप्रायविवक्षाया परस्मैपदम् । प्रधानकर्मणि 'रत्नानि' इत्यत्र "महौषधीश्च" इत्यत्र च "कर्तुरीप्सिततमं कर्म" १ । ४ । ४६ इति कर्मसञ्ज्ञा, ततः "कर्मणि द्वितीया" इति द्वितीया । दुदुहुरित्यत्र णिजर्थोऽन्तर्भूतो ज्ञेयः, अन्यथा सुमेरौ दोग्धृत्वनिर्देशोऽनुपपन्नः स्यात् । हिमालयस्य वत्सत्वनिर्देशात् । पृथिव्याः पशुरूपधारणं पुरावृत्तप्रख्यातम् । पूर्वस्मिन्काले पृथुर्नाम नरपतिः बुभुक्षापीडिताना प्रजानां भोजनसिद्ध्यर्थे धेनुरूपिणीं पृथ्वीं प्रजाभिः स्वेप्सितमर्थं दोहयामास इति–भागवतप्रसिद्धा कथाऽनेन वाक्येनोच्यते । अत्र हिमालयस्य वत्सत्वनिर्देशात् पृथ्वीसारभूतरत्नादिग्राहित्वमस्य गम्यते । "तर्णकनिपीतशेष दोहका उपयुञ्जत" इति न्यायात् । अतो हिमालयस्य स्वजातिश्रेष्ठत्वमनेन श्लोकेन प्रतिपाद्यते । तथा चोक्तम्—

सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः । सर्वकामदुघा पृथ्वीं दुदुहुः पृथुभाविताः'

( श्री० भा० ४–१८–२६ )

अत्र हिमालयवर्णनस्य प्रकरणोपस्थिततत्वात् हिमालयगतौषधिरत्नानां द्वयानामपि प्रकरणोपस्थितत्वात् तेषा दोहनक्रियारूपतुल्यधर्मसम्बन्धात् ( औपम्यस्य व्यङ्ग्यत्वात् ) केवलप्राकरणिकविषयस्तुल्ययोगितानामाऽलङ्कारः । तल्लक्षण यथा साहित्यदर्पणे—

"पदार्थाना प्रस्तुतानामन्येषा वा यदा भवेत् ।
एकधर्माऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता" इति ।

अन्येषाम्=अप्रस्तुतानाम्, धर्मः=गुणक्रियास्वरूपः ॥

**भावार्थः**–पुरा किल राजा पृथुः क्षुत्क्षामदेहाना प्रजाना हिताय गोरूपा पृथिवीं तानि तानि रत्नानि समदूदुहत् । तत्र च तेषु वर्गेषु यथोचितं महान्तो दोग्धारः श्रेष्ठाः वत्साश्च परिकल्पिता आसन् । तदनुसारेण सर्वे पर्वताः सुमेरुपर्वतं दोग्धारं कृत्वा हिमालय च वत्स परिकल्प्य पृथुराजस्याज्ञया पृथिवीं मरकतपद्मरागमौक्तिकप्रभृतीन् मणीन् मृतसञ्जीविनीप्रभृतीः औषधीश्च दोहयामासुरिति भावः ।

**भाषा**—पूर्वकाल मे पृथु राजा ने प्रजा के हित सिद्धि के लिये गोरूप पृथ्वी से अनेक रत्नों का दोहन किया था । उस समय स्वस्ववर्गो में जो श्रेष्ठ था, वही

दुहनेवाला तथा बछवा बनाया गया था । तदनुसार सब पर्वतों ने स्वजाति श्रेष्ठ सुमेरु को दूहने वाला और हिमालय को बछवा मानकर पृथुराज की आज्ञा से पृथिवी से मरकतादिक अनेक मणियों का और मृतसञ्जीवन्यादिक अनेक जड़ी बूटियों का दोहन किया था ॥ २ ॥

ननु हिमदूषितस्य हिमालयस्याऽत्यन्तमनभिगम्यत्वात्सकलमपि सौभाग्यं विफलतोपेतमित्याशङ्क्य स्वयमेव समाधत्ते—

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।**
**एको हि दोषो गुणसन्निपाते, निमज्जतीन्दोः किरणेष्विवाङ्कः ॥३॥**

**उसकी रत्नमय रम्यता का हिम हुआ नाशक नहीं ।**
**क्या शशि कलङ्क अपार आभा का हुआ बाधक नहीं ! ॥ ३ ॥**

**अन्वयः**—अनन्तरत्नप्रभवस्य यस्य हिमं सौभाग्यविलोपि न जातम् । हि यतः एको दोषो गुणसन्निपाते इन्दोः किरणेषु अङ्क इव निमज्जति ।

**व्याख्या**-अनन्तरत्नप्रभवस्य=अपरिमितोत्तमवस्तूत्पत्तिस्थानस्य, यस्य=हिमालयस्य, हिमं=तुषार (कर्तृपदमेतत्), सौभाग्यविलोपि=सौन्दर्यविनाशकं, न जातम्=न अभूत् , हि=यस्मात् कारणात् एकः=एकाकी, दोष=दूषणम् , गुणसन्निपाते = गुणसमूहे, इन्दोः=चन्द्रमसः, किरणेषु=रश्मिषु अङ्क इव = कलङ्क इव, निमज्जति=न्यग्भवति, तिरस्कृतो भवतीत्यर्थः । अन्तर्लीयत इति यावत् ।

**व्युत्पत्तिः**—अनन्तरत्नप्रभवस्य=अविद्यमानः अन्तः येषां तानि अनन्तानि अपरिमितानि "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिः, अनन्तानि च तानि रत्नानि, अनन्तरत्नानि "विशेषणं विशेष्येण बहुलम्" इति कर्मधारयः, प्रभवति अस्मादिति व्युत्पत्या प्रोपसर्गपूर्वकाद् भूधातोः "ऋदोरप्" इति अप्प्रत्ययेन प्रभवः सिद्ध्यति । अनन्तरत्नानां प्रभवः अनन्तरत्नप्रभवः, "षष्ठी" इति षष्ठीतत्पुरुषः । तस्य अनन्तरत्नप्रभवस्य । अत्र रत्नशब्दः स्वजातिश्रेष्ठवाची । "रत्नं स्वजातिश्रेष्ठेऽपी"त्यमरः । उमाख्यस्य कन्यारत्नस्य, वैदूर्यादीनां मणिरत्नानां, देवदारुप्रभृतीनां वृक्षरत्नानां, मृतसञ्जीविनीप्रभृतीनाम् औषधिरत्नानां, गङ्गादीनां सरिद्रत्नानां, सोमलताप्रभृतीनां यज्ञद्रव्यरत्नानां च प्रभवस्य जन्मकारणभूतस्येत्यर्थः । सौभाग्यविलोपि = सुभगस्य भावः सौभाग्यं "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । सौभाग्य विलुम्पति तच्छील इति सौभाग्यविलोपि "सुप्यजातौ णिनिस्ताच्छील्ये"इति णिनिः।

जातम्=जनीधातोः कर्त्तरि क्त. । गुणसन्निपाते=गुणाना सन्निपातो गुणसन्निपातस्त-स्मिन् । इन्दोः = "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः । अङ्कः= "कलङ्काङ्कौ लाञ्छनं च" इत्यमरः । अल्पो दोषो गुणसमूहं न पराजयते, किन्तु तैरेव दोषस्य पराभवः । अत्रोपमा-इन्दोः किरणेषु अङ्क इवेति । अथोपमाऽनुप्राणितोऽर्थान्तरन्यासालङ्कारः । उत्तरार्द्धगतसामान्यवाक्येन पूर्वार्द्धगतविशेषवाक्यस्य समर्थनात् । तल्लक्षणं चोक्त साहित्यदर्पणे —

"सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः" इति ।

वस्तुतस्तु विकस्वरालङ्कार एव । यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषणान्तरमुपमारीत्याऽर्थान्तरन्यासविधया वा विन्यस्यते, तत्र विकस्वरालङ्कारः तल्लक्षणं च—

"यस्मिन् विशेषसामान्यविशेषाः स विकस्वर" इति ।

**भावार्थः**—जगत्सुन्दरस्य चन्द्रमसः किरणेषु कलङ्क इव नानारत्नोत्पादकस्य हिमालयस्य हिमजाड्यं सौन्दर्यध्वंसक न भवति, बहूना गुणाना समुदाये पतितोऽप्येको दोषस्तिरस्कृतः सन् न विभाव्यत इति भावः ।

**भाषा**—असङ्ख्य रत्नों के होने से हिमालय का बर्फ सौन्दर्य का नाशक नहीं हुआ, क्यों कि एक दोष गुण के समुदाय में चन्द्र की किरणों में कलङ्क की तरह लीन ( अदृष्ट ) हो जाता है ॥ ३ ॥

अथ शृङ्गाराङ्गभूताङ्गरागास्पदत्वेनाप्यस्य सर्वपर्वतोत्कर्षत्वमाह—

**यश्चाऽप्सरोविभ्रममण्डनानां, सम्पादयित्रीं शिखरैर्बिभर्त्ति ।**
**बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥**

**घन खण्ड रँगता अप्सरा-तन को विभूषण दे सुघर ।**
**सन्ध्या अकालिक सम शिखर से धातुमत्ता-धारकर ॥ ४ ॥**

**अन्वयः** यः अप्सरोविभ्रममण्डनाना सम्पादयित्रीं बलाहकच्छेदविभक्तरागा धातुमत्ताम् अकालसन्ध्यामिव शिखरैर्बिभर्ति ।

**व्याख्या**—यः=हिमालयः, अप्सरोविभ्रममण्डनानाम्=स्वर्वेश्याविलासालङ्करणाना, यद्वा स्वर्वेश्याविपरीतन्यासलङ्करणानाम् । सम्पादयित्रीं=कर्त्रीम् , बलाहकच्छेदविभक्तरागां=मेघखण्डसङ्क्रमितरागाम् , धातुमत्तां=सिन्दूरगैरिकादिधातुयुक्ताम् , अकालसन्ध्यामिव=अनियतसमयप्राप्तसन्ध्यामिव, शिखरैः = कूटैः, बिभर्त्ति=धारयति ।

**व्युत्पत्तिः**-अप्सरोविभ्रममण्डनानाम्=अप्सु सरन्तीति अप्सरसः । "स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखा." इत्यमराऽनुशासनाद्बहुवचनान्तः अप्सरः शब्दः । क्वचित्त्वस्य एकवचनान्तोऽपि प्रयोगो दृश्यते, यथा कालीदासकृतविक्रमोर्वश्या-"ततः प्रविशत्यपटीक्षेपेण अप्सराः" इति । अप्सरसा विभ्रमः, विलासो विपरीतन्यासो वा, यथोक्तं साहित्यदर्पणे—

"त्वरया हर्षरागादेर्दयितागमनादिषु ।
अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः" इति ।

अप्सरोविभ्रमेण मण्डनानि अप्सरोविभ्रममण्डनानि, तेषां, हिमालयः सिन्दूरादिभिर्धातुभिः अप्सरोविलासभूषणं साधयतीति भावः । यद्वा हिमालयगतसिन्दूरगैरिकादिरक्तिमादर्शिन्यः अप्सरसः सायङ्कालागमनभ्रान्त्या अलङ्करणार्थं त्वरा कुर्वन्तीति भावः । तथात्वे सति भ्रान्तिमदलङ्कारो व्यज्यते ( न तु अभिधीयते= अभिधावृत्या प्रतिपाद्यते) । अप्सरोविभ्रममण्डनानाम् इत्यत्र "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । सम्पादयित्रीं=सम्पादयतीति सम्पादयित्री, ताम् , समुपसर्गपूर्वात् णिजन्तात्पदधातोः "ण्वुल्तृचौ" इति तृचि "ऋन्नेभ्यो ङीप्" इति ङीप् । बलाहकच्छेदविभक्तरागाम् = वारीणा वाहका बलाहकाः "पृषोदरादीनि यथोपदिष्टम्"इति साधुत्वम् । बलाहकाना छेदाः=बलाहकच्छेदाः, तेषु विभक्तः, बलाहकच्छेदविभक्तः रागः यया सा बलाहकच्छेदविभक्तरागा, ताम् । "अनेकमन्यपदाऽर्थे"इति बहुव्रीहिः । इदं विशेषणद्वयं सन्ध्यायामपि निवेशनीयम् । धातुमत्ताम् = धातवः सन्ति यस्य स धातुमान् , "तदस्यास्त्यस्मिन्निति मतुप्" इति नित्ययोगे मतुप् । धातुमतो भावः धातुमत्ता ताम् । "तस्य भावस्त्वतलौ" इति तल् । धातुमत्तामित्यत्र मत्तारूपे पदांशे निहतार्थाऽभिधानो दोषः । तद्दोषलक्षणञ्च उभयार्थस्य शब्दस्य ( शब्दैकदेशस्य वा ) अप्रसिद्धेऽर्थे प्रयोगः । यथाऽत्र मत्ताशब्दस्य मतुबन्तात्तल् प्रत्यये सत्यपि कामुकार्थे निहतार्थत्वम् । अकालसन्ध्यामिव=न कालः अकालः "नञ्" इति समासे "नलोपो नञः" इति नञो नलोपः। अकाले सन्ध्या इति अकालसन्ध्या, ताम् ।। "सप्तमी शौण्डैः" इति सूत्रस्य योगविभागात् , योगविभागस्वीकाराऽभावपक्षे "सह सुपा" इति वा समासः । शिखरैः = "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः । अत्र सन्ध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा । तल्लक्षणं यथा—

"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।

वाच्या प्रतीयमाना सा प्रथम द्विविधा मता ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्य द्वयोरपि" ॥ इत्यादि ।

**भावार्थः**—हिमालयो देवाङ्गनाना विलासेन क्रियमाणानामलङ्काराणा सम्पादयित्रीं मेघशकलेषु सक्रमितरागा धातुसम्पदा सूर्यास्तमयकालव्यतिरिक्तकाल-सम्भवा सन्ध्यामिव शिखरैर्दधातीति भावः ।

**भाषा**—हिमालय अप्सराओं के विलास के अलङ्कारों का सम्पादन करने वाली और मेघके टुकड़ों में रँग का सक्रमण करने वाली ऐसी धातुमत्ता (धातु-मान् के भाव) को असमय में प्राप्त सन्ध्या की तरह शिखरों से धारण करता है ॥४॥

हिमालयस्य सर्वकालरमणीयत्वमाह—

**आमेखलं सञ्चरतां घनानां, छायामधः सानुगतां निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते, शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥५॥**

गिरि मध्य-घन छाया सुखद में सिद्ध साधु निवास हैं ।
बरसात में पर वे शिखर पर समुद्र करते वास हैं ॥ ५ ॥

**अन्वयः**—सिद्धाः आमेखल सञ्चरता घनानामधः सानुगता छाया निषेव्य वृष्टिभिः उद्वेजिताः ( सन्तः ) यस्य आतपवन्ति शृङ्गाणि आश्रयन्ते ।

**व्याख्या**—सिद्धाः = विश्वावस्वादिदेवयोनिविशेषाः । आमेखलम् = नितम्बपर्यन्तम् , सञ्चरता=सञ्चरण कुर्वताम् , घनाना = मेघानाम् , अधः सानुगताम् = अधःप्रस्थप्राप्ता, छायाम्=अनातपम् , निषेव्य=नितराम् ( उष्णबाधानिवर्तनपर्यन्तम् ) सेवित्वा । उद्वेजिताः=पीडिताः ( सन्तः ), यस्य = हिमालयस्य, आतपवन्ति = आतपयुक्तानि, शृङ्गाणि = शिखराणि, आश्रयन्ते = सेवन्ते ।

**व्युत्पत्तिः**—सिद्धाः = "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः । आमेखलम्=मेखलाभ्यः आ, आमेखलम् "आङ् मर्यादाऽभिविध्योः" इत्यव्ययीभावः । "प्रथमानिर्दिष्ट समास उपसर्जनम्" इत्याङः उपसर्जनसञ्ज्ञा, अस्तस्य "उपसर्जनं पूर्वम्"इति पूर्वप्रयोगः ।"मेखला खण्डबन्धे स्यात्काञ्ची शैल-नितम्बयोः" इति विश्वः । सञ्चरता = सञ्चरन्तीति सञ्चरन्तस्तेषाम् , समुपसर्गपूर्व-काचरधातोः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति शतृप्रत्ययः । अधः सानुगताम्=अधः स्थितानि सानूनि अधःसानूनि "शाकपार्थिवादीना सिद्धय उत्तर-पदलोपस्योपसङ्ख्यानम्" इति मध्यपदलोपी समासः, अधःसानूनि गता अधःसानु-

गता, ताम् । "द्वितीया श्रितातीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुषः । छायाम्—"छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप" इत्यमरः । वृष्टिभिः=वर्षणं वृष्टिः "स्त्रियां क्तिन्" इति भावे क्तिन् । "वृष्टिर्वर्षम्" इत्यमरः । आतपवन्ति=आतपोऽस्ति येषां तानि आतपवन्ति, तानि ( द्वितीयान्तम् ) । "तदस्यास्त्यस्मिन्निति मतुप्"इति मतुप् । श्लोकेनाऽनेन मेघमण्डलादप्यधिकमस्य औन्नत्यं ज्ञायते । अत्र काव्यलिङ्गमलङ्कारः, "वृष्टिभिरुद्वेजिता"इति पदद्वयस्य "आतपवन्ति" इति पदस्य च शृङ्गाश्रयणे कारणत्वेनोपादानात् । काव्यलिङ्गलक्षणं च साहित्यदर्पणे उक्तम्—

"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ।

**भावार्थः**—हिमवच्छिखरेषु वर्तमाना विश्वावसुप्रभृतयो देवयोनिविशेषाः सिद्धाः, पूर्वमातपोद्वेजिताः सन्तः, किञ्चित्कालमधो वर्तिनो भूत्वा, मध्यसानुप्रदेशे सञ्चरतां मेघानां छायामातपबाधानिवर्तनपर्यन्तं सेवित्वा, ततो वृष्टिभिः शीतबाधाया जायमानाया, पुनश्चातपवन्तं हिमवच्छिखरप्रदेशमेवाश्रयन्त इति भावः ।

**भाषा**—हिमालय के उपरी शिखरों पर रहनेवाले विश्वावसुप्रभृति सिद्ध लोग पहिले धूप की कड़ी गर्मी से घबड़ा कर कुछ देर नीचे आने पर मध्य शिखर में रहनेवाले मेघों की छाया का सेवन कर मेघकी वृष्टि से अधिक जाड़ा लगने पर फिर से घाम वाले ऊपर के शिखरों पर ही चले जाते हैं ॥ ५ ॥

सत्स्वपि सर्वेषु रत्नेषु हिमालये गजमुक्तानां प्राचुर्यमाह—

**पदं तुषारस्रुतिधौतरक्तं, यस्मिन्नदृष्ट्वाऽपि हतद्विपानाम् ।**
**विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ६ ॥**

**हत–दन्ति–हरि–पद–चिन्ह बिल्कुल धुल गया हिम से अगर ।**
**पर नख–पतित–मोती किरातों को बताते हैं डगर ॥ ६ ॥**

**अन्वयः**—यस्मिन्किराताः तुषारस्रुतिधौतरक्तं हतद्विपानां केसरिणां पदमदृष्ट्वाऽपि नखरन्ध्रमुक्तैर्मुक्ताफलैः मार्गं विदन्ति ।

**व्याख्या**—यस्मिन्=हिमालये, किराताः=शबराः, तुषारस्रुतिधौतरक्तं=हिमस्रवणप्रक्षालितरुधिरं, हतद्विपानां=मारितगजानां, केसरिणां=सिंहानाम् पदं=पादप्रक्षेपस्थानम् , अदृष्ट्वाऽपि=अनवलोक्याऽपि, नखरन्ध्रमुक्तैः=नखरच्छिद्रस्खलितैः, मुक्ताफलैः = गजमौक्तिकैः, मार्गं=पन्थानं, विदन्ति=जानन्ति ।

गजेन्द्रेभ्योऽपि मुक्तानामुत्पत्तिरुक्ताऽगस्त्येन—

"द्विपेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि"इति ।

**व्युत्पत्तिः**—किराताः=किरम् अरण्यस्य पर्यन्तदेशम्, अतन्ति ( अत सातत्यगमने ) नैरन्तर्येण गच्छन्ति, इति किराताः । "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः । तुषारस्रुतिधौतरक्त=स्रवणं स्रुतिः, स्रुधातोः "स्त्रियां क्तिन्" इति भावे क्तिन्प्रत्ययः । "तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः" इत्यमरः । तुषाराणां स्रुतयः तुषारस्रुतयः, तुषारस्रुतिभिर्धौतं तुषारस्रुतिधौतं, "तृतीया तत्कृताऽर्थेन गुणवचनेन" अत्र तृतीयेति योगविभागात्तृतीयातत्पुरुषः । तुषारस्रुतिधौतं रक्तं यस्य तत् तुषारस्रुतिधौतरक्तं तत् । अतो दुर्विज्ञेयमिति भावः। हतद्विपानां=द्वाभ्यां पिबन्तीति द्विपाः "सुपि स्थः" इत्यत्र सुपीति योगविभागात् द्व्युपपदपानार्थकपाधातोः कप्रत्यये "आतो लोप इटि च" इति सूत्रेण आलोपे च कृते सति द्विपपदसिद्धिः । हता द्विपा यैस्ते हतद्विपास्तेषाम् । केसराः ( सिंह-स्कन्धप्रदेशस्थानि रोमाणि ) सन्ति येषां ते केसरिणः, तेषाम्, "अत इनिठनौ" इति केसरशब्दान्नित्ययोगे इनिप्रत्ययः । पदम्="पदमङ्घ्रौ" इत्यारभ्य "चिह्ने-ऽङ्घ्रिविन्यासे" इति केशवः । अदृष्ट्वा = न दृष्ट्वा अदृष्ट्वा, न चाऽत्र ल्यपा भाव्य मिति शङ्क्यम्, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इत्यत्र "अनञ्पूर्वे" इत्युक्तेः । नखरन्ध्रमुक्तैः=नखानां रन्ध्राणि नखरन्ध्राणि "नखोऽस्त्री नखरोऽस्त्रियाम्" "छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः" इत्युभयत्राऽप्यमरः । नखरन्ध्रेभ्यो मु-क्तानि नखरन्ध्रमुक्तानि, तैः । "नखरन्ध्रेभ्य" इत्यत्र "ध्रुवमपायेऽपादानम्" इत्य-पादानसंज्ञा, "अपादाने पञ्चमी" इति पञ्चमी, ततः "पञ्चमी भयेन" इत्यत्र "प-ञ्चमी"ति योगविभागाद्योगविभागस्वीकाराऽभावपक्षे "सह सुपा" इति समासः । न चाऽत्र "अपेताऽपोढमुक्तपतितापत्रस्तैरल्पशः" इति सूत्रेण समास इति शङ्कनीयं, तत्र "अल्पश" इत्युपादानसामर्थ्यात् तत्रोदाहृतेभ्योऽन्यत्र अस्य निरवकाशत्वात् । मुक्ताफलैः=मुक्ता एव फलानि मुक्ताफलानि तैः "मयूरव्यंसकादयश्च" इत्यत्र मयूरव्यंसकादेराकृतिगणत्वात् रूपकसमासः । अत्रोदात्तमलङ्कारः । दर्श-नसमय एवादाय रक्षितव्यानां मौक्तिकानां सिंहमार्गप्रदर्शनोपक्षीणत्वप्रतिपादनेन मुक्तासम्पदामुपादानात् । तल्लक्षणं यथा—

"लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते" इति ।

दुत्तिष्ठतीति दरीमुखोत्थः तेन "आतश्चोपसर्गे" ३।१।१३६ इति कर्तरि कः। "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णः । "समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः। कीचकरन्ध्राणि, "कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः। कीचकरन्ध्राणां भागाः कीचकरन्ध्रभागास्तान्। "भागः प्रदेशे शकले भागधेये च कथ्यते" इति भोजः। उद्गास्यताम्=उत् (उच्चैः) गास्यन्तीति उद्गास्यन्तस्तेषाम् "लृटः सद्वा" ३।३।१४ इति लृटः शत्रादेशः। उद्गास्यताम्= देवयोनित्वाद्गान्धाराख्यग्रामेण गीतं करिष्यताम्। यथोक्त नारदेन—

"षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः।

न तु गान्धारनामान स लभ्यो देवयोनिभिः" ॥ इति।

किन्नराणाम्=कुत्सिताः (केषा चिदश्वमुखत्वात् केषाचिच्च अश्वशरीरत्वात्) नराः किन्नराः "कुगतिप्रादयः" इति समासः। "किमः क्षेपे" इति समासान्तप्रतिषेधः। तानप्रदायित्वम्=तानो नाम अंशस्वरऽपरपर्याय उद्गातव्यस्य स्वरादेरियत्तापरिच्छेदः। यथाऽऽचार्याभिनवगुप्ताः—

"द्विकत्रिकचतुष्काः स्युर्ज्ञेया वशगता स्वराः।

अधोऽधस्तारता प्राप्तास्तानस्त्वंशस्वरो मतः" इति।

अशस्वरलक्षणे भरतमुनिः—

"रागो यस्मिन्निवसति यस्माच्चाऽपि प्रवर्तते। नेता च तारमन्द्राणां योऽत्यर्थं चोपलभ्यते॥ ग्रहोपन्यासविन्याससन्यासन्यासगोचरः। अनुवृत्तश्च यश्चेह सोंऽशः स्यादृशलक्षणः" ॥ इति।

तान प्रदातु शीलं यस्य स तानप्रदायी "सुप्यजातौ णिनिस्ताच्छील्ये" इति तानप्रोपपदात् दाधातोर्णिनिप्रत्ययः। तानप्रदायिना भावस्तानप्रदायित्व तत् "तस्य भावस्त्वतलौ" इति भावार्थे त्वप्रत्ययः। "त्वान्त क्लीबम्" इत्यनुशासनादस्य क्लीबत्वम्। अत्रोत्प्रेक्षाऽलङ्कारः। सा च दरीमुखोत्थेनेत्येकदेशविवर्तिरूपकोज्जीविता। मुखसाध्यत्वात्तानप्रदायित्वस्य। एकदेशविवर्त्तिरूपकलक्षणं यथा साहित्यदर्पणे—

"रूपकं रूपितारोपाद्विषये निरपह्नवे। अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्॥ समस्तवस्तुविषयमेकदेशविवर्ति च। ..यत्र कस्य चिदार्थत्वमेकदेशविवर्ति तत्"॥

**भावार्थः**—यथा केषुचित् गातुमारब्धेषु गानारम्भात्पूर्वं कश्चिन्मुखमारुतेन वेणुसुषिरं पूरयन् गेयानां स्वराणां तानप्रदानं करोति, तथाऽयमपि हिमालयः

गुहामुखमारुतेन कीचकरन्ध्राणि पूरयन् गानं करिष्यता देवगायनाना तानप्रदानं कर्तुमिच्छतीवेत्यर्थः ।

**भाषा**—जैसे कोई गाना शुरू करता है तब गाने के पहिले दूसरा कोई मुख की हवा से बासुरी को भर कर गाये जाने वाले स्वरों का सुर भरता है, उसी तरह यह हिमालय भी गुहारूपी मुख पवन से कीचक रन्ध्रों को भरता हुआ गाने वाले देवगायकों को मानों तान प्रदान करने की इच्छा करता है ॥ ८ ॥

हिमवति सौरभ्यस्याप्यप्रयाससाध्यत्वमाह—

**कपोलकण्डूः करिभिर्विनेतुं, विघट्टितानां सरलद्रुमाणाम् ।**
**यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ९ ॥**

**गज गाल की खुजली मिटाता सरल तरुपर रगड़कर ।**
**संघर्ष से है दूध चूता सुरभिमय बनता शिखर ॥ ९ ॥**

**अन्वयः**—यत्र करिभिः कपोलकण्डूः विनेतु विघट्टिताना सरलद्रुमाणा स्रुतक्षीरतया प्रसूतो गन्धः सानूनि सुरभीकरोति ।

**व्याख्या**—यत्र = यस्मिन् हिमालये करिभिः, हस्तिभिः, कपोलकण्डूः=गण्डस्थलखर्जूः, विनेतुम् = अपनेतुम् , विघट्टिताना = घर्षिताना, सरलद्रुमाणां = देवदारुवृक्षाणा, स्रुतक्षीरतया=क्षरितदुग्धतया, प्रसूतः = उत्पन्नः, गन्धः=सौरभ्यम्, सानूनि=प्रस्थान् , सुरभीकरोति = सुगन्धीकरोति ।

**व्युत्पत्तिः**—करिभिः = करः ( शुण्डादण्डः ) अस्ति येषा ते इति करिणस्तैः, करशब्दात् "अत इनिठनौ" इति नित्ययोगे इनिः । "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । कपोलकण्डूः=कपोलयोः कण्डूः इति कपोलकण्डूः, ताः । "कण्डूः खर्जूश्च कण्डूया" इत्यमरः । विनेतु=व्युपसर्गपूर्वकात् प्रापणार्थकणीधातोः "तुमुन्ण्वुलौ क्रियाया क्रियार्थायाम्" इति तुमुन् । विघट्टिताना=विशेषेण घट्टिताना विघट्टिताना "सह सुपा" इति समासः । सानूनि = "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । श्लोकेनाऽनेन हिमालयस्य हस्त्याकरत्व व्यज्यते । तथा च गजायुर्वेदे—"हिमवद्विन्ध्यमलया गजाना प्रभवा नगाः" इति

**भावार्थः**—अत्र हिमालये गजैः गण्डकण्डूतीः शमयितु परिमृदिताना सरलद्रुमाणा गलितक्षीरतयोद्भूतः सुगन्धः सानुषु सौरभ्यरहितानपि पदार्थान् सुरभिलान् करोतीत्यर्थः ।

**भाषा**–इस पर्वत में हाथियों से गण्डस्थल की खुजली को मिटाने के लिए रगड़े गए देवदारु वृक्षों के दूध चूने से पैदा हुआ सुगन्ध शिखरों को खुशबूदार बनता है ॥ ६ ॥

रतिप्रदीपानामप्यप्रयाससाध्यत्वमाह—

**वनेचराणां वनितासखानां, दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

**अस्नेह औषधि-ज्योति गह्वर भवन में जलती सदा ।**
**दम्पति किरातों को सुरति की दीपिका बनती सदा ॥ १० ॥**

**अन्वयः**—यत्र रजन्या दरीगृहोत्सङ्गनिषक्तभासः ओषधयः वनितासखाना वनेचराणाम् अतैलपूराः सुरतप्रदीपाः भवन्ति ।

**व्याख्या**—यत्र = हिमालये, रजन्या = रात्रौ, दरीगृहोत्सङ्गनिषक्तभासः = गुहाऽऽलयाऽभ्यन्तरसङ्क्रान्तकान्तयः, औषधयः = तृणज्योतींषि, वनितासखाना= स्त्रीसहिताना, वनेचराणा=किरातानाम् , अतैलपूराः = तैलनिषेकाऽपेक्षारहिताः, सुरतप्रदीपाः=निधुवनदीपाः, भवन्ति=सन्ति ।

**व्युत्पत्तिः**—रजन्या = "विभावरीतमस्विन्यौ रजनी यामिनी तमी" इत्यमरः । "भाश्छविद्युतिदीप्तयः" इत्यप्यमरः । दरीगृहोत्सङ्गनिषक्तभासः=दर्य एव गृहाः दरीगृहाः । "गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः" इत्यमरः । दरीगृहाणामुत्सङ्गा दरीगृहोत्सङ्गाः, दरीगृहोत्सङ्गेषु निषक्ता दरीगृहोत्सङ्गनिषक्ताः, दरीगृहोत्सङ्गनिषक्ता भासो यासा ता दरीगृहोत्सङ्गनिषक्तभासः । "अग्नौ ओषधीषु च तेजो निधाय रविरस्तं याति"इत्यागमः । वनितासखाना=वनिताना सखायः वनितासखाः "राजाऽहःसखिभ्यष्टच्"इति समासान्तष्टच् । "प्रतीपदर्शिनी वामा वनिता महिला तथा" इत्यमरः । वनेचराणाम्=वने चरन्तीति वनेचराः "चरेष्टः"इति टप्रत्ययः, "तत्पुरुषे कृति बहुलम्" इत्यलुक् । "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः । अतैलपूराः=तैलेन पूर्यन्त इति तैलपूराः, न तैलपूरा अतैलपूराः । सुरतप्रदीपाः=सुष्ठु रत रमणं(भावे क्तः)यस्मिन् कर्मणि तत् सुरतं मैथुनम् "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्" इत्यमरः। ननु रतमित्येतावतैव मैथुनकर्मणः बोधोदयात् सुपदोपादानमनर्थकमिति चेन्न, रतमित्यस्य रमणसाधारणोऽर्थो यौगिकः, तत्र सुपदसंयोजनेन मैथुनकर्मरूपविशेषार्थबोधोदयात् । प्रकृष्टा दीपाः प्रदीपाः "कुगतिप्रादयः"इति समासः, प्रकृष्टत्वं चाऽत्र अन्यदीपेभ्यः,

तच्च तैलनिरपेक्षत्वात् । सुरते प्रदीपाः सुरतप्रदीपाः "सप्तमी शौण्डैः" इत्यनेन शौण्डादेराकृतिगणत्वात्, सप्तमीति योगविभागाद्वा, योगविभागास्वीकारे "सह सुपा" इति समासः ।

अत्र-ओषधीषु आरोप्यमाणस्य प्रदीपत्वस्य प्रकरणोपात्तसुरतोपयोगित्वात्परिणामाऽलङ्कारः, अतैलपूरत्वेनाधिकारूढवैशिष्ट्यश्च । तदुक्तं साहित्यदर्पणे—

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनी ।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा" ॥ इति ।

विश्वनाथेनाधिकारूढवैशिष्ट्यस्य परिणामालङ्कारस्येदमेवोदाहरण प्रदत्तम् । वामनेन विशेषोक्तावुदाहृतमेतत् । काव्यप्रकाशकारमम्मटाचार्यमते तु रूपकालङ्कारोऽयं, तन्मते परिणामस्य रूपके एवान्तर्भावात् । महामहोपाध्यायकोलाचलमल्लिनाथस्तु—प्रदीपकारणतैलपूरणनिषेधात् कारण विनापि कार्योत्पत्तिकथनात् विभावनालङ्कारः, सा च प्रदीपस्थानीयानामौषधीनामुक्तत्वादुक्तनिमित्ता च । तल्लक्षण यथा साहित्यदर्पणे—

"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।
उक्तानुक्तनिमित्तत्वाद्विधा सा परिकीर्तिता" ॥ इति ।

तथा च विभावनापरिणामालङ्कारयो. संसृष्टिरित्याह ।

**भावार्थः**—यत्र हिमालये रात्रौ जाज्वल्यमाना वृक्षविशेषाः गुहागृहेषु प्रकाशमानाः सन्तः वनेचरदम्पतीना तैलनिषेकनिरपेक्षाः सुरतोपयोगिनः प्रदीपाः भवन्तीत्यर्थः ।

**भाषा**—जिस हिमालय पर्वत में रात में चमकने वाले ज्वालामुखी नामक वृक्ष विशेष गुहारूपी गृहों में प्रकाशमान होते हुवें वहाँ के वनेचर मिथुनों का विना तेल के जलने वाले सुरतोपयुक्त दीपक का काम करते हैं ।

इत्थमुपवर्णितानामुद्दीपनाना तदनुरूपवनिताजनसद्भावप्रतिपादनेन सोपयोगत्वमाह—

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्, मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्त्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

**पद ठिठुरता हिम पूर्ण पथ से किन्नरी चलती सनति ।**
**है भार उरज नितम्ब का इससे न तजती मन्दगति ॥**

**अन्वयः**—यत्र शिलीभूतहिमे अङ्गुलिपार्ष्णिभागान् उद्वेजयति अपि मार्गे श्रोणिपयोधरार्त्ता अश्वमुख्यः मन्दा गतिं न भिन्दन्ति ।

**व्याख्या**—यत्र=हिमालये, शिलीभूतहिमे = घनीभूततुषारे, अत एव अङ्गुलिपार्ष्णिभागान् = चरणपाश्चात्त्यप्रदेशान् , उद्वेजयत्यपि = अतिक्लेशयत्यपि, मार्गे = पथि, दुर्वहश्रोणिपयोधरार्ताः=दुर्धरजघनस्थलस्तनपीडिताः, अश्वमुख्यः= किन्नरस्त्रियः, मन्दा = मन्थरा, गतिं = गमन, न भिन्दन्ति = नाऽन्यथाकुर्वन्ति, न त्यजन्तीत्यर्थः ।

**व्युत्पत्तिः** – शिलीभूतहिमे = अशिलाः शिला यथा सम्पद्यन्ते तथा भूताः, शिलीभूताः "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति च्विः । "च्वौ च" इति दीर्घः । शिलासदृशं सघातेन काठिन्यमाप्ता इत्यर्थः । "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । शिलीभूताः हिमा यस्मिन्स शिलीभूतहिमस्तस्मिन् , अङ्गुलिपार्ष्णिभागान्=अङ्गुलयश्च पार्ष्णी च अङ्गुलिपार्ष्णि "चार्थे द्वन्द्वः" इति द्वन्द्वसमासः । "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति समाहारत्वम् । "तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः" इत्यमरः । अङ्गुलिपार्ष्णेर्भागाः प्रदेशाः अङ्गुलिपार्ष्णिभागास्तान् । उद्वेजयति उदुपसर्गपूर्वकस्य णिजन्तस्य विजीधातोः शत्रन्तं रूपमिदम् । मार्गे = "अयनं वर्त्ममार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः । दुर्वहश्रोणिपयोधरार्त्ताः=दुःखेन वोढु शक्यं दुर्वहं, दुरुपसर्गपूर्वकात् वहधातोः "ईषदुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्" इति खल् । धरन्ति ते धराः "पचाद्यच्" । पयसा धराः पयोधराः । श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् "चार्थे द्वन्द्वः" इति द्वन्द्वः, "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति प्राण्यङ्गत्वादेकत्वम् । दुर्वहं च तत् श्रोणिपयोधरं दुर्वहश्रोणिपयोधरम् तेन आर्ता, दुर्वहश्रोणिपयोधरार्ताः ।

**भावार्थः**—हिमवति किन्नराङ्गनाः हिमशैत्यदुःखेनाङ्गुलिपार्ष्णिभागेषु पीडिताः सत्योऽपि नितम्बस्तनदुर्वहत्वखेदेन स्वाभाविकीं मन्दा गतिं न त्यजन्तीति भावः ।

**भाषा**—हिमालय मे किन्नरों की स्त्रिया हिमशैत्य के दुःख से अङ्गुलि और एंडियों में तकलीफ पाने पर भी नितम्ब और पयोधर के भार से अपनी स्वाभाविक मन्द गति को नहीं छोड़ती हैं ।

आश्रितवात्सल्यमप्याह—

**दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवाऽन्धकारम् ।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥ १२ ॥**

दिन भीत तमको घूक सम, रवि से बचाता है अचल ।
शरणागतों में श्रेष्ठ जन को प्रेम होता है अटल ॥

**अन्वयः**—यः दिवाभीतमिव गुहासु लीनम् अन्धकारं दिवाकरात् रक्षति, उच्चैः शिरसा शरणं प्रपन्ने क्षुद्रेऽपि सति इव नून ममत्वम् ।

**व्याख्या**—यः = हिमालयः, दिवा = ( अव्ययपदमेतत् ) दिवसे, भीत = भययुक्तम् इव दिवाभीतम्=उलूकमिव इति व्यङ्गयः, "दिवान्धः कौशिको घुको दिवाभीतो निशाटनः" इति कोषः । गुहासु = कन्दरासु, लीनम् = सश्लिष्टम् , अन्धकारम् = ध्वान्तम् , दिवाकरात् = सूर्यात् , रक्षति=पाति, उच्चैः शिरसाम्= उन्नतानाम् , शरणं = रक्षितार, प्रपन्ने = प्राप्ते, क्षुद्रेऽपि=नीचेऽपि, सति=सज्जने, इव, नून=निश्चयेन, ममत्वम् = आत्मीयत्व, भवतीत्यर्थः ।

**व्युत्पत्तिः**—दिवाकरात् = दिवा दिवसं करोतीति दिवाकरः तस्मात् दिवोपपदात्कृञ्धातोः "दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिविबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इति टप्रत्ययः । "भीत्रार्थाना भयहेतुः" इत्यपादानत्वात्पञ्चमी । उच्चैःशिरसाम् = उच्चैः शिरो येषा ते उच्चैःशिरसस्तेषाम् । शरणं = "शरणं गृहरक्षित्रोः" इत्यमरः । सति=अस्धातोः शतृप्रत्यये सत्पदसिद्धिः । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमर. । ममत्वं=मम भावो ममत्वम् । ममेति पदमस्नच्छन्दप्रतिरूपकमव्यय, ततस्त्वप्रत्ययः । अत्र उत्तरार्द्धगतसामान्यवाक्येन पूर्वार्द्धगतविशेषवाक्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । तथा च तल्लक्षणम्—साहित्यदर्पणे—

"सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यं च कारणेनेद कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः" इति ।

आलङ्कारिकास्तु "एवमादिस्थलेषु उत्प्रेक्षितार्थस्य अचेतनाऽन्धकारत्रासस्य असम्भूततया एव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम्" इत्याहुः ॥

**भावार्थः**—दिवसे सूर्यात् भीत्वा परित्राणाय सर्वतः प्रदेशात् परावृत्य निजकुहराभ्यन्तरमेवाश्रितमन्ध.कारमपि यः शरणागतवत्सलत्वाद्रक्षति, यतो महात्मना त्वमेव रक्षितेति शरणत्वेनात्मानमुपसन्नेऽनार्येऽपि विषये श्रेष्ठे जन इव मदीयत्वाभिमानित्वं भवतीति भावः ।

**भाषा**—जो हिमालय दिन में भीत उल्लू पक्षी की तरह गुफाओं में छिपे

हुए अन्धकार को सूर्य से रक्षण करता है; बड़े लोगों को शरण में आये हुए, नीच जनों में भी सज्जनोचित ममता होती है ॥

गिरिराजशब्दवाच्यत्वमप्यस्यैव युक्तमित्याह—

**लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।**
**यस्याऽर्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥ १३ ॥**

**गिरि पर घुमाती पुच्छ जिनके रोम हैं सम शशि किरण ।**
**सार्थक बना गिरिराज को, हैं चमरियाँ करती भ्रमण ॥**

**अन्वयः**—चमर्यः इतस्ततः लाङ्गूलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरैः बालव्यजनैः यस्य गिरिराजशब्दमर्थवन्तं कुर्वन्ति ।

**व्याख्या**—चमर्यः=चमरमृग्यः, इतस्ततः = सर्वतः, लाङ्गूलविक्षेपविसर्पिशोभैः=पुच्छविधूननविसारिद्युतिभिः, चन्द्रमरीचिगौरैः—हिमांशुकरशुभ्रैः, बालव्यजनैः=चामरैः, यस्य = हिमालयस्य, गिरिराजशब्दं = गिरिराज इत्यभिधानम्, अर्थयुक्तम्=अभिधेययुक्तम्, कुर्वन्ति = विदधति ॥ राजानो हि आतपत्रचामरादिचिह्निता भवन्तीति यावत् ।

**व्युत्पत्तिः**—चमर्यः = चमराणां मृगविशेषाणां स्त्रियः चमर्यः "पुंयोगादाख्यायाम्" ४।१।४८ इति ङीष् । लाङ्गूलविक्षेपविसर्पिशोभैः=लाङ्गूलानां विक्षेपा लाङ्गूलविक्षेपाः । "पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च बालधिः" इत्यमरः। लाङ्गूलविक्षेपैः विसर्पिण्यः, लाङ्गूलविक्षेपविसर्पिण्यः शोभा येषां तानि (बालव्यजनैरित्यस्य विशेषणत्वान्नपुंसकलिङ्गत्वम्) लाङ्गूलविक्षेपविसर्पिशोभानि, तैः । "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वम् । "शोभा कान्तिर्द्युतिश्छविः" इत्यमरः । चन्द्रमरीचिगौरैः = चन्दतीति चन्द्रः, "चदि आह्लादने" इति धातोरौणादिको रक्प्रत्ययः । "हिमांऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः । चन्द्रस्य मरीचय इति चन्द्रमरीचयः "भानुः करो मरीचिः स्त्री पुंसयोः" इत्यमरः । चन्द्रमरीचय इव गौराणि चन्द्रमरीचिगौराणि तैः । "उपमानानि सामान्यवचनैः" इति समासः । "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इत्यमरः । बालव्यजनैः=बाला एव व्यजनानि बालव्यजनानि, तैः । "व्यजनं तालवृन्तकम्" इत्यमरः । गिरिराजशब्द = गिरीणां राजा गिरिराजः "राजाऽहः सखिभ्यष्टच्" इति समासान्तष्टच् । "अद्रिगोत्रगिरिग्रावाऽचलशैल-

शिलोच्चयाः" इत्यमरः । गिरिराजश्चाऽसौ शब्दः गिरिराजशब्दः, तम् । "विशेषणं विशेष्येण बहुलम्" इति कर्मधारयसमासः ।

**भावार्थः**—यस्य हिमवतः पर्वतराजोऽयमिति शब्दं चमरमृग्यः सर्वतः चन्द्रकिरणधवलैः बालदण्डचालनप्रसृतशोभैर्निजलाङ्गूलमयैश्चामरैर्यथार्थं कुर्वन्तीति भावः

**भाषा**—जिस हिमालय पर्वत के गिरिराज इस नाम को चमरीमृग चन्द्रकिरण के समान धवल स्वकीय पुच्छरूपी चंवर को इधर उधर घुमाकर यथार्थ करते हैं ।

नवोढाऽनुसरणमप्यत्रैव सुखकरमित्याह—

**यत्रांऽशुकाक्षेपविलज्जितानां, यदृच्छया किंपुरुषाऽङ्गनानाम् ।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥**

पट किन्नरी का खिंच गया अपमान से दुखमय हुई ।
पर फिर दरी गृह द्वार पर घन आगया सुखमय हुई ॥

**अन्वयः**—यत्र अंशुकाक्षेपविलज्जितानां किंपुरुषाऽङ्गनानां यदृच्छया दरीगृहद्वारविलम्बिबिम्बाः जलदाः तिरस्करिण्यो भवन्ति ॥

**व्याख्या**—यत्र हिमालये, अंशुकाक्षेपविलज्जितानाम्—वस्त्रापहरणलज्जितानां, किंपुरुषाऽङ्गनानां—किन्नरसुन्दरीणां, यदृच्छया—दैवगत्या, दरीगृहद्वारविलम्बिबिम्बाः—गुहालयप्रतीहारलम्बमानमण्डलाः, जलदाः—मेघाः, तिरस्करिण्यः—प्रतिसीराः ( यवनिकाः ) भवन्ति ॥

**व्युत्पत्तिः**—यत्र—यच्छब्दात् "सप्तम्यास्त्रल्" इति त्रल्प्रत्ययः । अंशुकाक्षेपविलज्जितानाम् । अंशुकानामाक्षेपस्तेन विशेषेण लज्जितास्तासाम् । किंपुरुषाङ्गनानाम् , किंपुरुषाणामङ्गनास्तासाम् । दरीगृहद्वारविलम्बिबिम्बाः दरी एव गृहं तस्य द्वारं तस्मिन् विलम्बिनो बिम्बाः येषां ते । "दरी तु कन्दरे वाऽपि देवखातबिले गुहा" इत्यमरः । "गृहं गेहोदवसितम्" "स्त्री द्वार्द्वारं प्रतीहारः" इति चामरः । जलं ददन्तीति जलदा मेघास्तिरस्करिण्यो यवनिकाः "प्रतिसीरा यवनिका स्यात् तिरस्करणी च सा"—त्यमरः । "तिरसोऽन्यतरस्याम्" इति सत्वम् । अत्र जलदेषु तिरस्करिणीत्वमारोपितम् । तस्य च प्रकृतोपयोगित्वात् परिणामालङ्कारः । वस्तुतस्तु लज्जया गुह्यगूहनाय करतलेषु व्यापार्यमाणेषु दैवोपनतेन जलदरोधतमसा नवोढागुह्यगोपनकार्यसिद्धेः समाधि लङ्कारः प्राधान्येन ध्वन्यते ।

तल्लक्षणं यथा—

"समाधिः सुकरं कार्यं कार्यान्तरयोगतः" इति ।

**भावार्थः**—यत्र हिमवति रतिकाले प्रियतमकृतवसनहरणेन विशेषलज्जितानां किन्नरस्त्रीणां याद‍ृच्छिकसङ्गत्या गुहारूपसुरतभवनद्वारि बिलम्बिदेहा मेघाः एव यवनिका भवन्तीत्यर्थः । गुहाद्वारे घनोपरुद्धे सति तत्रौषधिप्रकाशादिप्रवेशाऽभावात तमोवृद्धिः, ततश्च गुह्यगोपानार्थं करतलादिव्यापारनैरपेक्ष्यमिति भावः ।

**भाषा**—जिस हिमाल पर्वत में सुरत के समय प्रियतमकृत वस्त्रापहार से अत्यन्त लज्जित होने वाली किन्नर स्त्रियों का यदृच्छा से आगत गुहारूप सुरत-भवन के द्वार पर लटकने वाला मेघ मण्डल ही पर्दा बन जाता है ।

हिमालये वायोरपि गुणोत्कर्षमाह—

**भागीरथीनिर्झरसीकराणां, वोढा मुहुः कम्पितदेवदारुः ।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखिण्डिबर्हः ॥ १५ ॥**

**गंगा सरित से शीत सुरभित मोर पंखो से गमन ।**
**मृगखोजने वाले शबर तन में मृदुल लगता पवन ॥**

**अन्वयः**—भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः भिन्नशि-खण्डिबर्हः यद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते ।

**व्याख्या**—भागीरथीनिर्झरसीकराणां गङ्गाझराम्बुकणानाम् वोढा प्रापकः, एतेन शैत्यमुक्तम् , मुहुः पुनः पुनः सद्यो वा कम्पितदेवदारुः चालितदेवदारुः चालितदेवदारुवृक्षः, एतेन सौरभ्योक्तिः, भिन्नशिखण्डिबर्हः विश्लेषितमयूरपि-ञ्छः, एतेन मन्दोक्तिः, इत्थं वायोर्विशेषणत्रयेण वैशिष्टयमुक्तम् , यद्वायुः यदीय-वातः अन्विष्टमृगैः मार्गितहरिणैः मार्गितपशुभिर्वा श्रान्तैरिति भाव , किरातैः शबरैः आसेव्यते समन्तात् आश्रीयते ।

**व्युत्पत्तिः**—भागीरथीनिर्झरसीकराणां = भगीरथस्य इयं भागीरथी "तस्ये-दम्" ४।३।१२०। इत्यण् , यस्येति च' इतीकारलोपः "टिड्ढाणञ्द्वयसज्दघ्नञ्मा-त्रचतयप्ठक्ठञ्कञ्क्वरपः' इति ङीप् । "गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा। भागीरथी त्रिपथगा" इत्यमरः । भागीरथ्या निर्झरः=भागीरथीनिर्झरः, "वारि प्रवाहो निर्झरो झर" इत्यमरः । भागीरथीनिर्झरस्य सीकराः भागीरथीनिर्झर-सीकराः तेषां भागीरथीनिर्झरसीकराणां, "सीकरोऽम्बुकणाः स्मृताः" इत्यमरः । वहतीति वोढा, "वहप्रापणे" इति धातोः "ण्वुल्तृचौ" इति तृच् । मुहुः="पौ-नः पुन्ये मृशार्थे च सद्यो वा स्यान्मुहुः पदम्" इति वैजयन्ती । कम्पितदेवदारुः=

कम्पिता देवदारवो येन सः कम्पितदेवदारुः । भिन्नशिखण्डिबर्हः=शिखण्डः अस्ति येषा ते सिखण्डिनः, शिखण्डस्तु पिच्छबर्हे नपुसके" इत्यमरः । शिखण्डशब्दात् नित्ययोगे "अत इनिठनौ" इति इनि प्रत्ययः । "शिखावलः शिखी केकी" इत्यमरः । शिखण्डिना बर्हाणि शिखण्डिबर्हाणि, भिन्नानि शिखण्डिबर्हाणि येन सः भिन्नशिखण्डिबर्हः । यद्वायुः=यस्य वायुः । अन्विष्टमृगैः=अन्विष्टा मृगा यैस्ते अन्विष्टमृगास्तैः अन्विष्टमृगैः, "अन्विष्ट मार्गित मृगितम्" इति "पशवोऽपि मृगाः" इति चामरः । किरातैः="भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः" इत्यमरः । आसेव्यते="षेवृ सेवने" इति धातोः कर्मणि "सार्वधातुके यक्" इति यक्प्रत्ययः, "धात्वादेः षः सः" इति षस्य सः । अत्र वायुसेवनस्वभावोक्त्या स्वभावोक्तिरलङ्कारः । तल्लक्षणं यथा—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्" इति ।

अत्र तमः प्रकृतीना मृगवधलालसाना किरातानामप्यनवरतगङ्गाजलसेवनप्रतिपादनेन प्रारब्धभोगक्षये तत्रत्याना मुक्तिरवेति च ध्वन्यते ।

**भावार्थः**—मृगान्वेषणार्थमितस्ततः कृतावधानैः श्रान्तैः शबरैः गङ्गाप्रवाह जलकणवाहकत्वेन शीतः, देवदारुवृक्षकम्पनेन सुरभितः, वनप्रदेशेषु वर्तमानाना मयूराणा बर्हसमुल्लासनेन मन्द इति शीतसुगन्धमन्दो यदीयः पवनः पुनः पुनः सेव्यत इति भावः ।

**भाषा**—गङ्गाजी के झरने के जलबिन्दुओं को धारणकरने वाला, वारवार देवदारुवृक्षों को कँपाने वाला, तथा मोरों के पंखों को उल्लसित करने वाला हिमालय सम्बन्धी पवन मृगों को ढूँढने वाले किरातों से सेवित किया जाता है ।

हिमालयस्य सर्वोन्नतत्वमाह—

**सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।**
**पद्मानि यस्याऽग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥**

**सप्तर्षि के कर से बचे जो अचल सर के मृदु-कमल ।**
**रवि ऊर्ध्व-किरणों से सदा वे विकच होते हैं अमल ॥**

**अन्वयः**—सप्तर्षिहस्ताऽवचिताऽवशेषाणि पद्मानि अधः परिवर्तमानः विवस्वान् ऊर्ध्वमुखैः मयूखैः प्रबोधयति ।

**व्याख्या**—सप्तर्षिहस्ताऽवचितावशेषाणि=मरीच्याद्यृषिकरलूनाऽवशिष्टानि कश्यपाद्यृषिकरलूनाऽवशिष्टानि वा, यस्य = हिमालयस्य, अग्रसरोरुहाणि = उप-

रिसरस्युत्पन्नानि पद्मानि=कमलानि, अधः=नीचैः नितम्बप्रदेशे इत्यर्थः, परिवर्तमानः=भ्रमन् , विवस्वान्=सूर्यः, ऊर्ध्वमुखैः=उपरिगामिभिः, मयूखैः=किरणैः, प्रबोधयति=विकासयति, न जातुचिदधोमुखैः, अग्रभूमेः सूर्यमण्डलोन्नतत्वादित्यर्थः । "सप्तर्षिमण्डलं ध्रुवादप्यूर्ध्वमिति ज्यौतिषिकाः । वक्ष्यति च "नित्यमर्काच्च सोमाच्च परमध्यास्महे पदम्" ( ६-१६ ) । अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ।

**व्युत्पत्तिः**—सप्तर्षिहस्ताऽवचिताऽवशेषाणि=सप्त च ते ऋषयः सप्तर्षयः "दिक्सङ्ख्ये संज्ञायाम्" इति समासः ।

सप्तर्षयश्च—"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ।" इत्थ ज्ञेयाः ॥

मतान्तरे तु–"कश्यपोत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च—" एवं ज्ञेयाः ।

सप्तर्षीणां हस्ताः सप्तर्षिहस्ताः, तैः अवचितानि सप्तर्षिहस्ताऽवचितानि, तेभ्यः अवशेषाणि अवशिष्यत इति अवशेषः "कर्मणि घञ्" विशेष्यनिघ्नत्वान्नपुंसकत्वम् । तानि सप्तर्षिहस्ताऽवचिताऽवशेषाणि, । अनेन विशेषणेन पद्मानां साफल्यं सूचितम् । अग्रसरोरुहाणि = रोहन्तीति रुहाणि, "रुह बीजप्रादुर्भावे" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कः प्रत्ययः । अग्रे सरांसि अग्रसरांसि, "कासारः सरसी सरः" इत्यमरः । अग्रसरःसु रुहाणि तानि अग्रसरोरुहाणि, पद्मानि = "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । परिवर्तमानः=परिवर्तते इति परिवर्तमानः, पर्युपसर्गपूर्वकात् "वृतु वर्तने" इति धातोः लटः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रेण शानच् आदेशः, ततः "आने मुक्" इति मुगागमः । विवस्वान्="भास्वद्विवस्वत्सप्ताऽश्वहरिदश्वोष्णरश्मयः", इत्यमरः । ऊर्ध्वमुखैः=ऊर्ध्वं मुखं येषां तैः ऊर्ध्वमुखैः, मयूखैः= "किरणोऽस्रमयूखाऽशुगभस्तिघृणिरश्मयः" इत्यमरः । प्रबोधयति=प्रोपसर्गपूर्वकात् "बुध अवगमने" इति धातोः "हेतुमति च ३।१।२६" इति णिचि, "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः १।३।८६" इति परस्मैपदम् ।

अत्र हिमवतः सूर्यमार्गोल्लङ्घित्वकथनादौन्नत्य भङ्ग्यन्तरेणोक्तमिति पर्यायोक्तमलङ्कारः । तल्लक्षणं च साहित्यदर्पणे "पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति ।

**भावार्थः**—अधित्यकापेक्षयात्यन्तमधोभागे एव वर्तमानः सविता सप्तर्षिभि·

देवतार्चनाद्यर्थं यानि कानिचिदवचितानि पुनश्च पद्मानां बहुत्वाद्धिमवतः शिरःपुष्करिणीष्वेवावशिष्टानि पद्मानि ऊर्ध्वमुखरश्मिभिरुन्मीलयतीति भावः ।

**भाषा**—सप्तर्षियों के हाथों से तोड़े जाकर बाकी बचे हुए हिमालय के ऊपर के तालावों में उगे हुए कमलों को, नीचे घूमता हुआ सूर्य ऊपर उठने वाले किरणों से विकसित करता है ।

हिमालयस्य देवत्वमैश्वर्यं चाह—

**यज्ञाऽङ्गयोनित्वमवेक्ष्य यस्य, सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं, शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥१७॥**

**मख द्रव्य जनक तथा कुधारण में समर्थ विचार कर ।**
**विधि ने दिया मख-भाग गिरि स्वामित्व अति सत्कार कर ।**

**अन्वयः**-यस्य यज्ञाऽङ्गयोनित्व धरित्रीधरणक्षमं सार च अवेक्ष्य प्रजापतिः स्वयं कल्पितयज्ञभाग शैलाधिपत्यम् अन्वतिष्ठत् ।

**व्याख्या**—यस्य = हिमालयस्य, यज्ञाङ्गयोनित्व=यज्ञसाधनप्रभवत्वं, धरित्री धरणक्षम=पृथ्वीधारणसमर्थं, सार च = बल च, अवेक्ष्य=ज्ञात्वा, प्रजापतिः = ब्रह्मा, स्वयम्-आत्मना ( एव ), कल्पितयज्ञभाग-दत्तयज्ञाऽश, शैलाधिपत्य= पर्वताऽधिपत्वम् , अन्वतिष्ठत्—कृतवानित्यर्थ. ॥

**व्युत्पत्तिः**—यज्ञाऽङ्गयोनित्व-यज्ञस्य अङ्गानि उपकरणानि सोमलतादीनि, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः । यज्ञाङ्गाना योनिः यज्ञाङ्गयोनिः, तस्य भावः यज्ञाऽङ्गयोनित्व, तत्'

"यज्ञाऽङ्गार्थे मया सृष्टो हिमवानचलेश्वरः" इति विष्णुपुराणात् ।

यज्ञाऽङ्गयोनिशब्दात् "तस्य भावस्त्वतलौ" इति त्वप्रत्ययः, तदन्तस्य "त्वान्तं क्लीबम्" इति लिङ्गानुशासनसूत्रात् नपुसकत्वम् । धरित्रीधरणक्षम-धरित्र्याः धरण धरित्रीधरण, "धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः"इत्यमरः । धरित्रीधरणे क्षमः धरित्रीधरणक्षमः, त धरित्रीधरणक्षमम् । सारं="सारो बले स्थिराऽशे च" इत्यमरः । अवेक्ष्य=अवोपसर्गपूर्वकात् "ईक्ष दर्शने"इति धातोः "समानकर्तृकयोः पूर्वकाले ३।४।२१" इति क्त्वाप्रत्ययः, ततस्तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३१" इति ल्यबादेशः प्रजापतिः—प्रजायन्ते इति प्रजाः "प्रजा स्यात् सन्ततौ जने" इत्यमरः । प्रोपसर्गपूर्वकात् "जनी प्रादुर्भावे" इति धातो. "उपसर्गे च सज्ञायाम् ३।२।९९" इति डप्रत्ययः । पातीति पतिः "ईश्वरः

पतिरीशिता" इत्यमरः । "पा रक्षणे" इति धातोः "पातेर्डतिः" इत्युणादिसूत्रेण डतिप्रत्ययः । प्रजाना पतिः प्रजापति , "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः । स्वयम्="स्वयमात्मना" इत्यमरः । कल्पितयज्ञभागं=यज्ञस्य भागः यज्ञभागः, कल्पितः यज्ञभागः यस्मिन् तत् कल्पितयज्ञभागं, तथा चोक्तम्- "सोमस्य राज्ञः कुरङ्ग इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती"इति श्रुतेरिति । शैलाधिपत्यं=अधिः पतिः अधिपतिः, "कुगतिप्रादय" इति गतिसमासः, अधिपतेर्भाव आधिपत्यम् , "पत्यन्तपुरोहितादिभ्यो यक्" इति यक्प्रत्ययः, किति च" इति आदिवृद्धिः । शैलानाम् आधिपत्य शैलाधिपत्यं, तत् "अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः । अन्वतिष्ठत् = अनूपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः "अनद्यतने लङ् , ष्ठा इत्यत्र "धात्वादेः षः सः" इति सूत्रेण षकारस्य सकारादेशः, ततः "निमित्तापाये नैमित्तिकस्याऽप्यपाय" इति न्यायेन ठकारनिवृत्तौ स्था इत्याकारक रूप जातं ततः तस्य 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८" इति सूत्रेण तिष्ठादेशः । अन्तर्भावितण्यर्थः । अनुष्ठापितवानित्यर्थः ।

हिमवतः शैलाधिपत्यम् उक्तं च ब्रह्माण्डपुराणे—

"शैलाना हिमवन्तं च नदीना चैव सागरम् ।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः" ॥ इति ।

अत्र यज्ञाङ्गयोनित्वमित्यादिना क्रमेणोद्दिष्टयोरर्थयोः कल्पितयज्ञभाग इत्यादिना पश्चान्निर्देशात् यथासंख्यमलङ्कारः ।

तल्लक्षणन्तु—"यथासङ्ख्यमनूद्देश उद्दिष्टाना क्रमेण यत्" इति ।

**भावार्थः**—ब्रह्मदेवः हिमवतः सोमलताप्रभृतीना यज्ञाङ्गानामुद्भवस्थानत्वं भूमिधारणक्षमं बल च सम्यगवलोक्य महेन्द्राद्यैस्तुल्यमेवाऽस्य यज्ञेषु हविर्भागं कल्पयित्वा पर्वताधिपतित्वं स्वयमेवानुष्ठापितवानिति भावः ।

**भाषा**—जिस हिमालय को यज्ञ के साधन द्रव्यों की उत्पत्तिकारणता को तथा पृथ्वी धारण में समर्थ बलको भी देखकर ब्रह्माजी ने स्वय ही यज्ञभाग युक्त पर्वतों का स्वामीत्व दिया है ॥

प्रबन्धनायिकायाः पार्वत्या उत्पत्तिहेतुभूत हिमालयस्य विवाह वर्णयति—

**स मानसीं मेरुसखः पितॄणां, कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीयामात्माऽनुरूपां विधिनोपयेमे ॥ १८ ॥**

गिरिवर सुमेरु सखा हिमालय ने प्रिया को उर दिया ।
मुनि-माननीया जो रही उद्वाह मेना से किया ॥

**अन्वयः**—मेरुसखः स्थितिज्ञः स पितृणां मानसीं मुनीनाम् अपि माननीयाम् आत्मानुरूपां मेनां कन्यां कुलस्य स्थितये विधिना उपयेमे ॥

**व्याख्या**—मेरुसखः—सुमेरुमित्रः, स्थितिज्ञः = मर्यादाऽभिज्ञः, सः = हिमालयः, पितृणाम् = अग्निष्वात्तादीनां, मानसीं = मनःसङ्कल्पजन्यां, मुनीनाम् अपि = ऋषीणाम् अपि, माननीयां = पूजनीयाम्, आत्माऽनुरूपाम्=कुलशीलसौन्दर्यादिभिः स्वसदृशीं, मेनां = मेनानाम्नीं, कन्यां = कुमारीं, कुलस्य = वंशस्य, स्थितये = प्रतिष्ठायै, अविच्छेदाय इत्यर्थः, न तु कामाय, विधिना = शास्त्रविधानेन, उपयेमे = परिणीतवान् ॥

**व्युत्पत्तिः**—मेरुसखः=मेरोः सखा मेरुसखः, बन्धुसम्पन्न इति भावः "राजाऽह सखिभ्यष्टच्" इति समासान्तष्टच्। "मेरुःसुमेरुर्हेमाद्री रत्नसानुः सुरालयः," इति, "अथ मित्रं सखा सुहृत्' इति चोभयत्राऽमरः। स्थितिज्ञः=स्थितिं जानातीति स्थितिज्ञः, अनेन शास्त्रश्रवणसम्पत्तिः सूच्यते। स्थित्युपपदपूर्वकात् "ज्ञा अवबोधने" इति धातोः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। यद्वा जानातीति ज्ञः इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। "धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः" इत्यमरः। स्थितेर्ज्ञः स्थितेज्ञः, "संस्था तु मर्यादा धारणा स्थितिः" इत्यमरः। मानसीं = मनसः भवा मानसी, तां मानसीं, "तत्र भव" इत्यण्, "टिड्ढाणञ्०" इत्यादिना ङीप्। "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। मुनीनामिति "कृत्यानां कर्तरि वा" ( २।३।७१ ) इति षष्ठी। माननीयां= मानयितुं योग्या माननीया, तां माननीयाम्। उक्तं च विष्णुपुराणे—

"तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा ।
ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज" ॥ इति ।

आत्माऽनुरूपाम् = रूपम् अनुगता अनुरूपा, आत्मनः अनुरूपा आत्मानुरूपा ताम् आत्माऽनुरूपाम् "कुलाद्यैः सदृशीं भार्यां विन्देत स्नातको द्विजः इति स्मृतेः। कन्यां = "कन्या कुमारी" इत्यमरः। कुलस्य="सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः। विधिना="विधिर्विधाने दैवेऽपि" इत्यमरः। उपयेमे, उपोपसर्गपूर्वकात् यमधातोः "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् मेनायाः पितॄणां मानसकन्यात्वे—

'तेषा तु मानसी कन्या मेना नाम महागिरेः ।
पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥"

इति ब्रह्माण्डपुराणोक्तिः प्रमाणम् । अत्र कामव्यपोहाय कुलस्य इत्युक्तमिति परिसङ्ख्यालङ्कारः । तल्लक्षणम्—

"प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा" इति ॥

**भावार्थः**—विद्याग्रहणानन्तरं गुरुसकाशान्निवृत्तेन गार्हस्थ्यमङ्गीकृत्याग्न्याधानादिकर्मकर्तव्यमित्यादिशास्त्रमर्यादा जानन् सुमेरोः सुहृत् हिमालयः वंशपरपरायाः स्थिरत्वाय ( नतु कामाय ) अग्निष्वात्तादिपितॄणा मानसीं कन्या ब्रह्मवादयोगवत्तया ऋषीणामपि श्लाघनीया कुलाद्यैरात्मनः सदृशी मेना नाम्नीं शास्त्रोक्तविधिना ( ब्राह्मविवाहेन ) परिणीतवानिति भावः ।

**भाषा**—सुमेरु पर्वत के मित्र मर्यादा जानने वाले हिमालय पर्वत ने पितरों के मनःसङ्कल्प से उत्पन्न मुनियो को भी माननीया तथा अपने लायक मेना नामक कन्या के साथ कुलकी स्थिति के लिए विवाह किया ॥

**कालक्रमेणाऽथ तयोः प्रवृत्ते, स्वरूपयोग्ये सुरतप्रसङ्गे ।**
**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद् भूधरराजपत्न्याः ॥ १९ ॥**

**हँस हँस लगी करने मनोहर केलि गिरि की गोद से**
**पश्चात् मेना ने किया शुचि गर्भ धारण मोद से ॥**

**अन्वयः**—अथ कालक्रमेण तयोः स्वरूपयोग्ये सुरतप्रसङ्गे प्रवृत्ते मनोरमं यौवनम् उद्वहन्त्याः भूधरराजपत्न्याः गर्भः अभवत् ॥

**व्याख्या**—अथ=अनन्तर, कालक्रमेण=समयक्रमेण, गच्छता कालेनेत्यर्थः, तयोः = मेनाहिमालययोः, स्वरूपयोग्ये=सौन्दर्याऽनुगुणे, यद्वा शास्त्राऽनुसारिणि, सुरतप्रसङ्गे=व्यवायाऽवसरे, प्रवृत्ते=जाते [ सति ], मनोरमं=रुचिर, यौवन=तारुण्यम् , उद्वहन्त्याः,=धारयन्त्याः, भूधरराजपत्न्याः=हिमालयसहधर्मिण्याः मेनाया गर्भः = भ्रूणः, अभवत् = अभूत् ॥

**व्युत्पत्तिः**-अथ="मङ्गलाऽनन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः । कालक्रमेण-कालस्य क्रमः कालक्रमस्तेन कालक्रमेण, "कालो दिष्टोऽप्यनेहाऽपि समयः" इत्यमरः । तयोः-सा च स च तौ तयोः । स्वरूपयोग्ये—स्वरूपस्य योग्यः स्वरूपयोग्यः, तस्मिन् स्वरूपयोग्ये "यद्वा रूप्यते निश्चीयते अनेनेति रूपं

ज्ञानं, तद्योग्ये शास्त्रानुसारिणीत्यर्थः" । सुरतप्रसङ्गे–रमणं रत, "रमु क्रीडायाम्" इति धातोः "नपुसके भावे क्त" इति क्तप्रत्ययः, "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" ६।४।३७। इति मलोपः । शोभनं रत सुरतं "कुगतिप्रादयः" इति गतिसमासः । "व्यवायो ग्राम्यधर्मो मैथुनं निधुवन रतम्" इत्यमरः । सुरतस्य प्रसङ्गः सुरतप्रसङ्गः, तस्मिन् सुरतप्रसङ्गे "प्रसङ्गः स्यादवसरः" इत्यमरः । मनोरमं = रमते इति रमं, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति रमुधातोः अच्, मनसः रमं मनोरमं, तत्, "सुन्दर रुचिरं चारु सुषम साधु शोभनम् । कान्तं मनोरम रुच्यं मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः । यौवनं = यूनो भावः यौवनं, तत्, युवन्शब्दात् "हायनान्तयुवादिभ्योऽण्" इत्यण् प्रत्ययः, "तद्धितेष्वचामादेः" इत्यादिवृद्धिः; "अन्" ६।४।१६७। इति प्रकृतिभावः । "तारुण्यं यौवनं समे" इत्यमरः । उद्वहन्त्याः = उद्वहतीति उद्वहन्ती, तस्याः उद्वहन्त्याः । उदुपसर्गपूर्वकात् "वह प्रापणे" इति धातोर्लटि तस्य स्थाने "लटः शतृशानचावप्रथमासमानाधिकरणे" इति शत्रादेशः, ततः "शप्श्यनोर्नित्यम्" इति नुम् । भूधरराजपत्न्याः = धरन्तीति धराः, "धृञ् धारणे" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ३।१।१३५ इत्यच् प्रत्ययः । भुवः धराः भूधरः, तेषा राजाभूधरराजः । पत्युः यज्ञे सयोगो यया, सा पत्नी । दम्पत्योः सहाऽधिकारात्–"पत्युर्नोयज्ञसयोगे" ४।१।३३। इति नकारादेशः, ङीप् च । "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः" इत्यमरः । भूधरराजस्य पत्नी भूधरराजपत्नी, तस्याः भूधरराजपत्न्याः । गर्भः = "गर्भो भ्रूण इमौ समौ" इत्यमरः ॥

**भावार्थः**—अथ गच्छता कियता कालेन मेनाहिमवतोः स्वकीयसौन्दर्याद्यनुगुणे विलासे ( सुरतकर्मणि ) प्रवृत्ते सति तरुण्या हिमवत्स्त्रिया मेनाया गर्भोऽभवदिति भावः ।

**भाषा**—कुछ दिन बीतने पर उन दोनों के स्वरूप के योग्य सुरत का प्रसङ्ग प्रवृत्त होने से सुन्दर यौवन को धारण करने वाली हिमालय की पत्नी मैना को गर्भ धारण हुआ ॥

( अय श्लोकोऽनन्तशयनसस्कृतग्रन्थावल्या प्रकाशिते कुमारसम्भवे नोपलभ्यते )

पार्वत्याः सभ्रातृकत्वं प्रतिपादयितु मेनाया पुत्रोत्पत्तिमाह—

**असूत सा नागवधूपभोग्यं, मैनाकमम्भोनिधिबद्धसख्यम् ।**

**क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रावबेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥**

बल गर्व से जिसने सुरेश्वर क्रोध को ठुकरा दिया ।
सानन्द मेना ने उसी मैनाक को पैदा किया ॥

**अन्वयः**—सा नागवधूपभोग्यम् अम्भोनिधिबद्धसख्यं, पक्षच्छिदि वृत्रशत्रौ क्रुद्धे अपि कुलिशक्षतानाम् अवेदनाज्ञं मैनाकम् असूत ।

**व्याख्या**—सा = मेना, नागवधूपभोग्य = नागकन्योपभेगार्हम् नागकन्यापरिणेतारमित्यर्थः, अम्भोनिधिबद्धसख्यं = समुद्रकृतमैत्रीकं, [ सख्यमूल सूचयति ]—पक्षच्छिदि = पतत्रच्छेत्तरि, वृत्ररिपौ = इन्द्रे, क्रुद्धे अपि=कुपिते अपि, कुलिशक्षतानाम = वज्रप्रहाराणाम्, अवेदनाज्ञ = पीडाऽनभिज्ञं, मैनाकं = मैनाकनामानं पुत्रम्, असूत = अजीजनत् ।

**व्युत्पत्तिः**–नागवधूपभोग्य=नागस्य वधूः नागवधूः, "नागाः काद्रवेयाः" इति कोषः । उपभोक्तु योग्य. उपभोग्यः, नागवध्वा उपभोग्यः नागवधूपभोग्यः, तं नागवधूपभोग्यम् । अम्भोनिधिबद्धसख्यम् = अम्भसा निधिः अम्भोनिधिः, "अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्" इत्यमरः । सख्युर्भावः सख्य, सखिशब्दात् "सख्युर्य" इति यप्रत्ययः । बद्धं सख्यं येन स बद्धसख्यः, अम्भोनिधिना बद्धसख्यः अम्भोनिधिबद्धसख्यः तम् अम्भोनिधिबद्धसख्य । पक्षच्छिदि = पक्षान् छिनत्तीति पक्षच्छित् तस्मिन् पक्षच्छिदि । "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" ३।२।६१ । इति क्विप् प्रत्ययः । वृत्रशत्रौ = वृत्रस्य शत्रुः, तस्मिन् वृत्रशत्रौ, "द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः" इत्यमरः । कुलिशक्षताना = कुलिशस्य क्षतानि कुलिशक्षतानि, तेपा कुलिशक्षताना, सम्बन्धसामान्ये षष्ठी । "ह्रादिनी वज्रमस्त्री स्यात्कुलिश भिदुर पविः" इत्यमरः । अवेदनाज्ञम् = जानातीति ज्ञः, "इगुपधज्ञा०" इत्यादिना कप्रत्ययः । वेदनाना ज्ञः वेदनाज्ञः । यद्वा वेदना जानातीति वेदनाज्ञः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः, "उपपदमतिङ्" इति समासः । सापेक्षत्वेऽपि गमकत्वात्समासः । वृत्तिविग्रहयोः समानप्रकारोपस्थितिजनकत्वं गमकत्वम् । न वेदनाज्ञः अवेदनाज्ञः, तम् अवेदनाज्ञं । पक्षच्छेदप्रस्तुतात् इन्द्रात् रक्षार्थं शरणागमनमनयोर्मैत्रीहेतुरिति यावत् । असूत = "पूङ् प्राणिगर्भविमोचने" इति धातोर्लङि प्रथमपुरुषैकवचने रूपमेतत् । पूर्वं किल सर्वे पर्वताः सपक्षा अभवन्, तेषामुड्डयनेन बहवः तत्रस्थाः प्राणिनो विनष्टा, अतस्तेषा कुपितः शक्रः पक्षानच्छैत्सीत् । मैनाकस्तु तत-

स्त्राणार्थं समुद्रं जगाम इति पौराणिकी कथाऽत्र अनुसन्धेया। "सर्वपर्वतपक्षच्छेदेऽप्ययं मैनाकोऽच्छिन्नपक्ष एवेति अस्योत्कर्षः। तादृशपुत्रवत्त्वं हिमालयस्येति सार्थक मैनाकस्य वर्णनम्। अभ्रातृककन्यायाः—

"पिता न ज्ञायते यस्या भ्राता यदि न विद्यते।
नोपयच्छेत्तु ता कन्या धर्मलोपभयात्सुधीः" ॥

इति स्मृतिग्रन्थादावित्थं स्वीकरणनिषेधात् प्रकृते पार्वती भ्रातृमत्येवेति सूचनार्थं मैनाकपर्वतवर्णनम् इति तात्पर्यार्थः ॥

**भावार्थः**—सा मेना नागाङ्गनाभिरुपभोक्तु योग्यं पर्वतपक्षच्छेदोद्युक्ते महेन्द्रे रुष्टेऽपि महासत्वस्य समुद्रस्य सख्यात्तत्रैव निरन्तरं निमज्ज्य स्थितत्वादद्यापि कुलिशव्रणवेदनानभिज्ञं मैनाक नाम सुत प्रसूतवतीति भावः।

**भाषा**—मेना ने नागकन्या से विवाह करने वाले, समुद्र से मैत्री रखने वाले, पक्ष काटने वाले इन्द्र के क्रुद्ध होने पर भी वज्र के प्रहारों की वेदना से अनभिज्ञ ऐसे मैनाक पर्वत को पैदा किया।

पार्वत्या उत्पत्तेः पूर्वावस्थामाह—

**अथाऽवमानेन पितुः प्रयुक्ता, दक्षस्य कन्या भवपूर्वपत्नी।**
**सती सती योगविसृष्टदेहा, तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥**

**निज जनक के अपमान से जो दक्ष कन्या जल गई।**
**वह ही मनोहर रूप से मेना उदर में चल गई ॥**

**अन्वयः**—अथ दक्षस्य कन्या भवपूर्वपत्नी सती पितुः अवमानेन प्रयुक्ता योगविसृष्टदेहा सती जन्मने ता शैलवधू प्रपेदे ॥

**व्याख्या**—अथ = अनन्तर ( मैनाकोत्पत्त्यनन्तरमित्यर्थः ), दक्षस्य = दक्षनाम्नः प्रजापतेः. कन्या = कुमारी, भवपूर्वपत्नी = हरप्रथमभार्या, सती = सतीनाम्नी देवी, पितुः = दक्षस्य, अवमानेन = अपमानेन स्वभर्त्रवज्ञया इत्यर्थः, प्रयुक्ता = प्रेरिता, योगविसृष्टदेहा = योगमार्गत्यक्तशरीरा सती, जन्मने = जननाय, ता शैलवधूं = ता पर्वतपत्नीं मेनकामित्यर्थः, प्रपेदे = प्राप ॥

**व्युत्पत्तिः**—दक्षस्य = ब्रह्माऽङ्गुष्ठजातस्य प्रजापतिविशेषस्येत्यर्थः, अत्रार्थे—"उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुव" इति भागवतोक्तिः प्रमाणम्। भवपूर्वपत्नी = भवति भवते वा सर्वं भवः, "भू प्राप्तौ" ( चु०आ०से० ) "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ३।१।१३४।इत्यच्। "व्योमकेशो भवो भीमः स्थाणु रुद्र

उमापतिः" इत्यमरः । पूर्वा चाऽसौ पत्नी पूर्वपत्नी, "विशेषणं विशेष्येण बहुलम्" इति समासः, तस्य "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति कर्मधारयसंज्ञा, तदनु "पुंवत्कर्मधारयजातियदेशीयेषु" इति सूत्रेण पूर्वपदस्य पुंवद्भावः । भवस्य पूर्वपत्नी भवपूर्वपत्नी । सती = अस्तीति सती, "अस् भुवि" इति धातोः शतृप्रत्ययः, ततः "श्नसोरल्लोपः" ६।४।१११ । इत्यल्लोपः, अनन्तरम् "उगितश्च" ४।१।६ । इति ङीप्, "सती साध्वी पतिव्रता" इत्यमरः । पितुः=पातीति पिता, तस्य पितुः "कर्तृकर्मणोः कृति २।३।६५" इति कर्तरि षष्ठी । "पा रक्षणे" इति धातोः "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ"२।६५। इत्युणादि सूत्रेण पितृपदस्य साधुत्व, "तातस्तु जनकः पिता" इत्यमरः । योगेन= "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलसूत्रम् । विसृष्टदेहा = विसृष्टो देहो यया सा विसृष्टदेहा । देहशब्दस्य अर्धर्चादिषु पाठात् "अर्धर्चाः पुंसि च २।४।३१" इति पुँल्लिङ्गत्वं क्लीबत्वं च, "कायो देहः क्लीबपुंसोः" इत्यमरः । जन्मने = "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः । शैलवधूं=शैलस्य वधूः शैलवधूः, ता शैलवधूं । "वधूर्जाया स्नुषा स्त्री च" इत्यमरः । प्रपेदे, प्रोपसर्गपूर्वात् "पद गतौ" इति धातोः "परोक्षे लिट्" इति लिट्, "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वाऽभ्यासलोपौ ॥ पुरा किल दक्षप्रजातिर्यज्ञोत्सवे सर्वाणः सर्वान्बान्धवांश्च निमन्त्रयामास, न च शम्भुं सतीं च इति रुष्टा सति तत्रोत्सवे अनिमन्त्रिताऽपि गतवती । ततः तत्र पितृकृता भर्त्रवज्ञामसहमाना योगाऽग्निना स्वं शरीरं ददाहेति पौराणिकी कथाऽत्र अनुसन्धेया ॥

**भावार्थः**—अथ स्वभर्तुर्हविर्भागाऽप्रदानादिना आत्मनो जनकभूतेन दक्षप्रजापतिना कृतेनापमानेन प्रेरिता परमशिवस्य प्राचीनभार्या सतीनाम्नी स्वपितरि विषये प्रकारान्तरेण कोपं प्रकाशयितुमशक्नुवती सती ( प्रतीकारोपायादर्शनेन ) योगाग्निना निर्दग्धशरीरा भवन्ती स्वजन्मलाभाय लोकोत्तरगुणविशिष्टा हिमालयपत्नी मेना प्राप्तवतीति भावः ।

**भाषा**—दक्ष की कन्या महादेव की पहली पत्नी पतिव्रता सती देवी ने पिता के अपमान से प्रेरित हो कर योग बल से शरीर को त्यागकर पुनः जन्म लेने के लिए शैलपत्नी मेना को प्राप्त किया ॥

अथ पार्वत्या उत्पत्तिं वर्णयति—

**सा भूधराणामधिपेन तस्यां, समाधिमत्यामुदपादि भव्या ।**

**सम्यक्प्रयोगादपरिक्षतायां, नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥**

**मेना बनी शुचि नीति थी उत्साह गुण गिरि राज था ।**

**सम्पत्ति सम पैदा हुई गिरिजा सुखद सब साज था ॥**

**अन्वयः**—भव्या सा भूधराणाम् अधिपेन समाधिमत्या तस्या सम्यक्प्रयोगात् अपरिक्षताया नीतौ उत्साहगुणेन सम्पत् इव उदपादि ॥

**व्याख्या**—भव्या = कल्याणी, सा = सती भूधराणां = महीधराणाम् ( पर्वतानामित्यर्थः ), अधिपेन = स्वामिना ( हिमालयेनेत्यर्थः ), समाधिमत्यां = नियमवत्यां, तस्या = मेनाया, सम्यक्प्रयोगात् = साध्वाचरणात् ( हेतोः ), अपरिक्षतायाम् = अभ्रष्टाया, नीतौ = नये, उत्साहगुणेन = उत्साहशक्त्या [ कर्त्रा ], सम्पत् इव = सम्पत्तिरिव, उदपादि = उत्पादिता ॥

**व्युत्पत्तिः**—भव्या=भवतीति भव्या, "भू सत्तायाम्" इति धातोः "भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" इति साधुः, "भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्" इत्यमरः । भूधराणां = धरन्तीति धराः, भुवः धराः भूधराः, तेषां भूधराणां । अधिपेन = अधिपातीति अधिपस्तेन अधिपेन, अध्युपसर्गपूर्वकात् "पा रक्षणे" इति धातोः "आतश्चोपसर्गे" ३।१।१३६ इति कः । "अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः । समाधिमत्या = समाधिः अस्ति यस्याः सा समाधिमती, तस्या समाधिमत्या, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्, स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप् । सम्यक्प्रयोगात्=सम्यक् चाऽसौ प्रयोगः सम्यक्प्रयोगः, तस्मात् सम्यक्प्रयोगात् । "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । अपरिक्षतायाम्=न परिक्षता, अपरिक्षता, तस्याम् अपरिक्षतायाम् । "नञ्" २।२।६ इति नञ्समासः । "न लोपो नञः" ६।३।७३ इति नकारलोपः । नीतौ = "णीञ् प्रापणे" इति धातोः "स्त्रियां क्तिन्" इति क्तिन्प्रत्ययः । उत्साहगुणेन = उत्साह एव गुणः उत्साहगुणस्तेन उत्साहगुणेन । "उत्साहोऽध्यवसायः स्यात्" इत्यमरः । उदपादि=उदुपसर्गपूर्वात् पदधातोर्ण्यन्तात् कर्मणि लुङ् । "चिण्भावकर्मणोः" इति चिण्प्रत्ययः, "चिणो लुक्" इति तस्य लुक् । अत्रोपमाऽलङ्कारः सा चोपमानोपमेयसाधारणधर्माणामिवशब्दस्य चोपादानात् पूर्णा । तल्लक्षणं तूक्तं साहित्यदर्पणे—"साम्यं वाच्यं त्ववैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति ।

**भावार्थः**—यथा परात्मनोः प्राबल्यदौर्बल्यादिविवेकपूर्वकं सम्यक् प्रयोगात् अविहतायां सन्धिविग्रहादिषड्विधायां राजनीतौ उत्साहगुणेन सम्पदुत्पा/

द्यते, तथा तपस्विन्या मेनाया पर्वताना श्रेष्ठेन हिमालयेन सा दक्षसुता समुत्पादिताऽभूदिति भावः ।

**भाषा**—पर्वतों के राजा हिमालयसे वह दक्षकी कन्या पतिव्रता मेना में उत्तम आचरण से भ्रष्ट न होने वाली नीतिमें उत्साहशक्तिसे सम्पत्ति की तरह पैदाकी गई ।

इत्थमुत्पन्नायाः पार्वत्या जन्मदिनं वर्णयति—

**प्रसन्नदिक्पांसुविविक्तवातं, शङ्खस्वनाऽनन्तरपुष्पवृष्टि ।**
**शरीरिणां स्थावरजङ्गमानां, सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥**

**रज रहित मारुत वह चला, प्रति ककुभ निर्मल होगया ।**
**ध्वनि शख की, वर्षा सुमन की, भूमितल दुख खोगया ॥**

**अन्वयः**—प्रसन्नदिक् पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टिं तज्जन्मदिनं स्थावरजङ्गमाना शरीरिणा सुखाय बभूव ।

**व्याख्या**—प्रसन्नदिक् = निर्मलकाष्ठं, पांसुविविक्तवातं = रजोरहितपवनं, शङ्खस्वनाऽनन्तरपुष्पवृष्टिं=शङ्खध्वन्यनन्तरकुसुमवर्षम् , तज्जन्मदिनं = पार्वतीजननदिवसं, स्थावरजङ्गमानाम्=अचरचराणा, शरीरिणा=देहिनां, सुखाय=आनन्दाय, बभूव=अभवत् ।

**व्युत्पत्तिः**—प्रसन्नदिक्=प्रसन्नाः क्रूरातपमेघावरणराहित्यान्मनोहरा दिशः यस्मिन् तत् प्रसन्नदिक् , "प्रसन्नोऽच्छः" इति; "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्चता" इति चाऽमरः । अनेन नेत्रसुखमुक्तम् । त्वगिन्द्रियसुखमाह—पांसुविविक्तवातं=मन्दत्वात् पांसुभिः विविक्तः, पांसुविविक्तः, "रेणुर्द्वयोः स्त्रिया धूलिः पांसु (शु) र्ना न द्वयो रजः" इति, "विविक्तौ पूतविजनौ इति चाऽमरः । पांसुविविक्तः वातः यस्मिन् तत् पांसुविविक्तवातं, [तज्जन्मदिनम् इत्यस्य विशेषणम्] "नभस्वद्वातपवन पवमानप्रभञ्जनाः" इत्यमरः । श्रोत्रघ्राणयोः सुखमाह—शङ्खस्वनाऽनन्तरपुष्पवृष्टिं=शङ्खस्य स्वनः शङ्खस्वनः, "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः । शङ्खस्वनात् शङ्खस्वनस्य वा अनन्तरं शङ्खस्वनाऽनन्तरं । पुष्पाणा वृष्टिः पुष्पवृष्टिः । "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इति, "वृष्टिर्वर्षम्" इति चाऽमरः । शङ्खस्वनाऽनन्तरं पुष्पवृष्टिः यस्मिन् तत् शङ्खस्वनानन्तरपुष्पवृष्टि "अनेकमन्यपदार्थे" इति समासः । तज्जन्मदिन = जन्मनः दिनं जन्मदिनं "घस्रो दिनाहनी वा तु क्लीवे दिवसवासरौ" इत्यमरः । तस्याः जन्मदिनं तज्जन्मदिनम् । स्थावरजङ्गमाना=स्थानशीलाः स्थावराः, शैलवृक्षादयः "ष्ठा गतिनिवृत्तौ"

इति धातोः "स्थेशभासपिसकसो वरच्" ३।२।१७५ इति वरच्प्रत्ययः । "स्थावरो जङ्गमेतरः" इत्यमरः । जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमाः, देवतिर्यङ्मनुष्यादयः । "चरिष्णु जङ्गमचरं त्रसमिङ्ग चराऽचरम्" इत्यमर. । स्थावराश्च जङ्गमाश्च स्थावर-जङ्गमाः, तेषां स्थावरजङ्गमानां । "चाऽर्थेद्वन्द्वः" इति द्वन्द्वसमासः । शरीरिणां= शरीरम् अस्ति येषां ते शरीरिणः, तेषां शरीरिणां । शरीरशब्दात् "अत इनिठनौ" इति नित्ययोगे इनिः, "यस्येति च" इत्यकारलोपः । सुखाय = "स्यादानन्दथुरा-नन्द शर्मशातसुखानि च" इत्यमरः ॥

**भावार्थः**—तस्या जन्मदिने आतपतीव्रतामेघोपरोधादिदोषमुक्ता दिशः प्रसन्नाः प्रतीयन्ते स्म । पांसुरहितः सुखस्पर्शः पवनो मन्द वातुमारेभे । देवाश्च हर्ष सूचकं शङ्खस्वन कृत्वा दिव्यानि पुष्पाणि वर्षयन्ति स्म । इत्थं च तत्पुण्याहं चेत-नाचेतनानां सर्वेषामपि परमानन्दापादकं बभूवेति भावः ।

**भाषा**—निर्मलदिशाओं से युक्त, धूलिरहित वायुसे सम्पन्न, शङ्खध्वनि से युक्त पुष्पवृष्टिसे सुशोभित पार्वती का जन्मदिन, स्थावर, और जङ्गम प्राणियों को सुख कारक हुआ ।

जातमात्रायाः पार्वत्या नैसर्गिकीं शरीरशोभामाह—

**तया दुहित्रा सुतरां सवित्री, स्फुरत्प्रभामण्डलया चकासे ।**
**विदूरभूमिर्नवमेघशब्दादुद्भिन्नया, रत्नशलाकयेव ॥ २४ ॥**

**घननादभिन्न रतनशलाका से विदूर मही यथा ।**
**शोभित हुई गिरि साथ मेना कान्तकन्यासे तथा ॥**

**अन्वयः**—स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री विदूरभूमिः नवमेघ-शब्दात् उद्भिन्नया रत्नशलाकया इव सुतरां चकासे ॥

**व्याख्या**—स्फुरत्प्रभामण्डलया = लसद्रुचिमण्डलया, तया दुहित्रा = तया पुत्र्या ( पार्वत्या इत्यर्थः ), सवित्री=जननी ( मेनेत्यर्थः ), विदूरभूमिः = वाल-वायपर्वतप्रान्तभूमिः, नवमेघशब्दात् = नूतनाऽम्बुदगर्जितात् , उद्भिन्नया=निर्ग-तया ( भूमिं विदार्येत्यर्थः ), रत्नशलाकया इव = रत्नाङ्कुरेणेव, सुतरां=भृशं, चकासे = रराज ॥

**व्युत्पत्तिः**—स्फुरत्प्रभामण्डलया=स्फुरतीति स्फुरत् , "स्फुर सञ्चलने" "स्फु-र स्फुरणे" वा इति धातोः लटः शत्रादेशः।प्रभाणां मण्डलं प्रभामण्डलं "स्युः प्रभा रुग् रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । स्फुरत् प्रभामण्डलं यस्याः सा

स्फुरत्प्रभामण्डला, तया स्फुरत्प्रभामण्डलया । सवित्री=सूते इति सवित्री, "षूङ प्राणिगर्भविमोचने" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः "स्वरतिसूतिसूयति धूञूदितो वा" इतीडागमः । ततः स्त्रीत्वविवक्षायाम्—"ऋन्नेभ्यो ङीप्" इति ङीप्प्रत्ययः । विदूरभूमिः = विदूरस्य भूमिः विदूरभूमिः ।

"अवदूरं विदूरस्य गिरेरूत्तुङ्गरोधसः ।
काकतालीयसीमान्ते मणीनामाकरो भवेत् ॥" इति बुद्धः ।

नवमेघशब्दात् = मेघस्य शब्दः मेघशब्दः, "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । नवश्चाऽसौ मेघशब्दः नवमेघशब्दः, तस्मात् नवमेघशब्दात् । "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । रत्नशलाकया=रत्नस्य शलाका रत्नशलाका, तया रत्नशलाकया । चकासे = "कासृ-दीप्तौ" इति धातोर्लिटि प्रथमपुरुषैकवचने रूपमिदम् ॥ अत्रोपमालङ्कारः ।

**भावार्थः**—विदूरो नाम रत्नोद्भवस्थानभूतः पर्वतविशेषस्तस्तस्या भूमिर्नूतनमेघगर्जितात् स्थलिं भित्त्वोद्गतया रत्नशलाकयेव तया कन्यया माता मेनाऽत्यर्थं शोभते स्मेति भावः ।

**भाषा**—जिस तरह विदूर पर्वतकी भूमि नूतन मेघशब्द से उद्भिन्न रत्नो की कान्ति से शोभित होती है, उसी तरह माता मेना उसपुत्री पार्वती से शोभित हुई ।

पार्वत्याः शरीरपरिपोषानुरूपा लावण्यवृद्धिमाह—

**दिने दिने सा परिवर्धमाना, लब्धोदया चान्द्रमसीव लेखा ।**
**पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥२५॥**

**दिन दिन लगी बढने उमा की शशि कला सी कान्ति थी ।**
**होने लगे अवयव सरस आने लगी उर शान्ति थी ॥**

**अन्वयः**—लब्धोदया दिने दिने परिवर्धमाना सा चान्द्रमसी लेखा इव लावण्यमयान् विशेषान् ज्योत्स्नान्तराणि कलान्तराणि इव पुपोष ॥

**व्याख्या**—लब्धोदया = प्राप्तजनना ( उत्पन्नेत्यर्थः ) रवेः पृथग्भावेनाभ्युदिता इत्यन्यत्र, तथा चोक्तम्—

"भानोः समासन्नतया ग्रहाणामदर्शनं यत् तदिहास्तमुक्तम् ।
ततश्च तेपा रविदूरगत्या यद्दर्शनं स्यादुदयं तदाहु" रिति ॥

दिने दिने=प्रतिदिनं, परिवर्धमाना=समेधमाना [उभयत्र समानमेतत्] सा=बाला, चान्द्रमसी=चान्द्री (चन्द्रसम्बन्धिनीत्यर्थः), लेखा इव=रेखा इव, लावण्य-

मयान्=कान्तिविशेषप्रचुरान्, विशेषान्=अवयवान्, ज्योत्स्नान्तराणि=चन्द्रिकान्तर्हितानि, कलान्तराणि इव=कलाविशेषान् इव, पुपोष=उपचितवती पुष्टवतीत्यर्थः ॥

**व्युत्पत्तिः**—लब्धोदया = लब्धः उदयः यया सा लब्धोदया । परिवर्धमाना=परिवर्धते इति परिवर्धमाना, पर्युपसर्गपूर्वकात् "वृधु वृद्धौ" इति धातोः शतृप्रत्ययः । चान्द्रमसी = चन्द्रमसः इयं चान्द्रमसी, "तस्येदम्" इत्यण्, "टिड्ढाणञ्०" इत्यादिना ङीप्, "हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः। लावण्यमयान्=प्रचुरं लावण्यम् अस्ति येषां ते लावण्यमयाः, तान् लावण्यमयान्, "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इति भूपालः । लावण्यशब्दात् "तत्प्रकृतवचने मयट्" इति मयट् प्रत्ययः । विशेषान्="विशेषोऽवयवे व्यक्तौ" इत्युत्पलमाला । ज्योत्स्नाऽन्तराणि = ज्योत्स्नायाम् अन्तरम् अन्तर्धानम् येषां तानि ज्योत्स्नान्तराणि, "सप्तमी विशेषणे बहुव्रीहौ" अस्य सूत्रस्य व्यधिकरणपदबहुव्रीहेर्ज्ञापकत्वादत्र व्यधिकरणपदबहुव्रीहिः । "चन्द्रिका कौमुदी ज्योत्स्ना" इति "अन्तरमवकाशाऽवधिपरिधानान्तर्धिभेदतादर्थ्ये" इति चाऽमरः । कलान्तराणि=अन्याः कलाः कलान्तराणि, "मयूरव्यंसकादयश्च" २।१।७२ इति, "सह सुपा" इत्यस्य योगविभागाद्वा समासः। पुपोष = "पुष पुष्टौ" इति धातोर्लिटि प्रथमपुरुषैकवचने रूपमिदम् । अत्र श्लोके वाक्योपमेत्याह दण्डी, तल्लक्षणं तु—

"वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात्सा तु वाक्योपमा द्विधा" इति ॥

**भावार्थः**—यथा शुक्लपक्षप्रतिपदुदिता चन्द्रकला प्रतिदिनमधिकाधिकज्योत्स्नान् कलारूपानवयवान् पुष्णाति तथेयमपि पार्वती जन्मलाभानन्तरमनुदिनं लावण्यप्रचुरानवयवान् पुपोषेति भावः ।

भाषा—जैसे शुक्ल पक्षकी चन्द्रकला दिन दिन बढती है वैसे ही पार्वती का लावण्यमय अवयव दिन दिन बढ़ने लगा ।

नामकरणप्रकारमाह—

**तां पार्वतीत्याभिजनेन नाम्ना, बन्धुप्रियां बन्धुजनो जुहाव ।**
**उ मेति मात्रा तपसो निषिद्धा, पश्चादुमाख्यां सुमुखी जगाम ॥२६॥**

**उसका प्रथम शुभ नाम था शुचि पार्वती रक्खा हुआ ।**
**रोकी गई तप से अतः फिर अन्य नाम उमा हुआ ॥**

**अन्वयः**—बन्धुप्रियां ता बन्धुजनः आभिजनेन नाम्ना पार्वती इति जुहाव । पश्चात् मात्रा उ मा इति तपसः निषिद्धा (सती) सुमुखी उमाऽऽख्या जगाम ॥

**व्याख्या**—बन्धुप्रिया = स्वजनवल्लभा, ता = बाला, बन्धुजनः = बन्धुलोकः ( पित्रादिरित्यर्थः ), आभिजनेन=वंशागतेन, नाम्ना = आख्यया, पार्वती इति जुहाव=आहूतवान् , पश्चात्=अनन्तरं ( तन्नामानन्तरमित्यर्थः ), मात्रा = जनन्या, उ=तपः, मा = न ( तपः मा कुरु इत्यर्थः ), इति = एवं रूपेण, तपसः = तपस्यायाः, निषिद्धा = निवारिता ( सती ), सुमुखी = सुवदना ( पार्वतीत्यर्थः ), उमाख्याम् = उमानामधेयं, जगाम = प्राप ॥

**व्युत्पत्तिः**—बन्धुप्रिया = प्रीणातीति प्रिया, "प्रीञ् तर्पणे ( क्र्या० उ० से० )" इति धातोः "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५ इति कप्रत्ययः । ततः स्त्रीत्वविवक्षायाम् , "अजाद्यतष्टाप्"इति टाप्प्रत्ययः, "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः । बन्धूनां प्रिया बन्धुप्रिया, ता बन्धुप्रिया । बन्धुजनः=बन्धुश्चासौ जनः बन्धुजनः । आभिजनेन=अभिजनात् आगतम् आभिजनं, तेन आभिजनेन । "तत आगतः" इत्यण् , "तद्धितेष्वचामादेः" इत्यादिवृद्धिः । "सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयौ । वंशोऽन्ववायः सन्तानः" इत्यमरः । "अभिजनाः पूर्वबान्धवाः" इति काशिका, एतन्मते आभिजनेन इत्यस्य पित्रादिपूर्वसम्बन्धोपाधिकेनेत्यर्थः । नाम्ना = "आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च" इत्यमरः । पार्वती = पर्वाणि सन्ति अत्र पर्वतः, पर्वशब्दात् "तप्पर्वमरुद्भ्याम्" इति तप्प्रत्ययः । "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः" इत्यमरः । पर्वतस्य अपत्यं स्त्री पार्वती, "तस्याऽपत्यम्" इत्यण् प्रत्ययः, 'टिड्ढाणञ्०" इत्यादिना ङीप् । "अपर्णा पर्वती दुर्गा मृडानी चण्डिकाऽम्बिका" इत्यमरः । जुहाव = "ह्वेञ् स्पर्धायां शब्दे च" इति धातोर्लिटि रूपम् । "अभ्यस्तस्य च" ६।१।३३ इति सम्प्रसारणम् । मात्रा = "जनयित्री प्रसूर्माता जननी" इत्यमरः । उ = "उ इति तपोवाचकमव्ययम् । "उ तापेऽव्ययमीशे ना" इति यादवः । मा इति निषेधवाचकमव्ययम् । "मास्म माल च वारणे" इत्यमरः । तपो मा भवेदित्यर्थः । तपसः="वारणार्थानामीप्सितः' इत्यपादानत्वात् , "अपादाने पञ्चमी" इति पञ्चमी । सुमुखी=शोभनं मुखं यस्याः सा सुमुखी, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । उमाख्याम्=उमा चाऽसौ आख्या उमाऽऽख्या, ताम् उमाख्याम् । "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः । वर्दयति

च । मनीषिताः सन्ति गृहेषु देवता इति ( ५।४ ) ॥

**भावार्थः**—बान्धवः स्वप्रिया ता कन्या आभिजात्येन निमित्तेन पर्वतस्यापत्यं स्त्रीति व्युत्पत्त्या नाम्ना पार्वतीत्याहूतवन्तः । मृदुशरीरा कठिनतरं तपः कर्तुकामा रोगभीतया जनन्या मेनया तपसः सकाशान्निषिद्धा सती सा पश्चात् "उमे"ति नाम जगामेत्यर्थः । एवं तस्या गुणकर्मानुरूपाणि नामान्तराण्यपि बभूवुरिति भावः ।

**भाषा**–पर्वत से पैदा होने के कारण परिवार के लोगों ने उसका "पार्वती" यह नाम रक्खा, अनन्तर माता के तपश्चर्या निषेध करने से उसका "उमा" यह नाम लोक में प्रसिद्ध हुआ ।

पार्वत्या पितुः स्नेहातिशयमाह—

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।**
**अनन्तपुष्पस्य मधोर्हि चूते, द्विरेफमाला सविशेषसङ्गा ॥२७॥**

सुत था सुता थी अचल को पर अति सुता को चाहता ।
नव- विविध- कुसुम वसन्त में अलि आम कुसम निहारता ॥

**अन्वयः**—पुत्रवतोऽपि महीभृतः दृष्टिः तस्मिन् अपत्ये तृप्तिं न जगाम । हि अनन्तपुष्पस्य मधोः द्विरेफमाला चूते सविशेषसङ्गा ॥

**व्याख्या**—पुत्रवतोऽपि=अपत्यवतोऽपि, महीभृतः=पर्वतस्य ( हिमालयस्येत्यर्थः ), दृष्टिः=नेत्रं, तस्मिन् अपत्ये=तस्मिन् तोके ( पार्वतीरूपे इत्यर्थः ), तृप्तिं=तृप्तता, न जगाम=न लेभे, । हि=निश्चयेन, अनन्तपुष्पस्य=प्रचुरकुसुमस्य, मधोः=वसन्तस्य सम्बन्धिनी, द्विरेफमाला=भ्रमरपङ्क्तिः, चूते=आम्रकुसुमे, सविशेषसङ्गा=साऽतिशयप्रीतिः=अत्यन्ताऽऽसक्ता भवतीत्यर्थः ॥

**व्युत्पत्तिः**—पुत्रवतः=पुन्नामनरकात् त्रायते इति पुत्रः, अयमत्र सामान्यापत्यवाची शब्दः "यदि कामयेत् पुमांस एव मे पुत्रा जायेरन्नि" ति–आश्वलायन गृह्यसूत्रे दर्शनात् । एतेनात्र मम्मटोक्तः पर्यायप्रक्रमभङ्गदोषः प्रत्युक्तः। पुत्रः अस्ति यस्य स पुत्रवान् , तस्य पुत्रवतः "तदस्याऽस्त्यस्मिन्निति मतुप्" इति मतुप्, "झयो वः" इति मस्य वः । महीभृतः=महीं बिभर्तीति महीभृत् , तस्य महीभृतः मह्युपपदात् "डुभृञ् धारणपोषणयोः (जु० उ० अ०)" इति धातोः "क्विप् च" ३।२।७६ इति क्विप्प्रत्ययः, तस्य सर्वाऽपहारी लोपः, ततः "ह्रस्वस्य पिति कृति तुक्" इति तुगागमः, "आद्यन्तौ टकितौ" इति तस्य अन्तावयवत्वम् । दृष्टिः =

"लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इत्यमरः। अपत्ये="अपत्यं तोकं तयोः समे" इत्यमरः। हि="हि हेताववधारणे" इत्यमरः, अनन्तपुष्पस्य=अविद्यमानः अन्तः येषां तानि अनन्तानि, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः। अनन्तानि पुष्पाणि यस्य सः अनन्तपुष्पः, तस्य अनन्तपुष्पस्य। मधोः="मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च जीवशोके मधुद्रुमे" इति विश्वः। द्विरेफमाला=द्वौ रेफौ येषां ते द्विरेफाः=लक्षितलक्षणया भ्रमराः, "मधुव्रतो मधुकरो मधुलिण्मधुपालिनः। द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराऽलयः' इत्यमरः। द्विरेफाणां माला द्विरेफमाला। चूते="आम्रश्चूतो रसालः" इत्यमरः, चूतस्य विकारः कुसुमम् इति विग्रहेण "अवयवे च प्राण्योषधिवृक्षेभ्यः" इति सूत्रेण उत्पन्नस्य अण्प्रत्ययस्य "पुष्पमूलेषु बहुलम्" इति लुक्। सविशेषसङ्गा=विशेषेण सहितः सविशेषः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिसमासः, "वोपसर्जनस्य" इति सहस्य सादेशः। सविशेषः सङ्गः यस्याः सा सविशेषसङ्गा। अत्राऽत्यासङ्गाः साधारणो धर्मः शब्दभेदेन वाक्यद्वयेऽप्युपात्त इति प्रतिवस्तूपमालङ्कारः। तल्लक्षणं यथा—

"प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।
एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्" इति।

**भावार्थः**—स्त्रीरूपे पुरुषरूपे चापत्यान्तरे सत्यपि हिमवतो दृष्टिः पार्वत्यामेव सस्पृह सक्ताभूत्। यतः बहुकुसुमस्य वसन्तस्य भ्रमरपङ्क्तिः सहकारकुसुमे एव सातिशयं सक्ता भवतीति भावः।

**भाषा**—जैसे नाना प्रकार के पुष्पों के होते हुए भी वसन्त ऋतु की भ्रमर पंक्ति आम्र कुसुममें ही विशेष रुचि रखती है, वैसे ही अनेक अपत्यों के रहते हुए भी हिमालय की दृष्टि पार्वती मे ही विशेष प्रेम रखती थी।

अथाऽनुग्रहोन्मुखया पार्वत्या हिमालयस्य जनितशोभत्वमाह—

**प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।**
**संस्कारवत्येव गिरा मनीषी, तया स पूतश्च विभूषितश्च॥ २८॥**

नभ जाह्नवी से स्वर्ग पथ दीपक सदृश अति ज्वाल से।
विद्वान सम पावन गिरा से, पार्वती से गिरि लसे॥

**अन्वयः**—प्रभामहत्या शिखया दीपः इव, त्रिमार्गया त्रिदिवस्य मार्ग इव, संस्कारवत्या गिरा मनीषी इव, तया स पूतश्च विभूषितश्च॥

**व्याख्या**—प्रभामहत्या=प्रकाशाऽधिकया, शिखया=ज्वालया, दीपः इव=प्रदीपः इव "शिखादीपयोः अवयवाऽवयविभावादभेदेन व्यवहारः", त्रिमार्गया = मन्दाकिन्या, त्रिदिवस्य=स्वर्गस्य, मार्गः इव=पन्थाः इव, संस्कारवत्या = संस्कृतिमत्या व्याकरणजन्यशुद्धिमत्या गिरा=वाण्या, मनीषी इव=पण्डितः इव तया=पार्वत्या, सः=हिमालयः, पूतश्च संसारप्रवर्तकाज्ञानविनाशनवशाद्विशुद्धान्तःकरणः=विभूषितश्च=इतस्ततः सञ्चरन्त्या तया समलङ्कृतश्च ॥

**व्युत्पत्तिः**—प्रभामहत्या=मह्यते पूज्यते इति महती, "मह पूजायाम् (भ्वा० प० से०)" इति धातोः "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च" इत्युणादिसूत्रेण महतः पदस्य सिद्धिः, ततः "उगितश्च" इति ङीप् । प्रभाभिः महती प्रभामहती, तया प्रभामहत्या शिखया="वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । त्रिमार्गया=त्रयः मार्गाः यस्याः सा त्रिमार्गा, तया त्रिमार्गया । "अयन वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः । त्रिदिवस्य=तृतीया द्यौः (लोकः) इति त्रिदिवः स्वर्गः, तस्य त्रिदिवस्य । वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम् । पृषोदरादित्वाद्दिवशब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेर्घञर्थे कविधान, "दीव्यन्त्यत्र जना इति क्षीरस्वामी" । "स्वरव्यय स्वर्गनाकत्रिदिवत्रिदशालयाः" इत्यमरः । संस्कारवत्या=संस्कारः अस्ति अस्याः सा संस्कारवती, तया संस्कारवत्या, मतुप्प्रत्ययः । "भद्रैषा लक्ष्मीर्निहिताधिवाचि" इति श्रुतेरिति भावः । गिरा="ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । मनीषी=मनसः इषा मनीषा "शकन्ध्वादिषु पररूप वाच्यम्" इति पररूपत्वम् । बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः । मनीषा अस्य अस्तीति मनीषी, "व्रीह्यादिभ्यश्च ५।२।११६" इति इनि प्रत्यय , "सौ च" इति उपधादीर्घः । "धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान्पण्डितः कविः" इत्यमरः । पूतः=पवते स्म इति पूतः, "पूङ् पवने (भ्वा० आ० से०)" इति धातोः "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" ३।४।७२ इति क्तप्रत्ययः । "पवित्रः प्रयतः पूत" इत्यमरः । विभूषितः=भूष्यते स्म इति भूषितः, "भूष अलङ्कारे ( भ्वा० प० से० ) इति धातोः क्तप्रत्ययः । विशेषेण भूषितः विभूषितः, "सह सुपा" इत्यत्र योगविभागात्समासः । अत्र मालोपमाऽलङ्कारः । तल्लक्षणमुक्त साहित्यदर्पणे—

"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति ॥

**भावार्थः**—यथा प्रदीपः शोभामहत्या ज्वालया शोभितोऽलङ्कृतश्च भवति,

यथा आकाशः स्वर्गङ्गया पवित्रो रमणीयश्च भवति, यथा विद्वान् व्याकरणादि-लक्षणानुसारिण्या वाचा पुण्यवान् बहुमानास्पदश्च भवति, तथैव हिमवान् पार्वत्या पूतः विभूषितश्चासीदिति भावः ।

**भाषा**—ज्योति से दीपक, मन्दाकीनी से गगन, संस्कृत वाणी से विद्वान् की तरह पार्वती से हिमालय पवित्र तथा भूषित हुआ ।

क्रमेण सम्पन्नबाल्यावस्थायाः पार्वत्याः क्रीडाप्रकारानाह—

**मन्दाकिनीसैकतवेदिकाभिः, सा कन्दुकैः कृत्रिमपुत्रकैश्च ।**
**रेमे मुहुर्मध्यगता सखीनां, क्रीडारसं निर्विशतीव बाल्ये ॥ २६ ॥**

**मन्दाकिनी तट पर बना कर गेंद गुडिया वेदिका ।**
**थी खेलती गिरिजा स्वयं क्रीडा बनी थी सेविका ॥**

**अन्वयः**—सा बाल्ये क्रीडारसं निर्विशती इव सखीना मध्यगता ( सती ) मन्दाकिनीसैकतवेदिकाभिः कन्दुकैः कृत्रिमपुत्रकैश्च मुहुः रेमे ॥

**व्याख्या**—सा = पार्वती, बाल्ये=शैशवे [ वयसि ], क्रीडारसं=खेलास्वादं [खेलारुचिमिति यावत् ], निर्विशती इव=भुञ्जाना इव, सखीनाम्=आलीनाम् , मध्यगता [ सती ] मध्यवर्तिनी [ सती ], मन्दाकिनीसैकतवेदिकाभिः=वियद्गङ्गापुलिनपरिष्कृतभूमिभिः, कन्दुकैः=गेन्दुकैः, कृत्रिमपुत्रकैश्च=क्रियानिवृत्तपाञ्चालिकाभिश्च, मुहुः = पुनः पुनः, रेमे = चिक्रीड ॥

**व्युत्पत्तिः**—बाल्ये = बालस्य भावः बाल्यं, तस्मिन् बाल्ये, "गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२४" इति ष्यञ् , आदिवृद्धिः । "शिशुत्वं शैशवं बाल्यम्" इत्यमरः । क्रीडारसं = क्रीडन क्रीडा, "क्रीड विहारे ( भ्वा० प० से० ) इति धातोः "गुरोश्च हलः ३।३।१०३" इति अप्रत्ययः; "अजाद्यतष्टाप्" इति टाप् प्रत्ययः । "क्रीडा खेला च कूर्दनम्" इत्यमरः । क्रीडाना रसः क्रीडारसः, तं क्रीडारसं । "रसो गन्धे रसः स्वादे" इति विश्वः । निर्विशती = निर्विशतीति निर्विशती, निरुपसर्गपूर्वकात् "विश प्रवेशने" इति धातोः हेतौ शतृप्रत्ययः, स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप्प्रत्ययः । "आच्छीनद्योर्नुम्" इति विकल्पान्नुमभावः । "निर्वेशो भृतिभोगयोः" इति विश्वः । "कृष्णमाराधयन्नपवर्गं लभते" इतिवत् क्रीडारसात् बाल्यं निर्वशतीवेत्यर्थः । सखीनाम्="आलिः सखी वयस्या च" इत्यमरः । मध्यगता = मध्यं गता मध्यगता, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नैः" इति द्वीतीयातत्पुरुषसमासः । मन्दाकि-

नीसैकतवेदिकाभिः = मन्दाकिन्याः सैकतानि, मन्दाकिनीसैकतानि, "मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका" इति कोषः। वेदय एव वेदिकाः, स्वार्थे कन्। "वेदिः परिष्कृता भूमिः" इत्यमरः। मन्दाकिनीसैकतेषु वेदिकाः मन्दाकिनीसैकतवेदिकाः, ताभिःमन्दाकिनीसैकतवेदिकाभिः। कन्दुकैः="गेन्दुकः कन्दुकः" इत्यमरः। कृत्रिमपुत्रकैः = क्रियया निर्वृत्ताः कृत्रिमाः, "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः, "क्त्रेर्मम्नि" इति मन्नागमश्च। पुत्रा इव पुत्रका, "इवे प्रतिकृतौ ५। ३। ९५" इति कन्प्रत्ययः "पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता" इत्यमरः। कृत्रिमाश्च ते पुत्रकाः कृत्रिमपुत्रकाः, तैः कृत्रिमपुत्रकैः ॥

अत्र जगदुपकृतिमात्रव्यापाराया देव्या बाल्यग्रहणादिव लोकोत्तरं रमणमित्येकोत्प्रेक्षा, क्रीडारसादिव बाल्यग्रणमित्यन्या।

**भावार्थः**—सा पार्वती केलिरागात् बालभावमनुभवन्ती सती सखीभिः सह मिन्दाकिनीतटे स्वेनैव रचितैः सिकतासन्निवेशमयैः मण्डपविशेषैः कन्दुकाघातैः कृत्रिमशालभञ्जिकाभिश्चानवरत चिक्रीडेति भाव।

**भाषा**—वह पार्वती बालभाव सुलभ क्रीडारस से मन्दाकीनी के तीर में कभी बालुकामयमण्डपों से, कभी गेंद से कभी गुडियों से, सखियों के साथ निरन्तर खेला करती थी।

पार्वत्या विद्याग्रहणप्रकारमाह—

**तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः।**
**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥**

**ऋतु-शरद गंगा-हंस सम निशि में महौषधि दीप्ति सम।**
**रहने लगी विद्या उमा में शान्ति सहित अतृप्ति सम ॥**

**अन्वयः**—स्थिरोपदेशा ताम् उपदेशकाले प्राक्तनजन्मविद्याः शरदि गङ्गा हंसमालाः इव, नक्तं महौषधिम् आत्मभासः इव प्रपेदिरे ॥

**व्याख्या**—स्थिरोपदेशाम्=अचलोपदेशा ( मेधाविनीमित्यर्थः ), ता= पार्वतीम्, उपदेशकाले = उपदेशसमये ( विद्याऽभ्याससमये इत्यर्थः ), प्राक्तन जन्मविद्याः = पूर्वजननविद्याः ( पूर्वजन्माऽभ्यस्तविद्याः इत्यर्थः ), शरदि = शरदृतौ, गङ्गा = भागीरथीं, हंसमाला इव = श्वेतगरुत्पङ्क्तय इव, नक्तं=रात्रौ, महौषधि = तृणविशेषम्, आत्मभासः इव = स्वदीप्तयः इव, प्रपेदिरे = प्रापुः ॥

**व्युत्पत्तिः**—स्थिरोपदेशा = स्थिरः उपदेशः ( प्राग्भवीयः ) यस्याः सा

स्थिरोपदेशा, ता स्थिरोपदेशा । उपोपसर्गपूर्वकात् "दिश अतिसर्जने" इति धातोः "हलश्च" इति घञ् प्रत्ययः "पुगन्तलघूपधस्य च" इति लघूपधगुणः । उपदेश-काले = उपदेशस्य कालः उपदेशकालः, तस्मिन् उपदेशकाले । प्राक्तनजन्मविद्याः= प्राग्भवं प्राक्तनं, प्राक्तनं च तज्जन्म प्राक्तनजन्म, विदन्ति आभिः विद्याः । "विद् ज्ञाने" इति धातोः "संज्ञाया समजनिषदनिपतमनविदषुञ्शीङ्-भृञिणः ३।३।९९" इति क्यप् प्रत्ययः, "अजाद्यतष्टाप्" इति टाप्प्रत्ययश्च । विद्याभेदा अष्टादश उक्ताः । तथा हि विष्णुपुराणे—"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्याभेदाश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु" इति । प्राक्तनजन्मनः विद्याः प्राक्तनजन्म-विद्याः । गङ्गा = "गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा । भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि" इत्यमरः । हंसमाला = हंसाना मालाः हंसमालाः "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इत्यमरः । महौषधिं = महती चाऽसौ ओषधिः महौषधिः, ता महौषधिं । "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पूर्वपदस्य पुंवद्भावः "आन्महतः समानाधिकरणजातीययोः" इति महत आत्वम् । आत्मभासः = आत्मनः भासः आत्मभासः "स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः ॥

द्विविधो विद्याविनयः कृतकः, स्वाभाविकश्च । तदाह विष्णुगुप्तः "कृतकः स्वाभाविकश्च विनयः" (कौटि० अर्थ० १-५-२) इति । तत्र कृतके प्रथममुपमानं शरदि हंसमालाः गङ्गामिवेति । स्वाभाविके द्वितीयमुपमानं नक्तमात्मभासः महौषधिमिवेत्युपमालङ्कारः ॥

**भावार्थः—**यथा शरत्काले हंसपङ्क्तयः गङ्गां प्राप्नुवन्ति, यथा च सूर्यप्रभाभिभूता निजा एव प्रभा रात्रौ सूर्यप्रभातिरोभावे महौषधिं प्राप्नुवन्ति, तथाऽऽचार्यैः क्रियमाणस्योपदेशस्य समये बाल्यादप्रकाशमाना वासनारूपेण पूर्वमपि विद्यमाना दक्षसुतात्वावस्थायां या विद्यास्ताः सर्वा अपि विद्याः पार्वती प्रापुरिति भावः ।

**भाषा—**जिस तरह शरत् ऋतु से हंसपङ्क्ति गङ्गा को प्राप्त होती है, और रात्रिमें प्रभा महौषधि को प्राप्त होती है, उसी तरह पढ़ते समय प्राक्तन जन्म की विद्या पार्वती को प्राप्त हुई ।

अथ यौवनावस्था वर्णयितुमुपक्रमते—

**असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं, बाल्यात्परं साऽथ वयः प्रपेदे ॥ ३१ ॥**

भूषण बिना भूषण लक्षित मद के बिना मद आगया ।
स्मर सुम अधिक बन अस्त्र यौवन देह में लहरा गया ॥

अन्वयः—अथ सा अङ्गयष्टेः असम्भृत मण्डनम्, अनासवाख्यं मदस्य करणं, कामस्य पुष्पव्यतिरिक्तम् अस्त्र बाल्यात् पर वयः प्रपेदे ॥

**व्याख्या**—अथ = अनन्तरं, सा = पार्वती, अङ्गयष्टेः = शरीरयष्टेः, असम्भृतम् = अयत्नसिद्ध ( स्वाभाविकमित्यर्थः ), मण्डन = प्रसाधनम , अनासवाख्यम् = आसवनामरहितं, मदस्य = अन्त.करणविभ्रमस्य, करणं = साधन, कामस्य = मदनस्य, पुष्पव्यतिरिक्त = कुसुमाऽधिकम्, अस्त्रम् = अस्त्रभूतं, बाल्यात् = शैशवात, परम् = अनन्तरभावि, वयः=अवस्था ( यौवनमित्यर्थः ), प्रपेदे=प्राप ।

**व्युत्पत्तिः**—अङ्गयष्टेः=अङ्ग यष्टिरिव अङ्गयष्टिः, तस्या. अङ्गयष्टेः, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे २।१।५६" इति समासः । प्रशस्ताङ्गस्येत्यर्थः । "हस्तयष्टिलतादयः प्रशंसावचना" इत्युक्तत्वात् । असम्भृत = न सम्भृतम् = असम्भृतं, तत् । अनासवाख्यम्=आसवश्चाऽसौ आख्या आसवाख्या, अविद्यमाना आसवाख्या यस्य तत् अनासवाख्य, तत् । मदस्य = सम्मोहानन्दसम्भेदो मादिरादिकृतो मद इति भोजः । करण=क्रियते अनेनेति करण "डुकृञ् करणे" इति धातोः "करणाऽधिकरणयोश्च ३।३।११७" इति करणे ल्युट् प्रत्ययः । "युवोरनाकौ" इति तस्य अनादेशः । कामस्य=मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः । कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः । पुष्पव्यतिरिक्तम् = विशेषेण अतिरिक्तं व्यतिरिक्तं "सुप्सुपा" इति समासः, "अतिरिक्तः समधिकः" इत्यमरः । पुष्पेभ्यः व्यतिरिक्तं पुष्पव्यतिरिक्तं तत् । बाल्यात्=बालस्य भावः बाल्य तस्मात् बाल्यात् । वयः="खगबाल्यादिनोर्वय" इत्यमरः । "अत्र द्वितीयचरणे आसवरूपकारणाऽभावेऽपि आसवकार्यमदकथनात् विभावनाऽलङ्कारः । तदुक्तं साहित्यदर्पणे—विभावना विना हेतु कार्योत्पत्तिर्यदुच्यते" इति । प्रथमतृतीययोस्तु आरोप्यमाणयोर्मण्डनमदनाऽस्त्रत्वयोः प्रकृतोपयोगात् परिमाणामाऽलङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे-"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनी । परिणामो भवेत्तुल्यातुल्याधिकरणा द्विधा' इति म०म० मल्लिनाथः । वामनस्त्वत्र विशेषोक्तिरलङ्कार इत्युक्तवान् । यौवनस्य मण्डनत्वादिरूपणात् सव्यतिरेकञ्चेदं रूपकमित्यन्ये ॥

**भावार्थः**—अथ कालक्रमेण सा पार्वती अप्रयाससाध्यं नयनानन्दकरं

शरीरस्यालङ्कारसाधनमासवव्यतिरिक्तं मदकारणं मदनस्य कुसुमाद् व्यतिरिक्तमायुधं शैशवादनन्तरं यौवनं प्रापेति भावः ।

**भाषा**—धीरे धीरे पार्वती ने शरीर का अयत्न सिद्ध भूषणभूत तथा विना मद्य के मदका साधनभूत एव विना पुष्पों के कामदेव का अस्त्रभूत यौवन को प्राप्त किया ।

तादृशावस्थायास्तस्याः शरीरशोभा वर्णयति—

**उन्मीलितं तूलिकयेव चित्रं, सूर्यांशुभिर्भिन्नमिवाऽरविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि, वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥**

**रवि-किरण से ज्यों कञ्ज फबता तूलिका से चित्र ज्यों ।**
**आई जवानी बन गया तन विमल रम्य विचित्र त्यों ॥**

**अन्वयः**—नवयौवनेन विभक्तं तस्याः वपुः तूलिकया उन्मीलितं चित्रम् इव, सूर्यांऽशुभिः भिन्नम् अरविन्दम् इव, चतुरस्रशोभि बभूव ।

**व्याख्या**—नवयौवनेन=प्रत्यग्रतारुण्येन, विभक्तम्=अभिव्यञ्जितं ( स्तनजघनादिसंस्थानमित्यर्थः ), तस्याः=पार्वत्याः, वपुः=शरीरं, तूलिकया=कूर्चिकया, चित्रलेखनशलाकया इत्यर्थः, उन्मीलितं=समुत्कीर्णम् (रञ्जनद्रव्येण उद्भासितम् ) चित्रम् इव=आलेख्यम् इव, सूर्यांऽशुभिः=दिवाकरकिरणैः, भिन्नं = विकसितम् , अरविन्दम् इव = कमलम् इव, चतुरस्रशोभि = अन्यूनानतिरिक्तशोभि, बभूव=अभवत् ।

**व्युत्पत्तिः**-नवयौवनेन, यूनो भावः यौवनं, नव च तत् यौवनं नवयौवनं, तेन नवयौवनेन । "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नव" इत्यमरः । वपुः= गात्रं "गात्र वपुः संहनन शरीरं वर्ष्म विग्रहः" इत्यमरः। तूलिकया="तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः" इति विश्वः । चित्रम्="आलेख्याऽऽश्चर्ययोश्चित्रम्" इत्यमरः। सूर्यांऽशुभिः = सरति आकाशे सूर्यः,"सृ गतौ" इति धातोः "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ३।१।११४" इति सूत्रेण कर्तरि क्यप्, निपातनादुत्व च । यद्वा"षू प्रेरणे" इति तौदादिकाद्धातोः "सुवति कर्मणि लोकं प्रेरयतिं" इति विग्रहे पूर्वसूत्रात् क्यप् , तस्य रुट् च । "सूरसूर्याऽर्यमादित्यद्वादशाऽऽत्मदिवाकराः" इत्यमरः । सूर्यस्य अंशवः सूर्यांऽशवः, तैः सूर्यांशुभिः । "किरणोस्रमयूखांऽशुगभस्तिघृणिरश्मयः" इत्यमरः । अरविन्दम्="वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । चतुरस्रशोभि=चतस्रः अस्रयः यस्य तत् चतुर-

स्रम्, "सुप्रातसुश्वसुदिवशारि कुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः" इति अच्प्रत्ययाऽन्तो निपातः, "यस्येति च" इति इकारलोपः । चतुरस्रशब्दोऽय निरूढलक्षणया समग्रार्थवाचकः, चतुरस्र यथा स्यात्तथा शोभते तच्छीलम् इति चतुरस्रशोभि, "सुप्य जातौ णिनिस्ताच्छील्ये" इति णिनिः । यथा चित्राऽरविन्दयोः तूलिकासूर्यकिरणसम्बन्धः अभिव्यञ्जकः, तथा पार्वत्या स्वाभाविकस्य अङ्गसौष्ठवस्य यौवनप्रादुर्भावः अभिव्यञ्जकः बभूवेत्यर्थः। अत्र चतुरस्रशोभित्व साधारणो धर्मः। मालोपमालङ्कारः॥

**भावार्थः**—नूतनतारुण्येव व्यक्तीकृतस्तनजघनाद्यवयवसंस्थानं पार्वत्याः शरीरं चित्रलेखनशलाकया स्फुटीकृतमालेख्यमिव रविरश्मिभिर्विकासित कमलमिव सम्पूर्णशोभ सञ्जातमिति भावः ।

**भाषा**—नवीन यौवन से लावण्यमय स्तनजघनादि अवयवयुक्त पार्वती का शरीर, कूंची से उज्वलित चित्रके समान, सूर्य किरणों से विकसित कमल के समान, पूर्ण शोभायमान हुवा ।

देवतानां स्वरूपं पादाऽङ्गुष्ठ प्रभृति वर्ण्यते, मानुषाणा केशादारभ्येति साम्प्रदायिकाः । तथा च सम्प्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते ।

तत्रादौ चरणाङ्गुष्ठयोः शोभातिशयमाह—

**अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।**
**आजह्रतुस्तच्चरणौ पृथिव्यां, स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥**

पद-नख-प्रभा से ज्ञात होता लालिमा करती वमन ।
पग पग बनाती अरुण सरसिज जब उमा करती गमन ॥

**अन्वयः**—अभ्युन्नताऽङ्गुष्ठनखप्रभाभिः निक्षेपणात् रागम् उद्गिरन्तौ इव तच्चरणौ पृथिव्याम् अव्यवस्था स्थलाऽरविन्दश्रियम् आजह्रतुः ।

**व्याख्या**—अभ्युन्नताऽङ्गुष्ठनखप्रभाभिः=अभ्युदग्राऽङ्गुष्ठनखद्युतिभिः निमित्तेन, निक्षेपणात्=निर्भरन्यासात् हेतोः, रागम्=लौहित्यम् अन्तर्गतमिति शेषः । उद्गिरन्तौ=वमन्तौ इव, बहिर्निस्सरयन्तौ इव स्थितौ इत्यर्थः, तच्चरणौ=पार्वतीपादौ, पृथिव्या=मह्याम्, अव्यवस्था=व्यवस्थारहिता सञ्चारिणीमित्यर्थः, स्थलाऽरविन्दश्रियं=स्थलकमलशोभाम्, आजह्रतुः = अनुचक्रतुः ।

**व्युत्पत्तिः**—अभ्युन्नताऽङ्गुष्ठनख भाभिः = अङ्गुष्ठयोः, नखौ अङ्गुष्ठनखौ, "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः" अभ्युन्नतौ च तौ अङ्गुष्ठनखौ अभ्युन्नताऽङ्गुष्ठनखौ "विशेषणं विशेष्येण बहुलम्" इति कर्मधारयसमासः ।

"उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । अभ्युन्नताऽङ्गुष्ठनखयोः प्रभाः, ताभिः अभ्युन्नताङ्गुष्ठनखप्रभाभिः । निक्षेपणात्, न्युपसर्गपूर्वकात् "क्षिप प्रेरणे" इति धातोः ल्युट् प्रत्ययः । रागम्="रञ्ज रागे" इति धातोर्घञ् प्रत्ययः, "घञजबपाः पुंसि" इति लिङ्गाऽनुशासनसूत्रात् तस्य पुंस्त्वम् । "रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु" इति शाश्वतः । उद्गिरन्तौ=उदुपसर्गपूर्वकात् "गॄ निगरणे" इति धातोः "उद्गिरतः" इति विग्रहेण शतृप्रत्ययः । "अत्र उद्गिरतेः गौणाऽर्थत्वात् न ग्राम्यतादोषः, प्रत्युत गुण एव । यथाऽऽह दण्डी काव्यादर्शे—

"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षा विगाहते" ॥ इति ।

तच्चरणौ=तस्याः चरणौ तच्चरणौ [ कर्तृपदम् ], "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । पृथिव्या="गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इत्यमरः । अव्यवस्थाम्=अविद्यमाना व्यवस्था यस्याः सा अव्यवस्था, ताम् अव्यवस्था । स्थलाऽरविन्दश्रियं=स्थलस्य अरविन्दं स्थलाऽरविन्दम्, "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । स्थलारविन्दस्य श्रीः ता स्थलारविन्दश्रियं । "श्रीर्वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्या त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ" इति विश्वमेदिन्यौ । स्थलविशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः—

"यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ ।
निगूढगुल्फौ निहतौ सा स्यान्नृपतिसम्मता ।" इति ।

अत्र उपमानधर्मस्य अरविन्दश्रियः चरणयोः उपमेययोः असम्भवात् अरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनाऽलङ्कारः ।

तल्लक्षणं यथा साहित्यदर्पणे—

"सम्भवन्वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्र चित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना" ॥ इति ।

"सा च निदर्शना सम्बन्धे असम्बन्धलक्षणाऽतिशयोक्त्यनुप्राणिता, अव्यवस्थामित्यनेन स्थलाऽरविन्दस्य स्थैर्यसम्बन्धेऽपि असम्बन्धाऽभिधानात्" ।

अतिशयोक्तिलक्षणं तु—

"सिद्धत्वेऽध्यवसायस्याऽतिशयोक्तिर्निगद्यते
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।

पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ॥" इति।

**भावार्थः**—पार्वत्याः पादारविन्दे भूम्या पदविन्यासहेतुना पूर्वसेवितं लाक्षारसं स्वभावारुणैरङ्गुष्ठनखमयूखैरुद्वमन्ताविव निरन्तरं स्थलकमलशोभामाहृतवन्ताविति भावः ।

**भाषा**—भूमि पर चलने से पार्वती का सुकुमार चरण स्वाभाविक लाल अङ्गुलनखकिरणों द्वारा पूर्व सेवित लाक्षारस को मानो उगलता हुआ स्थल कमलों की शोभा को पाता था ।

अथ चरणगतं सविलासगमनं वर्णयति—

**सा राजहंसैरिव संनताङ्गी, गतेषु लीलाञ्चितविक्रमेषु ।**
**व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ३४ ॥**

**आसक्त नूपुर की मधुर ध्वनि से चले आये सरति ।**
**कुच-भार से नत पार्वती, पाई मरालों से सुगति ॥**

**अन्वयः**—प्रत्युपदेशलुब्धैः नूपुरसिञ्जितानि आदित्सुभिः राहंसैः संनताङ्गी सा लीलाञ्चितविक्रमेषु गतेषु व्यनीयत इव ॥

**व्याख्या**—प्रत्युपदेशलुब्धैः = प्रत्युपदेशलोलुपैः उपदेशशुल्कलोलुपैरित्यर्थः, नूपुरसिञ्जितानि = मञ्जीरशब्दान्, आदित्सुभिः = जिघृक्षुभिः आदातुमिच्छुभिरित्यर्थः, राजहंसैः = हंसविशेषैः;, संनताङ्गी=किञ्चिन्नम्राङ्गी कुचभारादिति भावः, सा=पार्वती, लीलाञ्चितविक्रमेषु=विलासपूजितपादन्यासेषु, गतेषु= गमनेषु विषयेषु, व्यनीयत इव = विनीता किमु "अन्यथा कथमस्याः हंसगमनमित्युत्प्रेक्षा" ।

**व्युत्पत्तिः**—प्रत्युपदेशलुब्धैः = उपदेशस्य प्रतिदानं प्रत्युपदेशः, तस्मिन् लुब्धाः, तैः प्रत्युपदेशलुब्धैः "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यते ॥" इति न्यायादिति भावः । नूपुरसिञ्जितानि=नूपुरयोः सिञ्जितानि नूपुरसिञ्जितानि, तानि [ कर्मपदमेतत् ], "मञ्जीरो नूपुरोऽस्त्रियाम्" इति, "भूषणानां तु सिञ्जितम्" इति चाऽमरः । आदित्सुभिः = आदातुम् इच्छवः आदित्सवः, तैः आदित्सुभिः । राजहंसैः=हंसानां राजानः राजहंसाः, तैः राजहंसैः, "राजदन्तादिषु परम् २।२।३१" इति राजशब्दस्य पूर्वनिपातः । "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इति, "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इति चाऽमरः । संनताङ्गी = सनतम् अङ्गं यस्याः सा संन-

ताङ्गी' स्त्रीत्वविवक्षाया "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् प्रत्ययः। लीलाञ्चितविक्रमेषु=लीलाभिः अञ्चिताः लीलाञ्चिताः, "अञ्चु गतिपूजनयोः"इति धातोः क्तप्रत्ययः। पूजायाम् "अञ्चेः पूजायाम्" इति इडागमः। लीलाञ्चिताः विक्रमाः पादन्यासाः येषु तानि लीलाञ्चितविक्रमाणि, तेषु लीलाञ्चितविक्रमेषु। "लीला विलासक्रिययो." इत्यमरः। गतेषु=गमनानि गतानि तेषु गतेषु, "गम्लृ गतौ" इति धातोः "नपुंसके भावे क्तः" इति क्तप्रत्ययः। गतेषु इत्यत्र वैषयिकी सप्तमी। व्यनीयत=व्युपसर्गपूर्वकात् "णीञ् प्रापणे" इति धातो. कर्मणि लङ्। "सार्वधातुके यक" इति यक् प्रत्ययः। अत्र उत्प्रेक्षाऽलङ्कारः। तल्लक्षण यथा साहित्यदर्पणे–"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति॥

**भावार्थः**—सम्यङ्नम्रस्कन्धा पार्वती मञ्जुकूजितोपदेशमिच्छद्भिः राजहंसैः प्रत्युपदेशलोभात् विलासयुक्तपादविन्यासेषु गमनेष्वशिक्षयन्निवेति भावः।

**भाषा**—मधुर शब्द सीखने की अभिलाषा से राजहंसों से पार्वती विलास युक्त पदविन्यास गमनमें मानों सिखायी गयी।

जङ्घाद्वयं वर्णयति—

**वृत्तानुपूर्वे च न चाऽतिदीर्घे, जङ्घे शुभे सृष्टवतस्तदीये।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः॥३५॥**

**विधि ने जघन की सृष्टि में, लावण्य सब व्यय कर दिया।**
**अवशिष्ट अवयव के लिये, फिर कान्ति पुञ्ज सृजन किया॥**

**अन्वयः**—वृत्तानुपूर्वे न च अतिदीर्घे शुभे तदीये जङ्घे सृष्टवतः। विधातुः शेषाङ्गनिर्माणविधौ उत्पाद्ये लावण्ये यत्नः आस इव।

**व्याख्या**—वृत्तानुपूर्वे=वर्तुलपूर्वाऽनुगते गोपुच्छाकारे इत्यर्थः, न च अतिदीर्घे=मध्यमप्रमाणे, शुभे=मङ्गले, तदीये=तस्याः पार्वत्या इत्यर्थ., जङ्घे=प्रसृते, सृष्टवतः=निर्मितवतः, विधातुः=ब्रह्मणः, शेषाऽङ्गनिर्माणविधौ=अतिरिक्ताऽवयवनिर्मितिविधाने' उत्पाद्ये=उत्पादनीये, लावण्ये=कान्तिविशेषविषये, यत्नः=प्रयत्नः, आस इव=बभूव इव।

**व्युत्पत्तिः**—पूर्वम् अनुगते अनुपूर्वे, "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। वृत्ते च ते अनुपूर्वे वृत्ताऽनुपूर्वे, "वर्तुलं निस्तलं वृत्तम्" इत्यमरः। अतिदीर्घे=अत्यन्तं दीर्घे अतिदीर्घे, "सुप्सुपा" इति समासः। नेति पर्युदासार्थकः। अत्यन्तं दीर्घे च न, नाप्यतिह्रस्वे चेति भावः। तथा चोक्तं सामुद्रिके—

"दीर्घजघङ्घा प्रपद्यायुदीर्घकाल सुखं त्यजेत्" "ह्रस्वजङ्घा स्त्रियं त्यजेदि" ति च। शुभे="श्व श्रेयस शिव भद्र कल्याणं मङ्गलं शुभम्" इत्यमरः। तदीये=तस्याः इमे तदीये, ते। "त्यदादीनि च" इति तच्छब्दस्य वृद्धसंज्ञा, "वृद्धाच्छः" इति छ प्रत्ययः। ततः "आयनेयीनीयियः फढखछघा प्रत्ययादीनाम्" इति छस्य ईया· देशः। जङ्घे "जङ्घा तु प्रसृता" इत्यमरः। सृष्टवतः = असृजत् इति सृष्टवान्, तस्य सृष्टवतः, "सृज विसर्गे" इति धातोः "निष्ठा ३।२।१०२" इति क्तवतुप्रत्ययः। विधातुः=विदधातीति विधाता, तस्य विधातुः, व्युपसर्गपूर्वकात् "डुधाञ् धारणपोषणयोः" इति "ण्वुल्तृचौ" इति कर्तरि तृच्प्रत्ययः, "आदिर्ञिटुडवः" इति डोरित्संज्ञा। "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः। शेषाऽङ्गनिर्माणविधौ=शेषाणि च तानि अङ्गानि शेषाङ्गानि, "अङ्गं प्रतीकोऽवयवोऽपघन" इत्यमरः। शेषाङ्गाना जङ्घाव्यतिरिक्ताऽवयवानाम् निर्माणं शेषाऽङ्गनिर्माण, तस्य विधिः तस्मिन् शेषाङ्गनिर्माणविधौ, "निमित्तात्कर्मयोगे" (५।२।२७) इति सप्तमी। उत्पाद्ये=उत्पादितु योग्यम् उत्पाद्य, तस्मिन् उत्पाद्ये उत्पादनीये।

"आस" इति बभूवार्थे "तिङन्तप्रतिरूपकमव्ययम्" इत्याह शाकटायनः।

वल्लभस्तु "न तिङन्तप्रतिरूपकमव्ययम्" अस्तेर्भूः" इति भ्वादेशनियमात् तादृक्तिङन्तस्यैव अभावात्। किन्तु कवीनामयं प्रामादिकः प्रयोग इत्याह।

वामनस्तु "अस गतिदीप्त्यादानेषु" इति धातोर्लिटि रूपमिदम्" इत्याह।

अस इति स्वरितेद्दीप्त्यर्थे। आस=दिदीपे, प्रवृत्त इत्यर्थः। अत्रोत्प्रेक्षालङ्कारः।

**भावार्थः**—विधाता पार्वतीशरीरनिर्माणार्थं सम्पादितेषु लावण्यद्रव्येषु सर्वेष्वपि वर्तुलस्य पूर्वानुरूपस्य नात्यन्तदीर्घस्य नाप्यतिह्रस्वस्य च तदीयजङ्घाद्वयस्य निर्माणकर्मण्येवोपक्षीणेषु पुनर्महता प्रयासेन लावण्यपुञ्जं सम्पाद्य तदनुरूपमवयवान्तरं निर्मितवानिवेति भाव·।

**भाषा**–विधाता को पार्वती के शरीर निर्माण के लिये एकत्री कृत संपूर्ण लावण्य द्रव्य का सुन्दर तदीय जङ्घाद्वय निर्माण मेही व्यय होजाने से अन्य अवयवों के निर्माण के लिये अतिरिक्त लावण्य द्रव्य का अति प्रयत्न से मानों संग्रह करना पड़ा।

ऊरुद्वय वर्णयति—

**नागेन्द्रहस्तास्त्वचिकर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।**
**लब्ध्वाऽपि लोके परिणाहि रूपं, जातास्तदूर्वोरुपमानबाह्याः॥३६॥**

कदली हुई अति शीत, कुञ्जर शुण्ड कर्कशतर हुए ।
गिरिराज-कन्या जघन के, उपमान के बाहर हुए ॥

**अन्वयः**—नागेन्द्रहस्ताः त्वचिकर्कशत्वात् कदलीविशेषाः एकान्तशैत्यात् लोके परिणाहि रूपं लब्ध्वाऽपि तदूर्वोः उपमानबाह्याः जाताः ।

**व्याख्या**—नागेन्द्रहस्ताः=करीन्द्रकराः ( ऐरावतादिकरा इत्यर्थः ), त्वचि=चर्मणि, कर्कशत्वात्=कठोरत्वात् , कदलीविशेषाः = रम्भाविशेषाः (रामरम्भादय इत्यर्थः ), एकान्तशैत्यात् = नियतशीतलत्वात् [हेतोः], लोके=भुवने, परिणाहि=विशालं ( वैपुल्ययुक्तमित्यर्थः ), रूपम् = आकृतिं, लब्ध्वा अपि = प्राप्य अपि ( अपिशब्दात्करिकदलीमात्रस्य तादृशविशालता नाऽस्तीति द्योत्यते । ), तदूर्वोः= पार्वतीसक्थ्नोः, उपमानबाह्याः = उपमानबहिर्भूताः, जाताः = बभूवुः ॥

**व्युत्पत्तिः**-नागेन्द्रहस्ताः=नागाना नागेषु वा इन्द्राः नागेन्द्राः, "यतश्च निर्धारणम्"इति षष्ठी, सप्तमी वा विभक्तिः । ततः षष्ठीसमासः, सप्तमीसमासो वा । "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । नागेन्द्राणा हस्ताः नागेन्द्रहस्ताः, त्वचिकर्कशत्वात्=कर्कशस्य भावः कर्कशत्व, "तस्य भावस्त्वतलौ"इति भावे त्वप्रत्ययः । "कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्"इत्यमरः । त्वचि कर्कशत्वं, तस्मात् त्वचिकर्कशत्वात् , त्वग्गतात् कार्कश्यादित्यर्थः । अमूर्धमस्तकात्स्वाङ्गादकामे" (६।३।१२) इति सप्तम्या अलुक् । कदलीविशेषाः=कदलीनां विशेषाः कदलीविशेषाः । एकान्तशैत्यात्=शीतस्य भावः शैत्यं, ष्यञ्प्रत्ययः । एकान्तं यथा स्यात्तथा शैत्यम् एकान्तशैत्यं, तस्मात् एकान्तशैत्यात् "विभाषा गुणेऽस्त्रियाम्"इति हेतौ पञ्चमी । "तीव्रैकान्तनितान्तानि गाढबाढदृढानि च" इत्यमरः । लोके = "लोकस्तु भुवने जने" इत्यमरः । परिणाहि=परिणाहः अस्य अस्तीति परिणाहि, तत् [ रूपमित्यस्य विशेषणम् ], "परिणाहो विशालता" इत्यमरः । लब्ध्वा = "डुलभष् प्राप्तौ" इति धातोः "समानकर्तृकयोः पूर्वकाले ३।४।२१" इति क्त्वा प्रत्ययः, "झषस्तथोर्धोऽधः" इति तस्य धः। तदूर्वोः=तस्याः उरू तदरू, तयोः तदूर्वोः । "सक्थि क्लीबे पुमानूरूः" इत्यमरः । उपमानबाह्याः=बहिर्भवाः बाह्याः, बहिश्शब्दात् 'बहिषष्टिलोपो यञ्च" इति वार्तिकेन यञ्प्रत्ययः, टिलोपश्च, "तद्धितेष्वचामादेः ७।२।११७" इति आदिवृद्धिश्च । उपमितिरुपमानम् ( भावे ल्युट् ) उपमाने बाह्याः उपमानबाह्याः । अत्र व्यतिरेकाऽलङ्कारः । उपमेयस्य पार्वत्यूरुयुगलस्य उपमानात् नागेन्द्रहस्तात् कदलीविशेषाच्च आधिक्यस्योक्तेः ।

व्यतिरेकलक्षण चोक्तं साहित्यदर्पणे-"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथ वा । व्यतिरेकः" इति ॥

**भावार्थः**—जगति प्रभूतसौन्दर्यं सम्प्राप्यापि गजेन्द्राणां शुण्डाः त्वग्गतात् कार्कश्यात्, विशिष्टाः कदल्यश्च नियतशीतधर्मत्वात्, पार्वत्या उरुप्रदेशयोरुपमितावनुपयोगिनो जाता इति भावः ।

**भाषा**—पार्वती के ऊरू की उपमा लोक में अत्यन्त कठोर होने के कारण न तो गज के शूंड से, और अत्यन्त शीतल मात्र होने के कारण न तो केले के खम्भों से ही दी जा सकती थी ।

नितम्बप्रदेशं वर्णयति—

**एतावता नन्वनुमेयशोभि, काञ्चीगुणस्थानमनिन्दितायाः ।**
**आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥**

**गिरिनाथ ने उरु पर, बिठाया जिन नितम्बों को तरस ।**
**अनुमान करना चाहिये, कितने रहें वे मृदु सरस ॥**

**अन्वयः**—यत् पश्चात् गिरिशेन अनन्यनारीकामनीयम् अङ्कम् आरोपितम् अनिन्दितायाः काञ्चीगुणस्थानम् एतावता ननु अनुमेयशोभि ।

**व्याख्या**—यत् यस्माद्धेतोः पश्चात्=अनन्तरं ( विवाहानन्तरमित्यर्थः ), गिरिशेन=गिरीशेन ( शङ्करेणेत्यर्थः ) अनन्यनारीकमनीयम्=न परस्त्रीवाञ्छनीयम्, अङ्कम्=उत्सङ्गम्, आरोपितम्=अधिरोपितम्, अनिन्दितायाः=अनवद्यायाः ( पार्वत्या इत्यर्थः ), काञ्चीगुणस्थान=मेखलासूत्रस्थलम् ( नितम्बबिम्बमित्यर्थः ), एतावता=इयता लिङ्गेन, ननु=निश्चयेन । अनुमेयशोभि=अनुमानयोग्यकान्ति ( अस्तीत्यर्थः ) ॥

**व्युत्पत्तिः**—गिरिशेन=गिरिः अस्याऽस्तीति गिरिशः, तेन गिरिशेन, गिरिशब्दात् "लोमादिपामादिपिच्छादिभ्यः शनेलचः" इति शप्रत्ययः । यद्वा गिरौ=कैलासे शेते इति गिरिशः, तेन गिरिशेन, "गिरौ डश्छन्दसि" इति वार्तिकेन "भाषायामपि क्वचिदिष्यते" इति मतान्तरेण डप्रत्ययः । "गिरीशो गिरिशो मृडः" इत्यमरः अनन्यनारीकमनीयम्=अन्याश्च ता नार्यः अन्यनार्यः, "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यमरः । कामयितुं शक्यः कमनीयः । अन्यासा नारीणा कमनीयः स भवतीति अनन्यनारीकमनीयः, तम्, अनन्यनारीकमनीयम् । अङ्कम्, "उत्सङ्गचिह्नयोरङ्क" इत्यमरः । अनिन्दितायाः=निन्दा

सञ्जाता अस्याः सा निन्दिता, "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः । न निन्दिता, तस्याः अनिन्दितायाः । काञ्चीगुणस्थानम् = काञ्च्याः गुणः काञ्चीगुणः, "स्त्रीकट्या मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः । काञ्चीगुणस्य स्थान काञ्चीगुणस्थानम्, एतावता=एतत् परिमाणम् अस्य एतावत्, तेन एतावता । ननु="प्रश्नाऽवधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः । अनुमेयशोभि = अनुमातुं योग्या अनुमेया, अनुमेया चाऽसौ शोभा अनुमेयशोभा, अस्य अस्तीति अनुमेयशोभि ।

मल्लिनाथस्तु—"शोभते इति शोभि, आवश्यके णिनिः, ततस्त्वप्रत्ययः । अनुमेयं शोभित्वं यस्य तत् अनुमेयशोभि । 'त्वप्रत्ययस्तु गताऽर्थत्वान्न प्रयुक्तः' इत्याह वामनः"—इत्याह । तन्न प्रतिभाति ।

गिरिजाकाञ्चीगुणस्थानस्य विशेषशोभायाः साधकमनुमानस्वरूपं तु, "गिरिजानितम्बबिम्बं, विश्वाऽतिशायिसौन्दर्यवत्, गिरिशाऽङ्कारूढत्वात् 'व्यतिरेकेण नार्यन्तरनितम्बबिम्बवत्" इति ।

अत्रानुमानालङ्कारः । तदुक्तं दर्पणे—

"अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्" इति ।

**भावार्थः**—सर्वावयवसुन्दर्याः पार्वत्या नितम्बयोः शोभा एतावन्मात्रेणैवानुमातुं शक्या, यत् विवाहानन्तरं शङ्करेण तदितरनारीदुष्प्राप्ये स्वोत्सङ्गे तौ स्वयमेव रागातिशयादारोपितावभूतामिति भावः ।

**भाषा**—विवाह के अनन्तर शङ्कर ने अन्यस्त्रियों को दुर्लभ ऐसे स्वकीय गोद मे पार्वती के सुन्दर नितम्बों को स्वयं रक्खा, इसी पर से उस की शोभा का अनुमान किया जा सकता हैं ।

रोमराजिं वर्णयति—

**तस्याः प्रविष्टा नतनाभिरन्ध्रं, रराज तन्वी नवलोमराजिः ।**
**नीवीमतिक्रम्य सितेतरस्य, तन्मेखलामध्यमणेरिवाऽर्चिः ॥३८॥**

नत नाभि से थी ग्रन्थि तक, नव लोम माला सुख करी ।
उसकी असित मणि मेखला की, ज्योति सी थी छवि भरी ॥

**अन्वयः**—नीवीम् अतिक्रम्य नतनाभिरन्ध्रं प्रविष्टा तन्वी तस्याः नवलोमराजिः सितेतरस्य तन्मेखलामध्यमणेः अर्चिः इव रराज ॥

**व्याख्या**—नीवीं=वस्त्रग्रन्थिम्' अतिक्रम्य = उल्लङ्घ्य, नतनाभिरन्ध्रं =

निम्ननाभिविवरं, प्रविष्टा=गता, तन्वी = सूक्ष्मा, तस्याः=पार्वत्याः, नवलोमराजिः=नवीनरोमश्रेणी, सितेतरस्य = असितस्य (इन्द्रनीलस्येत्यर्थः), तन्मेखलामध्यमणेः = गौरीकाञ्चीमध्यनायकमणेः, अर्चिः इव=प्रभा इव, रराज=शुशुभे ॥३८।

**व्युत्पत्तिः**—नीवीं = स्त्रीकटीवस्त्रबन्धेऽपि नीवीं परिपणेऽपि च" इत्यमरः। अतिक्रम्य=अत्युपसर्गपूर्वकात् "क्रमु पादविक्षेपे" इति धातोः क्त्वाप्रत्ययः, ततस्तस्य ल्यप् । नतनाभिरन्ध्रं=नाभेः रन्ध्र नाभिरन्ध्र, छिद्रं निर्व्यथनं रोक रन्ध्रं श्वभ्र वपा सुषिः" इत्यमरः । नतं च तत् नाभिरन्ध्र नतनाभिरन्ध्रं, तत् । तन्वीं="स्तोकाल्पक्षुल्लकाः श्लक्ष्ण सूक्ष्मं दभ्रं कृशं तनु" इत्यमरः । नवलोमराजिः=नवानि च तानि लोमानि नवलोमानि, "तनूरूह रोम लोम" इत्यमरः । नवलोम्ना राजिः नवलोमराजिः । सितेतरस्य=सितात् इतरः सितेतरः, "अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी विभक्तिः, ततः पञ्चमीतत्पुरुषः । तस्य सितेतरस्य । "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इति "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इति चाऽमरः । तन्मेखलामध्यमणेः=तस्याः पार्वत्याः मेखला तन्मेखला, तस्या।इत्यनुवृत्तौ पुनस्तच्छब्दोपादानंवाक्यान्तरत्वान्मर्षणीयम् । यद्वा तस्याः नीव्याः मेखला तन्मेखला, तत्र तदवस्थानात् । मध्यश्चासौ मणिः मध्यमणिः । तन्मेखलायाः मध्यमणिः तन्मेखलामध्यमणिः तस्य तन्मेखलामध्यमणेः । अर्चिः="ज्वालाभासोर्न पुस्यर्चिः" इत्यमरः । उत्प्रेक्षालङ्कारः । नेयमुपमा, अर्चिषो नीव्यतिक्रमासम्भवात् । वर्णसाम्यादिकमुत्प्रेक्षाहेतुः ।

**भावार्थः**—पार्वत्याः गम्भीरं नाभिप्रदेशं प्रविष्टा यौवनारम्भसम्पादिता नूतनरोमपक्तिः कृष्णवर्णस्य तदीयमेखलानायकमणेरर्चिरेव नीविमतिक्रम्य नतनाभिरन्ध्रं प्रविष्टेवासीदिति भावः ।

**भाषा**—पार्वती के नम्रनाभिदेश मे प्रविष्ट रोमपक्ति, नीवी को अतिक्रमण करके नकली हुयी तदीयमेखलामध्यस्थितनीलमणि की मानो प्रभा ही थी ।

व लत्रयं वर्णयति—

**मध्येन सा वेदिविलग्नमध्या, वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन, कामस्य सोपानमिव प्रयुक्तम् ॥३९॥**

**पतली कमर वाली उमा, सानन्द चारु बनी ठनी ।**
**कन्दर्प को सोपान चढ़ने केलिये त्रिवली बनी ॥**

**अन्वयः**—वेदिविलग्नमध्या सा बाला मध्येन चारु वलित्रयं कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं सोपानम् इव बभार ।

**व्याख्या**—वेदिविलग्नमध्या = परिष्कृतभूमिकृशमध्यमा, सा बाला = पार्वती, मध्येन = मध्यभागेन, चारु = सुन्दरं, वलित्रयं=वलित्रिकम् , कामस्य = स्मरस्य, आरोहणार्थम्=आरोढुम् , नवयौवनेन = नूतनतारुण्येन, प्रयुक्त = रचितं, सोपानम् इवं=आरोहणम् इव, बभार = धृतवती ॥

**व्युत्पत्तिः**—वेदिविलग्नमध्या=वेदिः इव "विलगति ह्रसतीति" विलग्नः कृशः वेदिविलग्नः, "उपमानानि सामान्यवचनैः" (२-१-५५)इति समासः । "वेदिः परिष्कृता भूमिः" इत्यमरः । वेदिविलग्नः मध्यः मध्यभागो यस्याः सा वेदिविलग्नमध्या' तनुमध्येति यावत् , "मध्यमं चाऽवलग्नं च, मध्योऽस्त्री" इत्यमरः । बालापदस्य अजादिगणे पाठात् "वयसि प्रथमे" इति ङीप् न, अपि तु "अजाद्यतष्टाप्" इति टाप् प्रत्ययः । "बाला स्यात् षोडशाब्दा" इति कामशास्त्रम् । चारु = "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः । वलित्रय = त्रयः अवयवाः यस्य तत् त्रयं, त्रिशब्दात् "सङ्ख्याया अवयवे तयप्" इति तयप् प्रत्ययः, तस्य "द्वित्रिभ्या तयस्याऽयज्वा" इति अयच् । वलीना त्रयं वलित्रयं, तत् । "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः । आरोहणार्थम्= आरोहणाय इदम् आरोहणार्थम् , ( सोपानम् इत्यस्य विशेषणम् ), "चतुर्थी तदर्थाऽर्थबलिहितसुखरक्षितैः २।१।३६" "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति चतुर्थीतत्पुरुषसमासः । नवयौवनेन=यूनः भावः यौवनम् "तारुण्यं यौवनं समे" इत्यमरः । नवं च तत् यौवनं नवयौवनं, तेन नवयौवनेन । सोपानम् = "आरोहणं स्यात्सोपानम्" इत्यमरः । अत्रोत्प्रेक्षालङ्कारः । तल्लक्षणं च प्रागेवोक्तम् ॥

**भावार्थः**—कृशोदरी बाला सा पार्वती अवलग्नेन त्रिवलीं मदनस्य स्तनवदनाद्युच्चप्रदेशारोहणार्थं नूतनतारुण्येन विरचित सुन्दरं सोपानमिव दधाविति भावः ।

**भाषा**—कृशोदरी पार्वती मध्यभागमें सुन्दर त्रिवली को, कामदेवके स्तनवदनादि उच्चप्रदेशमें चढ़ने के लिये नूतन तारुण्य से बनाई गयी सुन्दर तीन सिढ़ियों की तरह धारण करती थी ।

स्तनद्वय वर्णयति—

**अन्योऽन्यमुत्पीडयदुत्पलाक्ष्याः, स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।**
**मध्ये यथा श्याममुखस्य तस्य, मृणालसूत्रान्तरमप्यलभ्यम् ॥४०॥**

**पीले कठिन स्तनद्वय परस्पर रगड़ खाते चढ गये ।**
**कुच बीच सूत्र-मृणाल का, रखना कठिन था बढ गये ॥**

**अन्वयः**—अन्योऽन्यम् उत्पीडयत् पाण्डु उत्पलाक्ष्याः स्तनद्वय तथा प्रवृद्धम् , श्याममुखस्य तस्य मध्ये यथा मृणालसूत्रान्तरम् अपि अलभ्यम् (आसीत्)॥

**व्याख्या**—अन्योऽन्यं=परस्परम्, उत्पीडयत्=उपरुन्धत्, पाण्डु=गौरम्, उत्पलाक्ष्याः=कमलाक्ष्याः (पार्वत्या इत्यर्थः), स्तनद्वयं=कुचद्वितय, तथा= तेन प्रकारेण, प्रवृद्ध=घनीभूतम्, श्याममुखस्य=कृष्णमुखस्य कृष्णचूचुकस्य इत्यर्थः, ( इद स्वरूपवर्णनम् ) तस्य=स्तनद्वयस्य, मध्ये=अन्तरे, यथा=येन प्रकारेण, मृणालसूत्रान्तरम् अपि=बिसतन्त्ववकाशः अपि, अलभ्यम्=लब्धुमशक्यमासीत् ।

**व्युत्पत्तिः**—अन्योऽन्य="कर्मव्यतिहारे सर्वमाम्नो द्वे वाच्ये" इति द्विरुक्तिः । "समासवच्च बहुलम्" इति बहुलवचनात् असमासपक्षेऽपि "पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" । उत्पीडयत्=उत्पीडयतीति उत्पीडयत् । उत्पलाक्ष्याः=उत्पले इव अक्षिणी यस्याः सा उत्पलाक्षी, तस्याः उत्पलाक्ष्याः, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समान्तः षच् । षित्वात् "षिद्गौरादिभ्यश्च" इति ङीष्प्रत्ययः । "लोचनं नयनं नेत्रमीक्षण चक्षुरक्षिणी" इत्यमरः । तथा="प्रकारवचने थाल् ५।३।२३" इति थाल्प्रत्ययः। प्रवृद्धं=प्रकर्षेण वृद्धं प्रवृद्ध, "सुप्सुपा" इति समासः । "वृधु वृद्धौ" इति धातोः कर्तरि क्तप्रत्ययः । श्याममुखस्य=श्याम मुख यस्य तत् श्याममुख, तस्य श्याममुखस्य, "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इत्यमरः । मृणालसूत्रान्तरं=मृणालस्य सूत्रं मृणालसूत्रं, 'मृणाल बिसम्" इत्यमरः । मृणालसूत्रस्य अन्तरं मृणालसूत्रान्तरम्, "अन्तरमवकाशाऽवधिपरिधानाऽन्तर्धिभेदतादर्थ्ये" इत्यमरः। अलभ्यम्=लब्धुं शक्य लभ्यम्, 'डुलभष् प्राप्तौ" इति धातोः "पोरदुपधात् ३।१।९८" इति सूत्रेण "शकि लिङ् च ३।३।१७२" इति शक्यार्थे यत्प्रत्ययः । न लभ्यम् अलभ्यम् लब्धुमशक्यमित्यर्थः ।

अस्मिन् श्लोके सम्बन्धे असम्बन्धरूपाऽतिशयोक्त्यलङ्कारः । तल्लक्षणं च प्रागुक्तम् । कुचयोः पीवरत्वाऽतिशयार्थमप्यवकाशसम्बन्धेऽसम्बन्धाऽभिधानादिति ।

**भावार्थः**—कमलनेत्रायाः पार्वत्याः परस्परमुत्पीडयद् धवल श्यामसुखं कुच-द्वयं, कियदन्तरमनयोरित्यवगन्तुं परीक्षाप्रसङ्गे तन्मध्यं नीयमानस्य बिसतन्तोरन्तरमपि यथा परीक्षकजनेन न लभ्यं तथा प्रवृद्धमासीदिति भावः ।

**भाषा**—कमलके समाननेत्रवाली पार्वती के परस्पर में सटे हुवे सुन्दर दोनों स्तन, इसतरह बढ़े हुवे थे कि "इन के मध्यमे कितना अवकाश है" इस परीक्षा के लिये परीक्षक ने उन दोनो के मध्यमें विसतन्तु के इतना भी अनन्तर को नहीं पाया

बाहुद्वयं वर्णयति—

**शिरीषपुष्पाऽधिकसौकुमार्यौ, बाहू तदीयाविति मे वितर्कः ।**
**पराजितेनाऽपि कृतौ हरस्य, यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

**भुजदण्ड कुसुम शिरीष से भी, अधिक मृदु सविलास थे ।**
**स्मर था पराजित, बाहु तो भी, शम्भु के गल पाश थे ॥**

**अन्वयः**—यौ ( बाहू ) पराजितेन अपि मकरध्वजेन हरस्य कण्ठपाशौ कृतौ, ( अतः ) तदीयौ बाहू शिरीषपुष्पाऽधिकसौकुमार्यौ इति मे वितर्कः अस्ति ।

**व्याख्या**—यौ=पार्वतीबाहू, पराजितेन अपि = पूर्वं निर्जितेन अपि ( दाहाऽभिभूतेनाऽपीत्यर्थः ) मकरध्वजेन=कामेन, हरस्य=त्र्यम्बकस्य, कण्ठपाशौ=गलबन्धनरज्जू, कृतौ = विहितौ ( कण्ठालिङ्गनं प्रापितौ इत्यर्थः ), अतः = अस्मात्कारणात्, तदीयौ = पार्वतीसम्बन्धिनौ बाहू = भुजौ, शिरीषपुष्पाऽधिकसौकुमार्यौ = शिरीषकुसुमाऽतिरिक्तमार्दवौ, इति = एवं, मे = मम, वितर्कः = ऊहः ( अस्तीति शेषः ) ।

**व्युत्पत्तिः**—मकरध्वजेन=मकरः ध्वजः यस्य सः मकरध्वजः, तेन मकरध्वजेन, "पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः" इत्यमरः । हरस्य=हरतीति हरः, तस्य हरस्य, "हृञ् हरणे" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति अच्प्रत्ययः । "हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः" इत्यमरः । कण्ठपाशौ= कण्ठस्य पाशौ कण्ठपाशौ, "कण्ठो गलः" इत्यमरः तदीयौ=तस्याः इमौ तदीयौ । बाहू = "भुजबाहू प्रवेष्टो दोः" इत्यमरः । शिरीषपुष्पाधिकसौकुमार्यौ = शिरीषस्य पुष्पं शिरीषपुष्पं, तस्मात् अधिकं शिरीषपुष्पाधिकं, कुसुमारस्य भावः सौकुमार्यम्, "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्प्रत्ययः । शिरीषपुष्पाऽधिकं सौकुमार्यं ययोस्तौ शिरीषपुष्पाधिकसौकुमार्यौ । वितर्कः = "अध्याहारस्तर्क ऊहः" इत्यमरः ।

अत्र बाह्वोः आरोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात् परिणामाऽलङ्कारः । परिणामलक्षण यथा साहित्यदर्पणे—"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि । परिणामः" इति ॥ अन्ये त्वत्र व्यतिरेकालङ्कार इत्याहुः ।

**भावार्थः**—विजितविश्वः पुष्पायुधो दर्पात् शिवमासादयन् पराजितो विफलीभूतसुकुमारतरशिरीषपुष्पादिपूर्वोपकरणजातसन्नप्याभ्यामुपकरणभावमुपगताभ्या पार्वतीबाहुभ्या पशुमिव रज्वा कण्ठे गृहीत्वा तमेव पशुपतिं यदात्मविधेयं चकार, तदनयोर्बाह्वोः सौकुमार्यं शिरीषपुष्पादिभिरूपमातु न शक्यमिति कवेर्वितर्कः इति भावः ।

**भाषा**—पार्वती के दोनों बाहू शिरीष कुसुम से भी ज्यादे सुकुमार थे ऐसा कवि का वितर्क है । अतएव पराजित होने पर भी कामदेवने पार्वतीके इन्हीं सुकुमार बाहुओं से महादेव जी को गलेमें कण्ठपाश लगाकर स्वाधीन किया ।

कण्ठ वर्णयति—

**कण्ठस्य तस्याः स्तनबन्धुरस्य, मुक्ताकलापस्य च निस्तलस्य ।**
**अन्योऽन्यशोभाजननाद्बभूव, साधारणो भूषणभूष्यभावः ॥ ४२ ॥**

**उन्नत उरज से कण्ठ-मोती-हार युग छविमान थे ।**
**हिलमिल बढ़ाते कान्ति, भूषण भूष्य भाव समान थे ॥**

**अन्वयः**—स्तनबन्धुरस्य तस्याः कण्ठस्य निस्तलस्य मुक्ताकलापस्य च अन्योऽन्यशोभाजननात् भूषणभूष्यभावः साधारणः बभूव ॥

**व्याख्या**—स्तनबन्धुरस्य = कुचोन्नतस्य, तस्याः=पार्वत्याः, कण्ठस्य = गलस्य, निस्तलस्य=वर्तुलस्य, मुक्ताकलापस्य च=मौक्तिकभूषणस्य च, अन्योऽन्य शोभाजननात्=परस्परकान्त्युत्पादनात् , भूषणभूष्यभावः=अलङ्काराऽलङ्कार्यभावः, साधारणः=समानः, बभूव = अभवत् ॥

**व्युत्पत्तिः**—स्तनबन्धुरस्य=स्तनाभ्या बन्धुर स्तनबन्धुरः, तस्य स्तनबन्धुरस्य । "बन्धुर तून्नताननमिति" "स्तनौ कुचौ" इति चामरः । निस्तलस्य= "वर्तुल निस्तल वृत्तम्" इत्यमरः । मुक्ताकलापस्य = मुक्ताना कलापः मुक्ताकलापः, तस्य मुक्ताकलापस्य, "अथ मौक्तिक मुक्ता" इति, "कलापो भूषणे बर्हे तूणीरे सहताावपि" इति चाऽमर । अन्योऽन्यशोभाजननात्=अन्योऽन्ययोः शोभा अन्योऽन्यशोभा, "शोभा कान्तिद्युतिश्छविः" इत्यमरः । अन्योऽन्यशोभायाः जननम् अन्योऽन्यशोभाजननं, तस्मात् अन्योऽन्यशोभाजननात् , भूषणभूष्य-

भावः = भूषणं च भूष्यश्च भूषणभूष्यौ, तयोः भावः भूषणभूष्यभावः "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते" इति न्यायेन भूषणभावो भूष्यभावश्चेत्यर्थः । साधारणः = "वाच्यलिङ्गाः समस्तुल्यः सदृशः सदृशः सदृक् । साधारणः समानश्च" इत्यमरः ।

अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेण अन्योऽन्यभूषाजनकत्वात् अन्योऽन्यालङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—"अन्योऽन्यमुभयोरेकक्रियायाः कारणं मिथः ।" इति ।

**भावार्थः**—कुचोन्नतस्य पार्वत्याः कण्ठस्य, वर्तुलस्य मुक्ताभूषणस्य च परस्परशोभोत्पादकत्वेनालङ्कारालङ्कार्यभावः समानोऽभूदित्यर्थः, उभावपि परस्परस्य भूष्यौ भूषणे च बभूवतुरिति भावः ।

**भाषा**—पार्वती के स्तनोन्नत कण्ठ, तथा मौक्तिक अलङ्कार के परस्पर की शोभा को बढ़ाने से भूषण भूष्यभाव समान था, अर्थात् कण्ठकी शोभा मौक्तिक से और मौक्तिक की शोभा कण्ठ से होती थी ।

वदनं वर्णयति—

**चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम् ।**
**उमामुखं तु प्रतिपद्य लोला, द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥**

**श्री कमल में शशि में नहीं, शशि में रही न सरोज में ।**
**पर मुग्ध रहती बस उमा के, वदन चन्द्र सरोज में ॥**

**अन्वयः**—लोला लक्ष्मीः चन्द्र गता [ सती ], पद्मगुणान् न भुङ्क्ते, पद्माश्रिता [ सती ], चान्द्रमसीम् अभिख्या न भुङ्क्ते । उमामुखं प्रतिपद्य तु द्विसश्रया प्रीतिम् अवाप ।

**व्याख्या**—लोला=चञ्चला ( परिभ्रमणशीलेत्यर्थः ) लक्ष्मीः =कान्त्यभिमानिनी देवता, चन्द्रं=चन्द्रमसं, गता=प्राप्ता [ सती ], पद्मगुणान् = कमलगुणान् ( सौगन्ध्यादीन् इत्यर्थः ), न भुङ्क्ते = न अनुभवति [ निशि पद्मस्य निमीलितत्वादिति भावः ], पद्माश्रिता = कमलाश्रिता [सती], चान्द्रमसीं=चान्द्रीम् ( चन्द्रमसः इत्यर्थः ), अभिख्या = शोभा (अमृतवदानन्दिनीम् इत्यर्थः), न भुङ्क्ते = न अनुभवति [ दिवसे चन्द्रमसः विच्छायत्वादिति भावः ] । उमामुखं=पार्वतीवदनं, प्रतिपद्य तु = सम्प्राप्य तु, द्विसंश्रया=द्विकारणा, प्रीतिम्=आनन्दम् , अवाप = सम्प्राप ॥

**व्युत्पत्तिः**-लोला="चलनं कम्पनं कम्प्रं चलं लोलं चलाऽचलम् । चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ॥" इत्यमरः । चन्द्रं = चन्दतीति चन्द्रः, तं चन्द्र । 'चदि आह्लादने ( भ्वा० प० से० ) इति धातोः "स्फायितञ्चि०" इत्युणादिसूत्रेण "रक्प्रत्ययः । "हिमांऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः । पद्मगुणान् = पद्मस्य गुणाः पद्मगुणाः, तान् पद्मगुणान्, "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । पद्माश्रिता=पद्मम् आश्रिता पद्माश्रिता । चान्द्रमसीं= चन्द्रमसः इयं चान्द्रमसी, ता चान्द्रमसीं "तस्येदम्" इत्यण्, 'टिड्ढाणञ्०" इत्यादिना ङीप् । अभिख्याम्="अभिख्या नामशोभयोः"इत्यमरः । न भुङ्क्ते= नानुभवतीत्यर्थः "भुजोऽनवने" (१-३-६६-)इत्यात्मनेपदम् । उमामुखम्= उमायाः मुखम् उमामुखं, तत् । "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इति "वक्त्रास्ये वदन तुण्डमाननं लपन मुखम्" इति चाऽमरः । द्विसंश्रया = द्वे चन्द्रपद्मे, संश्रयः यस्याः सा द्विसंश्रया, ता द्विसंश्रया । प्रीतिं=प्रीणनं प्रीतिः, ता प्रीतीं, "प्रीञ् तर्पणे" (क्र्या० उ० से०) इति धातोः भावे "स्त्रिया क्तिन् ३।३। ६४" इति क्तिन् प्रत्ययः । "मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः" इत्यमरः । अवाप=अवोपसर्गपूर्वकात् "आप्लृ व्याप्तौ" इति धातोर्लिटि प्रथमपुरुषैकवचने रूपमिदम् ।

अत्र चोपमानभूत चन्द्रपद्माऽपेक्षया उपमेयस्य उमामुखस्य अधिकगुणवत्त्वोक्त्या व्यतिरेकाऽलङ्कारः । तल्लक्षण च प्रागुक्तम् ॥

**भावार्थः**—चञ्चला लक्ष्मीः पूर्णचन्द्रं प्राप्ता सती कमलगतान् दिवारमणीयत्वसौरभ्यादीन् गुणान् नानुभवति, अथ च कमलं प्राप्ता सती चन्द्रगतान् रजनीरमणीयत्वादिकान् गुणान् नानुभवति । सर्वकालरमणीयस्वाभाविकसौरभ्याभिरामं पार्वतीवदनं प्राप्य तु लक्ष्मीश्चन्द्रकमलोभयानुभवजन्यमानन्दमाससादेति भावः ।

**भाषा**—चञ्चल लक्ष्मी रात्रिमें पूर्णचन्द्र को प्राप्तकर कमलगत सौरभ्यादि गुणों को नहीं पाती, और दिन में कमल को प्राप्तकर चन्द्रगत आह्लादकत्वादि गुणों को नहीं पाती है, किन्तु सर्वकाल सुन्दर पार्वती के मुख को पाकर चन्द्र कमल दोनो के आनन्द को पाती थी ।

अथ वदनगतानवयवान् वर्णयिष्यन्, आदौ मन्दस्मित वर्णयति—

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।**
**ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥४४॥**

यदि पुष्प पल्लव पर रहे, मोती प्रसन्न प्रवाल पर ।
तो कुछ नकलमुसुकान की, होगी रदन-छद लाल पर ॥

**अन्वयः**—पुष्पं प्रवालोपहितं स्यात् यदि, मुक्ताफलं वा स्फुटविद्रुमस्थं स्यात् यदि, ततः विशदस्य ताम्रौष्ठपर्यस्तरुच. तस्याः स्मितस्य अनुकुर्यात् ॥

**व्याख्या**—पुष्पं = श्वेतकुसुमं पुण्डरीकादिकमित्यर्थः, प्रवालोपहितं = बालपल्लवनिहितं, स्यात् यदि=भवेत् चेत्, मुक्तफलं वा=मौक्तिकफलं वा, स्फुटविद्रुमस्थं=निर्मलप्रवालस्थं, स्यात् यदि, ततः=तर्हि, विशदस्य=शुभ्रस्य, ताम्रौष्ठपर्यस्तरुचः=अरुणाऽऽधरप्रसृतकान्तेः, तस्याः = पार्वत्याः, स्मितस्य=मन्दहासस्य, अनुकुर्यात्=अनुकरण कुर्यात् ॥

**व्युत्पत्तिः**-प्रवालोपहितं=प्रवाले उपहितं प्रवालोपहितं । "प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे" इति विश्वः । मुक्ताफलं=मुक्ता एव फलं मुक्ताफलं, "मयूरव्यंसकादयश्च" इति समासः । स्फुटविद्रुमस्थं=स्फुटश्चाऽसौ विद्रुमः स्फुटविद्रुमः, "अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्"इत्यमरः । स्फुटविद्रुमे तिष्ठतीति स्फुटविद्रुमस्थम् । "सुपि स्थः ३-२-४"इति कः प्रत्ययः । स्यादिति सम्भावनाया लिङ् । यदि शब्दस्तथाविधस्य धर्मिणोऽभावं सूचयति । विशदस्य="शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः" इत्यमरः।ताम्रौष्ठपर्यस्तरुचः=ताम्रश्चाऽसौ ओष्ठः ताम्रौष्ठः ताम्रोष्ठो वा "ओत्वोष्ठयोः समासे वा" इति विकल्पेन पररूपत्वम् । "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः। ताम्रौष्ठे पर्यस्ता ताम्रौष्ठपर्यस्ता, ताम्रौष्ठपर्यस्ता रुक् यस्य तत् ताम्रौष्ठपर्यस्तरुक्, तस्य ताम्रौष्ठपर्यस्तरुचः । स्मितस्य="स्मिङ ईषद्धसने" इति धातोः क्तप्रत्ययः । स्मितलक्षणं तु—"ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताऽधरम्" इति साहित्यदर्पणम् । स्मितस्य इत्यत्र "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् २-३-७२" इति पक्षे षष्ठी । अनुकरणं हि तुल्यतया वर्तनमिति । स्मितम् अनुकुर्यादित्यर्थः ।

"अत्र पुष्पप्रवालयोः मुक्ताविद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्त्या यद्यर्थोक्तौ च कल्पनमिति अतिशयोक्तिभेदः "सा|च सम्भावना" इति अलङ्कारसर्वस्वकारः ।

- वस्तुतस्तु पुष्पमुक्ताफलयोः उपमानयोः प्रकृतस्य उपमेयस्य पार्वतीस्मितस्य उत्कर्षार्थम् उपमेयताकल्पनात् प्रतीपाऽलङ्कारः । तल्लक्षणं तु-"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् । निष्फलत्वाऽभिधानं वा प्रतीपमिति कथ्यते ॥" इति साहित्यदर्पणम् । स च प्रतीपः पूर्वोक्तया अतिशयोक्त्या अनुप्राणित इति ॥

**भावार्थः**—प्रवालोपहितधवलपुष्परूपमथवा स्फुटविद्रुमस्थमुक्ताफलरूपमुपमानधर्मिद्वय यदि कुत्रचिदुपलभ्येत, तर्हि तयोरन्यतरत् अत्यन्तधवलस्य रक्तदन्तच्छदप्रक्षिप्तशोभस्य पार्वतीमन्दस्मितस्योपमेयस्य शोभामनुकुर्यादित्यर्थः । असिद्धौ च तादृशावुपानधर्मिणौ, ततश्च तत्कर्तृकमनुकरणमप्यसिद्धमेवेति भावः ।

**भाषा**—यदि नूतन पल्लव पर श्वेत पुष्प रक्खा जाय, अथवा मूगे पर मोती रक्खा जाय, तो दोनों मे से एक, पार्वती के रक्त ओष्ठ पर होने वाले धवल स्मित की समानता को कर सकता है ।

वचन वर्णयति—

**स्वरेण तस्याममृतस्रुतेव, प्रजल्पितायामभिजातवाचि ।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा, श्रोतुर्वितन्त्रीरिव ताडयमाना ॥४५॥**

**मृदु भाषिणि गिरिजा अमृत स्रावी वचन कहने लगी ।**
**तो पिक वितन्त्री सम सभी के कान को दहने लगी ॥**

**अन्वयः**—अभिजातवाचि तस्याम् अमृतस्रुता इव स्वरेण प्रजल्पिताया सत्याम्, अन्यपुष्टा अपि ताडयमाना वितन्त्रीः इव श्रोतुः प्रतिकूलशब्दा भवति ॥

**व्याख्या**—अभिजातवाचि = मधुरवाण्या, तस्या,=पार्वत्याम्, अमृतस्रुता इव=अमृतस्राविणा इव, स्वरेण=नादेन, प्रजल्पितायाम्=आलपन्त्या सत्या, सञ्जल्पितुमुपक्रान्तायामिति यावत् , अन्यपुष्टा अपि=कोकिला अपि, ताड्यमाना= आहन्यमाना, ( अनभिज्ञैरिति यावत् ) वितन्त्रीः इव = विषमबद्धतन्त्रीः इव, श्रोतुः = आकर्णयितुः, प्रतिकूलशब्दा,=अननुकूलनादा, कर्णकठोरनादा इत्यर्थः, भवतीति शेषः ॥

**व्युत्पत्तिः**—अभिजातवाचि = अभिजाता वाक् यस्याः सा अभिजातवाक् , तस्याम् अभिजातावाचि । "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । अमृतस्रुता = अमृतं स्रवतीति अमृतस्रुत्, तेन अमृतस्रुता । क्विप् प्रत्ययः, "ह्रस्वस्य पिति कृति तुक्" इति तुगागमः । प्रजल्पिताया = "जल्प व्यक्ताया वाचि" इति धातोः क्तप्रत्ययः, प्रकर्षेण जल्पिता प्रजल्पिता तस्या प्रजल्पिताया सत्याम् । "आदिकर्मणि क्तः कर्तरि च" (३-४-७१) इति कर्तरि क्तप्रत्ययः । अन्यपुष्टा=अन्यैः काकादिभिः पुष्टा अन्यपुष्टा । "मुख्यया वृत्या जातिवचनत्वाऽभावान्ङीबभावः । ताडयमाना = ताड्यते इति ताडयमाना, शानच्प्रत्ययः । वितन्त्रीः = विषमबद्धा तन्त्रीः वितन्त्रीः "शाकपार्थिवादीना सिद्धय उत्तरपदलोप-

स्योपसङ्ख्यानम्" इति मध्यमपदलोपी समासः। तन्त्रिधातोः "अविहृस्तुतन्त्रिभ्य ईः" इति उणादि सूत्रेण ईप्रत्ययः। ङीबभावात् "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्त हल्" इति न सुलोपः। तदुक्तम्—"अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुणादितः। स्त्रीलिङ्गानाममीषां तु न सुलोप· कदाचन॥" इति, एते ङीबन्ता न भवन्तीत्यर्थः। श्रोतुः=शृणोतीति श्रोता तस्यः श्रोतुः, "श्रु श्रवणे" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः। प्रतिकुलशब्दा=प्रतिकूलः शब्दः यस्याः सा प्रतिकूलशब्दा। अत्रोपमाऽलङ्कारः।

**भावार्थः**=मधुरभाषिण्या पार्वत्या पीयूषस्राविणेव नादेन सम्यग् वक्तुमुपक्रान्तायां सत्या, वादनशास्त्रानभिज्ञैराहन्यमाना वीणेव, वचो माधुर्यसौकुमार्य्यादिगुणवत्तया प्रसिद्धापि सा कोकिला कर्णकठोरनादा बभूवेति भावः।

**भाषा**—पार्वती के मधुरभाषण में अमृत बरसाने वाले मधुर नाद के सामने, मधुर अलाप में प्रसिद्ध कोईल का मधुर नाद भी, अनजान से बजायी जाने वाली वीणा की तरह, सुननेवाले के कानको कठोर लगता था।

कटाक्षं वर्णयति—

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।**
**तया गृहीतं नु मृगाऽङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥४६॥**

**अति बातमय नीले कमल सम चकित दृग से देखना।**
**पाया मृगी से या उसी से मृग प्रिया ने लेखना॥**

**अन्वयः**—प्रवातनीलोत्पलनिर्विशेषम् अधीरविप्रेक्षितम् आयताक्ष्या तया मृगाङ्गनाभ्यः गृहीतं नु, यद्वा मृगाङ्गनाभिः ततो गृहीतं नु॥

**व्याख्या**—प्रवातनीलोत्पलनिर्विशेषं=प्रभूतवायुस्थलेन्दीवरनिर्भेदम्, अधीरविप्रेक्षितं=चकितविलोकितम्, आयताक्ष्या=विशालनेत्रया, तया=पार्वत्या, मृगाङ्गनाभ्यः=हरिणस्त्रीभ्यः, गृहीतं नु=अभ्यस्तं नु, अथवा मृगाङ्गनाभिः= हरिणीभिः, ततः=तस्याः, पार्वत्या इत्यर्थः, गृहीतं नु=अभ्यस्तं नु।

**व्युत्पत्तिः**—प्रवातनीलोत्पलनिर्विशेष=प्रभूताः वाताः यस्मिन् स्थले तत् प्रवातं, नीलं च तत् उत्पलं नीलोत्पलं, "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इति "स्यादुत्पलं कुवलयम्" इति चामरः। प्रवाते नीलोत्पलं प्रवातनीलोत्पलं, विशेषात् निर्गतं निर्विशेषं, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः। प्रवातनीलोत्पलात् निर्विशेषं प्रवातनीलोत्पलनिर्विशेषम्। अधीरविप्रेक्षितम्=

अधीरं च तत् विप्रेक्षितम् आधीरविप्रेक्षितम् । आयताक्ष्या = आयते अक्षिणी यस्याः सा आयताक्षी, तया आयताक्ष्या । समासान्तः षच्प्रत्ययः, षित्वान्ङीष् । "दीर्घमायतम्" इत्यमरः। मृगाङ्गनाभ्यः=मृगाणाम् अङ्गनाः मृगाङ्गनाः, ताभ्यः मृगाङ्गनाभ्यः । "मृगे कुरङ्गवातायुहरिणाऽजिनयोनयः" इत्यमरः । नु = अथ वितर्के । ततः = पञ्चम्यास्तसिल् । "अत्र विवक्षितस्य परस्परग्रहणस्य उत्प्रेक्षणात् उत्प्रेक्षेति केचित् । तदुपजीविसन्देहाऽलङ्कार इत्यन्ये । उभयोरुत्प्रेक्षा-सन्देहयोः सङ्कर इत्यपरे" सन्देहाऽलङ्कारलक्षणं तु = "सन्देहः प्रकृतेऽन्यस्य सशयः प्रतिभोत्थित " इति । सङ्करलक्षण तु—"अङ्गाङ्गित्वेऽलङ्कृतीनां तद्व-देकाश्रयस्थितौ । सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ।" इति ॥

**भावार्थः**—चारुमारुतावधूयमानचञ्चलेन्दीवरसदृश कटाक्षविक्षेपणं कि वि शाललोचनया पार्वत्या हरिणीसकाशाद् गृहीतमुत हरिणिभिः पार्वतीसकाशाद गृहीतमिति विशेषं निपुणतरं निरूपयन्तोऽपि वयं नावगच्छाम इति भावः ।

**भाषा**—मन्द पवन से हिलने वाले नील कमल की तरह सुन्दर कटाक्ष अवलोकन को पार्वती ने हरिणियों से सीखा था ? अथवा हरिणियों ने पार्वती से सीखा था ? इस बात का विचार करने पर भी निश्चय नहीं होता था ।

भ्रुवौ वर्णयति—

**तस्याः शलाकाञ्जननिर्मितेव, कान्तिर्भ्रुवोरायतलेखयोर्या ।**
**तां वीक्ष्य लीलाचतुरामनङ्गः, स्वचापसौन्दर्यमदं मुमोच ॥ ४७ ॥**

अञ्जन शलाका से बनाई देख कर भृकुटी सुघर ।
मद मदन ने छोड़ा धनुष की कान्ति जिसमें थी प्रवर ॥

**अन्वयः**—आयतलेखयोः तस्याः भ्रुवोः शलाकाञ्जननिर्मिता इव स्थिता या कान्तिः, लीलाचतुरा ता वीक्ष्य अनङ्गः स्वचापसौन्दर्यमद मुमोच ॥

**व्याख्या**—आयतलेखयोः = दीर्घरेखयोः, तस्याः = पार्वत्याः, भ्रुवोः= दृष्ट्यूर्ध्वरोमराज्योः, शलाकाञ्जननिर्मिता = तूलिकाञ्जनरचिता, इव, [स्थिता], या कान्तिः=या शोभा, लीलाचतुरा = विलाससुभगा, ता = कान्ति, वीक्ष्य=दृष्ट्वा, अनङ्गः=कन्दर्पः, स्वचापसौन्दर्यमद=आत्मधनुर्लावण्यगर्वं, मुमोच=तत्याज ।

**व्युत्पत्तिः**—आयतलेखयोः=आयता लेखा ययोस्ते आयतलेखे, तयोः आ-यतलेखयोः । शलाकाञ्जननिर्मिता=शलाकयाः अञ्जनं, शलाकाञ्जनं, तेन निर्मिता शलाकाञ्जननिर्मिता । लीलाचतुरा = लीलाभिः चतुरा लीलाचतुरा, ता लीला-

चतुरा । वीक्ष्य = व्युपसर्गपूर्वकात् 'ईक्ष दर्शने' इति धातोः क्त्वा, तस्य ल्यप् । अनङ्गः = अविद्यमानमङ्गं यस्य सः अनङ्गः, "कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः । स्वचापसौन्दर्यमदं=स्वस्य स्वो वा चापः स्वचापः, "स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रिया धने" इति,"धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इति चाऽमरः । सुन्दरस्य भावः सौन्दर्यं, स्वचापस्य सौन्दर्यं स्वचापसौन्दर्यं, तस्य मदः स्वचापसौन्दर्यमदः, त स्वचापसौन्दर्यमद, मुमोच = मुच्लृ मोचने-लिट् । इह सौन्दर्याऽतिशयोक्तिः ।

**भावार्थः**—दीर्घरेखयोः पार्वत्याः भ्रूयुगयोश्चित्रलेखनसाधनभूतकूर्चिकया रचितेव या शोभासीत् , विलाससुन्दरा तामवलोक्य मन्मथः स्वकार्मुकमनोहारित्वाभिमानं त्यक्तवानिति भावः ॥

**भाषा**—कूँची से खींची हुयी चित्र रेखा की तरह आयत, पार्वती के भ्रू युग की शोभा को देखकर, कामदेव स्वकीय धनुष्य की शोभा के अभिमान को छोड़ देता था ।

केशपाशं वर्णयति—

**लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।**
**तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्यः ॥४८॥**

**पशु पक्षियों के चित्त में लज्जा तनिक होती अगर ।**
**तो चमरियां लज्जित बनेंगी, देख केश अमित सुघर ॥**

**अन्वयः**—तिरश्चा चेतसि लज्जा स्यात् यदि, असंशयं पर्वतराजपुत्र्याः तं केशपाश प्रसमीक्ष्य चमर्यः बालप्रियत्वं शिथिलं कुर्युः ।

**व्याख्या**—तिरश्चा = तिर्यग्जातीना पशुपक्ष्यादीनामित्यर्थः । चेतसि = चित्ते, लज्जा = व्रीडा, स्यात् यदि = भवेत् यदि, असशयं = सशयाऽभावः, अत्र सन्देहो नास्तीत्यर्थः पर्वतराजपुत्र्याः=महीधरराजतनयायाः पार्वत्याः, त = प्रसिद्धं, केशपाश = कुन्तलकलापं, प्रसमीक्ष्य = दृष्ट्वा, चमर्यः = मृगीविशेषाः, बालप्रियत्वं=प्रियकेशत्व, शिथिलम् = अल्पं, कुर्युः=विदधीरन् ॥

**व्युत्पत्तिः**—चेतसी = "चित्त तु चेतो हृदयं स्वांतं हृन्मानसं मनः" इत्यमरः । लज्जा = "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । असंशयम् = संशयस्य अभावः असंशयम् । "अव्ययं विभक्तिसमीपसमृद्धि॰ द्ध्यर्थाऽभावाऽत्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।६"

इत्यव्ययीभावसमासः । "अव्ययीभावश्च" इति तस्य नपुंसत्वम् । पर्वतराजपुत्र्याः =पर्वताना राजा पर्वतराजः, "राजाहः सखिभ्यष्टच्" इति समासान्तष्टच् । पर्वतराजस्य पुत्री पर्वतराजपुत्री, तस्याः पर्वतराजपुत्र्याः, "शार्ङ्गरवाद्यञो ङीन्" इति ङीन्प्रत्ययेन पुत्रीपदसिद्धिः । केशपाशं=केशाना पाशः केशपाशः, तं केशपाशं । "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इति "पाशः पक्षश्च हस्तश्च कलापाऽर्थः कचात्परे" इति चाऽमरः । बालप्रियत्वं=प्रीणन्तीति प्रियाः, बालाः प्रियाः यासा ताः बालप्रियाः, तासा भावः बालप्रियत्व, "तस्य भावस्त्वतलौ" इति त्वप्रत्ययः । प्रियबालत्वमित्यर्थः । अहिताग्न्यादिपाठाद्वा परनिपातः । "त्वतलोर्गुणवचनस्य" इति पुंवद्भावः । 'शिथिलं कुर्युः= 'निर्लज्जत्वात् न शिथिलयन्तीत्यर्थः । अत एवाऽत्र निर्लज्जत्वकरणहेतोः आद्यपादे वाक्यार्थत्वेन उक्त्या काव्यलिङ्गमलङ्कारः । तदुक्तं साहित्यदर्पणे—हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥

**भावार्थः**—मनुष्यादीनामिव पश्वादीनामपि गुणाधिकदर्शनेन मनसि यदि त्रपा भवेत्, तर्हि चमर्यः पार्वतीकेशपाशदर्शनानन्तरं तद्गतस्वाभाविकसौरभ्यादिगुणयोगित्वाभावात् स्वकेशेषु कदाचिदपि नादरं कुर्वीरन्निति भावः ।

**भाषा**—मनुष्यों के समान पशुपक्षियों के भी मन में अगर लज्जा हती तो चमरी मृगी पार्वती के केशपाश को देखकर, तद्वत् स्वाभाविक सौरभ्यातिशय के न होने से, स्वकीय केशपाशों का विशेष आदर कभी न करतीं ।

इत्थं दिङ्मात्रप्रदर्शनार्थं देव्याः काश्चन प्रधानावयवानुपवर्ण्य विस्तरभिया महाकविरनुक्तानामुक्ताना चावयवाना साधारणवर्णनेन प्रकृतमङ्गवर्णनमुपसंहरति—

**सर्वोपमाद्रव्यसमुच्चयेन, यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

संसार भर की एक थल, सुषमा निरखने के लिये ।
विधि ने उमा की सृष्टि की, उपमा न रखने के लिये ॥

**अन्वयः**—सा विश्वसृजा एकस्थसौन्दर्यदिदृक्षया इव प्रयत्नात् यथाप्रदेशं विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन निर्मिता ।

**व्याख्या**—सा=पार्वती, विश्वसृजा=विधात्रा, एकस्थसौन्दर्यदिदृक्षया= एकत्रस्थितलावण्यालोकनेच्छया, इव, प्रयत्नात्=प्रकृष्टयत्नात्, यथाप्रदेश=यथास्थानं क्रमादित्यर्थः, विनिवेशितेन=स्थापितेन, सर्वोपमाद्रव्यसमुच्चयेन=निखिलो-

पमापदार्थसमाहारेण, निर्मिता = रचिता ।

**व्युत्पत्तिः**—विश्वसृजा=विश्वं सृजतीति विश्वसृट्, तेन विश्वसृजा, "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः । एकस्थसौन्दर्यदिदृक्षया=एकस्मिन् तिष्ठतीति एकस्थं, सुन्दरस्य भावः सौन्दर्यम् । एकस्थं च तत् सौन्दर्यम् एकस्थसौन्दर्यम् । द्रष्टुम् इच्छा दिदृक्षा । एकस्थसौन्दर्यस्य=सर्ववस्तुगतस्येत्यर्थः दिदृक्षा एकस्थसौन्दर्यदिदृक्षा, तया एकस्थसौन्दर्यदिदृक्षया । प्रयत्नात्=प्रकृष्टो यत्नः प्रयत्नः, तस्मात् प्रयत्नात्, "कुगतिप्रादयः" इति गतिसमासः । ल्यब्लोपे पञ्चमी, प्रयत्नमवलम्ब्येत्यर्थः, यथाप्रदेशं = प्रदेशम् अनतिक्रम्य यथाप्रदेशम् । "अव्ययं विभक्ती"—त्यादिना यथार्थे अव्ययीभावः । विनिवेशितेन = विशेषेण निवेशितः विनिवेशितः, तेन विनिवेशितेन । "सुप्सुपा" इति समासः । सर्वोपमाद्रव्यसमुच्चयेन = उपमायाः द्रव्याणि उपमाद्रव्याणि=चन्द्रारविन्दादीनि, सर्वाणि च तानि उपमाद्रव्याणि सर्वोपमाद्रव्याणि, तेषां समुच्चयः सर्वोपमाद्रव्यसमुच्चयः, तेन सर्वोपमाद्रव्यसमुच्चयेन ।"समाहारः समुच्चयः" इत्यमरः। दिदृक्षयेवेति फलोत्प्रेक्षा।

**भावार्थः**—सर्वजगन्निर्माणकर्त्रा ब्रह्मणा सा पार्वती एकाधिकरणकसकलोपमागतसौन्दर्यस्य द्रष्टुमिच्छयेव प्रयत्नमवलम्ब्य यथास्थानं स्थापितेन मुखनयननासिकादिप्रतिवस्तुभूतेन चन्द्रेन्दीवरतिलकुसुमादिप्रसिद्धोपमाद्रव्यसमूहेन सृष्टेति भावः।

**भाषा**—सकल जगत् का निर्माण करने वाले ब्रह्मदेव ने एक ही स्थान में सकल सौन्दर्य को देखने की इच्छा से खोज खोज कर चन्द्र, कमल, तिल कुसुम आदि प्रसिद्ध सुन्दर वस्तुओं का मुख, नयन, नासिका आदि अवयवों में यथायोग्य निवेश करके पार्वती की रचना की थी ।

अथैतत्प्रकरणोपयोगि प्रकरणान्तरमारभते—

**तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

**आये कभी नारद निकट गिरि के उमा को देख कर ।**
**बोले उमा यह शम्भु की, अर्धाङ्गिनी होगी अमर ॥**

**अन्वयः**—कामचरः नारदः कदाचित् पितुः समीपे कन्यां तां प्रेक्ष्य किल प्रेम्णा हरस्य शरीरार्धहराम् एकवधूं भवित्रीं समादिदेश ।

**व्याख्या**—कामचरः=इच्छाचरः, नारदः=ब्रह्मपुत्रः, कदाचित्=जातुचित्, पितुः = जनकस्य हिमालयेस्येत्यर्थः, समीपे=निकटे, कन्यां = कुमारीं, तां =

पार्वतीं, प्रेक्ष्य = दृष्ट्वा, किल = निश्चयेन, प्रेम्णा = प्रियतया, हरस्य=शिवस्य, शरीरार्धहरा=देहार्धहराम् , एकवधूम्=अद्वितीयपत्नीं, भवित्रीं=भाविनीं, समादिदेश = आदिष्टवान् ।

**व्युत्पत्तिः**—कामचरः=कामेन चरतीति कामचरः, "चर गतिभक्षणयोः" इति धातोः "चरेष्टः" इति टप्रत्यय.। "कामोऽभिलाषस्तर्षश्च" इत्यमरः। पितुः= "तातस्तु जनकः पिता"इत्यमरः। समीपे="समीपे निकटासन्नसंनिकृष्टसनीडवत्" इत्यमरः। प्रेम्णा="प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः शरीरार्धहराम्=अर्धं हरतीति अर्धहरा, "हरतेरनुद्यमनेऽच्" इति अच्प्रत्ययः। शरीरस्य अर्धहरा शरीरार्धहरा, ता शरीरार्धहरा। शरीरं वर्ष्म विग्रहः" इत्यमरः। गम॰ कत्वात्समासः। एकवधूम्=एका चाऽसौ वधूः एकवधू, ताम् एकवधूं, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति समासः। "वधूर्जाया स्नुषा स्त्री च" इत्यमरः। समादिदेश = सम् आङ् पूर्वकाद् दिश्धातोर्लिटि रूपम्।

**भावार्थः**—यदृच्छागतो नारदः कर्हिचित् पार्वतीं कन्यां हिमवतः सविधे समवलोक्य स्नेहेन शिवस्य देहार्धहरामसपत्निकां भार्यां भाविनीमादिष्टवानिति भावः।

**भाषा**—इच्छानुसार विचरण करने वाले नारद मुनि ने, एक समय हिमालय के पास पार्वती को देखकर, यह कन्या आधे शरीर को हरण करने वाली, शङ्कर की एकपत्नी होगी, ऐसी भविष्य वाणी कही थी।

नारदादेशानन्तरं हिमालयस्य प्रवृत्तिमाह—

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥५१॥**

**इससे अचल ने दूसरे वर की न की इच्छा कभी।**
**हवनीय द्रव्यों को विना पावक न योग्य इतर कभी॥**

**अन्वयः**—गुरुः अतः अस्याः प्रगल्भे वयसि अपि निवृत्तान्यवराऽभिलाषः सन् तस्थौ; मन्त्रपूतं हव्यं कृशानोः ऋते अपराणि तेजांसि न अर्हन्ति॥

**व्याख्या**—गुरुः = पिता, अतः = अस्मात् हेतोः। नारदवचनादित्यर्थः, अस्याः=पार्वत्याः, प्रगल्भे वयसि अपि = यौवने सत्यपि, निवृत्ताऽन्यवराऽभिलाषः=अपगताऽपरवरकामः सन्, तस्थौ=स्थितवान्, वरान्तरं न अन्विष्टवान् इत्यर्थः। [ वैधर्म्येण उक्तमर्थं समर्थयते ] मन्त्रपूतं = मन्त्रपवित्रं संस्कृतमित्यर्थः, हव्यं = हवनीयं आज्यादिकमित्यर्थः, कृशानोः = पावकात्, ऋते=

विना, अपराणि=अन्यानि, तेजांसि=सूर्याचन्द्रमसादीनि, न अर्हन्ति=न यो-ग्यानि भवन्तीत्यर्थः ।

**व्युत्पत्तिः**—गुरुः=“गुरू गीःपतिपित्राद्यौ” इत्यमरः । वयसि=“खगवाल्यादिनोर्वयः” इत्यमरः । निवृत्ताऽन्यवराऽभिलाष.=अन्यश्चासौ वरः अन्यवरः, “वरो ना रूपजामात्रोः” इत्यमरः । अन्यवरे अभिलाषः अन्यवराऽभिलाषः, “कामोऽभिलाषस्तर्षश्च” इत्यमरः निवृत्तः अन्यवराऽभिलाषः यस्य सः निवृत्तान्यवराभिलाषः । मन्त्रपूतं=मन्त्रैः पूतं मन्त्रपूतं, तत्, “पवित्रः प्रयतः पूतः” इत्यमरः । हव्यं=हूयते यत् तत् हव्यं, तत् । कृशानोः ऋते=ऋते योगात् “अन्यारादितरर्त्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते” इति पञ्चमी । “कृशानुः पावकोऽनलः” इत्यमरः । अत्र वैधर्म्येण अर्थान्तरन्यासोऽलङ्कारः । अर्थान्तरन्यासलक्षण च—“सामान्य वा विशेषेण विशेषस्तेन वा यदि । कार्यं च करणेनेद कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः” ॥ इति साहित्यदर्पणम् ॥

**भावार्थः**—विश्वसनीयनारदवचनात् पिता हिमालयः पार्वत्या यौवनारम्भे सत्यपि वरान्तरं नान्विष्टवान् । यतो मन्त्रसंस्कृतमाज्यादिकं हव्य पावकाद्विना सूर्याचन्द्रमसादीन्यन्यानि तेजासि न भजन्ति । यथा मन्त्रसंस्कृतं हविरग्निरेवार्हति, तथा पार्वतीमपि हर एवार्हतीति भावः ।

**भाषा**—विश्वसनीय नारद के कहने से हिमालय ने युवती होने पर भी पार्वती के लिये दूसरे वर का खोज नहीं किया, क्यों कि जैसे मन्त्रपूर्वक दी हुई आहुति का ग्रहण अग्नि ही कर सकता है, वैसे ही पार्वती का पाणिग्रहण भी शङ्कर के विना कोई नहीं कर सकता है ।

ननु हर एवास्याः पतिरिति नारदादेशादवगतेऽपि केन कारणेन हिमालयः स्वयमेव कन्यया हरं नोपस्थितवानत आह—

**अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥५२॥**

मांगे विना हर को हिमालय दे सका कन्या नहीं ।
अभ्यर्थना के भंग से सज्जन न कुछ कहने कहीं ॥

**अन्वयः**—अद्रिः अयाचितारं देवदेवं सुता ग्राहयितु न शशाक, [तथाहि] साधुः अभ्यर्थनाभङ्गभयेन इष्टे अपि अर्थे माध्यस्थ्यम् अवलम्बते ।

**व्याख्या**—अद्रिः = पर्वतः हिमालय इत्यर्थः, अयाचितारम् = अयाचमानं, देवदेवं = महादेवम् [ उद्दिश्य ], तस्मै इत्यर्थः, सुता=पुत्रीं पार्वतीमित्यर्थः, ग्राहयितुं = स्वीकारयितुं, न शशाक=न समर्थोऽभूत्, [ तथा हि ] साधु=सज्जनः, अभ्यर्थनाभङ्गभयेन = प्रार्थनावैफल्यभीत्या, इष्टे अपि = प्रिये अपि, अर्थे=विषये, माध्यस्थ्य = ताटस्थ्यम् औदासीन्यमित्यर्थः, अवलम्बते = आलम्बते ॥

**व्युत्पत्तिः**—अयाचितारं=याचते इति याचिता, न याचिता अयाचिता, तम् अयाचितारं, "याच् याचने" इति धातोः "ण्वुल्तृचौ" इति तृच् । तस्य "आर्धधातुकं शेषः" इति आर्धधातुकसंज्ञा, ततः "आर्धधातुकस्येड् वलादेः" इतीडागमः । देवदेव = दीव्यन्तीति देवाः, "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यच् । "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः । देवाना देवः देवदेवः, तं देवदेवं ग्राहयितु="ग्रह उपादने" इति धातोः णिजन्तात् तुमुन्प्रत्ययः । साधुः=साध्नोति परकार्याणि इति साधुः, "साध संसिद्धौ ( स्वा०प०अ० )" इति धातोः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इति उण् प्रत्ययः । "महाकुलकुलीनार्य सभ्यसज्जनसाधवः" इत्यमरः । "साधुर्वार्धुषिके चारौ सज्जने चाऽभिधेयवत्" इति विश्वश्च । अभ्यर्थनामभङ्गभयेन=अभ्यर्थनायाः भङ्गः अभ्यर्थनाभङ्गः" तस्मात् भयम् अभ्यर्थनाभङ्गभयं, तेन अभ्यर्थनाभङ्गभयेन । अभ्यर्थनाभङ्गपदस्य "भीत्रार्थाना भयहेतुः" १।४।२५ इत्यपादानत्वम् , ततः "अपादाने पञ्चमी । "भीतिर्भीः साध्वसं भयम्" इत्यमरः । माध्यस्थ्य=मध्ये तिष्ठतीति मध्यस्थः, तस्य भावः माध्यस्थ्य, तत् ॥ अत्र ष्यञ् प्रत्ययः ।

तथा चोक्तम्—

"अयाचितानि देयानि सर्वद्रव्याणि भारत ।
अन्न विद्या तथा कन्या, अनर्थिभ्यो न दीयते ॥" इति ।

सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासोऽलङ्कारः ॥ लक्षणं प्रागुक्तम् ॥

**भावार्थः**-हिमवान् अप्रार्थयमानं महादेवं स्वयमाहूय स्वसुता पार्वती परिग्राहयितुं नोत्सेहे । मानिनो हि जना निजाभिलषितेऽप्यर्थे प्रत्याख्यानभिया तूष्णीमासते, नातीव प्रयतन्त इति भावः ।

**भाषा**—कदाचित् हमारी प्रार्थना को शङ्कर भगवान् ने स्वीकार न किया तो बडी अप्रतिष्ठा होगी, इस डर से हिमालयने पार्वती के साथ विवाह करनेके

लिये महादेव से स्वय कुछ भी प्रस्ताव नही किया ।

इत्थं प्रधाननायिकाया. पार्वत्याश्चरितमुपवर्ण्य सम्प्रति नायकस्य वृत्तान्तं वक्तुं प्रस्तौति—

**यदैव पूर्वे जनने शरीरं, सा दक्षरोषात्सुदती ससर्ज ।**
**तदा प्रभृत्येव विमुक्तसङ्गः, पतिः पशूनामपरिग्रहोऽभूत् ॥५३॥**

**गिरिजा मरी पहले जनम में, शम्भु नाता तोड़कर ।**
**पत्नी रहित तब से हुए हर, वासना सब छोड़कर ॥**

**अन्वयः**—सुदती सा पूर्वे जनने ( पूर्वे ज्वलने वा ) यदा दक्षरोषात् शरीरं ससर्ज, तदाप्रभृति एव पशूनां पतिः विमुक्तसङ्गः सन् अपरिग्रहः अभूत् ।

**व्याख्या**—सुदती = शोभनदन्तयुक्ता, सा=पार्वती, पूर्वे=पूर्वस्मिन्, जनने= जन्मनि, ( पूर्वे = दाक्षायणीत्वे, ज्वलने = योगाग्नौ ) यदा = यस्मिन् काले, दक्षरोषात् = दक्षकोपात्, शरीरं = देहं, ससर्ज = तत्याज, तदाप्रभृति एव=तदादि एव, पशूना पतिः = शम्भुः, विमुक्तसङ्गः=परित्यक्तविषयासङ्गः सन्, अपरिग्रहः= अपत्नीकः, अभूत् = अभवत् ।

**व्युत्पत्तिः**—सुदती=शोभनाः दन्ताः यस्याः सा सुदती, "वयसि दन्तस्य दतृ" (५-४-१४१) इति दत्रादेशः । स्त्रीत्वविवक्षायाम् "उगितश्च" (४-१-६) इति ङीप्प्रत्ययः । पूर्वे="पूर्वादिभ्यो नवभ्यो वा" इति स्मिन्नादेशविकल्पः । दक्षरोषात्=दक्षे रोषः दक्षरोषः, तस्मात् दक्षरोषात् । "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । ससर्ज="सृज विसर्गे" इति धातोर्लिट् । पशूना पतिः="शम्भुरीश· पशुपतिः शिवः शूली महेश्वरः" इत्यमरः । विमुक्तसङ्ग.= विशेषेण मुक्तः विमुक्तः, विमुक्तः सङ्गः येन सः विमुक्तसङ्गः । अपरिग्रहः=अविद्यमानः परिग्रहः यस्य सः अपरिग्रहः, "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः ।

अत्र पूर्वप्रवृत्तत्वेन सूचितस्य शृङ्गाररसस्य विरोधी तपश्चर्यानुभावकः शान्तो रसस्तृतीयसर्गान्त यावदनुवर्तते । तयोश्च विरोधस्तदुभयाऽविरुद्धेन देवीदेहत्यागसूचितेन मध्येपतता करुणरसेन प्रशमितः । तदुक्तं ध्वनिकारेण—

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥" इति ।

**भावार्थः**—शोभनदशना पार्वती पूर्वस्मिन् जन्मनि दक्षसुतात्वावस्थाया

स्वपितरि दक्षविषये कोपात् यस्मिन् काले स्वशरीर योगाग्नौ तत्याज, तदानीमेवा-रभ्य शङ्करस्त्यक्तविषयासङ्गः सन् अन्या स्त्रिय न जग्राहेति भावः।

**भाषा**—पार्वती ही प्रथम जन्म में दक्षप्रजापति की कन्या थी, और शङ्कर से व्याही थी, उसने पिता के अपमान से क्रुद्ध होकर अपने शरीर का योगाग्नि मे त्याग किया था, तभी से शङ्कर ने भी विषयवासना का परित्यागकर दूसरे किसी स्त्री से विवाह नहीं किया था।

निस्सङ्गस्य भगवतो हरस्य प्रवृत्तिं दर्शयति—

**स कृत्तिवासास्तपसे यतात्मा, गङ्गाप्रवाहोक्षितदेवदारु।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि, किञ्चित्क्वणत्किन्नरमध्युवास ॥ ५४ ॥**

**मृग चर्म लेकर चित्त वश में भजन हित बैठ वहाँ।**
**थे जाह्नवी सिंचित सरल, मृगमदसुरभिमय थल जहाँ ॥**

**अन्वयः**—कृत्तिवासाः यतात्मा सः तपसे गङ्गाप्रवाहोक्षितदेवदारु मृगनाभिगन्धि क्वणत्किन्नरं किञ्चित् हिमाद्रेः प्रस्थम् अध्युवास ॥

**व्याख्या**—कृत्तिवासाः = चर्माऽम्बरः, यतात्मा = नियतचित्तः सः = पशुपतिः शिव इत्यर्थः, तपसे = तपोऽर्थम्, गङ्गाप्रवाहोक्षितदेवदारु = भागीरथी-प्रवृत्तिसिक्तदेवदारु, मृगनाभिगन्धि=कस्तूरीगन्धवत्, क्वणत्किन्नर = गायत्किम्पुरुष, किञ्चित्=किमपि, हिमाद्रेः=हिमालयस्य, प्रस्थ=सानुम्, अध्युवास=अधिष्ठितवान्, कुत्रचित्प्रस्थे उवासेत्यर्थः ॥

**व्युत्पत्तिः**—कृत्तिवासाः=कृत्तिः वासः यस्य सः कृत्तिवासाः, "सान्तमहतः संयोगस्य ६।४।१०" इति दीर्घः। "अजिन चर्म,कृत्तिः स्त्री' इति। "वस्त्रमाच्छादनं वासश्चेलं वसनमशुकम्" इति चाऽमर.। वस्यते अनेन वासः, "वसे आच्छादने" इति धातोः "वसेर्णित् ४।६५७" इत्युणादिसूत्रेण असुन् प्रत्ययः। यतात्मा=यतः आत्मा यस्य सः यतात्मा। गङ्गाप्रवाहोक्षितदेवदारु=गङ्गायाः प्रवाहः "प्रवाहस्तु प्रवृत्तिः स्यात्" इत्यमरः। "उक्ष सेचने" इति धातोः निष्ठाया क्तप्रत्ययेन उक्षितपदसिद्धिः। गङ्गाप्रवाहेण उक्षिताः गङ्गाप्रवाहोक्षिताः। गङ्गाप्रवाहोक्षिताः देवदारवः यस्मिन् तत् गङ्गाप्रवाहोक्षितदेवदारु, तत्। अनेन प्रस्थस्य पावनत्वं, जलबाहुल्य, छयासौख्यं चोक्तम्, रमणीयत्वमप्याह—मृगनाभिगन्धि=मृगनाभेः गन्धः मृगनाभिगन्धः, "मृगनाभिर्मृगमदः कस्तूरी" इत्यमरः। मृगनाभिगन्धः अस्य अस्तीति मृगनाभिगन्धि, तत्। "अत इनिठनौ" इति इनिप्रत्ययः।

क्वणत्किन्नरं=कुत्सिताः नराः किन्नराः, "किं क्षेपे २।१।६४" इति समासः। कुत्सा च कस्यचित् नरमुखाश्वकायत्वात्, कस्यचित् अश्वमुखनरशरीरत्वात् इति भानुदीक्षितः। "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः। क्वणन्तीति क्वणन्तः, "क्वण शब्दे" इति धातोः शतृप्रत्ययः। क्वणन्तः किन्नराः यस्मिन् तत् क्वणत्किन्नरं तत्। हिमाद्रेः=हिमानाम् अद्रिः हिमाद्रिः, तस्य हिमाद्रेः। "तुषार-स्तुहिनं हिमम्" इत्यमरः। प्रस्थ="प्रस्थोऽस्त्री सानुमानयोः" इत्यमरः। "अध्युवास" इति क्रियापदेन सह प्रस्थपदस्य अन्वयात् "उपान्वध्याङ्वसः" इति आधारस्य प्रस्थस्य कर्मत्वम्, ततः "कर्मणि द्वितीया" इति द्वितीया।

**भावार्थः**—गजचर्मधारी नियतचित्तः शङ्करस्तपश्चरितुं भागीरथीनिर्झर सिक्तदेवदारुवृक्षयुक्तं कस्तूरीसुगन्धसहित गायत्किन्नरमिथुनसङ्कुल हिमालयस्य किमपि शिखरमध्यास्तेति भावः।

**भाषा**—गजचर्म को धारण कर जितेन्द्रिय शङ्करभगवान्, तपश्चर्या करने के लिये, जहा भागीरथी का झरना बहा करता था, देवदारु के बहुत से पेड़ थे, कस्तूरिमृगों का चारो तरफ सुगन्ध था, किन्नर मिथुन जहा सर्वदा गाया करते थे, ऐसे रमणीय हिमालय के किसी शिखर पर रहा करते थे।

अथ तपश्चरणोद्युक्ते परमेश्वरे भूतगणाना तद्देशकालोचितमुपभोगं वर्णयति—

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः**
**मनःशिलाविच्छुरिता निषेदुः, शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

**शिर में नमेरु कुसुम पहन, तब भोज वल्कल धार कर।**
**बैठे शिलाजतु–औषधों से व्याप्त शुचि चट्टान पर ॥**

**अन्वयः**—गणाः नमेरुप्रसवाऽवतंसाः स्पर्शवतीः भूर्जत्वचः दधानः मनः शिलाविच्छुरिताः शैलेयनद्धेषु शिलातलेषु निषेदुः।

**व्याख्या**—गणाः=प्रमथगणाः, नमेरुप्रसवाऽवतंसाः=सुरपुंनागकुसुमशेखराः, स्पर्शवतीः=सुखस्पर्शाः मृद्वीः इत्यर्थः, भूर्जत्वचः=भूर्जवल्कलानि, दधानाः=धारयन्तः वसानाः इत्यर्थः, मनःशिलाविच्छुरिता=मनोगुप्ताऽनुलिताः सन्तः, शैलेयनद्धेषु=शिलाजतुव्याप्तेषु, शिलातलेषु=पाषाणतलेषु, निषेदुः=उपविविशुः॥

**व्युत्पत्तिः**—गणाः="गणः प्रमथसङ्घयौघाः" इति वैजयन्ती। नमेरुप्रसवा-ऽवतंसाः=नमेरूणा प्रसवाः नमेरुप्रसवाः, "नमेरुः सुरपुन्नागः" इति विश्वः। नमेरुप्रसवाः अवतसाः येषा ते नमेरुप्रसवावतंसाः। स्पर्शवतीः=प्रशस्तः स्पर्शः

अस्ति आसा ताः स्पर्शवत्यः, ताः, स्पर्शवतीः, प्रशंसाया मतुप्प्रत्ययः । "उगितश्च" इति ङीप्प्रत्ययः । भूर्जत्वचः=भूर्जाना त्वचः भूर्जत्वच- ताः । मनःशिला- विच्छुरिताः = मनःशिलाभिः = धातुविशेषैः, विच्छुरिता मनःशिलाविच्छुरिताः, "मनःशिलामनोगुप्ता मनोह्वा नाडजिह्विका । नैपाली कुनटी गोला" इत्यमरः । शैलेयनद्धेषु = शिलाया भवं शैलेय, शिलाशब्दात् "नद्यादिभ्यो ढक् ४।२।९७" इति ढक्प्रत्ययः, तस्य "आयनेयी०" इत्यादिना एयः, "किति च" इति आदि- वृद्धिश्च । "शिलाजतु च शैलेयम्" इति यादवः । शैलेयेन नद्धानि शैलेयनद्धानि, तेषु शैलेयनद्धेषु । शिलातलेषु=शिलाना तलानि शिलातलानि तेषु शिलातलेषु "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इति "अधःस्वरूपयोरस्त्री तलम्' इति चामरः । निषेदुः = न्युपसर्गपूर्वकात् "पद्लृ विशरणगत्यवसादनेषु" इति धातोर्लिटि प्रथमपुरुषस्य बहुवचने रूपमिदम् ॥

**भावार्थः**—प्रमथादिशिवगणाः, सुरपुन्नागकुसुमशेखराः, सुखस्पर्शाः भूर्ज- वृक्षत्वचः परिदधानाः, मनःशिलाधात्वनुलिप्ताः सन्तः, शिलाजतुव्याप्तेषु शिला प्रदेशेषु समुपविविशुरित्यर्थः । भूतगणास्तद्देशसुलभैरुपभोगसाधनैर्भगवत्सन्निधा- वेव रेमिर इति भावः ।

**भाषा**—प्रमथादिक गण भी उस प्रदेश मे सर्वदा सुलभ सुरपुन्नाग के कुसुमों को धारण कर, अत्यन्त मुलायम भोज पत्र को पहिन कर, शिलाजीत से व्याप्त पत्थरों की चट्टानो पर बैठकर, शङ्कर भगवान की सेवा में उपस्थित रहकर आनन्द मनाते थे ।

अथ भगवद्वाहनभूतं नन्दिनमुपवर्णयति —

**तुषारसङ्घातशिलाः खुराग्रैः, समुल्लिखन्दर्पकलः ककुद्मान् ।**
**दृष्टः कथञ्चिद् गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

**हिम की शिला तोड़ता, खुर न्यास दे अभिमान से ।**
**सहकर न हरि-रव उच्च स्वर रँभता वृषभ जी जान से ॥**

**अन्वयः**—तुषारसङ्घातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः विविग्नैः गवयैःकथञ्चित् दृष्टः ककुद्मान् असोढसिंहध्वनिः सन् उन्ननाद ॥

**व्याख्या**—तुषारसङ्घातशिलाः = हिमघनप्रस्तरान् , खुराग्रैः = शफाग्रैः, समुल्लिखन् = विदारयन् , दर्पकलः=मानमधुरध्वनिः, विविग्नैः=भीतैः, गवयैः= गवानूकैः, गोसदृशमृगविशेषैरित्यर्थः, कथञ्चित् = कृच्छ्रेण, दृष्टः = अवलोकितः,

ककुद्मान् = ककुदयुक्तः, वृषभ इत्यर्थः, असोढसिंहध्वनिः=असोढ़ान्तमृगेन्द्रगर्जितः सन् , उन्ननाद=उच्चैर्ननाद, जगर्ज इत्यर्थः ।

**व्युत्पत्तिः**—तुषारसङ्घातशिलाः=तुषाराणां सङ्घाताः तुषारसङ्घाताः, ते एव शिलाः ताः, तुषारसङ्घातशिलाः, खुराग्रैः=खुराणाम् अग्राणि खुराग्राणि' तैः खुराग्रैः "शफं क्लीबे खुरः पुमान्" इति कोषः । समुल्लिखन्=समुल्लिखतीति समुल्लिखन् , शतृप्रत्ययः, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुम् । दर्पकलः=दर्पेण कलः दर्पकलः "दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः" इति कोषः । गवयैः="गवयस्तु गवानूकः" इति त्रिकाण्डशेषकोषः । ककुद्मान्=ककुदं=वृषस्कन्धनिकटस्थमांसपिण्डः, अस्ति यस्य सः ककुद्मान् । "प्राधान्ये राजलिङ्गे च वृषाऽङ्गे ककुदोऽस्त्रियाम्" इत्यमरः । असोढसिंहध्वनिः=न सोढः असोढः, "षह मर्षणे" इति धातोः क्तप्रत्ययेन सोढपदसिद्धिः, "सहिवहोरोदवर्णस्य" इति ओत्वम् । हिनस्तीति सिंहः, "हिसि हिंसायाम् ( रु० प० से० )" इति धातोः पचाद्यच् । हिंस इति वक्तव्यत्वे " पृषोदरादीनि यथोपदिष्टम् ६।३।१०६" इति सूत्रेण वर्णविपर्ययः । सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः । सिंहानां ध्वनिः सिंहध्वनिः, "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः । असोढः सिंहध्वनिः येन सः असोढसिंहध्वनिः । उन्ननाद=उदुपसर्गपूर्वकात् "णद अव्यक्ते शब्दे" इति धातोर्लिट् । अत्र स्वभावोक्तिरलङ्कारः, तल्लक्षणं यथा साहित्यदर्पणे—"स्वभावोक्तिदुरूहार्थस्वक्रियारूपवर्णनम्" इति ।

**भावार्थः**—नित्यहिमत्वात् तद्देशसम्भविनं धीरधीरं सकलसत्वभीषणं सिंहध्वानमसहमानस्तत एव खुरविलिखिततुहिनशिलः कैलासशिखरसदृशशरीरतया प्रलयमेघगर्जिततुल्यध्वानतया च भयचकितैः सजातीयशङ्कया गवयैर्विलोक्यमानो हरस्य वाहनभूतो वृषो जगर्जेति भावः ।

**भाषा**—सिंहों के नाद को सहन न कर, अपने खुरों से बरफ की चट्टानों को तोड़ता हुआ, भयभीत गवयों से देखा जाने वाला, कैलास के शिखर के समान अति पुष्ट शरीरवाला, शङ्कर का वाहन भूत, अतिगर्विष्ठ, नन्दी नामक बैल भी उस प्रदेश में प्रलय कालिक मेघ के समान गरजता था ।

इत्थं शङ्करपार्षदानां प्रवृत्तिं प्रतिपाद्य सम्प्रति भगवतः शङ्करस्य तपो वर्णयति—

**तत्राऽग्निमाधाय समित्समिद्धं, स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।**
**स्वयं विधाता तपसः फलानां, केनाऽपि कामेन तपश्चचार ॥५७॥**

ले दूसरी निज मूर्ति पावक, अष्टमूर्ति हुए विकल ।
तप के लिये तप-फलद शङ्कर, हो गये तप में अटल ॥

**अन्वयः**—तपसः फलाना स्वयं विधाता अष्टमूर्तिः तत्र स्वम् एव मूर्त्यन्तरं समित्समिद्धम् अग्निम् आधाय केन अपि कामेन तपः चचार ।

**व्याख्या**—तपसः=तपस्यायाः, फलानाम्=स्वर्गापवर्गादीना, स्वयम्=आत्मना, विधाता=जनयिता, दाता इत्यर्थः, अष्टमूर्तिः=अष्टकायः, परमेश्वर इत्यर्थः, तत्र=तस्मिन् प्रस्थे, स्वम् एव=आत्मीयम् एव, मूर्त्यन्तरं=मूर्तिभेद, समित्समिद्धं=काष्ठदीपितम्, अग्निं=वह्निम्, आधाय=प्रतिष्ठाप्य, केनापि कामेन=कयाप्यलौकिकफलकामनया, तपः=तपस्या, चचार=चक्रे ।

**व्युत्पत्तिः**—विधाता=विदधातीति विधाता । अष्टमूर्तिः=अष्टौ मूर्तयः यस्य सः अष्टमूर्तिः । "मूर्तिः काठिन्यकाययोः" इत्यमरः । शङ्करस्य अष्टमूर्तयश्च—"भूताऽर्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः" इति । तत्र=तस्मिन् इति तत्र, "सप्तम्यास्त्रल्" इति त्रल् प्रत्ययः । मूर्त्यन्तरम्=अन्या मूर्तिः मूर्त्यन्तरः, तं मूर्त्यन्तरम्, "मयूरव्यंसकादयश्च" इति समासः । समित्समिद्धं=सम्यक् इद्धः समिद्धः, "कुगतिप्रादयः" इति समासः । "ञिइन्धी दीप्तौ" इति धातोः क्तप्रत्ययेन इद्धपदसिद्धिः । समिद्भिः समिद्धः समित्समिद्धः, तं समित्समिद्धम्, "काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्" इत्यमरः । अग्निम्="अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमर । आधाय=आङुपसर्गपूर्वकात् "डुधाञ् धारणपोषणयोः" इति धातोः क्त्वा, तस्य ल्यबादेशः । विलेखनप्रोक्षणादिना सम्पाद्येत्यर्थः । "नात्र गार्हपत्यादीनामग्नीना श्रौतेनाधानविधिना सम्पादनं विवक्षितम्, तत्र सपत्नीकस्यैवाधिकारात्"। "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते" इति न्यायात्, कामेन इत्युक्तम् । "शङ्करस्य प्राप्तसमस्तकामत्वात् केनाऽपि इत्युक्तम्" वस्तुतस्तु भगवतस्तपश्चरणं "सर्वैरप्येव कर्तव्यमि"ति लोकानामुपदेशानुग्रहार्थैवेति बोध्यम् ।

तथा चोक्तं भागवते—

"ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा ।
लोकाना ग्राहयञ्छीलं यथान्योऽघापनुत्तये ॥" इति ।

**भावार्थः**—तपःफलत्वेन प्रसिद्धाना स्वर्गादीना स्वयमेव प्रदाताऽष्टमूर्तिः शिवः स्वकीयमेव मूर्तिभेद समिद्भिर्दीपितं जातवेदसं सम्पाद्य हिमवच्छिखरे केना-

प्यनिर्वचनीयेन भक्तोपदेशानुग्रहकामेनानुष्ठानं चकारेति भावः ।

**भाषा**—उसी हिमालय के रम्य शिखर पर, प्रसिद्ध स्वर्गादि फलों को स्वयं दूसरे को देने वाले, महादेव की समिधाओं से प्रदीप्त स्वकीय मूर्त्यन्तर अग्निका आधान करके, भक्तों को सदाचार के उपदेश की अनिर्वचनीय कामना से, अनुष्ठान करते थे ।

इत्थमुपवर्णितवृत्तयोर्नायिकानायकयोः परस्परसङ्घटनार्थं प्रसङ्गोपात्त पताकावृत्तं प्रस्तौति—

**अनर्घ्यमर्घ्येण तमद्रिनाथः, स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायाऽस्य सखीसमेतां, समादिदेश प्रयतां तनूजाम् ॥५८॥**

गिरिराज ने सादर प्रथम, सुर पूज्य शिव पूजन किया ।
विजया जया के साथ फिर, सेवा गिरिजा को दिया ॥

**अन्वयः**—अद्रिनाथः अनर्घ्यं स्वर्गौकसाम् अर्चितं तम् अर्घ्येण अर्चयित्वा अस्य आराधनाय सखीसमेता प्रयता तनूजा समादिदेश ।

**व्याख्या**—अद्रिनाथः=पर्वतेश्वरः, हिमालय इत्यर्थः, अनर्घ्यम्=अमूल्यं, स्वर्गौकसा = त्रिदिवस्थानाना, देवानामित्यर्थः, अर्चितं = पूज्यमानं, तं=शिवम्, अर्घ्येण = उदकेन, पूजार्थेनेत्यर्थः, अर्चयित्वा = पूजयित्वा, अस्य = शिवस्य, आराधनाय=सेवनाय, सखीसमेता=वयस्यायुक्ता, जया विजयोपेतामित्यर्थः, प्रयता=पवित्रा, नियमादिना इत्यर्थः, तनूजा = सुता, समादिदेश = आज्ञापयामास ।

**व्युत्पत्तिः**—अद्रिनाथः = अद्रीणां नाथः अद्रिनाथः । अनर्घ्यम् = अर्घं= मूल्यम् अर्हतीति अर्घ्यः, "मूल्ये पूजाविधावर्घः" इत्यमरः; "दण्डादिभ्यः" इति यत्प्रत्यः । न अर्घ्यः अनर्घ्यः, तम् अनर्घ्यम् । स्वर्गौकसा = स्वर्गः ओकः येषा ते स्वर्गौकसः, तेषां स्वर्गौकसाम् । अर्चितम् = "अर्च पूजायाम्" इति धातोः "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तप्रत्ययः । स्वर्गौकसामित्यत्र "क्तस्य च वर्तमाने इति षष्ठी । अर्घ्येण = अर्घः=पूजा, तदर्थं जलमर्घ्यम्, तेन अर्घ्येण, "पादार्घाभ्या च" इति यत्प्रत्ययः । "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः । सखीसमेता=सखीभ्या समेता सखीसमेता, ता सखीसमेताम् । "आलिः सखी वयस्या च" इत्यमरः । प्रयता="पवित्रः प्रयतः पूतः" इत्यमरः तनूजा = तन्वाः जाता तनूजा, ता तनूजा, "स्त्रिया मूर्तिस्तनुस्तनूः" इत्यमरः । समादिदेश = समाङुपसर्गद्वयपूर्वकात् "दिश अतिसर्जने" इति धातोः "परोक्षे

लिट्" इति लिट् । अत्रानुप्रासो नाम शब्दालङ्कारः ।

**भावार्थः**—शिवानुग्रहमात्रलब्धब्रह्मादिलोका देवा अपि मोक्षपदोपलब्धये वचसा मनसामप्यगोचरं यं सदाशिव नानाद्रव्यनिर्मितासु प्रतिमासु पूजयन्ति, त देवं केनापि पुण्यपरिपाकेन स्वप्रस्थोपस्थितमुपलभ्य हिमालयोऽर्घ्यादिभिः पूजयित्वा तदविच्छेदाय श्रद्धादिगुणयुक्ता सखीसमन्विता स्वकन्या पार्वती तत्र नियुक्तवानिति भावः ।

**भाषा**—हिमालय ने देवताओं को भी पूज्य और स्वकीय शिखरपर रहने वाले महादेवजी की यथा योग्य पूजा कर के, उनकी सेवा शुश्रूषा के लिये, जय और विजया नामक दो सखियों के साथ श्रद्धायुक्त पार्वती को नियुक्त किया ।

तस्या शङ्करस्य प्रतिपत्तिमाह—

**प्रत्यर्थिभूतामपि तां समाधेः, शुश्रूषमाणां गिरिशोऽनुमेने ।**
**विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीराः ॥५९।**

तप के लिये थी विघ्न तो भी पार्वती को रख लिया ।
वे धीर हैं कारण रहे पर चल न हो जिनकी क्रिया ॥

**अन्वयः**—गिरिशः समाधेः प्रत्यर्थिभूताम् अपि शुश्रूषमाणां ताम् अनुमेने विकारहेतौ सति येषां चेतांसि न विक्रियन्ते, ते एव धीराः ॥

**व्याख्या**—गिरिशः=शिवः, समाधेः = चित्तैकाग्रयस्य, प्रत्यर्थिभूतामपि = प्रतिपक्षभूतामपि, शुश्रूषमाणां = सेवमाना, तां = पार्वतीम् अनुमेने=अङ्गीचकार, "अर्थान्तरन्यासेनोक्तमर्थं दृढयति" विकारहेतौ = प्रकृत्यन्यथात्वकारणे सति = विद्यमाने, येषां = जनानाम् , चेतांसि=चित्तानि, न विक्रियन्ते=न विकृतिं नीयन्ते, ते एव = उक्तपुरुषा एव, धीराः=धैर्ययुक्ताः, नान्य इत्यर्थः ।

**व्युत्पत्तिः**—प्रत्यर्थिभूताम्=प्रतिकूलम् अर्थयते तच्छीला प्रत्यर्थिनी, प्रत्युपसर्गपूर्वकात् "अर्थ याञ्चायाम् (चु० उ० से०) इति धातोः "सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८" इति सूत्रेण णिनिप्रत्ययः, ततः स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् प्रत्ययः । "अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । प्रत्यर्थिनी भूता प्रत्यर्थिभूता, तां प्रत्यर्थिभूतां, "सुप्सुपा" इति समासः । शुश्रूषमाणां=श्रोतुम् इच्छन्ती शुश्रूषमाणा, तां शुश्रूषमाणां, शुश्रूषा शब्दश्च श्रवणेच्छायाः कार्यं लक्षयन् परिचर्यायां रूढः । "श्रु श्रवणे" इति धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७" इति इच्छायां सन् प्रत्ययः

"ज्ञाश्रुस्मृदृशां सनः" ( १-३=५७ ) इत्यात्मनेपदं, शानच्प्रत्ययः। अनुमेने= अनूपसर्गपूर्वकात् "मनु अवबोधने" इति धातोर्लिट्। "नप्रतिषिद्धवान् इति तदभिप्रायः"। विकारहेतौ=विकारस्य हेतुः विकारहेतुः तस्मिन् विकारहेतौ, "हेतुर्ना कारण बीजम्" इत्यमरः विक्रियन्ते=कर्मणि लट्। धीराः = "धीरो मनषी ज्ञः प्राज्ञः सङ्ख्यावान्पण्डितः कविः" इत्यमरः अनेन वाक्येन वक्ष्यमाणकामदहनादिवृत्तान्तावगम्यस्य देवगतस्यारूपहार्यत्वस्य बीजन्यासः कृतः।

अत्राऽर्थान्तरन्यासाऽलङ्कारः।

**भावार्थः**—सदाशिवो ध्यानस्य प्रतिपक्षभूतामपि सेवमाना तां पार्वतीमङ्गीचकार। यतश्चित्तविकृतिप्रधानभूते स्त्रीसन्निधानादिकारणे सत्यपि येषा मनासि विकृतिं न नीयन्ते, ते एव महात्मानो धीरा उच्यन्ते, नान्य, इति भावः।

**भाषा**—महादेवजी ने समाधिको भङ्ग करने वाली अत्यन्त सुन्दरी पार्वती की सेवा शुश्रूषा को स्वीकार कर लिया। क्योंकि चित्तके विकार को उत्पन्न करने में प्रधानभूत युवती स्त्री का सान्निध्य होने पर भी, जिनके मनमें विकार उत्पन्न नही होता, वे ही महात्मा कहाते हैं।

अथोत्तरसर्गे कथान्तरप्रस्तावाय प्रस्तुतशुश्रूषाप्रकारेणैव पार्वत्याश्चिरावस्थानं दर्शयितुं शुश्रूषा प्रकारमाह—

**अवचितबलिपुष्पा वेदिसंमार्गदक्षा**
**नियमविधिजलानां बर्हिषां चोपनेत्री।**
**गिरिशमुपचचार प्रत्यहं सा सुकेशी**
**नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥ ६०॥**

**शुचि वेदिका पर जल कुसुम कुश नित उमा रखती रहीं।**
**शिर चन्द्र किरणों से सदा वह दूर श्रम करती रहीं॥**

**अन्वयः**—सुकेशी सा अवचितबलिपुष्पा वेदिसंमार्गदक्षा नियमविधिजलाना बर्हिषा च उपनेत्री सती तच्छिरश्चन्द्रपादैः नियमितपरिखेदा सती प्रत्यहं गिरिशम् उपचचार॥

**व्याख्या**—सुकेशी=सुन्दरकुन्तला, सा = पार्वती, अवचितबलिपुष्पा = लूनपूजाकुसुमा, वेदिसमार्गदक्षा=नियमवेदिकासम्मार्जनचतुरा, नियमविधिजलाना=नित्यकर्माऽनुष्ठानतोयाना, बर्हिषा च=कुशाना च, उपनेत्री=आनेत्री सती, तच्छिरश्चन्द्रपादैः = गिरिशमूर्धेन्दुरश्मिभिः, नियमितपरिखेदा = निवर्तितपरिश्रमा सती, प्रत्यहं=प्रतिदिनं, गिरिशम्=शिवम्, उपचचार=शुश्रूषाञ्चक्रे॥

**व्युत्पत्तिः**—सुकेशी=शोभनाः केशाः यस्याः सा सुकेशी "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् प्रत्ययः । "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । अवचितबलिपुष्पा=बलेः पुष्पाणि बलिपुष्पाणि, अवचितानि बलिपुष्पाणि यया सा अवचितबलिपुष्पा, वेदिसंमार्गदक्षा=वेदेः संमार्गः वेदिसंमार्गः' "वेदिः परिष्कृता भूमिः" इत्यमरः । वेदिसंमार्गे दक्षा वेदिसंमार्गदक्षा, नियमविधिजलाना=नियमस्य विधिः नियमविधिः, "नियमस्तु स यत् कर्म नित्यमागन्तुसाधनम्" इत्यमरः । तस्य जलानि नियमविधिजलानि, तेषा नियमविधिजलानाम । "आपः स्त्री भूम्नि वार्वारि सलिलं कमल जलम्" इत्यमरः । बर्हिषा="बर्हिर्ना कुशशुष्मणोः" इति त्रिकाण्डशेषकोषः । उपनेत्री उपनयतीति उपनेत्री, उपोपसर्गपूर्वकात् "णीञ् प्रापणे" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः, स्त्रीत्वविवक्षायाम् -'ऋन्नेभ्यो ङीप्' इति ङीप्प्रत्ययः । तच्छिरश्चन्द्रपादैः—तस्य शिरः तच्छिरः, " उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । चन्द्रस्य पादा चन्द्रपादाः, "पादारश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । तच्छिरसि चन्द्रपादाः तच्छिरश्चन्द्रपादाः, तैः तच्छिरश्चन्द्रपादैः । नियमितपरिखेदा=नियमितः परिखेदः यस्याः सा नियमितपरिखेदा । प्रत्यहम्=अहनि अहनि इति प्रत्यहम् । "अव्यय विभक्तिसमीपसमृद्धि०" इत्यादिना नियतार्थेऽव्ययीभावः । "नपुंसकादन्यरस्याम्" इति समासान्तः अच्प्रत्यः ।

अत्र तच्छिरश्शब्देन पीडाहारकाणा नित्यसुलभत्वं कूपखनकवृत्तिश्च ध्वन्यते । यथा कूपखनकस्य खननोद्भव खेद तदुद्भूतमेव जलमपनयति, तथाऽस्या अपि हरसेवाजनितश्रमस्तच्छिरश्चन्द्रपादैरेवापनुद्यत इति तदाशयः ।

**भावार्थ**—शोभनमूर्धजा सा पार्वती पूजनार्थं पुष्पाहरणेन, वेदिकायाः सम्यङ् मार्जनेन, नित्यकर्मानुष्ठानाय जलानयनेन, कुशानामादानेन च शङ्करभालस्थचन्द्रकिरणैर्निर्वर्तितश्रमा सत्यहरहः शिवं शुश्रूषाञ्चक्रे इति भावः ।

**भाषा**—सुन्दर केशवाली सुकुमारी पार्वती पूजन के लिये फुलोंको तोड़कर, वेदिका को अच्छी तरह साफ रख कर, नित्यकर्म के लिये जल तथा कुशों को लाकर, सर्वदा शङ्कर के मस्तकपर स्थित चन्द्रमाके अमृतमय किरणों से परिश्रम की थकावट को न पाकर, प्रतिदिन शङ्कर भगवान की श्रद्धा से सेवा शुश्रुषाकरती थी।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये पार्वतीप्रादुर्भावो नाम
प्रथमः सर्गः समाप्तः ।

---

# अथ द्वितीयः सर्गः ।

अथोपवर्णितप्रस्तुतकथानुगुणं कथान्तरमारभते—

**तस्मिन्विप्रकृताः काले, तारकेण दिवौकसः ।**
**तुरासाहं पुरोधाय, धाम स्वायम्भुवं ययुः ॥ १ ॥**

**उस समय तारक ने भगाया देव गण को शक्ति से ।**
**कर इन्द्र को आगे गये वे विधि निकट अतिभक्ति से ॥**

**अन्वयः**—तस्मिन् काले तारकेण विप्रकृताः दिवौकसः तुरासाहं पुरोधाय स्वायम्भुवं धाम ययुः ॥

**व्याख्या**—तस्मिन् काले=पार्वतीशुश्रूषासमये, तारकेण=तारकाऽसुरेण, वज्रनखपुत्रेणेत्यर्थः, विप्रकृताः = उपप्लुताः, दिवौकसः = देवाः, तुरासाहम् = इन्द्रम्, पुरोधाय=पुरस्कृत्य, अग्रे कृत्वेत्यर्थः, स्वायम्भुवं = ब्राह्मं, ब्रह्मण इत्यर्थः, धाम = स्थानं, ययुः=जग्मुः ॥

**व्युत्पत्तिः**—काले="कालो दिष्टोऽप्यनेहाऽपि समयः" इत्यमरः । दिवौकसः = द्यौः ओकः येषा ते दिवौकसः, "पृषोदरादीनि यथोपदिष्टम्" इति साधुत्वम् । द्योशब्दस्थाने दिवादेशः इति तत्सिद्धिः, यद्वा दिवम् ओकः येषा ते दिवौकसः । "दिवं स्वर्गेऽन्तरिक्षे च" इति विश्वः । तुरासाह=तुरं = त्वरितं साहयति= अभिभवति इति तुराषाट्, त तुरासाह । णिजन्तात् "षह मर्षणे" इति धातोः क्विप् प्रत्ययः "नहिवृति—(६–३–५६)" इत्यादिना पूर्वपदस्य दीर्घः । मुग्धबोधाऽभिधानव्याकरणकारस्तु तुराशब्दः टाबन्त इत्याचष्टे । आजादिषु विभक्तिषु साड्रूपत्वाभावात् "सहेः साडः सः ८।३।५६" इति षत्वं न भवति । "सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः" इत्यमरः । स्वायम्भुवं=स्वयं भवतीति स्वयम्भूः, "भुवः संज्ञान्तरयोः ३।२।१७९" इति क्विप्प्रत्ययः । "हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः" इत्यमरः । स्वयम्भुवः इदं स्वायम्भुवं तत् । "तस्येदम्" इत्यण्, "तद्धितेष्वचामादेः" इति आदिवृद्धिश्च । "संज्ञापूर्वको विधिरनित्यः" इति अनित्यत्वात् "ओर्गुणः" इति गुणो न ॥

**भावार्थः**-पार्वत्याः शङ्करपरिचर्यासमये शतमुखप्रमुखा मखभुजस्तारकासुरपरिभवमसहमानास्तन्निवेदनाय परमेष्ठिनः सद्म प्रपेदिर इति भावः ।

**भाषा**—जिस समय पार्वती शङ्कर भगवान की सेवा कर रहीं थी, उसी

समय तारकासुर से पीड़ित होकर, इन्द्रादि देवता, ब्रह्मा जी से प्रार्थना करने के लिये, सत्य लोक में गये थे।

तेषां तद्दर्शनप्रकारमाह—

**तेषामाविरभूद् ब्रह्मा, परिम्लानमुखश्रियाम् ।**
**सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥**

**उन मलिन मुख के सामने, सानन्द विधि शोभित हुए ।**
**मानो सुबह मुकुलित कमल सर मध्य रवि शोभित हुए ॥**

**अन्वयः**—परिम्लानमुखश्रियां तेषां ब्रह्मा, सुप्तपद्मानां सरसां प्रातः दीधितिमान् इव, आविरभूत् ॥

**व्याख्या**—परिम्लानमुखश्रियां=परिक्षीणवदनशोभानां, तेषां=देवानां, ब्रह्मा=पितामहः, सुप्तपद्मानां=मुकुलिताऽरविन्दानां, सरसां=कासाराणां, प्रातः=प्रभाते, दीधितिमान् इव=सूर्य इव, आविरभूत्=प्रादुरभूत्, प्रकाशोऽभूदित्यर्थः॥

**व्युत्पत्तिः**—परिम्लानमुखश्रियां=मुखस्य श्रीः मुखश्रीः, परिम्लाना मुखश्रीः येषां ते परिम्लानमुखश्रियः, तेषां परिम्लानमुखश्रियां । "म्लै हर्षक्षये" इति धातोः क्तप्रत्ययेन म्लानपदसिद्धिः । ब्रह्मा="ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरः । सुप्तपद्मानां=सुप्तानि पद्मानि येषु तानि सुप्तपद्मानि, तेषां सुप्तपद्मानां, "ञिष्वप् शये" इति धातोः क्तप्रत्ययेन सम्प्रसारणेन च सुप्तपदसिद्धिः । सरसां="कासारः सरसी सरः" इत्यमरः । प्रातः=स्वरादिपाठादस्य "स्वरादिनिपातमव्ययम्" इति अव्ययत्वम् । दीधितिमान्=प्रशस्ताः दीधितयः सन्ति अस्य इति दीधितिमान्, प्राशस्त्ये मतुप्प्रत्ययः । आविरभूत्="प्रकाशे प्रादुराविः स्यात्" इत्यमरः । अत्रोपमाऽलङ्कारः । अनया उपमया देवखेदच्छेदकारी प्रसादः सूचितो भवति ॥

**भावार्थः**—प्रातः काले मुकुलितपद्मानां सरोवराणां सूर्य इव, कल्पान्तक्रशानुकल्पेन तारकासुरभुजबलोष्मणा परिम्लानमुखानां बर्हिर्मुखानां दयानिधिः पितामहः स्वयमेवात्मानं दर्शितवानिति भावः ।

**भाषा**—प्रातः काल में मुकुलित कमलों के तालाब के सन्मुख सूर्य के प्रादुर्भाव के समान, तारकासुर के भय से उदास मुख वाले इन्द्रादि देवताओं के समक्ष, दयासागर ब्रह्मदेवजी स्वयं ही प्रगट हुवे ।

देवाना ब्रह्मोपस्थानप्रकारमाह—

**अथ सर्वस्य धातारं, ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः, प्रणिपत्योपतस्थिरे ॥ ३ ॥**

करके प्रणाम प्रथम अमित, शुचि अर्थमय वागीश की ।
सुर प्रार्थना करने लगे, उस चार मुख जगदीश की ॥

**अन्वयः**—अथ सर्वे ते सर्वतोमुखं वागीशं सर्वस्य धातारं प्रणिपत्य अर्थ्याभिः वाग्भिः उपतस्थिरे ॥

**व्याख्या**—अथ = अनन्तरं, ब्रह्माऽऽविर्भावाऽनन्तरमित्यर्थः, सर्वे=सकलाः, ते = देवाः, सर्वतोमुखं=विश्वतोमुखं, चतुर्मुखमित्यर्थः, वागीशं = वाक्पतिं, सर्वस्य=सम्पूर्णस्य, जगत इति शेषः, धातारं=स्रष्टारं, ब्रह्माणमित्यर्थः, प्रणिपत्य= नमस्कृत्य, अर्थ्याभिः=यथार्थभूताभिः, वाग्भिः=वाणीभिः, उपतस्थिरे=तुष्टुवुः ॥

**व्युत्पत्तिः**—सर्वतोमुख = सर्वतः समन्ततः मुखानि यस्य सः सर्वतोमुखः, तं सर्वतोमुखं । वागीशं=वाचाम् ईशः वागीशः, तं वागीश । "वागीशो वाक्पतिः समौ" इत्यमरः । प्रणिपत्य = प्रण्युपसर्गपूर्वकात् "पत्लृ पतने" इति धातोः क्त्वा, तस्य ल्यप् च । अर्थ्याभिः=अर्थात् अनपेताः अर्थ्याः, ताभिः अर्थ्याभिः । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । उपतस्थिरे = उपोपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः लिट् । 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदम् ॥

**भावार्थः**—अथ ते सर्वे देवाः अखिलजगन्निर्माणकर्तारं चतुर्मुखं ब्रह्माणं प्रणम्य यथार्थभूताभिर्वाग्भिः स्तोतुं समुपचक्रिरे इति भावः ।

**भाषा**—ब्रह्मदेव के दर्शन होने पर, वे सब देवता, सकल जगत् के निर्माण करने वाले, चतुर्मुख ब्रह्मदेवको, यथार्थवाणी से, नमस्कार पूर्वक स्तुति करने लगे

स्तुतिप्रकार प्रपञ्चयति "नमः" इत्यादिभिर्द्वादशभिः श्लोकैः ।

तत्रादौ ब्रह्मणस्त्रिमूर्तिसृष्टौ कारणत्वमाह—

**नमस्त्रिमूर्तये तुभ्यं, प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय, पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

पहले सृजन के एक, पीछे तीन मूर्ति प्रणाम हैं ।
तू विष्णु है, तू शम्भु है, तू विधि अनन्त प्रणाम है ॥

**अन्वयः**—हे भगवन् ! सृष्टेः प्राक् केवलात्मने, पश्चात् गुणत्रयविभागाय

भेदम् उपेयुषे, अत एव त्रिमूर्तये, तुभ्यं नमः ॥

**व्याख्या**—हे भगवन्नित्यध्याहार्य व्याख्येयं । सृष्टेः = सर्गात्, प्राक् = पूर्वं, केवलात्मने = एकरूपाय, पश्चात् = अनन्तरं, सृष्टिप्रवृत्तिकाले इत्यर्थः, गुणत्रयविभागाय=सत्वादित्रयविभागार्थम्, भेदम्=उपाधिम्, स्रष्टृत्वादिकमित्यर्थः, उपेयुषे=प्राप्तवतेः अत एव—त्रिमूर्तये=ब्रह्मविष्णुरुद्ररूपिणे, तुभ्यं=भवते, नमः = नमस्कारः, अस्तीति शेषः ।

**व्युत्पत्तिः**—सृष्टेः = प्राक्छब्दयोगे "अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रेण ( अञ्चूत्तरपदयोगत्वात् ) पञ्चमी । केवलात्मने=केवलः आत्मा यस्य सः केवलात्मा, तस्मै केवलात्मने । "आत्मा वा इदमेक एवाऽग्र आसीत्" इति श्रुतेः । "निर्णीते केवलमिति त्रिलिङ्ग त्वेककृत्स्नयोः" इत्यमरः । गुणत्रयविभागाय=विभज्यते अनेनेति विभागः । त्रयः अवयवाः यस्य तत् त्रयं, गुणाना त्रयं गुणत्रयम् । "गुणाः सत्वं रजस्तमः" इत्यमरः । गुणत्रयम् एव विभागः यस्य सः गुणत्रयविभागः, तस्मै गुणत्रयविभागाय, उपेयुषे=उपोपसर्गपूर्वकात् "इण् गतौ" इति धातोः "उपेयिवाननाश्वाननूचानश्च ३।२।१०५" इति सूत्रेण क्वसुप्रत्ययाऽन्तो निपातः । त्रिमूर्तये = तिस्रः मूर्तयः यस्य सः त्रिमूर्तिः तस्मै त्रिमूर्तये । "मूर्तिः काठिन्यकाययोः" इत्यमरः । तुभ्यं = नमः शब्दयोगे "नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इति चतुर्थी ।

उक्तं च—"नमो रजोजुषे सृष्टौ, स्थितौ सत्वमयाय च ।
तमोरूपाय संहारे, त्रिरूपाय स्वयम्भुवे" इति ॥

**भावार्थः**—हे भगवन् ! सृष्टेः प्राक् एकरूपाय, पश्चात् सृष्टिप्रवृत्तिकाले क्रमात् सत्त्वरजस्तमोगुणमधिष्ठाय ब्रह्मविष्णुरुद्रात्मने त्रिरूपाय तुभ्यं नमोऽस्त्विति भावः ।

**भाषा**—हे भगवन् ! सृष्टि के पहिले एकरूप धारण करने वाले, अनन्तर सृष्टि प्रवृत्ति काल में, क्रम से सत्व, रज, तम गुणों को अधिष्ठितकर, ब्रह्म, विष्णु, महेश त्रिमूर्तिरूप उपाधिको धारण करने वाले आपको अनेक प्रणाम हैं ।

अथ जगत्सृष्टिप्रकारमाह—

**यदमोघमपामन्तरुप्तं बीजमज ! त्वया ।**
**अतश्चराचरं विश्वं, प्रभवस्तस्य गीयसे ॥ ५ ॥**

जल में अजन्मा ! तव करों से बीज बिखराया गया ।
इससे चराचर-सुजन कर्त्ता तू सदा गाया गया ॥

**अन्वयः**—हे अज ! अपाम् अन्तः त्वया यत् अमोघं बीजम् उप्तम्, अतः चराऽचरं विश्वम् ( उत्पन्नम् ), तस्य प्रभवः गीयसे ।

**व्याख्या**—हे अज = हे अजन्मन् ! अपाम् = जलानाम्, अन्तः = मध्ये, त्वया = भवता, यत्, अमोघम् = अवन्ध्यं, सफलमित्यर्थः, बीजं = वीर्यम्, उप्तं= निक्षिप्तम्, [ मुक्तम् इति पाठे विसृष्टम् इत्यर्थः ], अतः = अस्मात्, ते बीजात्, चराऽचरं=चलाऽचलं, स्थावरजङ्गमात्मकम्, विश्वं = जगत् [उत्पन्नम् इति शेषः] तस्य = विश्वस्य, प्रभवः=कारणं, गीयसे=अभिधीयसे । 'अदश्चराऽचरं विश्वं प्रसवस्तस्य गीयते' इति पाठे, अदः=इदं, चराचरं, विश्वं तस्य=बीजस्य, प्रसवः= फलं, गीयते । लोकैः इति शेषः ।

**व्युत्पत्तिः**—अज = न जायते इति अजः, तत्सम्बुद्धौ हे अज !, अमोघं= न मोघम् अमोघं । बीजं="शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इत्यमरः । उप्तम् = "डुवप् बीजतन्तुसन्तानयोः" इति धातोः क्तप्रत्ययः, सम्प्रसारणं च । अतः=इदं शब्दात् पञ्चम्यर्थे तसिः । चराऽचरं=चरन्तीति चराः, न चराः अचराः, चराश्च अचराश्च चराचरस्तं चराचरं, समाहारे द्वन्द्वैकवद्भावः । प्रभवः=प्रभवति अस्मात् इति प्रभवः, "ऋदोरप्" इति अप्प्रत्ययः । अत्राऽर्थे मनुः—

"हिरण्यगर्भो भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत्" ( १-८ )
"तदण्डमभवद्धैम सहस्राऽशुसमप्रभम्
तस्मादण्डात् समुत्पन्नं जगत् स्थावरजङ्गमम्" ( १-६ ) इति ।

**भावार्थः**—हे ब्रह्मन् ! त्वया पूर्वं जलं निर्माय, तदन्तर्भागे निषिक्तस्य वीर्यस्य विभूतिरेव चराचरात्मकमिदं विश्वमिति मन्वादयो वदन्तीति भावः ।

**भाषा**—हे ब्रह्मन् ! आपने सर्व प्रथम जल की सृष्टिकर उसमें अव्यर्थ बीज का वपन किया था, उसीसे चराचर विश्व उत्पन्न हुवा, अतः आप विश्वके कारण गाये जाते हैं ।

न केवलं सृष्टिरेव त्वदुपक्रमा, अपि तु स्थितिसंहारावपीत्याह—

**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥**

इस सृष्टि के पहले बढाकर शक्ति को निज सम्पदा ।
तू सृष्टि करता पालता संहारता भी है सदा ॥

**अन्वयः**—एकः त्व तिसृभिः अवस्थाभिः महिमानम् उदीरयन् प्रलयस्थिति-सर्गाणा करणता गतः ।

**व्याख्या**—एकः=एकाकी, सृष्टेः प्राक्केवल इत्यर्थः, त्वं=भवान्, तिसृभिः=त्रिसंख्याकाभिः, त्रैगुण्यमयीभिरित्यर्थः, शिवविष्णुब्रह्मस्वरूपाभिरिति यावत्, अवस्थाभिः=दशाभिः, महिमानं=महत्त्वम्, निजशक्तिमित्यर्थः, उदीरयन्=जृम्भयन्, प्रलयस्थितिसर्गाणां=संहारपालनसृष्टीना, कारणताम्=उपादानादिहेतुता, गतः = प्राप्तः ( असीति शेषोऽर्थः ) । इदं "पश्चाद् भेदमुपेयुषे" इत्यस्य विवरणमतो न गताऽर्थत्वदोषः ।

**व्युत्पत्ति**—एकः="एकाकी त्वेक एककः" इत्यमरः । महिमान = महतः भावः महिमा, तं महिमानं । महच्छब्दात् "पृथ्वादिभ्यः इमनिज्वा" इति इमनिच् प्रत्ययः । उदीरयन् = उदीरयतीति उदीरयन्, प्रलयस्थितिसर्गाणां = प्रकृष्टो लयः प्रलयः, "कुगतिप्रादयः" इति समासः । "सवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः । प्रलयश्च स्थितिश्च सर्गश्च प्रलयस्थितिसर्गाः' तेषा प्रलयस्थितिसर्गाणा="सर्गः स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु" इत्यमरः । कारणता = कारणस्य भावः करणता, ता कारणता "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः, तदन्तस्य "तलन्तं स्त्रियाम्" इति लिङ्गाऽनुशासनेन स्त्रीत्वात् "अजाद्यतष्टाप्", इति टाप् प्रत्ययः । "हेतुना कारण बीजम्" इत्यमरः ।

**भावार्थः**—हे परमेष्ठिन् ! एकाकी त्व हरिहरहिरण्यगर्भस्वरूपैरवस्थाविशेषैर्माहात्म्यं प्रकाशयन् ( निजमेव वैभवं मूर्तित्रयभेदेन प्रकटयन्निति यावत् ) सहाररक्षणोत्पादनानामुपादानता प्राप्तोऽसीति भावः ।

**भाषा**—सृष्टिके पहिले अकेले आप हरि, हर, हिरण्यगर्भ इन तीन अवस्था विशेष से अपनी शक्ति के प्रभाव को प्रगट करते हुये, संसार के संहार, पालन, सृष्टि की कारणता को प्राप्त होते हैं ।

अथ मिथुनसृष्टिप्रकारमाह—

**स्त्रीपुंसावात्मभागौ ते, भिन्नमूर्तेः सिसृक्षया ।**
**प्रसूतिभाजः सर्गस्य, तावेव पितरौ स्मृतौ ॥ ७ ॥**

हैं भाग तन के स्त्री पुरुष फल सकल तेरी दृष्टि के ।
वे ही बने माता पिता उत्पत्ति वाली सृष्टि के ॥

**अन्वयः**—स्त्रीपुंसौ सिसृक्षया भिन्नमूर्तेः ते आत्मभागौ स्तः । तौ एव प्रसूतिभाजः सर्गस्य पितरौ स्मृतौ ।

**व्याख्या**—स्त्रीपुंसौ = नारीपुरुषौ, सिसृक्षया = सृष्टीच्छया, भिन्नमूर्तेः = भिन्नकायस्य, द्विधाकृतवपुषः इत्यर्थः, ते=तव, आत्मभागौ=देहाऽशौ स्तः । तौ एव देहाऽशौ प्रसूतिभाजः = उत्पत्तिभाजः, = सर्गस्य = सृष्टेः निजसृष्टेः इत्यर्थः, पितरौ = मातापितरौ, स्मृतौ = कथितौ, वृद्धैः इति शेषः ।

**व्युत्पत्तिः**—स्त्रीपुंसौ=स्त्री च पुमांश्च स्त्रीपुंसौ, "अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाऽहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ५।४।७७" इति सूत्रेण अच्प्रत्ययान्तो निपातः । "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इति, "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषाः नराः" इति चाऽमरः । सिसृक्षया = स्रष्टुम् इच्छा सिसृक्षा, तया सिसृक्षया भिन्नमूर्तेः = भिन्ना = मायावलम्बेन प्रकृतिपुरुषात्मना द्विधाकृता, मूर्तिः = शरीरं, यस्य सः भिन्नमूर्तिः, तस्य भिन्नमूर्तेः । ते = "तेमयावेकवचनस्य" इति युष्मच्छब्दस्य ते आदेशः । आत्मभागौ = आत्मनः भागौ आत्मभागौ "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च" इत्यमरः । प्रसूतिभाजः = प्रसूतिं भजतीति प्रसूतिभाक् तस्य प्रसूतिभाजः । "भजो ण्विः ३। २। ६२" इति ण्विप्रत्ययः । सर्गस्य = सृज्यते इति सर्गः, तस्य सर्गस्य । पितरौ = माता च पिता च पितरौ, "पिता मात्रा" इति एकशेषः । "मातापितरौ पितरौ मातरपितरौ प्रसू जनयितारौ" इत्यमरः । अत्र मनुः—

"द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्या स विराजमसृजत्प्रभुः १-३२" ॥ इति

भगवतो विराड्रूपस्य शरीरभेदमेव, मन्वादयो मिथुनसर्गप्रकरणे स्त्रीपुरुषात्मना व्यपदिशन्तीत्यर्थः ।

**भावार्थः**—हे पितामह ! स्रष्टुमिच्छया मायावलम्बेन प्रकृतिपुरुषात्मना द्विधाकृतशरीरस्य तव यौ स्त्रीपुंसरूपात्मांशौ, तावेवोत्पत्तिभाजो निजसृष्टेर्मातापितरौ स्मृताविति भावः ।

**भाषा**—सृष्टि के इच्छा से माया का अवलम्बन कर, प्रकृति, पुरुष, रूप भिन्न मूर्ति धारण करने वाले आप के शरीर के, स्त्री, और पुरुष, ये दो भाग है। वे ही उत्पन्न होने वाली सृष्टि के माता पिता कहे जाते हैं।

अथ वेदान्ताभिमतसृष्टिप्रलयप्रसङ्गेन स्तुतिमाह—

**स्वकालपरिमाणेन, व्यस्तरात्रिन्दिवस्य ते।**
**यौ तु स्वप्नाऽवबोधौ तौ, भूतानां प्रलयोदयौ ॥ ८ ॥**

**तेरी निशा जो दिवस सोने जागने के हैं बने।**
**वे प्राणियों के प्रलय है उत्पत्ति क्रम से हैं वने ॥**

**अन्वयः**—स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते, यौ तु स्वप्नाऽवबोधौ, तौ [ एव ] भूताना प्रलयोदयौ भवतः।

**व्याख्या**—स्वकालपरिमाणेन=निजसमयप्रमाणेन "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तरूपेणेत्यर्थः, व्यस्तरात्रिन्दिवस्य=विभक्तनक्तन्दिवसस्य- ते=तव, यौ तु स्वप्नाऽवबोधौ=ये तु निद्राजागरणे, तौ=स्वप्नाऽवबोधौ [ एव ], भूताना = प्राणिना, प्रलयोदयौ = संहारसृष्टी भवतः।

**व्युत्पत्तिः**—स्वकालपरिमाणेन=स्वस्य कालः स्वकालः "स च द्विपरार्धसवत्सरपरिमितः," तस्य परिमाणम्=इयत्ता, स्वकालपरिमाणं' तेन स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य=रात्रौ च दिवा च रात्रिन्दिवम्' "अचतुर०" इत्यादिना अच्प्रत्ययान्तो निपातः। व्यस्त रात्रिन्दिवं यस्य सः व्यस्तरात्रिन्दिवः, तस्य व्यस्तरात्रिन्दिवस्य। स्वप्नाऽवबोधौ=स्वप्नश्च अवबोधश्च स्वप्नावबोधौ। प्रलयोदयौ= प्रलयश्च उदयश्च प्रलयोदयौ। यदाहुः—

"यदा स देवो जागर्ति तदेद चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति" १–५२। इति।

एतच्च दैनन्दिनसृष्टिप्रलयाऽभिप्रायकं, महाप्रलयस्य ब्रह्मणो वर्षशताऽन्ते भावित्वात्।

**भावार्थः**—हे सुरज्येष्ठ! परार्धपरिमितेनात्मनः परमायुषा कल्पिताहोरात्रविभागस्य तव निद्रैव जगतो महाप्रलयः, तव प्रबोध एव जगतः सर्गो भवतीति भावः।

**भाषा**-स्वकीय काल परिभाषा से परिकल्पित दिन, और रात्रि के विभागमें- आप का शयन हीं जगत् का महाप्रलय है, और आपका प्रबोध ही जगतकी सृष्टिहै।

ननूपादानादिना विना कथं स्वप्नप्रबोधमात्रेण जगतः प्रलयोद्भवावुत्पत्तित आह—

**जगद्योनिरयोनिस्त्वं, जगदन्तो निरन्तकः ।**
**जगदादिरनादिस्त्वं, जगदीशो निरीश्वरः ॥ ६ ॥**

तू विश्व योनि अयोनि है तू विश्व पालक काल है ।
तू विश्व आदि अनादि है तेरा न कोई पाल है ॥

**अन्वयः**—हे भगवन् ! त्वं जगद्योनिः, स्वयम् अयोनिः, जगदन्तः स्वयं निरन्तकः, त्वं जगदादिः, अत एव अनादिः, त्वं जगदीशः, स्वयं निरीश्वरः ॥

**व्याख्या**—हे भगवन् ! त्वं = भवान्, जगद्योनिः = लोककारणं, स्वयम् अयोनिः = अकारणकः, अनादित्वादित्यर्थः, जगदन्तः = लोकसंहर्ता, स्वयं निरन्तकः=अन्तरहितः, नित्यत्वादित्यर्थः, त्वं=भवान्, जगदादिः=लोकादिः, सृष्टेः प्रागपि सन्नित्यर्थः, अत एव अनादिः = आदिरहितः, त्वं भवान्, जगदीशः = लोकेश्वरः, नियन्ता इत्यर्थः, स्वयं निरीश्वरः = ईश्वररहित, अनियम्य इत्यर्थः, असीति शेषः ॥

**व्युत्पत्तिः**—जगद्योनिः = गच्छतीति जगत्, "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च" इति निपातः । "त्रिष्वथो जगति लोको विष्टपं भुवनं जगत्" इत्यमरः । जगतः योनिः जगद्योनिः, अयोनिः = न विद्यते योनिः यस्य सः अयोनिः, जगदन्तः=अन्तयतीति अन्तः । पचाद्यच् । जगतः अन्तः जगदन्तः । निरन्तकः= निर्गतः अन्तः यस्मात् सः निरन्तकः, "शेषाद्विभाषा" इति समासान्तः कप् । जगदादिः=जगताम् आदिः जगदादिः, अनादिः = अविद्यमानः आदिः यस्य सः अनादिः, जगदीशः=जगताम् ईश. जगदीशः । निरीश्वरः=ईष्टे असौ ईश्वरः, "ईश ऐश्वर्ये" इति धातोः "स्थेशभासपिसकसो वरच्" इति वरच्प्रत्ययः । "ईश्वरः पतिरीशिता" इत्यमरः । निर्गतः ईश्वरः यस्मात् सः निरीश्वरः । "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिरेवाऽत्र प्रमाणम् । 'अत्र अयोनिरित्यादौ नञ्तत्पुरुषसमासाश्रयणे विरोधः, बहुव्रीहिसमासेन तु तत्परिहार इति विरोधाभासाऽलङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—

"जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।
क्रिया क्रियाद्रव्याभ्या यद्द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥" इति ॥

**भावार्थः**—हे लोकेश ! त्वं स्थावरजङ्गमात्मकस्य प्रपञ्चस्योत्पादनकारणमसि, त्वं पुनः कारणान्तररहितोऽसि, त्वं जगत. संहारकोऽसि, पुनस्त्वं संहर्तृरहितोऽसि, जगद्योनित्वाज्जगदुत्पत्तेः पूर्वं विद्यमानोऽसि, त्वं पुनरादिरहितोऽसि, जगतामीशोऽसि, त्वं पुनरीशान्तररहितोऽसीति भावः ।

**भाषा**—हे भगवन् ! आप स्थावर जङ्गमात्मक सकल प्रपञ्चजगत् के उत्पादन के कारण होते हुये भी स्वय कारणान्तर से रहित है । ऐसेही जगत् का नाश करने वाले होकर भी स्वयं नाश रहित है । एवं आप जगत के आदि में विद्यमान है, किन्तु स्वय अनादि है । तथा आप जगत के ईश्वर हैं, परन्तु आप का ईश्वर कोई नहीं है ।

ननूत्पादकान्तरराहित्ये दृश्यमानस्य चतुर्मुखस्य कथमुत्पत्तिरित्याह—

**आत्मानमात्मना वेत्सि, सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥**
**तू जानता निज को तथा निज सृष्टि है करता स्वयम् ।**
**तू शक्ति शाली है अतः निज को हरण करता स्वयम् ॥**

**अन्वयः**—हे भगवन् ! त्वम् आत्मानम् आत्मना एव वेत्सि, आत्मानम् एव आत्मना सृजसि । कृतिना आत्मना आत्मनि एव प्रलीयसे ॥

**व्याख्या**—हे भगवन् ! त्वम्, आत्मानम्=निजम्, ब्रह्मरूपेण उत्पिपादयिषितं स्वस्वरूपमित्यर्थः । आत्मना=स्वयमेव, वेत्सि=जानासि, सर्वाऽपि क्रिया कर्तव्यार्थज्ञानपूर्विका इति भावः, आत्मान=निजम्, 'आत्मना=स्वयम् एव, सृजसि= उत्पादयसि, अधिष्ठानमपि स्वयमेवेत्यर्थः । "स्वे महिम्नि प्रतिष्ठितम्" इति श्रुतेः । कृतिना=कृतकृत्येन, स्वावतारकार्याणां विधानान्निर्वृतेनेत्यर्थः । आत्मना=स्वदेहेन, आत्मनि एव, प्रलीयसे=प्रलीनो भवसि ॥

**व्युत्पत्तिः**—वेत्सि="विद ज्ञाने" इति धातोर्लट् । कृतिना=कृतम् अस्याऽस्तीति कृती, तेन कृतिना, इनि प्रत्ययः । प्रलीयसे=प्रोपसर्गपूर्वकात् "लीङ् श्लेषणे" इति दैवादिकात् धातोः कर्तरि लट् । "आत्मना=प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति तृतीया ॥ अत्र मनुः—

"एव स सर्वं सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥" इति ।

अत्र स्वाधीनात्मसर्गस्थितिप्रलयस्याऽस्य ब्रह्मणः पराधीनसर्गादेः प्रपञ्चाद् व्यतिरेकोक्तिः ।

**भावार्थः**—हे चतुरानन ! त्वमादावात्मदेहस्वरूपं तत्सर्गोपाय च स्वयमेव जानासि, ततः परं तं सृजसि, सर्गानन्तरं पुनः परार्धद्वयवत्सरपर्यन्तं रक्षिते स्वदेहे स्वावतारकार्येषु च निर्वृत्तेषु कृतकृत्यः सन् स्वदेहं स्वात्मन्येव लीनं करोषीति भावः ।

**भाषा**=हे प्रभो ! आप आदिमें स्वकीय देहस्वरूप को तथा उसके सृष्टिके उपाय को भी स्वयं ही जानते है। और उसकी सृष्टि भी करते है। अनन्तर परार्ध द्वय वत्सर पर्यन्त स्वदेह को रक्षितकर, स्वकीय अवतार कार्य पूर्ण होने पर कृतकृत्य होकर स्वदेह को स्वात्मा में ही लीन कर लेते हैं।

ब्रह्मणोऽणिमादिसिद्धिषु स्वाधीनत्वमाह—

**द्रवःसङ्घातकठिनः, स्थूलः सूक्ष्मो लघुर्गुरुः ।**
**व्यक्तो व्यक्तेतरश्चाऽसि, प्राकाम्यं ते विभूतिषु ॥ ११ ॥**

**द्रव, कठिन, इन्द्रिय-ग्राह्य और अग्राह्य लघु गुरु युक्त है ।**
**अणिमादिमय है कार्य कारण और इनसे मुक्त है ॥**

**अन्वयः**—हे भगवन् ! त्वम् द्रवः, सङ्घातकठिनः, स्थूलः, सूक्ष्मः, लघुः, गुरुः, व्यक्तः, व्यक्तेतरश्च असि । विभूतिषु ते प्राकाम्यम् अस्तीति शेषः ॥

**व्याख्या**—हे भगवन् ! हे ब्रह्मन् ! त्वम्, द्रवः=रसात्मकः, सरित्समुद्रादिवदित्यर्थः, सङ्घातकठिनः=निबिडसयोगकठोरः, महीधरादिवदित्यर्थः, स्थूलः=इन्द्रियग्राह्यः, घटादिवदित्यर्थः, सूक्ष्मः=अतीन्द्रियः, इन्द्रियाऽग्राह्यः, परमाण्वादिवदित्यर्थः, लघुः=उत्पतनयोग्यः, तूलादिवदित्यर्थः, गुरुः=अचलनीयः, हेमाद्रिवदित्यर्थः, व्यक्तः=कार्यरूपः, व्यक्तेतरश्च=व्यक्तभिन्नश्च, कारणरूपश्चेत्यर्थः, असि । एवं विभूतिषु=ऐश्वर्येषु, अणिमादिष्वित्यर्थः, ते=तव, प्राकाम्यं=यथाकामत्वम्, अस्तीति शेषः ॥

**व्युत्पत्तिः**—सङ्घातकठिनः=सङ्घातेन कठिनः, सङ्घातकठिनः । विभूतिषु= "विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा" इत्यमरः । प्राकाम्यं=प्रकामस्य भावः प्राकाम्यं, ष्यञ्प्रत्ययः । अणिमाद्योऽष्टौ च वक्ष्यमाणश्लोकोक्तदिशा ज्ञेयाः ॥

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशिता वशिता चैव तथा कामावशायिता" ॥ इति ।

**भावार्थः**—हे हिरण्यगर्भ ! त्वं सरित्समुद्रादिवद्द्रसात्मकोऽसि, पर्वतादिवत् कठिनोऽसि, घटादिवदिन्द्रियग्रहणयोग्योऽसि, परमाण्वादिवदतीन्द्रियोऽसि, तूलादिवदुत्पवनयोग्योऽसि, हेमाद्रिवदचलोऽसि, कार्यरूपोऽसि, कारणरूपश्चासि, इत्थमणिमादिसिद्धिषु तव यथाकामत्वमस्तीति भावः ।

**भाषा**—हे ब्रह्मन् ! आप सरित् समुद्रादि के समान द्रव रूप रसात्मक है, पर्वतादिके सदृश कठिन है, घटादि पदार्थवत् इन्द्रिय से ग्रहण योग्य है, परमाणवादि के तरह अतीन्द्रिय भी है, रुई की नाईं आकाश में उड़ने के योग्य है, पर्वत के तुल्य अचल भी हैं, एवं आप कार्यरूप है, और कारण रूप भी हैं, इस तरह अणिमादि अष्टसिद्धियों में आपका यथेष्ट प्राकाम्य है। अर्थात् आप जो चाहें सो हो सकते है ।

अपौरुषेयाणा वेदाना ब्रह्मण उद्भूतत्वमाह—

**उद्घातः प्रणवो यासां, न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥**
**आरम्भ होता तीन स्वर से तू वही ओंकार है ।**
**फल कर्म जिनका स्वर्ग मख है तू उन्हीं का सार ॥**

**अन्वयः**—हे भगवन् ! यासा गिराम् उद्घातः प्रणवः, यासा त्रिभिः न्यायैः उदीरणं, यासा कर्म यज्ञः, फलं स्वर्गः, त्वं तासा गिरा प्रभवः असि ॥

**व्याख्या**—हे भगवन् ! यासा, गिरा = वाचाम्, उद्घातः = उपक्रमः, प्रणवः = ओङ्कारः, यासा = गिरा, त्रिभि. = त्रिसङ्ख्यकैः, न्यायैः = स्वरैः, उदात्ताऽनुदात्तस्वरितैरित्यर्थः, उदीरणम् = उच्चारणं, यासा = गिरा, कर्म = क्रियाप्रतिपाद्यमित्यर्थः, यज्ञः=क्रतुः, ज्योतिष्टोमादिरित्यर्थः, फलं=प्रसवः, स्वर्गः = त्रिदिवः, त्वं, तासा तादृशा, गिरा, प्रभवः=कारण, प्रणेता स्मर्ता वा मतभेदेन, असीति शेषः ॥

**व्युत्पत्तिः**—उद्घातः="प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्घातः आरम्भः" इत्यमरः । प्रणवः="ओङ्कारप्रणवौ समौ" इत्यमरः । 'उद्घातः प्रणवः' इति कथनेन उपसंहारस्याऽपि उपलक्षणसूचना भवति ।

"ब्राह्मणः प्रणव कुर्यादादावन्ते च सर्वतः ।
दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥"

इति निरुक्तपरिशिष्टयोर्यास्कः । न्यायैः=नीयन्ते एभिः अर्थविशेषाः इति

न्यायाः=स्वराः, तैः । उक्तं च, "स्वरविशेषादर्थप्रतिपत्तिः" । "यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति । कर्म=क्रियते यत् तत् कर्म, "डुकृञ् करणे" इति धातोः औणादिको मन्प्रत्ययः । "कर्म क्रिया" इत्यमरः । यज्ञः=इज्यते अनेन अत्र वा यज्ञः, "यज देवपूजादौ" भ्वा० उ० अ० इति धातोः "यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९०" इति सूत्रेण नङ् प्रत्ययः । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः "इत्यमरः । प्रभवः=प्रभवति अस्मात् इति प्रभवः कारणम्, "ऋदोरप्" इति अप्प्रत्ययः ।

अत्रारम्भाऽध्ययनाऽर्थज्ञानवेलाया वेदवाचा सामान्यवाग्भिर्विशेषप्रतिपादनात् व्यतिरेकालङ्कारः ।

**भावार्थः**—हे हंसवाहन ! या वाक् ओङ्कारेणारब्धा भवति, यामुदात्तानुदात्तस्वरितैः स्वरैरुच्चारयन्ति, यया ज्योतिष्टोमादियागः क्रियते, यस्याश्च फलत्वेन प्रतिपाद्यः स्वर्गो भवति, तासा वेदवचसा त्वमुद्भवस्थानमसीति भावः ।

**भाषा**—जो वाणी ओंकार रूप प्रणवसे आरम्भ की जाती है, जिसका उदात्त अनुदात्त, स्वरित इन तीन स्वरों से उच्चारण होता है, जिससे ज्योतिष्टोमादि याग किये जाते है, और जिसका फल स्वर्गप्राप्ति होता है । उस वेदवाणी के आप उद्भव स्थान है ।

साङ्ख्यसिद्धान्तसिद्धौ प्रकृतिपुरुषावपि त्वमेवेत्याह—

**त्वामामनन्ति प्रकृतिं, पुरुषार्थप्रवर्तिनोम् ।**
**तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥**

**पुरुषार्थ हित रत प्रकृति तुझको तत्त्व वेत्ता कह रहे ।**
**फिर प्रकृतिद्रष्टा भी तुझी को ब्रह्मवेत्ता कह रहे ।**

**अन्वयः**—हे भगवन् । त्वा पुरुषार्थप्रवर्तिनी प्रकृतिम् आमनन्ति । त्वाम् एव तद्दर्शिनम् उदासीन पुरुष विदुः ॥

**व्याख्या**—हे भगवन् ! त्वा = भवन्तम्, पुरुषार्थप्रवर्तिनीं = भोगापवर्गप्रवर्तिनीं, प्रकृतिं=मूलकारणम्, आमनन्ति = कथयन्ति । त्वाम् एव = भवन्तम् एव, तद्दर्शिन=प्रकृतिदर्शकम्, उदासीनं=कूटस्थम्, पुरुषं=पुमासम्, विदुः = वदन्ति । कपिलादय इत्यर्थः ।

**व्युत्पत्तिः**—पुरुषाऽर्थप्रवर्तिनीं=पुरुषस्य अर्थः=भोगाऽपवर्गरूपः, पुरुषार्थः । तस्मै प्रवर्तते इति पुरुषाऽर्थप्रवर्तिनी, ता पुरुषार्थप्रवर्तिनीं । कर्तरि ल्युट् प्रत्ययः ।

प्रकृतिं = "प्रधानं प्रकृतिः स्त्रियाम्" इत्यमरः । "सत्वरजस्तमसा साम्यावस्था प्रकृतिः" इति साङ्ख्यदर्शनम् । आमनन्ति=आङुपसर्गपूर्वकात् "म्ना अभ्यासे" इति धातोर्लट् । "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति म्नास्थाने मनादेशः । साङ्ख्यस्मृतय इति शेषः । सत्वरजस्तमसां साम्यावस्था प्रधानमिति साङ्ख्यानां व्यवहारः । तामेव मूलप्रकृतिरिति प्रकृतिरिति च ते व्यवहरन्ति । तदुद्भूतो महदादिप्रपञ्च इति तेषां मतम् । "माया तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्वेताश्वतरोपनिषच्छ्रुतिमाश्रित्य प्रकृतिपुरुषौ शक्तिशक्तिमन्तौ मत्वा अभेदव्यवहारः । तद्दर्शिनं = तां=प्रकृतिं, साक्षित्वेन पश्यतीति तद्दर्शी, तं तद्दर्शिनं । णिनिप्रत्ययः । विदुः= "विद ज्ञाने" इति धातोः "विदो लटो वा" इति झेर्जुसादेशः । "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतिरत्र प्रमाणम् ।

**भावार्थः**—हे कमलोद्भव ! साङ्ख्यस्मृतयः त्वां पुरुषस्य भोगापवर्गरूपार्थप्रवर्तिकां मूलप्रकृतिं व्यपदिशन्ति, प्रकृतिद्रष्टारं कूटस्थं पुरुषमपि त्वामेव विदन्तीति भावः ।

**भाषा**—हे कमलासन ! साङ्ख्यस्मृति आपको पुरुषार्थ के लिये करनेवाली मूलप्रकृति कहती है, और आप ही को उस प्रकृति का साक्षात्कार करने वाला उदासीन पुरुष भी मानती है ।

पूर्वोक्तप्रकारसिद्धं ब्रह्मणः सर्वोत्कर्षत्वमाह—

**त्वं पितृणामपि पिता, देवानामपि देवता ।**
**परतोऽपि परश्चाऽसि, विधाता वेधसामपि ॥ १४ ॥**
**तू पितृयों का भी पिता है देव देव हरे हरे ।**
**दक्षादि का भी सृष्टि कर्त्ता और पर से भी परे ॥**

**अन्वयः**—हे भगवान् ! त्वं पितृणाम् अपि पिता, देवनाम् अपि देवता, परतः अपि परश्च असि, वेधसाम् अपि विधाता असि ।

**व्याख्या**—हे भगवन् ! त्वं, पितृणाम् अपि=अग्निष्वात्तादीनाम् अपि, पिता=जनकः, अतस्तेषामपि तर्पणीय इत्यर्थः । देवानाम् अपि = सुराणाम् अपि, देवता = दैवतम् । परतः अपि=उत्कृष्टेभ्यः अपि, परश्च = उत्कृष्टश्च, असि सर्वोत्तरोऽसीत्यर्थः । वेधसाम् अपि = सृष्टिकर्तॄणां दक्षादीनां प्रजापतीनामपि, विधाता = स्रष्टा, असि ।

**व्युत्पत्तिः**—पिता = "तातस्तु जनकः पिता" इत्यमरः । देवाना = दीव्यन्तीति देवाः, तेषा देवाना, देवता=देव एव देवता, "देवात्तल्" इति तल्प्रत्ययः, "तलन्तं स्त्रियाम्" इति लिङ्गानुशासनात् "अजाद्यतष्टाप्" इति टाप् प्रत्ययः । "वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्" इत्यमरः । देवानामपि यजनीय इत्यर्थः । परतः = पञ्चम्यर्थे तसिप्रत्ययः ।

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्ततः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥"

इति सर्वोत्तरत्वकथनात् । वेधसाम् = अत्र योगेन सृष्टिकर्तृणामित्यर्थः । विदधतीति वेधसः, तेषा वेधसाम् ।

**भावार्थः**—हे प्रजापते ! त्वमग्निष्वात्तादिपितॄणामपि माननीयोऽसि, इन्द्रादिदेवानामप्यधीश्वरोऽसि, प्रपञ्चोत्तीर्णात् मायाशबलात् परात् पुरुषादपि परः पुरुषोऽसि, जगत्सृष्टिकर्तॄणा मरीच्यादीनामपि स्रष्टासीति भावः ।

**भाषा**—हे प्रजापते ! आप अग्निष्वात्तादि पितरों के भी पिता है, इन्द्रादि देवों के भी देव है, माया शबल पर पुरुष से भी परे है, और जगत् के सृष्टि करने वाले मरीच्यादि प्रजापतियों के भी सृष्टि कर्ता है ।

अथास्य सर्वात्मकत्वप्रतिपादनेन स्तुतिगोचरत्व निराकुर्वन् स्तुतिमुपसंहरति—

**त्वमेव हव्यं होता च, भोज्यं भोक्ता च शाश्वतः ।**
**वेद्यं च वेदिता चाऽसि, ध्याता ध्येयं च यत्परम् ॥ १५ ॥**

**तू हव्य होता भोज्य भोक्ता तू सनातन है प्रभो ।**
**तू वेद्य ज्ञाता ध्येय ध्याता तू पुरातन है प्रभो ॥**

**अन्वयः**— शाश्वतः त्वम् एव हव्य, होता च असि, भोज्यं भोक्ता च असि, वेद्यं वेदिता च असि, ध्याता यच्च परं ध्येय तच्च असि ।

**व्याख्या**—शाश्वतः = सनातनः, त्वम् एव, हव्य = होतव्य, पशुपुरोडाशादिरूपं होमसाधनमित्यर्थः, होता च=हवनकर्ता यजमानश्च, असि । भोज्यं = भक्ष्यम् , अन्नमित्यर्थः, भोक्ता च = भक्षणकर्ता च, अन्नादश्चेत्यर्थः, असि । वेद्यं= ज्ञेयं, वेदिता च = ज्ञाता च, असि । ध्याता = ध्यानकर्ता, स्मर्ता इत्यर्थः, यच्च, परम् = उत्कृष्टं वस्तु इति शेषः, ध्येय = ध्यानयोग्यम् , तच्च असि ।

**व्युत्पत्तिः**—शाश्वतः = शश्वत् भवः, सिद्ध इत्यर्थः, "शेषे" इति अणू प्रत्ययः । यद्यपि "कालाट्ठञ्" इति सूत्रेण ठञपवादः । अत एव सूत्रकारस्याऽपि प्रयोगः—"येषां च विरोधः शाश्वतिकः" इति । तथाऽपि प्रयोगवशात्साधुः इति वामनः" इति । "शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः" इत्यमरः । हव्यं= हूयते यत्, तत् हव्यं । होता =जुहोतीति होता । "हु दानादनयोः" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः । भोज्यं=भोक्तुं योग्यं भोग्य, "भोज्य भक्ष्ये" इति निपातनात् कुत्वाऽभावः । भोक्ता = भुनक्तीति भोक्ता । वेद्यं = वेदितुं योग्यम् वेद्यं, साक्षात्कार्यमित्यर्थः, वेदिता = वेत्तीति वेदिता, साक्षात्कर्तेत्यर्थः । ध्याता= ध्यायतीति ध्याता, "ध्यै चिन्तायाम्" इति धातोः तृच्प्रत्ययः । ध्यानं नाम साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहः ।

**भावार्थः**—हे विधातः ! नित्यस्त्वमेव पशुपुरोडाशादिहोमसाधनद्रव्यं यजमानश्चासि, त्वमेव यागादिफलभूतस्वर्गादिरूपस्तद्भोक्ता चासि, त्वमेव प्रपञ्चः प्रपञ्चसाक्षी चासि, त्वमेवोपासक उपास्यश्चासीति भावः ।

**भाषा**—हे भगवन् ! आपही पशु, पुरोडाशादि होम साधन द्रव्य है, और यजमान भी आपही है, आपही यज्ञ यागादि प्रधानफल भूत स्वर्ग रूप है, और स्वर्ग के भोक्ता भी आपहीं है, आपही प्रपञ्च है, और प्रपञ्च के साक्षी भी आपही है, तथा आपही उपासक है, और उपास्य भी आप ही है ।

अथ ब्राह्मणः प्रतिवचनमाह—

> **इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः ।**
> **प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥ १६ ॥**
> यों प्रार्थना सुनकर सुरों की विधि कृपा करने लगे ।
> अतिमुग्ध होकर देवगण से, इस तरह कहने लगे ॥

**अन्वयः**—वेधाः इति तेभ्यः यथार्थाः हृदयङ्गमाः स्तुतीः श्रुत्वा प्रसादाभिमुखः सन् दिवौकसः प्रत्युवाच ॥

**व्याख्या**—वेधाः = ब्रह्मा, इति = एताः, तेभ्यः = देवेभ्यः, यथार्थाः = सत्याः, अत एव हृदयङ्गमाः=मनोहराः, स्तुतीः=स्तोत्राणि, श्रुत्वा = आकर्ण्य, प्रसादाऽभिमुखः सन् = अनुग्रहतत्परः सन्, दिवौकसः = देवान्, प्रत्युवाच= प्रत्यब्रवीत् ॥

**व्युत्पत्तिः**—वेधाः=विदधातीति वेधाः, "स्रष्टा प्रजापतिर्वेधा विधाता वि-

ध्वसङ्विधिः" इत्यमरः । तेभ्यः = "आख्यातोपयोगे" इति सूत्रेण अपादानत्वात "अपादाने पञ्चमी" इति पञ्चमी । हृदयङ्गमाः = हृदयं गच्छन्तीति हृदयङ्गमा "गमेः सुपि वाच्यः" इति खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इति मुमा गमः । "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानस मनः"इत्यमरः । स्तुतीः="स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः । प्रसादाभिमुखः=प्रसादे अभिमुखः प्रसादाभिमुखः । दिवौकसः="सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः" इत्यमरः ।

**भावार्थः**—स्वयम्भूः देवेभ्यः इत्थम्भूताः सत्याः मनोहराः स्तुतीराकर्ण्या-नुग्रहपरः सन् देवान् प्रतिजगादेति भावः ।

**भाषा**—इस प्रकार देवताओं ने की हुयी सत्य और मनोहर स्तुति को सुन कर अत्यन्त दयालु श्री ब्रह्मदेव जी इन्द्रादि देवताओं के प्रति बोले ।

अथ ब्रह्मणः प्रतिवचने वैशिष्ट्यमाह—

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥**

**गुण द्रव्य जाति विमलक्रिया मय चार शब्द प्रवृत्तियाँ ।**
**अन्वर्थ हो निकलीं चतुर्मुख से, कलामय वृत्तियाँ ॥**

**अन्वयः**—चतुष्टयी शब्दाना प्रवृत्तिः पुराणस्य कवेः तस्य चतुर्मुखसमीरिता सती चरितार्था आसीत् ॥

**व्याख्या**—चतुष्टयी = चतुर्विधा, शब्दाना=पदाना, प्रवृत्तिः = वाग्वृत्तिः, पुराणस्य = पुरातनस्य, कवेः = कवयितुः, तस्य = ब्रह्मणः, चतुर्मुखसमीरिता= चतुराननोच्चरिता सती, चरितार्था=अन्वर्था, आसीत्=अभवत् ॥

**व्युत्पत्तिः**—चतुष्टयी=अवयवचतुष्टययुक्ता "गौः शुक्लश्चलो डित्थ इति चतुष्टयी शब्दाना प्रवृत्तिः" इति महाभाष्यकारेणोपपादितम् । चत्वारः अवयवाः यस्याः सा इति चतुष्टयी, "सङ्ख्याया अवयवे तयप्"इति तयप्प्रत्ययः, "टिड्ढा-णञ्द्वयसज्०" इत्यादिना ङीप् प्रत्ययः, "ह्रस्वात्तादौ तद्धिते" इति षत्वम् । शब्दानां="शास्त्रे शब्दस्तु वाचकः" इत्यमरः । पुराणस्य=पुरा भवः पुराणः, पुराशब्दात् "सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युटयुलौ तुट् च ५।२।२३" इति ट्युट्युलौ, "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ४।३।१०५" इति निर्देशात् "पृषोदरा-दीनि यथोपदिष्टम्"इति तुडभाव ऊहनीयः । "पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः" इत्यमरः । कवेः="धीरो मनीषि ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः" इत्य-

मरः । चतुर्मुखसमीरिता=चतुर्भिः मुखैः सम्यक्=सकलसस्कारसमग्रम् , ईरिता = उच्चारिता चतुर्मुखसमीरिता, "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः ; अन्यथा समाहारे सति चतुर्मुखीति स्यात् "द्विगोः" इत्यनेन ङीप्प्रत्ययस्य दुर्वारत्वात् । "वक्त्रास्ये वदन तुण्डमाननं लपन मुखम्" इत्यमरः । चरितार्था=चरितः अर्थः यस्याः सा चरितार्था, चतुर्मुखोच्चारणात् चातुर्विध्यं सफलमासीदित्यर्थः । शब्दप्रवृत्तिविषये उक्त च—

"वैखरी शब्दनिष्पत्तिर्मध्यसा श्रुतिगोचरा ।
द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी" इति ॥

अत्र वक्तुः कृतार्थत्वं वाक्प्रवृत्तावुपचर्यते, वाक्प्रवृत्तेरचेतनायाः कृतार्थत्वाऽनुपपत्तेः ।

**भावार्थः**—द्रव्यगुणक्रियाजातिभेदेन परापश्यन्तीमध्यमावैखरीति चतुर्विधा शब्दाना प्रवृत्तिः पुरातनकवेः ब्रह्मणश्चतुर्भिर्मुखैरुदीरिता सती, अन्वर्थासीदिति भावः

**भाषा**-प्राचीन कवि ब्रह्मदेव जी के चारों मुखसे निकलने वाली, द्रव्य, गुण, क्रिया और जाति के भेद से परा, पश्यन्ती, मध्यमा और वैखरी नामक शब्दों की चार प्रकार की प्रवृत्ति चरितार्थ होगयी ।

अथैकादशभिः श्लोकैः ब्रह्मणः प्रतिवचनप्रकार प्रस्तौति ।

तत्रादौ स्वागतमाह—

**स्वागतं स्वानधोकारान्प्रभावैरवलम्ब्य वः ।**
**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ! ॥ १८ ॥**

**हे दीर्घबाहु ! अमितपराक्रम ! देव ! स्वागत है तुम्हे ।**
**सामर्थ्य से अधिकार रख, सुर देव स्वागत है तुम्हे ॥**

**अन्वयः**—प्राज्यविक्रमाः ! स्वान् अधीकारान् प्रभावैः अवलम्ब्य युगपत् प्राप्तेभ्यः युगबाहुभ्यः वः स्वागतम् ॥

**व्याख्या**—प्राज्यविक्रमाः =भूरिपराक्रमाः, हे देवाः !, इति शेषः, स्वान्= स्वकीयान् , अधीकारान् = नियोगान् , प्रभावैः=सामर्थ्यैः, अवलम्ब्य=आस्थाय, युगपत् = समकालं, प्राप्तेभ्यः = आगतेभ्यः, युगबाहुभ्यः = दीर्घबाहुभ्यः, वः= युष्मभ्यम् , स्वागतम् = शोभनम् आगमनम् ॥

**व्युत्पत्तिः**—प्राज्यविक्रमाः = प्राज्यः विक्रमः येषां ते प्राज्यविक्रमाः, तत्सम्बोधने हे प्राज्यविक्रमाः ! "प्रभूत प्रचुरं प्राज्यमदभ्रं बहुल बहु" इति, "विक्रम-

स्त्वतिशङ्किता" इत्यप्यमरः । अनया सम्बुध्या तेषां परिभवावकाशो ध्वन्यते । अधीकारान्="उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः । युगपत्="युगपदेकदा" इत्यमरः । युगबाहुभ्यः = युगौ इव बाहू येषां ते युगबाहवः, तेभ्यः युगबाहुभ्यः, "यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु" इति "भुजबाहू प्रवेष्टो दोः" इति चाऽमरः । आजानुबाहुत्वं भाग्यलक्षणम् । वः = युष्मच्छब्दस्य चतुर्थीबहुवचने "बहुवचनस्य वस्नसौ" इति वसादेशः । "कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्यत्र कर्मपदेन क्रियाग्रहणात् सम्प्रदानत्वम् । "चतुर्थी सम्प्रदाने" इति चतुर्थी । स्वागतं = शोभनम् आगतं स्वागतं, "कुगतिप्रादयः" इति गतिसमासः ।

अत्र आत्मीयानधिकारानवलम्ब्य पृथगवस्थितानां सम्भूयागमनवचनेनागमनं सहेतुकं, स च हेतुर्महानिति व्यज्यते ।

**भावार्थः**—हे प्रभूतपराक्रमा ! देवाः ! सामर्थ्यैरात्मीयानधिकारान् धृत्वा स्थितानां समकालमागतानामाजानुबाहूनां भवतामागमनकार्यं शोभनं भूयादिति भावः ।

**भाषा**—हे अत्यन्तपराक्रमशालि देवताओं ! अपने अपने अधिकारों को अपने अपने सामर्थ्य से धारण करते हुये, एक साथ आये हुये, आप लोगों का आगमन कार्य शोभन ( स्वागत ) होवें ।

इत्थं सूचितस्यार्थस्य किञ्चिद्विवरणमाह—

**किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा ।**
**हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥ १६ ॥**

**हिम मन्द कान्ति नक्षत्र सम, क्यों मुख तुम्हारे हो गये ।**
**क्यों छवि नहीं है पूर्व सी, सब तेज क्यो तुम खो गये ॥**

**अन्वयः**—हे वत्साः ! हिमक्लिष्टप्रकाशानि ज्योतींषि इव वः मुखानि पुरा यथा आत्मीयां द्युतिं न बिभ्रति, इदं किम् ?

**व्याख्या**—हे वत्साः ! हे पुत्रकाः ! हिमक्लिष्टप्रकाशानि = नीहारमन्दप्रभाणि, ज्योतींषि इव=नक्षत्राणि इव, वः=युष्माकं, मुखानि = आननानि, पुरा =पूर्वम् , यथा=इव, आत्मीयां = स्वकीयां, द्युतिं = कान्तिं, न बिभ्रति = न धारयन्ति, इदं किम्= किं निबन्धनमित्यर्थः, कस्माद्धेतोः इति यावत् । किमिदमित्यनेन वाक्याऽर्थः परामृश्यते ।

**व्युत्पत्तिः**—हिमक्लिष्टप्रकाशानि = क्लिष्टः प्रकाशः येषां तानि क्लिष्ट-

प्रकाशानि, हिमेन क्लिष्टप्रकाशानि हिमक्लिष्टप्रकाशानि । "प्रकाशो द्योत आतपः" इत्यमरः । ज्योतींषि = "दीप्तिताराहुताशेषु ज्योतिः" इति शाश्वतः । मुखानि = "आननं लपनं मुखम्" इत्यमरः । आत्मीयाम् = आत्मनः इयम् आत्मीया, ताम् आत्मीया "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इत्यात्मपदस्य वृद्धसंज्ञा, ततः "वृद्धाच्छः" इति छप्रत्ययः, तदनु "आयनेयी०" इत्यादिना तस्य ईयादेशः द्युतिं="शोभा कान्तिर्द्युतिश्छविः" इत्यमरः । बिभ्रति="डुभृञ् धारणपोषणयोः" इति धातोर्लटि रूपम् । अत्रोपमालङ्कारः ।

**भावार्थः**—नीहारेण मन्दप्रभाणि नक्षत्राणीव युष्माकं वदनानि स्वाभाविकीं कान्तिं पूर्ववत् न दधतीदं दृश्यमानं सर्वं किं कारणकमिति भावः ।

**भाषा**—किन्तु ओस के गिरने से नक्षत्र जैसे मन्द कान्ति हो जाते हैं, ऐसे ही आप लोगों के मुख पहिले के ऐसी स्वाभाविक कान्ति को नहीं धारण करते हैं इसका क्या कारण है ।

सामान्यत उक्तमेव विशेषेण प्रपञ्चयति सप्तभिः श्लोकैः ।

तत्रादौ प्राधान्यान्महेन्द्रस्यावस्थामाह—

**प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।**
**वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥**

**है तेज बुझने से मनोहर नष्ट शोभा हो गई ।**
**मालूम होता इन्द्र की, पवि–धार कुण्ठित हो गई ॥**

**अन्वयः**—अर्चिषा प्रशमात् अनुद्गीर्णसुरायुधम् एतत् वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रि इव लक्ष्यते ।

**व्याख्या**—अर्चिषा=तेजसा, प्रशमात्=निर्वाणात् अनुद्गीर्णसुरायुधम्=अनुदितेन्द्रधनुः, अनुदितचित्रप्रभमित्यर्थः, एतत् , वृत्रस्य=अहेः, वृत्रासुरस्येत्यर्थः, हन्तुः=नाशकस्य, इन्द्रस्येत्यर्थः, कुलिशं=वज्रं, कुण्ठिताश्रि इव =हतशक्तिकोटि इव, लक्ष्यते=दृश्यते ।

**व्युत्पत्तिः** – अर्चिषा = "वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । अनुद्गीर्णसुरायुधम् = न उद्गीर्णम् अनुद्गीर्णम्, सुराणाम् आयुधम् सुरायुधम् , "इन्द्रायुध शक्रधनुः" इत्यमरः । विशेषस्य सामान्येन निर्देशः अनुद्गीर्णं सुरायुधं यस्मात्तद् अनुद्गीर्णसुरायुधं । हन्तुः = हन्तीति हन्ता, तस्य हन्तुः । "हन हिंसागत्योः" इति धातोः तृच्प्रत्ययः । कुलिशं = "ह्रादिनी वज्रमस्त्री स्या-

स्कुलिशं भिदुरं पविः" इत्यमरः। कुण्ठिताश्रि=कुण्ठिताः = क्षीणधारा, अश्रयः= कोट्यो, यस्य तत्, कुण्ठिताश्रि "स्त्रियः पाल्यश्रिकोटयः" इत्यमरः।

अत्रार्चिःप्रशमनेन कुण्ठिताश्रित्वमुत्प्रेक्ष्यत इत्युत्प्रेक्षालङ्कारः।

**भावार्थः**—किरणाना संक्षयात् अनुद्गतनानारत्नच्छायमेतत् दृश्यमानं देवेन्द्रस्य वज्रं कुण्ठितकोटीव दृश्यत इति भावः।

**भाषा**—किरणों के नष्ट हो जाने से पूर्ववत् रत्नो की कान्ति जिसकी नही झलकती है, ऐसा दिखायी पड़नेवाला इन्द्र का वज्र, हतश्रि क्यों मालूम होताहै।

अथ वरुणस्यावस्थामाह—

**किं चाऽयमरिदुर्वारः पाणौ पाशः प्रचेतसः।**
**मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः॥ २१॥**

**है होगया अरि-प्राणघातक, वरुण आयुध इस तरह।**
**हतवीर्य होता मन्त्र से, विकराल पन्नग जिस तरह॥**

**अन्वयः**— किञ्च अयम् अरिदुर्वारः प्रचेतसः पाणौ पाशः मन्त्रेण हतवीर्यस्य फणिनः दैन्यम् आश्रितः।

**व्याख्या**—किञ्च = अन्यच्च, अय—दृश्यमानः, अरिदुर्वारः=वैरिदुष्प्रधर्षः, प्रचेतसः = वरुणस्य, पाणौ = हस्ते, पाशः = रज्जुः, आयुधविशेष इत्यर्थः, यमवरुणौ पाशहस्ताविति प्रसिद्धिः। मन्त्रेण = मनुना, गारुडेन मन्त्रेणेत्यर्थः, हतवीर्यस्य=नष्टपराक्रमस्य, फणिनः=सर्पस्य, दैन्यं=दीनताम् शोच्यत्वमित्यर्थः, आश्रितः = प्राप्तः।

**व्युत्पत्तिः**—अरिदुर्वारः=दुःखेन वारयितुं शक्यः दुर्वारः, कृच्छ्रार्थे खल्, अरिभिः दुर्वारः, अरिदुर्वारः "रिपौ वैरिसपत्नाऽरिद्विषद्द्वेषणदुर्हृदः" इत्यमरः। प्रचेतसः=प्रकृष्टं चेतः यस्य सः प्रचेताः, तस्य प्रचेतसः, "प्रचेता वरुणः पाशी यादसा पतिरप्पतिः" इत्यमरः। मन्त्रेण="मन्त्रा मननात्" इति निरुक्ते यास्कः। हतवीर्यस्य=हतं प्रतिहतं, वीर्यं=प्रभावो यस्य सः हतवीर्यः, तस्य हतवीर्यस्य, "वीर्यं बले प्रभावे च" इत्यमरः। फणिनः=फणा अस्ति यस्य सः फणी, तस्य फणिनः। "स्फटाया तु फणा द्वयोः" इति "कुण्डली गूढपाच्चक्षुः श्रवाः काकोदरः फणी" इत्यमरः। दैन्यं=दीनस्य भावः कर्म वा दैन्य, तत्, ष्यञ्प्रत्ययः, "दौर्गत्यादेरनौजस्यं दैन्य कार्ष्ण्यमृजादिकृत्" (४, १४०,) इति दशरूपके। "अत्र फणिनिष्ठदैन्यस्य पाशेऽसम्भवाद् दैन्यमिव दैन्य मति कल्पनात् असम्भव-

द्वस्तुसम्बन्धो निदर्शनाऽलङ्कारः ।" तल्लक्षण यथा—साहित्यदर्पणे =

"सम्भवन्वस्तुसम्बन्धोऽसम्भवन्वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना" इति ॥

**भावार्थः**—अपि चाय दृश्यमानो रिपुदुष्प्रधर्षो वरुणस्य हस्ते वर्तमानः पाशः, गारुडेन प्रतिबद्धशक्तेः सर्पस्य दीनता प्राप्तः इति भावः ।

**भाषा**—और श्री वरुण देव के हाथ में शत्रुओं का नाश करने वाला यह पाश शस्त्र, गरुड़ से पराजित सर्प के समान, दीन क्यों मालूम होता है ।

अथ कुबेरस्यावस्थामाह—

**कुबेरस्य मनः शल्यं शंसतीव पराभवम् ।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥**
**होकर कुबेर, रहित गदा से, इस तरह होता मलिन ।**
**है वृक्ष, डाली टूटने से, जिस तरह होता मलिन ॥**

**अन्वयः**—अपविद्धगदः भग्नशाखः द्रुमः इव स्थितः कुबेरस्य बाहुः मनः शल्य पराभव शंसति इव ।

**व्याख्या**—अपविद्धगदः = त्यक्तगदः, अत एव भग्नशाखः = छिन्नलतः, मः इव=वृक्षः इव, स्थितः, कुबेरस्य=यक्षराजस्य बाहुः, भुजः, मनःशल्य = चित्तशल्यप्रायम् , पराभवं=पराजयं, शत्रुकृतमिति शेषः, शंसति इव = कथयति इव, लक्षणया अनुमापयतीत्यर्थः । बाहौ मुख्यकथनस्याऽसम्भवादिवशब्दः ।

**व्युत्पत्तिः**—अपविद्धगदः = अपविद्धा गदा येन सः अपविद्धगदः । भग्नशाखः=भग्ना शाखा यस्य सः भग्नशाखः "समे शाखालते" इत्यमरः । द्रुमः = द्रुः=शाखा, अस्ति यस्य सः द्रुमः "द्युद्रुभ्या मः" इति मप्रत्ययः, "अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इत्यमरः । कुबेरस्य=कुत्सितं वेरम् अस्य सः कुबेरः, तस्य कुबेरस्य । शरीरस्य कुत्सितत्वं च तस्य कुष्ठित्वात् ज्ञेयम् । "कुबेरस्त्र्यम्बक-सखो यक्षराड् गुह्यकेश्वरः" इत्यमरः । मनःशल्यं = मनसः शल्यं मनः शल्यं, तत् । "चित्तं तु चेतो हृदयं स्वान्त हृन्मानस मनः" इति कोषः ।

"अत्र पराभवं शंसतीवेत्युत्प्रेक्षा, द्रुम इवेत्युपमा, मनःशल्यमिति रूपकम्" तथा चोत्प्रेक्षोपमारूपकाणा संसृष्टिः ।

**भावार्थः**—परित्यक्तगदायुधोऽत एव छिन्नशाखो वृक्ष इव, वैश्रवणस्य हस्तो, मनसः शल्यवदत्यन्तदुःसहं शत्रुपरिभवं कथयतीवेति भावः ।

**भाषा**—शाखा के कटजाने से वृक्ष की तरह, गदा शस्त्र से रहित श्री कुबेर का यह बाहु, मानसिक शल्यके समान, अत्यन्त दुस्सह शत्रुजन्य पराभव को मानों प्रकट करता है।

अथ यमस्यावस्थामाह—

**यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।**
**कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥**

**यम राज दण्ड लिये हुए खोदता उससे मही।**
**उल्मुक जला, फिर बुझ गया हो, ज्ञात होता है यही ॥**

**अन्वयः**—अस्तमितत्विषा दण्डेन यमः अपि भूमिं विलिखन् अमोघे अपि अस्मिन् निर्वाणाऽलातलाघवं कुरुते।

**व्याख्या**—अस्तमितत्विषा=नष्टतेजसा, दण्डेन=लगुडेन, आयुधविशेषेणेत्यर्थः, यमः अपि=कृतान्तः अपि, भूमिं = भुवं, विलिखन्=घर्षयन्, अमोघे अपि=अनिष्फले अपि, सफलेऽपीत्यर्थः, अस्मिन् = दण्डे, निर्वाणालातलाघवं= शान्तोल्मुकाऽऽनादर, कुरुते = करोति।

**व्युत्पत्तिः**—अस्तमितत्विषा='अस्तम्' इति मान्तमव्ययम्। अस्तम् इताः अस्तमिता, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तंप्राप्तापन्नैः" इति समासः। अस्तमिताः त्विषः यस्य सः अस्तमितत्विट्, तेन अस्तमितत्विषा। "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः। दण्डेन="दण्डोऽस्त्री लगुडेऽपि स्यात्" इत्यमरः। यमः = यमयति=नियमयत्यसत इति यमः। भूमिं = "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः। विलिखन्=विलिखतीति विलिखन्, शतृप्रत्ययः। विषादवन्तो हि दण्डादिना भूमिविलेखन कुर्वन्तीति विषादस्यानुभावोऽयम्। अमोघे=मोघो निष्फलो न भवतीत्यमोघः, तस्मिन् अमोघे। निर्वाणाऽलातलाघवं=निर्वाणं = शान्तं च तत् अलातमुल्मुकं निर्वाणालातम्। "निर्वाणोऽवाते" इति निपातनात् निष्ठाया नत्वम्। "अलातमुल्मुकं ज्ञेयम्" इति हलायुधः। लघोर्भावः लाघवम्। निर्वाणाऽलातस्य लाघवं निर्वाणालातलाघवं, तत्।

'अत्राऽपि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः। तल्लक्षणं तु प्रागेवोक्तम्।

**भावार्थः**-निस्तेजस्केन दण्डायुधेनान्तकोऽपि पृथ्वीं विदारयन् पुरा सफल-

प्रहारेऽप्यस्मिन् दण्डे शान्तोल्मुकक्लैव्य करोतीति भावः ।

**भाषा**—यमराज भी निस्तेज दण्ड से पृथिवी को खोदते हुहे अपाने असह्य दण्ड की निष्फलताको प्रगट करते हैं ।

अथ द्वादशादित्यानामवस्थामाह—

**अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।**
**चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥**

क्षय तेज होने से दिवाकर चित्र-लिखित समान है ।
अवलोकने पर नयन को करते न पीडा-दान हैं ॥

**अन्वयः**—प्रतापक्षतिशीतलाः अमी आदित्याश्च कथ चित्रन्यस्ताः इव प्रकामालोकनीयता गताः ।

**व्याख्या**—प्रतापक्षतिशीतलाः=तेजःक्षयशीताः, अमी=एते, आदित्याश्च=द्वादशसूर्याश्च, कथं = केन हेतुना, चित्रन्यस्ताः इव = आलेख्यलिखिताः इव, प्रकामालोकनीयताम् = अत्यन्तदृश्यता, गताः = प्राप्ताः ।

**व्युत्पत्तिः**—प्रतापक्षतिशीतलाः=प्रकृष्टस्तापः प्रतापः, "कुगतिप्रादयः" इति गतिसमासः । "प्रतापस्तापतेजसोः" इति विश्वः । प्रतापस्य क्षतिः प्रतापक्षतिः, तया [ हेतुना ] शीतलाः प्रतापक्षतिशीतलाः । "तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः" इत्यमरः । आदित्याः=अदितेरपत्यानि पुमांसः आदित्याः, अदितिशब्दात् "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५" इति ण्यः प्रत्ययः, ततः "यस्येति च" इति इकारलोपः "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च । "सूरसूर्याऽर्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः । बहुवचनत्वात् द्वादशादित्या इत्यर्थः । चित्रन्यस्ताः = चित्रे न्यस्ताः चित्रन्यस्ताः, "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः । प्रकामालोकनीयताम् = आलोकितुं योग्यः आलोकनीयः, आङुपसर्गपूर्वकात् "लोकृ दर्शने" इति धातोरर्हार्थे "तव्यत्तव्याऽनीयरः" इति अनीयर् प्रत्ययः । आलोकनीयस्य भावः आलोकनीयता, "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः, "तलन्तं स्त्रियाम्" इत्यनुशासनात्तदन्तस्य स्त्रीत्वम् । प्रकाम=यथेच्छं यथा स्यात्तथा, आलोकनीयता, प्रकामालोकनीयता, ता प्रकामालोकनीयता, 'सुप्सुपा" इति समासः । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—तेजसा क्षयेण शीताः अमी पुरोवर्तिनो द्वादशादित्याः, केन हेतुना चित्रलिखिता इवात्यन्तं दृश्यता प्राप्ता इति भावः ।

**भाषा**—तेज के नाश से ठण्डे पड़े हुये ये बारह आदित्य भी चित्र लिखित की तरह अत्यन्त दृश्य होकर आंखों को पूर्ववत् चकचौंध क्यों कर नहीं करते हैं।

अथाष्टाना वायूनामवस्थामाह—

**पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते।**
**अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥**
**जल तरल के अवरोध से होती सलिल की जो दशा।**
**गति भङ्ग होने से वही होती पवन की दुर्दशा ॥**

**अन्वयः**—मरुता पर्याकुलत्वात् वेगभङ्गः, अम्भसा प्रतीपगमनात् ओघसंरोधः इव अनुमीयते।

**व्याख्या**—मरुता=वायूनाम्। अष्टाना, मतान्तरेण ४६ सप्तसप्तानामिति वा। पर्याकुलत्वात् = स्खलितगतित्वात् हेतोः, वेगभङ्गः = जवाऽवरोधः, अम्भसा = जलाना, प्रतीपगमनात्=विपरीतगममात् उत्तानाऽवरोहादित्यर्थः, ओघसरोधः इव = प्रवाहप्रतिबन्धः, इव, अनुमीयते = तर्क्यते।

**व्युत्पत्तिः**—मरुता="समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः।
ते चाष्टौ भवन्ति, तथा च स्मृतिः—

"गगनः स्पर्शनो वायुरनिलो मारुतस्तथा।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥ इति

पर्याकुलत्वात् = पर्याकुलाना भावः पर्याकुलत्वं, तस्मात् पर्याकुलत्वात् = अयथापूर्वसञ्चारात्। "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी। पर्याकुलशब्दात् "तस्य भावस्त्वतलौ" इति त्वः प्रत्ययः, "त्वान्तं क्लीबम्" इत्यनुशासनात् तदन्तस्य नपुंसकत्वम्। वेगभङ्गः = वेगस्य भङ्गः, वेगभङ्गः। अम्भसाम् = "अम्भोर्णस्तोयपानीयनीरक्षीराऽम्बुशम्बरम्" इत्यमरः। प्रतीपगमनात् = प्रतीप च तत् गमन प्रतीपगमनं, तस्मात् प्रतीपगमनात्। ओघसरोध:=ओघस्य संरोधः ओघसंरोधः। अत्रोपमालङ्कारः।

**भावार्थः**—वायूना स्खलितगतित्वाद्धेतोर्वेगनाशः जलानामुत्तानावरोधात् प्रवाहप्रतिबन्ध इव सुखानुमेयो भवतीति भावः।

**भाषा**—उच्च प्रदेश के अवरोध से जल के प्रवाह की रुकावट की तरह, गति ... से वेग का नाश साफ २ जाहिर होता है।

अथैकादशानां रुद्राणामवस्थामाह—

**आवर्जितजटामौलिविलम्बिशशिकोटयः ।**
**रुद्राणामपि मूर्धानः क्षतहुङ्कारशंसिनः ॥ २६ ॥**

**अवनत पराजय से जटा में शशि कला मय मृदु बना ।**
**हुङ्कार बल से हीन हूँ हर रुद्र देता सूचना ॥**

**अन्वयः**—आवर्जितजटामौलिविलम्बिशशिकोटयः रुद्राणाम् अपि मूर्धानः क्षतहुङ्कारशंसिनः ।

**व्याख्या**—आवर्जितजटामौलिविलम्बिशशिकोटयः=स्रस्तजटाजूटाऽवलम्बमानचन्द्ररेखाः, रुद्राणाम् अपि = एकादशरुद्राणाम् अपि, मूर्धानः = मस्तकाः, क्षतहुङ्कारशंसिनः=नष्टाऽहङ्कारसूचकाः, सन्तीति शेषः, हुङ्कारशस्त्रा हि रुद्रा इति पुराणप्रसिद्धिः ।

**व्युत्पत्तिः**—आवर्जितजटामौलिविलम्बिशशिकोटयः=जटानां मौलयः जटामौलयः, आवर्जिताश्च ते जटामौलयः, तेषु विलम्बन्ते इति आवर्जितजटामौलिविलम्बिन्यः, णिनि प्रत्ययः । शशः अस्याऽस्तीति शशी, "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्यमरः । शशिनः कोटयः शशिकोटयः । आवर्जित जटामौलिविलम्बिन्यः शशिकोटयः येषां ते, आवर्जितजटामौलिविलम्बिशशिकोटयः । नम्रशिरस्त्व विषादस्याऽनुभावः । रुद्राणाम्="व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः । मूर्धानः=उत्तमाङ्ग, शिरः=शीर्षं, मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । क्षतहुङ्कारशंसिनः=क्षतश्चाऽसौ हुङ्कारः क्षतहुङ्कारः, तं शंसन्तीति क्षतहुङ्कारशंसिनः ।

अत्र शिरोनमने शिरोऽलङ्कारस्यापि नमनं स्वभावसिद्धमिति स्वभावोक्तिरलङ्कारः।

**भावार्थः**—पराभवदुःखावनम्रेषु जटाजूटेषु विलम्बिचन्द्रकलानि रुद्राणां शिरांसि भग्नहुङ्कारशंसीनि सन्तीति भावः ।

**भाषा**—पराजय के दुःख से अवनत जटाजूटों में लटकने वाली चन्द्रकलाओं से युक्त एकादश रुद्रों के मस्तक भी स्वकीय हुङ्कार शक्ति का नाश होनेकी सूचना करते हैं ।

इत्थं प्रतिपादितानां मुखवैवर्ण्यादीनां कारणमपि स्वयमेवाह—

**लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥**

पहले प्रतिष्ठित शत्रु से थे अब हुए इतने मलिन ।
अपवाद से उत्सर्ग शास्त्रों के सदृश क्या हो मलिन ॥

**अन्वयः**—प्रथमं लब्धप्रतिष्ठाः यूयं बलवत्तरैः परैः, उत्सर्गाः अपवादैः इव, किं कृतव्यावृत्तयः भवथ ॥

**व्याख्या**—प्रथमं=पूर्वम्, लब्धप्रतिष्ठाः=प्राप्तस्थितयः, प्राप्तावकाशाः इत्यन्यत्र, यूयं=देवाः, बलवत्तरैः=बलीयोभिः पौरुषाऽधिक्यादित्यर्थः, निरवकाशैरित्यन्यत्र, परैः=शत्रुभिः, उत्सर्गाः=सामान्यशास्त्राणि 'मा हिंस्यात्सर्वा भूतानि' इत्येवमादीनीत्यर्थः, अपवादैः इव=विशेषशास्त्रैः इव "अग्नीषोमीयं पशुमालभेत" इत्येवमादिभिरित्यर्थः, किं, कृतव्यावृत्तयः=विहितप्रतिष्ठाभङ्गाः, "कृतविषयसङ्कोचरूपबाधाः इत्यन्यत्र, भवथ=स्थ इति शेषः । अत्र काक्वा भवथैवेत्यर्थः ।

**व्युत्पत्तिः**—लब्धप्रतिष्ठाः = लब्धा प्रतिष्ठा यैस्ते लब्धप्रतिष्ठाः, बलवत्तरैः= प्रशस्तं बलं येषां ते बलवन्तः, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्प्रत्ययः । अतिशयेन बलवन्तः बलवत्तराः तैः बलवत्तरैः, "द्विवचनविभज्योपपदे तरबीयसुनौ" इति तरप् प्रत्ययः । अपवादशास्त्राणां बलवत्तरत्वं तु "सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलीयान्" इति न्यायेन सिद्धम् । परैः="अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । उत्सर्गाः = "सावकाशत्वमुत्सर्गत्वम्" इति वैयाकरणसिद्धान्तः । "कर्मण्यण्" इत्यादयः । अपवादैः=अपोद्यन्ते इति अपवादाः, तैः अपवादैः, "निरवकाशत्वमपवादत्वम्" इति च वैयाकरणसिद्धान्तः । "आतोऽनुपसर्गे कः" इत्यादिभिः । कृतव्यावृत्तयः=कृता व्यावृत्तिर्येषां ते कृतव्यावृत्तयः ।

"विषयसङ्कोच एव बाधः" इत्याचार्याः । निषेधशास्त्रस्य "मा हिंस्यात्सर्वा भूतानि" इत्यस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनात् विषयसङ्कोचः । "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति न्यायेन सर्वत्र शास्त्रस्याऽर्थः प्रवर्तते इति चिरञ्जीवभट्टाचार्यः । अत्रोपमालङ्कारः ।

**भावार्थः**—लब्धावकाशानि सामान्यशास्त्राणि निरवकाशैर्विशेषशास्त्रैः कृतविषयसङ्कोचानीव, पूर्वं प्राप्तस्थितयो भवन्तः पौरुषातिरेकात् प्रबलतरैः शत्रुभिः कृतप्रतिष्ठाभङ्गाः सञ्जाताः किमिति भावः ।

**भाषा**—निरवकाश अपवादशास्त्रों से सावकाश उत्सर्ग शास्त्र की तरह आप लोक किसी जबरदस्त शत्रु से बाधित होकर स्वाधिकार प्रतिष्ठा को खो चुके है क्या?

अथ तस्मिन् विषये स्वकर्तव्याशं पृच्छन् स्ववचनमुपसंहरति—

**तद् ब्रूत वत्साः ! किमितः प्रार्थयध्वं समागताः ।**
**मयी सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥**

एकत्र हो हे वत्स ! क्यों तुम प्रार्थना करते अहो ।
जग सृष्टि रक्षा है तुम्हीं से हाल सब बोलो कहो ॥

**अन्वयः**—तत् वत्साः ! समागताः यूयम् इतः किं प्रार्थयध्वम् ? । ब्रूत । हि मयि लोकानां सृष्टिः, रक्षा युष्मासु अवस्थिता ॥

**व्याख्या**—तत् = तस्मात् कारणात् , हे वत्साः=हे पुत्रकाः, समागताः= सम्भूय आगताः, यूयम् , इतः=अस्मात् मत्त इत्यर्थः, किं प्रार्थयध्व=किम् इच्छत, ब्रूत=व्यक्त कथयत । हि=यस्मात् कारणात् , मयि, लोकानां=भुवनानां, सृष्टिः= सर्जनम् , अवस्थिता, रक्षा=रक्षणं, "तु" युष्मासु=भवत्सु, अवस्थिता=नियता ॥

**व्युत्पत्तिः**—वत्साः = "वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्स तु वक्षसि" इति विश्वः । स्वयं पितामहत्वाद्वत्साः इति आमन्त्रयते । समागताः = सम्भूय आगताः समागताः । इतः=अस्मात् इति इतः, पञ्चम्यर्थे तसिः । ब्रूत = "ब्रूञ् व्यक्तायां वाचि" इति धातोः लोट् । लोकानां = "लोकस्तु भुवने जने" इत्यमरः । सृष्टिः= "सृज विसर्गे" इति धातोः "स्त्रियां क्तिन्" इति क्तिन् प्रत्ययः ।

**भावार्थः**—तस्मात् कारणात् हे पुत्रका ! सम्भूयागता यूयं मत्सकाशाद् यदपेक्षितं, तत् त्वरितं वदत, नात्र शङ्का कर्तव्या, यतो रजोगुणमवलम्ब्यावस्थिते मयि लोकानां सृष्टिरवस्थिता, रक्षा तु लोकपालनकार्याधिकृतेषु युष्मास्वेवास्थितेति भावः ।

**भाषा**—इस लिये हे देवगण ! एक साथ मिलकर आये हुये आपलोग हमसे जो चाहते होवें, उसको जल्दी कहिये, किसी बात का सङ्कोच न करिये, क्यों कि रजोगुण का अवलम्बन करके लोक की सृष्टि करना मात्र हमारे जिम्मे है, किन्तु लोगों की रक्षा करना तो आपही के ऊपर निर्भर है ।

अथ प्रतिवचनप्रस्तावे बृहस्पतेरेव तद्योग्यत्वान्महेन्द्रस्य तन्नियोगप्रकारमाह—

**ततो मन्दाऽनिलोद्धूतकमलाकरशोभिना ।**
**गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २९ ॥**

मृदु पवन कम्पित कमल आकर सम हिला अपने नयन ।
कुछ बोलने को इन्द्र ने गुरु से कहा सविनय नमन ॥

**अन्वयः**-ततः वासवः गुरु मन्दाऽनिलोद्धूतकमलाकरशोभिना नेत्रसहस्रेण नोदयामास ।

**व्याख्या**—ततः = अनन्तरं ब्रह्मकृतप्रश्नाऽनन्तरमित्यर्थः, वासवः = इन्द्रः, गुरुं = बृहस्पतिं, मन्दाऽनिलोद्धूतकमलाकरशोभिना = मन्दवायुकम्पितपद्माकरद्योतिना, नेत्रसहस्रेण=नयनसहस्रेण, नोदयमास=प्रेरयामास, प्रतिवक्तुमिति शेषः।

**व्युत्पत्तिः**—वासवः = "वासवो वृत्रहा वृषा" इत्यमरः। गुरुं=गृणाति=उपदेशं ददातीति गुरुः, "बृहस्पतिः सुराचार्यो गीःपतिर्धिषणो गुरुः" इत्यमरः। मन्दाऽनिलोद्धूतकमलाकरशोभिना = मन्दश्चाऽसौ अनिलः मन्दाऽनिलः, "पृषदश्वो गन्धवहो गन्धवाहाऽनिलाशुगाः" इत्यमरः । मन्दानिलेन उद्धूतः मन्दाऽनिलोद्धूतः, कमलानाम् आकारः कमलाकरः, "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इति "खनिः स्त्रियामाकरः स्यात्" इति चाऽमरः। मन्दाऽनिलोद्धूतश्चाऽसौ कमलाकरः मन्दानिलोद्धूतकमलाकरः, स इव शोभते इति मन्दाऽनिलोद्धूतकमलाकरशोभि, तेन मन्दानिलोद्धूतकमलाकरशोभिना । नेत्रसहस्रेण=नेत्राणा सहस्र नेत्रसहस्रं, तेन नेत्रसहस्रेण, "लोचनं नयन नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः। नोदयामास = "णुद प्रेरणे" इति धातोः णिजन्तात् लिट् "णो नः" इति णस्य नः । सहस्रग्रहणम् आस्थाऽतिशयार्थम् । निमेषरहितानामपि प्रयत्नवशात् लोचनचलनं न विरुध्यते । अत्र नेत्रसहस्ररूपोऽवयवी कमलाकरस्थानीयः । अवयवभूतानि नेत्राणि तु कमलस्थानीयानीति विभागः ।

**भावार्थः**—पितामहप्रश्नानन्तरमिन्द्रः बृहस्पतिं मन्दपवनकम्पितपद्माकरश्रीमता सहस्रनयनेन वक्तुं प्रेरयामासेति भावः ।

**भाषा**—इसप्रकार से पितामह का वचन श्रवण कर इन्द्र ने बृहस्पति को बोलने के लिये अपने सहस्रनेत्रसे इशारा किया ।

अथ बृहस्पतेः प्रतिवचनप्रस्तावमाह—

**स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाऽधिकम् ।**
**वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥**

**सहस्राक्ष से भी अधिक लोचन भूत दोही नेत्र मय ।**
**बोले चतुर्मुख से बृहस्पति जोड कर होकर अभय ॥**

**अन्वयः**—हरेः सहस्रनयनाऽधिकं द्विनेत्र चक्षुः सः वाचस्पतिः प्राञ्जलिः सन् जलजासनम् इदम् उवाच ।

**व्याख्या**—हरेः=इन्द्रस्य, सहस्रनयनाऽधिकं=सहस्रलोचनातिरिक्तं सहस्र-नयनाग्रःह्यग्राहकत्वादित्यर्थः, द्विनेत्रं=द्विलोचनं, धर्मार्थदृष्टिमित्यर्थः, चक्षुः=चक्षुभूतः, सः, वाचस्पतिः=बृहस्पतिः, प्राञ्जलिः=बद्धाऽञ्जलिः सन्, जलजासनम्=कमलासनम्, ब्रह्माणमित्यर्थः, इदं=वक्ष्यमाणम्, उवाच=अवोचत्।

**व्युत्पत्तिः**—हरेः="इन्द्रो दुश्च्यवनो हरिः" इति हलायुधः। सहस्रनयनाऽधिकं=सहस्रात् नयनेभ्यः अधिकं सहस्रनयनाधिकं, "तद्धितार्थोत्तरपदसमाहारे च" इति समासः। द्विनेत्रम्=धर्मदृष्टिरर्थदृष्टिश्चेति द्वे नेत्रे यस्य तद् द्विनेत्रम्, अनेन भगवतो बृहस्पतेर्भगवतः शुक्राद् व्यतिरेको ध्वनितः। स हि बलियज्ञे विरोधमाचरन् भगवता विष्णुना धर्मदृष्ट्या विफलीकृतः। असौ तु दृष्टिद्वययोगात् धर्मार्थावुभावपि समीक्ष्योक्तवानित्यर्थः। वाचस्पतिः=वाचः पतिः वाचस्पतिः "कस्कादिषु च ८।३।४" इत्यत्र पठितत्वात् अलुक्सत्वे। "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" ८।३।५३ इति सत्त्वमिति स्वामी, तत्र सत्त्वविधानात्। षष्ठ्या अलुक् इति भानुजीदीक्षितः, तन्न, उक्तसूत्रस्य छन्दसि विधानात्। "जीव आङ्गिरसो वाचस्पति" इत्यमरः। जलजासनं=जले जातं जलजे, "सप्तम्यां जनेर्डः" इति जलोपपदपूर्वकात "जनी प्रादुर्भावे" इति धातोर्डप्रत्ययः। जलजम् आसनं यस्य सः जलजासनः, तं जलजासनम्। उवाच="ब्रूञ् व्यक्ताया वाचि" इति धातोः द्विकर्मकत्वात् "जलजासनम्" "इद" च कर्मद्वयम्।

बृहस्पतौ चक्षुष्ट्वारोपस्य प्रकृतोपयोगात् परिणामाऽलङ्कारः। तल्लक्षणं यथा—

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि।
परिणामो भवेत्तुल्याऽतुल्याधिकरणो द्विधा॥" इति साहित्यदर्पणम्॥

**भावार्थः**—महेन्द्रस्य सहस्रनयनेभ्यो विशिष्टो द्विनेत्रात्मकश्चक्षुभूतः स बृहस्पतिरञ्जलिं बध्वा ब्रह्माणमिदं वक्ष्यमाणं जगादेति भावः।

**भाषा**—महेन्द्रके सहस्रनयन के अपेक्षया विशेष दर्शन शक्ति रखने वाले द्विनेत्रात्मक चक्षुरूप बृहस्पति हाथ जोड़ कर ब्रह्माजी से आगे की बात बोले।

अथ वचनप्रकारमाह—

**एवं यदात्थ भगवन्! आमृष्टं नः परैः पदम्।**
**प्रत्येकं विनियुक्तात्मा, कथं न ज्ञास्यसि प्रभो॥ ३१॥**

**भगवन्! न उससे अधिक कुछ है आप जो हैं जानते।**
**प्रभु आप अन्तर्निष्ठ हैं सर्वज्ञ विज्ञ बखानते॥**

**अन्वयः**—भगवन् ! यत् आत्थ तत् एवम् । नः पद परैः आमृष्टम् । प्रभो ! प्रत्येकं विनियुक्तात्मा त्वं कथं न ज्ञास्यसि ?

**व्याख्या**—हे भगवन् ! = हे षड्गुणैश्वर्यसम्पन्न !, यत् आत्थ = "कृतव्यावृत्तयः परैः २।२७" इति यद् ब्रवीषि, तत् एव = सत्यम् । नः = अस्माकं, पदम् = अधिकारः, परैः = शत्रुभिः, आमृष्टम्=आक्षिप्तम् । हे प्रभो!=हे स्वामिन्! प्रत्येकं=प्रतिपुरुषं, विनियुक्तात्मा = अवस्थापितस्वरूपः, त्वं, कथ=केन प्रकारेण, न ज्ञास्यसि = न वेत्सि ।

**व्युत्पत्तिः**—भगवन् = भगम् अस्ति यस्य स भगवान्, तत्सम्बुद्धौ हे भगवन् । प्राशस्त्ये मतुप्प्रत्ययः । "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरितः" इति विष्णुपुराणम् । "भग श्रीकाममाहात्म्यवीर्ययत्नाऽर्ककीर्तिषु" इत्यमरः । आत्थ=ब्रूञ्धातोः "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति सिपस्थलादेशो ब्रुवश्चाहादेशः । "वर्तमानसामीप्ये वर्त्तमानवद्वा" इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । "आहेति भूते णलन्तभ्रमवदिति" । आहेत्युपलक्षणम् । 'तद्ग्रहणे सति तदितरग्रहणम्' उपलक्षणम् । नः=अस्मच्छब्दस्य षष्ठीबहुवचने "बहुवचनस्य वस्नसौ" इति नसादेशः । परैः = "अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । प्रभो="प्रभुः परिवृढोऽधिपः" इत्यमरः । प्रत्येकम्=एकम् एकं प्रत्येकम् । विनियुक्तात्मा=विनियुक्तः आत्मा येन सः विनियुक्तात्मा, सर्वान्तर्यामी इत्यर्थः । न ज्ञास्यसि="अपह्नवे ज्ञः" "अकर्मकाच्च" इत्यात्मनेपदविकल्पः । वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः ।

**भावार्थः**—हे ब्रह्मन् ! त्वं यद् ब्रवीषि, तत्सत्यम्, अस्माकमैन्द्रादिस्थानं शत्रुभिराक्रान्तम्, हे परमेश्वर ! सर्वजनान्तर्यामितया विश्वव्यापी भवान् किं किं न लोकवृत्तान्त जानातीति भावः ।

**भाषा**—हे ब्रह्मन् ! आप जो कहते हैं, वह सत्य है, हम लोगों के इन्द्रासनादिस्थानों को शत्रुओं ने आक्रमण कर लिया है । सर्वान्तर्यामी विश्वव्यापक आप किस लौकिक वृत्तान्त को नही जानते हैं ।

अथ तमेव स्वाधिकारोपप्लवं विस्तरतः प्रदर्शयिष्यन्, उपप्लवहेतुभूतं तारकासुरमेव निर्दिशति—

**भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।**

**उपप्लवाय लोकानां, धूमकेतुरिवोत्थितः ॥ ३२ ॥**

**वर आप से ले तारकासुर बन असुर-नेता महा ।**

**वह धूम्रकेतु समान जग को त्रास है देता महा ॥**

**अन्वयः**—हे भगवन् ! भवल्लब्धवरोदीर्णः तारकाख्यः महासुरः धूमकेतुः इव लोकानाम् उपप्लवाय उत्थितः ।

**व्याख्या**—हे भगवन् ! भवल्लब्धवरोदीर्णः=त्वत्प्राप्तवरोद्धतः, तारकाख्यः= तारकनामधेयः, महासुरः=महादानवः, धूमकेतुः इव=उत्पातविशेष इव, लोकाना = जगतीनाम्, उपप्लवाय = उपद्रवाय, उत्थितः=उत्पन्नः, अस्तीति शेषः ।

**व्युत्पत्तिः**—भवल्लब्धवरोदीर्णः = भातीति भवान्, "भा दीप्तौ" इति धातोः डवतुप्रत्ययः । डित्वसामर्थ्यात् अभस्याऽपि टेर्लोपः । भवतः लब्धः भवल्लब्धः । "डुलभष् प्राप्तौ" इति धातोः निष्ठाया क्तप्रत्ययः । "आदिर्ञिटुडवः" इति डोरित्संज्ञा, "तस्य लोपः" इति तस्य लोपः । "झषस्तथोर्धोऽधः" इति तकारस्य धकारः । भवल्लब्धश्चाऽसौ वरः भवल्लब्धवरः, "देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये" इत्यमरः । भवल्लब्धवरेण उदीर्णः भवल्लब्धवरोदीर्णः, तारकाख्यः=तारकः आख्या यस्य स तारकाख्यः । "आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च" इत्यमरः । महासुरः = मह्यते इति महान् । न सुरः असुरः । अत्र विरोधार्थे नञ् । "असुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः" इत्यमरः । महान् असुरः महासुरः ; "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति तत्पुरुषः । "आन्महतः—६-३-४६-"इत्यादिनात्वम् । लोकाना = "त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः । धूमकेतुः=धूमाकारः केतुर्धूमकेतुः, "अग्न्युत्पातौ धूमकेतू" इत्यमरः । शास्त्रे धूमकेतोरुदयस्यात्यन्तिकविनाशहेतुत्वमुक्तम् । तथा हि गार्ग्यसंहितायाम्—

> "उत्तिष्ठति यदा भीमो धूमकेतुर्नभस्तले ।
> तदा विनश्यति क्षिप्रं जगदेतच्चराचरम् ॥" इति ।

अत्रोपमालङ्कारः ।

**भावार्थः**—भवत्सकाशादेव वरं प्राप्योद्धतः तारकासुरः चतुर्दशभुवनानां नाशाय धूमकेतुरिवोत्पन्नोऽस्तीति भावः ।

**भाषा**—हे प्रभो ! आप ही से वरदान पाकर उद्धत् भया हुवा तारकासुर नामक दैत्य चौदह् भुवनों का नाश करने के लिये धूमकेतु नक्षत्र के समान उत्पन्न हुआ है ।

अथ विषयीभूतेषु तद्विषयेषूपायान्तरेषु स्वशक्त्यनुरूपा समाश्रयवृत्तिं दर्शयति, सप्तभिः श्लोकैः। तत्रादौ सूर्यस्यानुवृत्तिमाह—

**पुरे तावन्तमेवाऽस्य तनोति रविरातपम्।**
**दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते॥ ३३॥**

नित भानु उतना ही नगर में धूप फैलाते प्रभो।
जिससे मनोहर बावली के, कमल खिल जाते प्रभो॥

**अन्वयः**—अस्य पुरे रविः तावन्तम् एव आतपं तनोति, यावन्मात्रेण दीर्घिकाकमलोन्मेषः साध्यते।

**व्याख्या**—अस्य = तारकाऽसुरस्य, पुरे = नगरे, रविः = सूर्यः, तावन्तम् एव = तावन्मात्रमेव, आतपम् = द्योतम्, तनोति = विस्तारयति, यावन्मात्रेण = यावतैव, दीर्घिकाकमलोन्मेषः = क्रीडावापीपद्मविकासः, साध्यते = निष्पाद्यते।

**व्युत्पत्तिः**—रविः = "भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः। तावन्तम् = तत् परिमाणम् अस्य तावान्, तं तावन्तं, तच्छब्दात् "यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९" इति वतुप्प्रत्ययः। आतपं = "प्रकाशो द्योत आतपः" इत्यमरः। तनोति = "तनु विस्तारे" इति धातोर्लट्, "तनादिकृञ्भ्य उः" इति उप्रत्ययः। यावन्मात्रेण = यत्परिमाणम् अस्या इति यावती, वतुप्प्रत्ययः। यावती मात्रा = मितिः, यस्य स यावन्मात्रः, तेन यावन्मात्रेण, अल्पपरिमाणेनेत्यर्थः, "मात्रा परिच्छदे। अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे॥" इत्यमरः। दीर्घिकाकमलोन्मेषः = कमलानाम् उन्मेषः कमलोन्मेषः। दीर्घिकासु कमलोन्मेषः दीर्घिकाकमलोन्मेषः, "वापी तु दीर्घिका" इत्यमरः।

**भावार्थः**—सूर्यस्तारकासुरनगरे यावन्मात्रेण निजातपेन वापीकमलविकासो भवति, तावन्मात्रमेवातपं करोतीत्यर्थः। कठोरकिरणोऽपि सूर्यस्तद्भीत्या पुरे मन्दोष्णः सन्नेव प्रकाशत इति भावः।

**भाषा**—प्रचण्डकिरण वाला भी सूर्य भय से मन्दोष्ण बनकर तारकासुर के नगर में जितने किरणों से तलाव के कमलों का विकास होता है, उतने ही किरणों का आविर्भाव करता है।

अथ चन्द्रस्यानुवृत्तिमाह—

**सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते।**
**नादत्ते केवलां लेखां हरचूडामणीकृताम्॥ ३४॥**

है कृष्ण पक्ष तथापि उसको शशि कला से सेवते।
शिव-शीश-लेखा ग्रहण करते वे न भय से जगपते ॥

**अन्वयः**—चन्द्रः त सर्वदा सर्वाभिः कलाभिः निषेवते, केवला हरचूडामणीकृता लेखा न आदत्ते।

**व्याख्या**—चन्द्रः = हिमाऽशुः, त=तारकाऽसुरं, सर्वदा=सदा, कृष्णपक्षेऽपीत्यर्थः, सर्वाभिः=अखिलाभिः, कलाभिः, निषेवते=आश्रवते। केवलाम् = एकाम्, हरचूडामणीकृता=शिवशिरोमणीकृता, लेखा=कला, न आदत्ते=न गृह्णाति।

**व्युत्पत्तिः**—चन्द्रः-"हिमाऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः। सर्वदा=सर्वस्मिन् काले सर्वदा, "सर्वैकान्यकियत्तदः काले दा ५।३।१५" इति सूत्रेण सर्वशब्दाद्दाप्रत्ययः। कलाभिः="कला तु षोडशो भाग." इत्यमरः। हरचूडामणीकृता=हरति पापम् इति हरः, "हृञ् हरणे" इति धातोः पचाद्यच्। "हरः स्मरहरो भर्गः" इत्यमरः। अचूडामणिः चूडामणिः यथा सम्पद्यते तथा कृता चूडामणीकृता, "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति च्विप्रत्ययः। "च्वौ च ७।४।२६" इति पूर्वपदस्य दीर्घः। हरस्य चूडामणीकृता हरचूडामणीकृता, ता हरचूडामणीकृताम्।

**भावार्थः**—चन्द्रः कृष्णपक्षेऽपि सकलकलापरिपूर्णः सन् तारकासुरं सेवते, केवला शिवशिरोमणीकृता कला न गृह्णातीति भावः।

**भाषा**—चन्द्रमा कृष्णपक्ष में भी सकल कलाओं से परिपूर्ण होकर तारकासुरकी सेवा करता है, केवल शङ्कर के शिरोभूषणीभूत एककलामात्र का ग्रहण नहीं करता है

अथ पवनस्यानुवृत्तिमाह—

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्।
न वाति वायुस्तत्पार्श्वे तालवृन्ताऽनिलाऽधिकम् ॥ ३५ ॥
सुम चौर्य भय से वाटिका में मन्दगति बहता पवन।
पंखे सदृश उसके निकट मन्थर गमन करता पवन ॥

**अन्वयः**—वायुः कुसुमस्तेयसाध्वसात् उद्याने व्यावृत्तगतिः सन् तत्पार्श्वे तालवृन्तानिलाधिकं न वाति।

**व्याख्या**—वायुः=वातः, कुसुमस्तेयसाध्वसात्=पुष्पचौर्यभयात्, उद्याने = आरामे, व्यावृत्तगतिः=निवृत्तगमनः, निवृत्तारामसचारः सन् इत्यर्थः, तत्पार्श्वे =

तत्समीपे, तारकाऽसुरसन्निधौ इत्यर्थः । तालवृन्ताऽनिलाऽधिकं=व्यजनपवनाऽधिकं यथा स्यात्तथा, न वाति=न वहति ।

**व्युत्पत्तिः**—वायुः=वातीति वायुः, "श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इत्यमरः । कुसुमस्तेयसाध्वसात् = स्तेनस्य भावः कर्म वा स्तेयं, स्तेन शब्दात् "स्तेनाद्यन्नलोपश्च" इति यत्प्रत्ययः नलोपश्च । "चौरैकागारिकस्तेनदस्युतस्करमोषकाः" इति "चौरिका स्तैन्यचौर्ये च स्तेयम्" इति चाऽमरः । कुसुमाना स्तेयं कुसुमस्तेयं, "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः । कुसुमस्तेयात् साध्वस कुसुमस्तेयसाध्वसं, तस्मात् कुसुमस्तेयसाध्वसात् "भीत्रार्थानां भयहेतुः" इति अपादानसंज्ञा, "अपादाने पञ्चमी" इति पञ्चमी । "भीतिर्भीः साध्वसं भयम्" इत्यमरः । कुसुमस्तेयसाध्वसशब्दात् "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । व्यावृत्तगतिः = व्यावृत्ता गतिर्यस्य स व्यावृत्तगतिः । सापेक्षत्वेऽपि गमकत्वात् समासः । तत्पार्श्वे = तस्य पार्श्वं तत्पार्श्वं, तस्मिन् तत्पार्श्वे । तालवृन्ताऽनिलाऽधिकं = तालस्य इव वृन्तम् अस्य तालवृन्तं, "व्यजनं तालवृन्तकम्" इत्यमरः । तालवृन्तस्य अनिलः तालवृन्ताऽनिलः, "पृषदश्वो गन्धवहो गन्धवाहाऽनिलाशुगाः" इत्यमरः । तालवृन्ताऽनिलात् अधिक तालवृन्तानिलाधिकम् । [ यथा स्यात्तथा ] वाति = "वा गतिगन्धनयोः" इति धातोर्लट् ।

**भावार्थः**—पवनः उपवनकुसुमापहारसाहसमाशङ्क्य निवृत्तस्वैरसञ्चारः सन् तारकासुरस्य समीपे व्यजनसञ्चारपवनाद् विशेषं न वातीति भावः ।

**भाषा**—पवन तारकासुरके बगीचे के पुष्पों का पतन न हो, इस डरसे तारकासुरके समीप पंखे की हवा से अधिक नही बहता ।

अथ षड्ऋतूनामनुवृत्तिमाह—

**पर्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।**
**उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥**

पर्य्याय-सेवा छोडकर ऋतु कुसुम संचय कर रहे ।
माली सदृश तारक असुर की सभय सेवा कर रहे ॥

**अन्वयः**—ऋतवः पर्यायसेवाम् उत्सृज्य पुष्पसम्भारतत्पराः सन्तः उद्यानपालसामान्य तम् उपासते ।

**व्याख्या**—ऋतवः = वसन्तादयः । षडिति शेषः, पर्यायसेवा = क्रमसेवनम् , उत्सृज्य = परित्यज्य, पुष्पसम्भारतत्पराः = कुसुमसंग्रहासक्ताः सन्तः, उद्यान-

पालसामान्यम्=आरामपालसाधारणम्, यथा स्यात्तथा, तं=तारकाऽसुरम्, उपासते = सेवन्ते ।

**व्युत्पत्तिः**—पर्यायसेवा पर्यायेण सेवा पर्यायसेवा, ता पर्यायसेवाम् । उत्सृज्य = उदुपसर्गपूर्वकात् "सृज विसर्गे" इति धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्ययः, तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः । पुष्पसम्भारतत्पराः = पुष्पाणां सम्भारः पुष्पसम्भारः, तस्मिन् पराः पुष्पसम्भारतत्पराः, "तत्परे प्रसितासक्तौ" इत्यमरः । उद्यानपालसामान्यम्=उद्यानं पालयन्तीति उद्यानपालाः, तैः सामान्यम् । उद्यानपालसामान्यं यथा स्यात्तथा । "साधारणं तु सामान्यम्" इत्यमरः । समानशब्दात् "चातुर्वर्ण्यादीनां स्वार्थे उपसङ्ख्यानम्" इति वार्तिकेन स्वार्थे ष्यञि कृते सामान्यशब्दसिद्धिः ।

क्रमेण षड् ऋतवो यथा—

"वसन्तश्च तथा ग्रीष्मः प्रावृट् च शरदेव च ।
हेमन्तः शिशिरश्चैव षडेते ऋतवः स्मृताः ॥" इति ।

अत्र पुष्पसम्भारतत्परत्वरूपसाधारणधर्मेणोद्यानपालकानामृतूनाञ्चोपमानोपमेयत्व, तथा चोपमालङ्कारः ।

**भावार्थः**—शीतोष्णादिक स्वस्वगुणमपहायोपवनपालकवत् स्वस्वकुसुमसम्पादनमात्रपरा वसन्तादय ऋतवः कुसुमान्तरमविनाशयन्तो युगपदेव तारकासुरमाराधयन्तीति भावः ।

**भाषा**—शिशिरवसन्तादि छहों ऋतु, स्वकीय सर्दी गर्मी आदि धर्मों को छोड़ कर, बगीचेके मालियों की तरह, दूसरे पुष्पों का नाश न करते हुये, अपने अपने पुष्पों का उत्पादन कर, एक साथ तारकासुरकी सेवा करते हैं ।

अथ वरुणस्यानुवृत्तिमाह—

**तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।**
**कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥ ३७ ॥**
**सागर उसे उपहार देने के लिये सुन्दर रतन ।**
**परिपाक तक करता प्रतीक्षा नित उसे करता यतन ॥**

**अन्वयः**—सरितां पतिः तस्य उपायनयोग्यानि रत्नानि अम्भसाम् अन्तः आ निष्पत्तेः कथमपि प्रतीक्षते ।

**व्याख्या**—सरितां = नदीनां, पतिः = स्वामी । समुद्र इत्यर्थः, तस्य = ता-

रकाऽसुरस्य, उपायनयोग्यानि = उपहाराऽर्हाणि, रत्नानि = मणीन्, अम्भसा = जलानाम्, अन्तः = मध्ये, आ निष्पत्तेः = परिपाकपर्यन्तं, कथमपि = महता यत्नेन, प्रतीक्षते = प्रतीक्षा करोति ।

**व्युत्पत्तिः**—सरिता = "अथ नदी सरित्" इत्यमरः । पतिः="ईश्वरः पतिरीशिता" इत्यमरः । उपायनयोग्यानि = उपायनानां योग्यानि उपायनयोग्यानि, तानि "प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । अम्भसाम् = "अम्भोर्णस्तोयपानीयनीरक्षीराऽम्बु शम्बरम्" इत्यमरः । आ निष्पत्तेः = अत्र मर्यादायामाङ् विकल्पात् समासाभावः । उपायनयोग्यताप्राप्तिपर्यन्तमित्यर्थः । शुक्तिकायां पतितो जलबिन्दुः षण्मासोत्तरकालमुद्गीर्णो हि प्रशस्तं मौक्तिकं भवतीति लोकप्रसिद्धिः । एवं रत्नान्तरेष्वपि तदुचितकालप्राप्तेरावश्यकत्वात् प्रतीक्षणोपपत्तिः । उपायनयोग्यताप्राप्त्यनन्तरं तु झटिति तस्मै समर्पयत्येवेति ध्वनितम् ।

**भावार्थः**—समुद्रः समग्रगुणानामेव रत्नाना तदुपायनयोग्यत्वात् तदितरप्रदाने दण्डमाशङ्क्य स्वजलान्तर्भागे पच्यमानाना रत्नाना कालवशादेव परिपाकोपपत्तेरुपायनयोग्यताप्राप्तिपर्यन्तं तत्सेवायाः कालविलम्बमप्याशङ्कमानो यथा कथञ्चित् प्रतीक्षत इति भावः ।

**भाषा**—समुद्र तारकासुर को नजर देने लायक बहुमूल्य रत्नों की जल के भीतर होनेवाली परिपाक अवस्था की प्रतीक्षा करता है ।

अथ भूलोकवासिना क्षुद्रत्वात् तदनुवृत्तिकथनमतिलङ्घ्य पातालवासिना नागानामनुवृत्तिमाह—

> **ज्वलन्मणिशिखाश्चैनं, वासुकिप्रमुखा निशि ।**
> **स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥ ३८ ॥**
> **मणि-दीप्त वासुकि आदि पन्नग, असुर-सेवा कर रहे ।**
> **शुचि अबुझ दीप समान वे, मणि दीप्ति से तम हर रहे ॥**

**अन्वयः**—ज्वलन्मणिशिखाः वासुकिप्रमुखा भुजङ्गाः च निशि स्थिरप्रदीपताम् एत्य एनं पर्युपासते ।

**व्याख्या**—ज्वलन्मणिशिखाः = प्रदीप्यमानमणिज्वालाः, वासुकिप्रमुखाः= वासुक्यादयः, भुजङ्गाः = सर्पाः, च = अपि, निशि = रात्रौ, स्थिरप्रदीपताम् = अनिर्वाणदीपत्वम्, एत्य = प्राप्य, एनं=तारकाऽसुरं, पर्युपासते=परिवृत्य सेवन्ते ।

**व्युत्पत्तिः**—ज्वलन्मणिशिखाः=मणीना शिखाः मणिशिखाः, "वह्नेर्द्वयोर्ज्वा-

तकीलार्चिर्हेतिः शिखाः स्त्रियाम्" इत्यमरः । ज्वलन्तीति ज्वलन्त्यः । ज्वलन्त्यः मणिशिखाः येषां ते ज्वलन्मणिशिखाः । वासुकिप्रमुखाः=वासुकिः प्रमुखं येषां ते वासुकिप्रमुखाः, "वासुकिस्तु सर्पराजः" इत्यमरः । भुजङ्गाः="सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । च = न केवलं स्वर्गवासिनो वयं, किन्तु पातालवासिनो विषकटुका भुजङ्गाश्चेति च शब्दार्थः । निशि=सप्तम्येकवचने निशाशब्दस्य "पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६।१।६३" इति निशादेशः । "निशा निशीथिनी रात्रि स्त्रियामा क्षणदा क्षपा" इत्यमरः । स्थिरप्रदीपताम्=प्रकृष्टो दीपः प्रदीपः, "कुगतिप्रादयः" इति गतिसमासः । स्थिरश्चाऽसौ प्रदीपः स्थिरप्रदीपः, तस्य भावः स्थिरप्रदीपता, तां स्थिरप्रदीपतां "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः । एत्य= 'इण् गतौ' इति धातोः क्त्वा, तस्य ल्यप् । स्थिरत्वेन तेषां तैलवर्त्यादिनिरपेक्षत्वेन तद्विनाशनिमित्ताभावात् पवनादिभिरनिर्वापणीयत्वाच्च प्रदीपान्तरेभ्यो व्यतिरेको ध्वन्यते ।

**भावार्थः**—रात्रौ वासुकीप्रभृतयो महासर्पाः समुद्क्षिप्तफणाः सन्तस्तेषु तेषु प्रदेशेष्ववस्थायाऽनिर्वाणप्रदीपत्वं प्राप्य निजफणामणिभिस्तिमिरमपहरन्तस्तारकासुरं सेवन्त इति भावः ।

**भाषा**—रात्रि में वासुकि आदि महासर्प स्वकीय फणाओं को ऊँचाकर प्रत्येक स्थान में हवा से नहीं बुझनेवाले दीपक बन कर, फणामणियों से अन्धकार, को दूर करके तारकासुर की सेवा करते हैं ।

इत्थं त्रैलोक्यवासिना तारकासुरं प्रति दण्डोपनतानुवृत्तिं प्रतिपाद्य, संप्रति त्रैलोक्याधिपतेरिन्द्रस्यापि सविशेषानुवृत्तिमाह—

**तत्कृताऽनुग्रहाऽपेक्षी, तं मुहुर्दूतहारितैः ।**
**अनुकूलयतीन्द्रोऽपि, कल्पद्रुमविभूषणैः ॥ ३६ ॥**

उसके अनुग्रह की अपेक्षा इन्द्र भी करते सदा ।
चर से विभूषण कल्पतरु के, भेजते रहते सदा ॥

**अन्वयः**—इन्द्रोऽपि तत्कृताऽनुग्रहाऽपेक्षी सन् मुहुः दूतहारितैः कल्पद्रुमविभूषणैः तम् अनुकूलयति ।

**व्याख्या**—इन्द्रोऽपि = मघवाऽपि, तत्कृताऽनुग्रहाऽपेक्षी = तारकाऽसुरकृत प्रसादप्रार्थी सन्, मुहुः=वारं वारं, दूतहारितैः = दूतप्रापितैः, कल्पद्रुमविभूषणैः=

कल्पवृक्षाऽलङ्कारैः तत्पुष्पभूतैरित्यर्थः, तं = तारकाऽसुरम्, अनुकूलयति, = अनुकूलं करोति ।

**व्युत्पत्तिः**—इन्द्रः="इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः"इत्यमरः । अपि=न केवलं त्रैलोक्यवासिनः, अपि तु त्रैलोक्याधिपतिरिन्द्रोऽपीत्यपिशब्दार्थः । तत्कृताऽनुग्रहाऽपेक्षी=तेन कृतः तत्कृतः, स चाऽसौ अनुग्रहः तत्कृताऽनुग्रहः, तम् अपेक्षते तच्छीलः तत्कृतानुग्रहापेक्षी । "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः । "सौ च" इति दीर्घः । दूतहारितैः=दूतैः हारितानि दूतहारितानि, तैः दूतहारितैः । कल्पद्रुमविभूषणैः=विशिष्टानि भूषणानि विभूषणानि, "कुगतिप्रादयः" इति समासः । कल्पद्रुमाणा विभूषणानि कल्पद्रुमविभूषणानि, तैः कल्पद्रुमविभूषणैः, अनुकूलयति=अनुकूलं करोति, "तत्करोति तदाचष्टे" इति णिच्प्रत्ययः धर्मविजयिनः, लोभविजयिनः, असुरविजयिनश्चेति त्रिविधाः खलु विजिगीषवः । यदाह कौटिल्यः—"धर्मलोभासुरविजयिन इति त्रयोऽभियोक्तारः । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति, तमभ्यवपद्येत । परेषामपि भयाद् भूमिद्रव्यापहारेण लोभविजयी तुष्यति; तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेनासुरविजयी तुष्यति; तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत" ( १२-१-१६२ ) इति ।

**भावार्थः**—इन्द्रोऽपि त्रैलोक्याधिपतित्वाभिमानिनमात्मानं प्रति समत्सरस्य तारकासुरस्य संश्रयवृत्त्याप्यानुकूल्यकरणमशक्यमिति निश्चिन्वानो ग्रहणबन्धनादिभयात् सान्निध्यं परिहृत्य दूरावस्थित एव तदनुग्रहमाकाङ्क्षमाणः प्रतिक्षणं दूतजनप्रापितैः कल्पद्रुमालङ्करणैस्तं तारकासुरमनुवर्तत इति भावः ।

**भाषा**—इन्द्र भी प्रतिदिन दूतों के द्वारा कल्पवृक्ष के बहुमूल्यरत्नों का नजराना भेजकर अपने साथ शत्रुता रखने वाले तारकासुर को खुश रखने की कोशिश करता है ।

इत्थमुपवर्णितायाः संश्रयवृत्तेरपि तस्मिन्नसुरविजयिनि तारकासुरे विफलत्वमाह—

**इत्थमाराध्यमानोऽपि, क्लिश्नाति भुवनत्रयम् ।**
**शाम्येत्प्रत्यपकारेण, नोपकारेण दुर्जनः ॥ ४० ॥**

**तो भी दबाये जगत को रहता अमित दुखभार से ।**
**अपकार से हैं शान्त होते खल नहीं उपकारसे ॥**

**अन्वयः**—इत्थम् आराध्यमानोऽपि सः भुवनत्रयं क्लिश्नाति । तथाहि दुर्जनः प्रत्यपकारेण शाम्येत्, उपकारेण न शाम्येत ॥

**व्याख्या**—इत्थम्=उक्तप्रकारेण, आराध्यमानोऽपि=सेव्यमानोऽपि रविशशिपवनसमुद्रभुजङ्गपाकशसनैरिति शेषः, सः=तारकाऽसुरः, भुवनत्रयं=लोकत्रयं, क्लीश्नाति=पीडयति । तथाहि दुर्जनः=अनार्यः, प्रत्यपकारेण=प्रतीकारेण एव शाम्येत्=शान्तो भवेत्, उपकारेण=उपकृत्या, न शाम्येत् ।

**व्युत्पत्तिः**—इत्थम्=अनेन प्रकारेण "इदमस्थमुः" इति थमुप्रत्ययः । भुवनत्रयं=त्रयः अवयवाः यस्य तत् त्रयं, त्रिशब्दात् "सङ्ख्याया अवयवे तयप्" इति तयप्प्रत्ययः । तस्य "द्वित्रिभ्यां तयस्याऽयज्वा" इति अयजादेशः । भुवनानां त्रयं भुवनत्रयं, तत् । "त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः । क्लिश्नाति="क्लिशू विबाधने" इति धातोर्लट्, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययः । "शात्" इति श्चुत्वनिषेधः । दुर्जनः=दुष्टो जनः दुर्जनः, "कुगतिप्रादयः" इति समासः । प्रत्यपकारेण=प्रत्यपकरणं प्रत्यपकारः, तेन प्रत्यपकारेण, "अकर्तरि च कारके संज्ञायाम्" इति भावे घञ् प्रत्ययः । शाम्येत्="शमु उपशमे" इति धातोः सम्भावनायां लिङ् । अत्र वैधर्म्येण उत्तरार्धेन पूर्वार्द्धस्य समर्थनात्, अर्थान्तरन्यासोऽलङ्कारः ।

**भावार्थः**—उक्तप्रकारेण रविशशिपवनोदधिभुजङ्गसुरेन्द्रैः सततं सेव्यमानोऽपि स तारकासुरः त्रैलोक्यं पीडयति, यतो दुर्जनः प्रतीकारेणैव शान्तो भवेत्, उपकारेण तु न शाम्येत्, प्रत्युत कुप्यतीति भावः ।

**भाषा**—इस तरह सूर्य, चन्द्र, पवन, समुद्र, सर्प, और इन्द्रों के खुशामत करने पर भी तारकासुर तीनों लोक को कष्ट देता है । ठीक ही हैं दुर्जन प्रतीकार ( दण्ड ) से ही शान्त होता है, उपकार से शान्त न होकर बलकी और भी उद्दण्ड बन जाता है ।

क्लिश्नाति भुवनत्रयमिति यो विग्रह उक्तस्तमेव प्रपञ्चयति, सप्तभिः श्लोकैः । तत्र विध्वंसनम्, अपहरणम्, उपरोध इति त्रिविधो विग्रहः । तत्र विध्वंसनमाह—

**तेनाऽमरवधूहस्तैः, सदयालूनपल्लवाः ।**
**अभिज्ञाश्छेदपातानां, क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥**

देवाङ्गना करसे सदय तोड़े गये जिनके सुदल ।
नन्दन विपिन के कल्पतरु, वे असुर ने तोड़े सकल ॥

**अन्वयः**—तेन अमरवधूहस्तैः सदयालूनपल्लवाः नन्दनद्रुमाः छेदपातानाम् अभिज्ञाः क्रियन्ते ।

**व्याख्या**—तेन = तारकाऽसुरेण, अमरवधूहस्तैः—देवाङ्गनाकरैः, सदयालूनपल्लवाः=सकृपच्छिन्नकिसलयाः, नन्दनद्रुमाः=इन्द्रोद्यानवृक्षाः, छेदपातानां=द्वैधीकरणपातनानाम्, अभिज्ञाः = अभिज्ञातारः, क्रियन्ते = विधीयन्ते ।

**व्युत्पत्तिः**—अमरवधूहस्तैः = न म्रियन्ते अमराः, तेषां वध्वः अमरवध्वः, तासां हस्ताः अमरवधूहस्ताः, तैः अमरवधूहस्तैः । सुकुमारैरिति भावः । सदयालूनपल्लवाः=दयया सहितं यथा स्यात्तथा सदयं [ क्रि० वि० ], "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । "कृपा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः । सदयम् आलूनाः सदयालूनाः । आङुपसर्गपूर्वकात् "लूञ् छेदने" इति धातोः क्तप्रत्ययः । सदयालूनाः पल्लवाः येषां ते सदयालूनल्पलवाः "पल्लवोऽस्त्री किसलयम्" इत्यमरः । नन्दनद्रुमाः=नन्दनस्य द्रुमाः नन्दनद्रुमाः, "अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इत्यमरः । छेदपातानां = छेदाश्च पाताश्च छेदपाताः, तेषां छेदपातानाम् अभिज्ञाः = अभिजानातीति अभिज्ञाः । कृद्योगात् "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । क्रियन्ते="डुकृञ् करणे" इति धातोः कर्मणि प्रयोगः यक्च ।

अत्र कार्यभूतेन नन्दनद्रुमछेदपातेन कारणभूतो महेन्द्रपराजयः प्रतीयते, इति कार्यद्वारेण पराजयस्यैवाभिधानात् पर्यायोक्तमलङ्कारः । तदुक्तं साहित्यदर्पणे—"पर्यायोक्तं यदाभङ्ग्या गम्यमेवाभिधीयते" इति । नात्राप्रस्तुतप्रशंसा, कार्यकारणयोरुभयोरपि वर्णनीयत्वेन प्रस्तुतत्वात् ।

**भावार्थः**—देवाङ्गनासुकुमारहस्तैरपि कर्णावतंसार्थं सदयच्छिन्नकिसलयान्नन्दनोद्यानकल्पवृक्षानसौ तारकासुरः छित्वा पातयतीति भावः ।

**भाषा**—जिन नन्दन वन के किसलयों को देवाङ्गनायें अपने सुकुमार हाथ से कर्णालङ्कार के लिये सदय होकर तोड़ती है, उन नन्दनवन के वृक्षों को यह तारकासुर निर्दयता से काट कर गिराता है ।

अथ त्रिभिः श्लोकैरपहरणं प्रतिपाद्यते । तत्रादौ दारापहरणमाह—

**वीज्यते स हि संसुप्तः, श्वाससाधारणानिलैः ।**
**चामरैः सुरबन्दीनां वाष्पसीकरवर्षिभिः ॥ ४२ ॥**

तारक असुर सोता, सभय देवाङ्गना सेवा करें ।
वन्दी बनी चामर झलें, नित अश्रु-कण-वर्षा करें

**अन्वयः**—हि यतः सः संसुप्तः सन् श्वाससाधारणाऽनिलैः बाष्पसीकरवर्षिभिः सुरबन्दीना चामरैः वीज्यते।

**व्याख्या**—हि = यस्मात्कारणात्, सः=तारकाऽसुरः, संसुप्तः=संविष्टः सन्, श्वाससाधारणाऽनिलैः=निःश्वाससमानवायुभिः, बाष्पसीकरवर्षिभिः=अश्रुजलकणवर्षणशीलैः, सुरबन्दीना=देवप्रग्रहस्त्रीणा, चामरैः=प्रकीर्णकैः, वीज्यते=निर्वाप्यते।

**व्युत्पत्तिः**—संसुप्तः = सम्यक् सुप्तः ससुप्तः, गतिसमासः। श्वाससाधारणाऽनिलैः=श्वासेन साधारणः श्वाससाधारणः, सः अनिलः येषा तानि श्वाससाधारणाऽनिलानि, तैः श्वाससाधारणाऽनिलैः। बाष्पसीकरवर्षिभिः=बाष्पाणा सीकराः बाष्पसीकाराः, "सीकरोऽम्बुकणाः स्मृताः" इत्यमरः। बाष्पसीकरान् वर्षन्तीति तच्छीलानि बाष्पसीकरवर्षीणि, तैः बाष्पसीकरवर्षिभिः, ताच्छील्ये णिनिः प्रत्ययः। सुरबन्दीना=सुराणा बन्द्यः सुरबन्द्यः, तासा सुरबन्दीना, "बन्दी परस्य वनिता हृता बद्ध्वा बलेन या" इति भोजः। चामरैः = "चामर तु प्रकीर्णकम्" इत्यमरः। वीज्यते = कर्मणि लट्। अनेन व्यजनानिलाना सुखकरत्वाभावेऽप्यनवरतवीज्यमानत्ववचनेनासुरविजयिनस्तस्य परपीडामात्रतत्परत्वं व्यज्यते। अत्रापि पर्यायोक्तमलङ्कारः।

**भावार्थः**—शयन प्राप्तः स तारकासुरस्तेन बलात्कारेण हृताना देवाङ्गनाना प्रियतमवियोगादिदुःखसन्तप्तदीर्घनिःश्वासवातसदृशवातैर्मुहुर्मुहुः कराभ्यामश्रुपरिमाजर्नात्ताभ्या व्यजनग्रहणाच्चाश्रुबिन्दुवर्षिभिश्चामरैः वीजितो भवतीति भावः।

**भाषा**—जबरदस्ती हरण कर कैद में रक्खी देवाङ्गनायें, प्रियतमवियोग दुःख से गरम गरम निश्वास को छोडती हुयीं, आंख से आसु टपकाती हुयीं, चामरों से सोये हुये तारकासुर को हवा करतीं है।

अथ धनापहरणमाह—

**उत्पाटय मेरुशृङ्गाणि, क्षुण्णानि हरितां खुरैः।**
**आक्रीडपर्वतास्तेन, कल्पिताः स्वेषु वेश्मसु॥ ४३॥**

**रवि-अश्व खुर से चूर्ण, लेकर गिरि सुमेरु विमल शिखर।**
**आक्रोड गिरि अपना बनाया, है असुर ने अति सुघर॥**

**अन्वयः**—तेन हरिता खुरैः क्षुण्णानि मेरुशृङ्गाणि उत्पाटय स्वेषु वेश्मसु आक्रीडपर्वताः कल्पिताः।

**व्याख्या**—तेन = तारकाऽसुरेण, हरिता = सूर्याश्वानाम्, खुरैः = शफैः,

क्षुण्णानि=चूर्णितानि, मेरुश्रृङ्गाणि=सुमेरुशिखराणि, उत्पाट्य = उन्मूल्य, स्वेषु= स्वकीयेषु, वेश्मसु = गृहेषु, आक्रीडपर्वताः = क्रीडाशैलाः, कल्पिताः = कृताः ।

**व्युत्पत्तिः**—हरिता = "हरित् सूर्ये च सूर्याऽश्वे वर्णे च हरिते दिशि" इति विश्वः । खुरैः = "शफं क्लीबे खुरः पुमान्" इत्यमरः । क्षुण्णानि = "क्षुद संचूर्णने" इति धातोः निष्ठायां क्तप्रत्ययः, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति नत्वम् । [ एतेन तेषामत्युन्नतत्वमुत्पाटनसौकार्यञ्च सूचितम् ] मेरु-श्रृङ्गाणि = मेरोः श्रृङ्गाणि मेरुश्रृङ्गाणि, तानि "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरा-लयः" ॥ इति "कूटोऽस्त्री शिखरं श्रृङ्गम्" इति चाऽमरः । वेश्मसु="वेश्म सद्म निकेतनम्" इत्यमरः । आक्रीडन्ते एषु इति आक्रीडाः, ते च ते पर्वताः आ-क्रीडपर्वताः "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः" इत्यमरः । अत्रापि पर्यायो-क्तमलङ्कारः ।

**भावार्थः**—मेरुपर्यन्तभागेनानुदिनं गच्छता रवितुरगाणां शफैश्चूर्णितानि सुमेरोः श्रृङ्गाणि तेन तारकेणोन्मूल्य स्वगृहेषु क्रीडापर्वताः रचिताः सन्तीति भावः ।

**भाषा**—प्रतिदिन गमनकरने वाले सूर्यके घोड़ोके टापके आघात से शिथिल भये हुवे सुमेरु पर्वतके सुवर्णमय शिखरोंको उखाडकर, इस तारकासुरने अपने घरमें क्रीडापर्वत बनायें है ।

अथोपभोगसाधनानां कनकारविन्दानामप्यपहरणमाह—

**मन्दाकिन्याः पयः शेषं, दिग्वारणमदाविलम् ।**
**हेमाऽम्भोरुहसस्यानां, तद्वाप्यो धाम साम्प्रतम् ॥ ४४ ॥**

**अब जाह्नवी का दन्ति मद कलुषित बचा है शेष जल ।**
**उसके सुवर्ण कलित कमल से असुर–वापी है विमल ॥**

**अन्वयः**—साम्प्रतं मन्दाकिन्याः दिग्वारणमदाविलं पयः शेषम् । हेमाऽम्भो-रुहसस्यानां तद्वाप्यः धाम ।

**व्याख्या**—सम्प्रतं = सम्प्रति, मन्दाकिन्याः=आकाशगङ्गायाः दिग्वारण-मदाविलं = दिग्गजदानजलकलुषं, पयः = जलम् एव, शेषं = शिष्टम् । "तर्हि सुवर्णकमलानि कुत्र गतानि" इत्याह—हेमाऽम्भोरुहसस्याना = सुवर्णकमलधा-न्याना, तु तद्वाप्यः = तद्दीर्घिकाः एव, धाम = स्थानम् , आसन् इति शेषः ।

**व्युत्पत्तिः**—साम्प्रतं = सम्प्रति एव साम्प्रतं, "प्रज्ञादिभ्यश्च" इति स्वार्थे प्रकृत्यर्थेऽण् । मन्दाकिन्याः="मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका" इत्य-

मरः । दिग्वारणमदाविलं = दिशा वारणाः दिग्वारणाः, "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इति "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इति चाऽमरः । दिग्वारणाना मदाः दिग्वारणमदाः, तैः आविलं दिग्वारणमदाविलम्, "कलुषोऽनच्छ आविलः" इत्यमरः । पयः = "पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः । शिष्यते इति शेषं, कर्मणि अण् प्रत्ययः । "त्रिष्वन्यत्रोपयुज्यते" इति नपुंसकत्वम् । हेमाऽम्भोरुहसस्यानाम् = अम्भसि रोहन्तीति अम्भोरुहाणि, अम्भ उपपदपूर्वकात् "रुह बीजप्रादुर्भावे" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः, "बिसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च" इत्यमरः । हेम्नः अम्भोरुहाणि हेमाऽम्भोरुहाणि, तानि एव सस्यानि हेमाऽम्भोरुहसस्यानि तेषां हेमाम्भोरुहसस्यानाम्, उत्खातप्रतिरोपणात् सुवर्णपङ्कजेषु सस्यत्वारोपः । तद्वाप्यः = तस्य वाप्यः तद्वाप्यः ।

**भावार्थः**—तारकासुरः स्वर्गङ्गासुवर्णपङ्कजान्युन्मूल्य स्ववापीरचनायामुपयोजितवान्, ततश्च संप्रति दिग्गजमदजलकलुषीकृतं स्वर्गङ्गाजलमेव शिष्टमस्तीति भावः॥

**भाषा**—तारकासुरने मन्दाकिनी के सुवर्णकमलो को उखाडकर अपने तलाब में लगायें है, इसलिये आज कल मन्दाकिनीमे दिग्गजों के मद से मैला भया हुवा जल मात्र अवशिष्ट रह गया है ।

अथ देवानामुपरोधमाह—

**भुवनालोकनप्रीतिः, स्वर्गिभिर्नानुभूयते ।**
**खिलीभूते विमानानां, तदापातभयात्पथि ॥ ४५ ॥**

**खल आक्रमण की भीति से नभ-यान चलते हैं नहीं ।**
**इससे कभी अब लोक दर्शन, देव करते हैं नहीं ॥**

**अन्वयः**—तदापातभयात् विमानाना पथि खिलीभूते सति स्वर्गिभिः भुवनालोकनप्रीतिः न अनुभूयते ॥

**व्याख्या**—तदापातभयात्=तारकाऽसुरसमापत्तिभीतेः, विमानाना = व्योमयानाना, पथि=मार्गे, खिलीभूते = प्रहतीभूते सति, स्वर्गिभिः=स्वर्गवासिभिः देवैरित्यर्थः, भुवनालोकनप्रीतिः=लोकदर्शनप्रेम, न अनुभूयते = नोपयुज्यते ॥

**व्युत्पत्तिः**—तदापातभयात्=आपतनम् आपातः, भावे घञ्प्रत्ययः । तस्य आपातः तदापातः, तस्मात् भयं तदापातभय, "भीत्रार्थाना भयहेतुः"

इत्यपादानसञ्ज्ञा, ततः "अपादाने पञ्चमी" इति पञ्चमी। यद्वा, तदापातभया-दित्यत्र "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी। विमानाना="व्योमयानं विमानोऽस्त्री" इत्यमरः। पथि="अयनं वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः। खिलीभूते=अखिलः खिलः यथा सम्पद्यते तथाभूतः खिलीभूतः, तस्मिन् खिलीभूते, च्विप्रत्ययः। "द्वे खिलाऽप्रहते समे" इत्यमरः। स्वर्गिभिः=स्वर्गः अस्ति येषा ते स्वर्गिणः, तैः स्वर्गिभिः, स्वर्गशब्दात् "अत इनिठनौ" इति इनिप्रत्ययः। भुवनालोकनप्रीतिः=भुवनानाम् आलोकनं भुवनालोकनं, "जगती लोको विष्टपं भुवनं जगत्" इत्यमरः। भुवनालोकने प्रीतिः भुवनालोकनप्रीतिः।

**भावार्थः**—तारकासुरसमापत्तिभयेन विमानमार्गे प्रहतीभूते सति देवैः स्वावस्थितप्रदेशव्यतिरिक्तप्रदेशाना दर्शनप्रीतिर्न प्राप्यत इति भावः।

**भाषा**—तारकासुरके भयसे आकाश मार्गमें देवता लोग विमान पर बैठकर नहीं निकलते हैं।

अथ भोजनस्याप्यपहरणमाह—

**यज्वभिः सम्भृतं हव्यं, विततेष्वध्वरेषु सः।**
**जातवेदोमुखान्मायी, मिषतामाच्छिनत्ति नः॥ ४६॥**

**उस असुर के कारण प्रभो, सुनिये अवल की दीनता।**
**मख में दिये यजमान-कर से हव्य मुख से छीनता॥**

**अन्वयः**—यज्वभिः विततेषु अध्वरेषु सम्भृतं हव्यं मायी सः नः मिषतां जातवेदोमुखात् आच्छिनत्ति॥

**व्याख्या**—यज्वभिः = विधिवत् इष्टवद्भिः, यागं कृतवद्भिः, विततेषु = विस्तृतेषु, अनुष्ठितेषु इत्यर्थः, अध्वरेषु = यज्ञेषु, सम्भृतं = दत्तं, हव्यं = हविः, मायी=मायावी, सः=तारकाऽसुरः, नः = अस्माकं, मिषता=पश्यता, पश्यत्सु सत्सु इत्यर्थः, जातवेदोमुखात् = अग्न्याननात्, आच्छिनत्ति=आक्षिप्य गृह्णाति, अपहरतीत्यर्थः।

**व्युत्पत्तिः**—यज्वभिः=विधिवत्, इष्टवन्तः इति यज्वानः, तैः यज्वभिः, देवपूजाद्यर्थक यजधातोः "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः, "यज्वा तु विधिनेष्टवान्" इत्यमरः। अध्वरेषु="यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः। हव्यं=हूयते यत्तत् हव्यं तत्। मायी=माया अस्ति यस्य सः मायी, "व्रीह्यादिभ्यश्च" इति इनिप्रत्ययः "सौ च" इति सौ 'दीर्घः। 'स्यान्माया

शाम्बरी" इत्यमरः। मिषता=मिषन्तीति मिषन्तः, तेषां मिषता, धातूपसर्गाणामनेकाऽर्थत्वात् "मिषस्पर्धायाम्" इति धातोः दर्शनार्थे शतृप्रत्ययः। मिषताम् इत्यत्र "षष्ठी चाऽनादरे" इति अनादराऽर्थे षष्ठी। स्पर्धमानानस्माननाहत्येत्यर्थः। जातवेदोमुखात्=जातवेदा एव मुखं जातवेदोमुखं, तस्मात् जातवेदोमुखात् "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः।

**भावार्थः**—मायावी तारकासुरः कृतोरुपक्रमे शाठ्याद् विघ्नं नाचरति, किन्तु यजमानैर्यागेषु प्रवृत्तेषु सत्सु, स्पर्धमानानस्माननाहत्य समर्पितं हवनीयद्रव्यमग्निमुखादपहरतीति भावः।

**भाषा**—मायावी तारकासुर धूर्तता से यज्ञके आरम्भमे कोई विघ्न उपस्थित नहीं करता है, किन्तु यज्ञमे यजमान द्वारा दी हुई हमलोगोकी आहुतीको अग्निमुखसे हमलोगोंके देखते देखते हरण कर लेता है।

किं बहुना महेन्द्रस्याश्वरत्नमप्यपहृतं तैनेत्याह—

**उच्चैरुच्चैःश्रवास्तेन, हयरत्नमहारि च।**
**देहवद्धमिवेन्द्रस्य, चिरकालाऽर्जितं यशः॥ ४७॥**

चिर काल से अर्जित शचीपति-सुय सम, गति में हुवा।
उस तारका सुर ने किया है हरण हय उच्चैः श्रवा॥

**अन्वयः**—च तेन उच्चैः उच्चैश्रवाः हयरत्नम् देहबद्धं चिरकालार्जितम् इन्द्रस्य यश इव अहारि॥

**व्याख्या**—च = किंच, तेन=तारकाऽसुरेण, उच्चैः=उन्नतः, उच्चैः श्र वाः= उच्चैःश्रवो नामकं, हयरत्नम् = अश्वरत्नं, देहबद्ध = बद्धदेहं, मूर्तिमदित्यर्थः, चिरकालार्जितं = बहुसमयोपार्जितम्, इन्द्रस्य = मघोनः, यश इव = कीर्तिरिव, अहारि = अपहृतम्।

**व्युत्पत्तिः**—उच्चैःश्रवाः = उच्चैः श्रवः यस्य स उच्चैःश्रवाः, हयरत्नं = हयः रत्नम् इव हयरत्न, यद्वा हयेषु रत्नं हयरत्नं। "वाजिवाहाऽर्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यप्यमरः। देहबद्धं=देह बद्धं यस्य तत् देहबद्धं, "वाहिताग्न्यादिषु" इत्यनेन निष्ठायाः परनिपातः। "कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः। चिरकालार्जितं=चिरं कालाः चिरकालाः, "कालो दिष्टोऽप्यनेहाऽपि समयः" इत्यमरः। चिरकालैः अर्जितं चिरकालार्जितं। यशः="यशः कीर्तिः समज्ञा च" इत्यमरः। अत्रोत्प्रेक्षालङ्कारः।

**भावार्थः**—तारकासुरो महेन्द्रस्य बहुकालसञ्चितं मूर्तिमत् यश इवोन्नतमुच्चैःश्रवा नामाश्वरत्नमपहृतवानिति भावः ।

**भाषा**—तारकासुरने इन्द्रके मूर्तिमान् यशके समान उच्चैःश्रवा नामक अत्युत्तम घोड़े को छीन लिया है ।

तर्हि सामद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

**तस्मिन्नुपायाः सर्वे नः, क्रूरे प्रतिहतक्रियाः ।**
**वीर्यवन्त्यौषधानीव, विकारे सांनिपातिके ॥ ४८ ॥**
**यों तारकासुर में हमारे सब उपाय हुए विफल ।**
**ज्यों सन्निपात विकार में औषध न होते हैं सफल ॥**

**अन्वयः**—क्रूरे तस्मिन् नः सर्वे उपायाः सानिपातिके विकारे वीर्यवन्ति औषधानि इव प्रतिहतक्रियाः भवन्ति ।

**व्याख्या**—क्रूरे = घातुके, तस्मिन्=तारकाऽसुरे, नः = अस्माकं, सर्वे = सम्पूर्णाः, उपायाः = सामादयः, सानिपातिके = सन्निपातभवे, संनिपातदोषत्रयस्य प्रकोपजे इत्यर्थः, विकारे = रोगे ज्वरादौ इत्यर्थः, वीर्यवन्ति = सारवन्ति औषधानि इव = भेषजानि इव, प्रतिहतक्रियाः = निष्फलप्रयोगाः भवन्तीति शेषः ।

**व्युत्पत्तिः**—क्रूरे = "नृशंसो घातुकः क्रूर." इत्यमरः, सानिपातिके = वातपित्तश्लेष्मसमाहारः सन्निपातः, संनिपातात् भवः सानिपातिकः, तस्मिन् सानिपातिके, "संनिपाताच्च" इति ठक्प्रत्ययः, "किति च" इत्यादिवृद्धिः । विकारे= "विकारो रोगविकृती" इति वैजयन्ती । वीर्यवन्ति=वीर्यम् अस्ति येषु तानि वीर्यवन्ति, प्रशंसाया मतुप्प्रत्ययः । "नपुंसकस्य झलचः" इति नुम् । औषधानि = ओषध्य एव औषधानि, स्वार्थे अण्, "भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इत्यमरः । प्रतिहतक्रियाः = प्रतिहता क्रिया येषा ते प्रतिहतक्रियाः । क्रियते या सा क्रिया, "कृञः च" इति शप्रत्ययः । अत्रोपमालङ्कारः ।

सन्निपातज्वरादावौषधाना निष्फलत्वमुक्तं वैद्यशास्त्रे—

"वातपित्तकफाना च सन्निपातो यदा भवेत् ।
तदा जातो ज्वरस्तीव्रो ह्यसाध्यः सर्वभेषजैः ॥" इति ।

**भावार्थः**—दोषत्रयसम्भवे ज्वारादौ महावीर्याण्यौषधानीवास्माकं सर्वेऽप्युपाया घातुके तारकासुरे प्रतिहतशक्तयो जाता इति भावः ।

**कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥**

**खल नाश अर्थ कुमार सम्भव चाहते हम इस तरह ।**
**भव-कर्म-नाशक धर्म को हैं, मोक्ष इच्छुक जिस तरह ॥**

**अन्वयः**—तत् विभो ! मुमुक्षवः भवस्य शान्तये कर्मबन्धच्छिदं धर्मम् इव तस्य शान्तये सेनान्यं स्रष्टुम् इच्छामः ।

**व्याख्या**—तत् = तस्मात् कारणात्, हे विभो ! = हे स्वामिन् !, मुमुक्षवः—मोक्षेच्छवः, भवस्य = संसारस्य, शान्तये = निवृत्तये, कर्मबन्धच्छिदं = क्रियानाशच्छेदकं, धर्मम् इव = सुकृतम् इव = आत्मज्ञानकारणभूतमिति शेषः । तस्य = तारकाऽसुरस्य, शान्तये = नाशाय, सेनान्यं = सेनापतिं, कञ्चित्, स्रष्टुम् = निर्मितुम्, इच्छामः = वाञ्छामः । वयमिति शेषः ॥

**व्युत्पत्तिः**—तत् = इदं तच्छब्दप्रतिरूपकमव्ययम् । मुमुक्षवः = मोक्तुम् = भवं त्यक्तुम् इच्छवः मुमुक्षवः, सन्प्रत्ययान्तात् मुच्लृधातोः "सनाशंसभिक्ष उः" इति उप्रत्ययः । कर्मबन्धच्छिद् = क्रियते यत्तत् कर्म, "कर्म क्रिया" इत्यमरः । कर्म एव बन्धः, "मयूरव्यंसकादयश्च" इति रूपकसमासः । कर्मबन्धं छिनत्तीति कर्मबन्धच्छित् तं कर्मबन्धच्छिदं, क्विप्प्रत्ययः । धर्मं = धरति विश्वम् इति धर्मस्तं धर्मं, "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । "तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय" इति श्रुतेः ज्ञानादेव मुक्तिः सूच्यते । सेनान्यं = सेनां नयतीति सेनानीः, तं सेनान्यं, सेनोपपदपूर्वकात् "णीञ् प्रापणे इति धातोः "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप्रत्ययः । "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः" इति सेनानीर्वाहिनीपतिः" इति "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इति त्रिष्वप्यमरः । अत्रोपमालङ्कारः ।

**भावार्थः**—हे प्रभो ! यथा मुमुक्षवः संसारस्य नाशाय निवृत्तिलक्षणं धर्ममिच्छन्ति, तथा विपद्ग्रस्ता वयं तारकासुरस्य नाशाय देवसेनानायकं निर्मातुमभिलषामः इति भावः ।

**भाषा**—हे प्रभो ! जैसे मुमुक्षुजन संसारके नाश होने के लिये निवृत्ति धर्म की इच्छा करते है, उसी तरह विपत्ति में पडे हुये हम सब भी, तारकासुर के नाश के लिये देवसेनाका अधिनायक उत्पन्न कराना चाहते हैं ।

सेनानीसृष्टेः फलमाह—

**गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित्।**
**प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम्॥ ५२॥**

सुर सैन्य रक्षक गोत्रभित् आगे जिसे कर मोद से।
वन्दीव जय श्री छीन लेंगे असुर-तारक-गोद से॥

**अन्वयः**—सुरसैन्यानां गोप्तारं यं पुरस्कृत्य गोत्रभित् जयश्रियं बन्दीम् इव शत्रुभ्यः प्रत्यानेष्यति॥

**व्याख्या**—सुरसैन्यानां = देवसैनिकानां, गोप्तारं = रक्षकं, यं = सेनान्यं, पुरस्कृत्य = पुरोधाय, अग्रे कृत्वा इत्यर्थः, गोत्रभित् = इन्द्रः, जयश्रियं=विजयलक्ष्मीं, बन्दीम् इव = हठहृतमहिलाम् इव, शत्रुभ्यः=वैरिभ्यः सकाशात्, प्रत्यानेष्यति = प्रत्याहरिष्यति॥

**व्युत्पत्तिः**—सुरसैन्यानां=सेनां समवयन्ति सैन्याः, "सेनाया वा ४।४।४५" इति ण्यप्रत्ययः, "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः। सुराणां सैन्याः सुरसैन्याः, तेषां सुरसैन्यानां, "त्रिदशा विबुधाः सुराः" इत्यमरः। गोप्तारं=गोपायतीति गोप्ता, तं गोप्तारं, "गुपू रक्षणे" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः। पुरस्कृत्य = पुरः कृत्वा इति पुरस्कृत्य, "पुरोऽव्ययम्" इति गतित्वात् "कुगतिप्रादयः" इति गतिसमासः। "नमस्पुरसोर्गत्योः" इति विसर्गस्य सकारश्च। गोत्रभित् = गां=पृथ्वीं त्रायन्ते इति गोत्राः पर्वताः, गोपूर्वकात् "त्रैङ् पालने" इति धातोः "आतोऽनुपसर्गे कः ३।२।३" इति कप्रत्ययः। "आदेच उपदेशेऽशिति" इति ऐकारस्य आत्वम्। "अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः। गोत्रान् भिनत्तीति गोत्रभित्, "सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा" इत्यमरः। जयश्रियं=जयस्य श्रीः जयश्रीः, तां जयश्रियं, "सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः। शत्रुभ्यः = ध्रुवमपायेऽपादानम् इत्यपादानसंज्ञा, "अपादाने पञ्चमी" इति पञ्चमी, "द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः" इत्यमरः। अत्रोपमालङ्कारः॥

**भावार्थः**—यादृशेन सेनानायकेन महेन्द्रो दुर्दान्तशक्तिं सम्पाद्य स्वयमेव हठहृतमहिलामिव शत्रुवशवर्तिनीं देवलक्ष्मीं प्रत्यानेतुं समर्थो भवेत्, तादृशः सेनानीः भवता सृज्यतामिति भावः।

**भाषा**—जिस सेनापतिके द्वारा महेन्द्र अपनी दुर्दान्त शक्तिको बढ़ाकर शत्रु

के वशीभूत देवलक्ष्मीको वापस लाने मे स्वयं समर्थ हो जाय, ऐसे सेनापति की सृष्टि आपको करनी चाहिये ।

अथ ब्रह्मणः प्रतिवचनमाह—

**वचस्यवसिते तस्मिन्ससर्ज गिरमात्मभूः ।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५३ ॥**

**गुरु के वचन सुन विधि गिरा निकली सरस पावन भली ।**
**घन की गरज के बाद उसने वृष्टि-शोभा जीतली ॥**

**अन्वयः**—तस्मिन् वचसि अवसिते सति आत्मभूः गिरं ससर्ज । सा सौभाग्येन गर्जिताऽनन्तरा वृष्टिं जिगाय ॥

**व्याख्या**—तस्मिन्=बार्हस्पत्ये, बृहस्पतेरित्यर्थः, वचसि=वचने, अवसिते=परिसमाप्ते सति, आत्मभूः=ब्रह्मा, गिरं=वाणीं, ससर्ज=उत्पादयामास, जगादेत्यर्थः । सा = गीः, सौभाग्येन=मनोहरत्वेन, गर्जिताऽनन्तरा = गर्जिताऽनुप्रवृत्ता, वृष्टिं=वर्षं, जिगाय = जितवती ॥

**व्युत्पत्तिः** – वचसि="व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः । आत्मभूः=आत्मना भवतीति आत्मभूः, "ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरः । गिरं="ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती" इत्यमरः । ससर्ज – "सृज विसर्गे" इति धातोर्लिट् । गर्जिताऽनन्तरा = गर्जितात् गर्जितस्य वा अनन्तरा गर्जिताऽनन्तरा, तां गर्जितानन्तरा, "स्तनित गर्जितं मेघनिर्घोषे रसितादि च" इत्यमरः । वृष्टिं="वृष्टिर्वर्षम्" इत्यमरः । जिगाय = "जि जये" इति धातोर्लिट् । सन्लिटोर्जेः" इति कुत्वम् । अत्राप्युपमालङ्कारः ।

**भावार्थः**—बृहस्पतिवचनानन्तरं ब्रह्मा या वाचं जगाद, सा वाक् अम्भोधरस्तनितानन्तरं सम्भूता वृष्टिं सुभगत्वेनाजैषीत् इति भावः ।

**भाषा**—इस तरह बृहस्पतिके कथनके उपरान्त ब्रह्मदेवजीने कही हुयी वाणी मेघके गरजने पर होनेवाली वृष्टि के समान सुन्दर मालूम होती थी ।

तामेव गिरं प्रपञ्चयति—

**सम्पत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।**
**न त्वस्य सिद्धौ यास्यामि, सर्गव्यापारमात्मना ॥ ५४ ॥**

**इच्छा तुम्हारी पूर्ण होगी, पर रुको कुछ दिन समय ।**
**नाशार्थ उसके सृष्टि कर सकता स्वयं न किसी समय ॥**

**अन्वयः**—अयं वः कमः सम्पत्स्यते, कश्चित्, कलः प्रतीक्ष्यताम् । तु अस्य सिद्धौ आत्मना सर्गव्यापारं न यास्यामि ॥

**व्याख्या**—हे देवाः! अयं, वः=युष्माकं, कामः=अभिलाषः, सम्पत्स्यते=सेत्स्यति, कश्चित्=कियानपि, कार्यसाधनक्षमः, कालः=समयः, प्रतीक्ष्यताम्=प्रतीक्षा क्रियताम् । तु=किन्तु, अस्य=कामस्य, सेनान्यो वा, सिद्धौ=निष्पत्तौ विषये, आत्मना=स्वयं, सर्गव्यापारं,=सृष्टिक्रिया, न यास्यामि=न गमिष्यामि, नाहं स्रक्ष्यामीत्यर्थः ।

**व्युत्पत्तिः**—कामः=काम्यते अयम् इति कामः, "कामोऽभिलाषस्तर्षश्च" इत्यमरः । सिद्धौ=अत्र वैषयिकी सप्तमी । सर्गव्यापारं=सर्ग एव व्यापारः सर्गव्यापारः, तं सर्गव्यापारं । यास्यामि='या गतौ" इति धातोः "लृट् शेषे च" इति लृट् ।

**भावार्थः**—युष्माकं सेनानीप्राप्तिरूपो मनोरथः सिद्धिं यास्यति, किन्तु कार्यसाधनक्षमः कश्चन समयःप्रतिपाल्यताम्, भवत्कार्यसिध्यर्थमहमात्मांशेनैवात्मानं तु न स्रक्ष्यामि, इति भावः ।

**भाषा**—हे देवलोक ! आपकी सेनापतिकी प्राप्तिकी इच्छा पूरी होगी, किन्तु इस कार्यके सिद्धि होनेमें थोड़े दिनकी प्रतीक्षा करनी होगी । क्यों कि तारकासुरको मारने के लिये हम अपने अंश को स्वयं उत्पन्न नही करसकते है ।

अत्र कारणमाह—

> **इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
> **विषवृक्षोऽपि संवर्द्ध्य, स्वयं छेत्तुमसाम्प्रतम् ॥ ५५ ॥**
> **मैं ने दिया वरदान फिर मारूं कदापि उचित नहीं ।**
> **विष तरु लगाकर भी उसे, है काटना समुचित नहीं ॥**

**अन्वयः**—इतः प्राप्तश्रीः सः दैत्यः इतः एव क्षयं न अर्हति । विषवृक्षः अपि संवर्द्ध्य स्वयं छेत्तुम् असाम्प्रतम् ॥

**व्याख्या**—इतः=अस्मात्, मत्त इत्यर्थः, प्राप्तश्रीः=लब्धोदयः, सः, दैत्यः=दानवः, तारकाऽसुर इत्यर्थः, इत एव=मत्त एव, क्षयं=नाशं, न अर्हति=न योग्यो भवति । विषवृक्षोऽपि=गरलतरुरपि, संवर्द्ध्य=सम्यग् वर्द्धयित्वा, कुतश्चित्कारणादिति शेषः, स्वयम्=आत्मना एव, छेत्तुं=नाशमाप्तुं असाम्प्रतम्=अयुक्तम् । साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ।

**व्युत्पत्तिः**—इतः=अस्मात् इति इतः, पञ्चम्यर्थे तसिः। प्राप्तश्रीः=प्राप्त श्री येन सः प्राप्तश्रीः। दैत्यः = दितेरपत्य पुमान् दैत्यः, दितिशब्दात् "दित्यदित्यादित्य पत्युत्तरपदाण्ण्यः" इति ण्यप्रत्ययः, "तद्धितेष्वचामदेः" इति आदिवृद्धिश्च, "असुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः" इत्यमरः। क्षयं="क्षि क्षये" इति धातोः "एरच्" इति अच् प्रत्ययः। विषवृक्षः=विषस्य वृक्षः विषवृक्षः। विषवृक्षो नाम प्राणिना मरणप्रदो वृक्षविशेषः। तदुक्तम्—

"यस्य स्पर्शनमात्रेण वायुसंस्पर्शनेन वा।
म्रियन्ते जन्तःसर्वे विषवृक्षः स कीर्तितः॥" इति।

छेत्तुम् इत्यत्र क्रियार्थकक्रियायामन्वयात्। अत्र द्वितीयाविभक्तौ प्राप्तायामपि असाम्प्रतमित्यनेन निपातेत अभिहितत्वात् द्वितीयान्तो न भवति, अनुक्ते कर्मणि द्वितीयाविधानात्। यथाह वामनः–"निपातेनाप्यभिहिते कर्मणि न विभक्तिः, परिगणनस्य प्रायिकत्वात्" तथा चोक्तं कौमुद्या दीक्षितेनापि "क्वचिन्निपातेनाभिधान" मिति। "क्ष्वेडस्तु गरल विषम्" इत्यमरः। संवर्द्ध्य=समुपसर्गपूर्वकात् "वृधु वृद्धौ" इति धातोः क्त्वाप्रत्ययः, तस्य स्थाने ल्यप् च। असाम्प्रतं=न साम्प्रतम् असाम्प्रतं "युक्ते द्वे साम्प्रत" मित्यमरः।

अत्र विशेषस्य सामान्येन समर्थनात् अर्थान्तरन्यासोऽलङ्कारः।

**भावार्थः**—मया दत्तवरस्य तारकासुरस्य मयैव हननमनुचितम्। कुतश्चेत् यदि केनचित् पुरुषेण प्राणिना मरणप्रदोऽपि विषवृक्षो येन केनापि प्रकारेण वर्धितो भवेत्, तर्हि तस्यापि तत्पुरुषकर्तृको नाशो न युज्यत इति भावः।

**भाषा**—अपने हाथसे लगाया जहरका पेडभी अपनेही हाथसे काटना जिस तरह अनुचित है, ऐसेही हमारे वरसे बढ़ा हुवा तारकासुरदैत्य हमसे ही नाश पानेके योग्य नही है।

तस्य स्वयं हनने मम प्रतिज्ञाभङ्गोऽपि भवेदित्याह—

**वृतं तेनेदमेव प्राङ् मया चाऽस्मै प्रतिश्रुतम्।**
**वरेण शमित लोकानलं दग्धुं हि तत्तपः॥ ५६॥**

उसकी प्रथम था प्रार्थना मैं सुर अवध्य रहूँ सदा।
स्वीकार कर तप-ताप से जग को बचाया था तदा॥

**अन्वयः**—प्राक् तेन इदम् एव वृतं, मया च अस्मै प्रतिश्रुतम्। हि लोकान् दग्धुम् अलं तत्तपः वरेण शमितम्।

**व्याख्या**—प्राक्=पूर्वं, तेन = तारकाऽसुरेण, इदम् एव = देवैः अवध्यत्वम् एव, वृतं =प्रार्थितं, मया च=ब्रह्मदेवेन च, अस्मै =तारकाऽसुराय, प्रतिश्रुत= प्रतिज्ञातम् । हि=यस्मात्कारणात् , लोकान् = भुवनानि, दग्धुं = भस्मीकर्तुम् , अलं=समर्थ, तत्तपः=तारकाऽसुरतपः, वरेण—वरदानेन, शमितं=शान्ति नीतम्, ।

**व्युत्पत्तिः**—वृतं="वृञ् वरणे" इति धातोः क्तप्रत्ययः अस्मै=प्रतिश्रुतम्, इत्यत्र अन्वयात् "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदानत्वाचतुर्थी । दग्धुं = "दह भस्मीकरणे" इति धातोः "पर्याप्तिवचनेष्वलमर्थेषु" इति तुमुन प्रत्ययः । तत्तपः=तस्य तपः तत्तपः । शमितं = शमु उपशमे इति धातोर्णिजन्ता न्निष्ठाया "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति पाक्षिकः इडागमः ।

"वरेणाशमित" मिति युक्तः पाठः । तत्तपः वरेण अशमितं सत् लोकान् दग्धुमलमिति हि तस्यार्थः । यथोक्तं श्री भगवते हिरण्यकशिपोस्तपःप्रसङ्गे—

"तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधो लोकानतपद् विश्वगीरितः ॥" इति. स्क ७अ. ३श्लो. ४—

अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थनिष्पादकत्वेन काव्यलिङ्गमलङ्कारः । तदुक्तं साहित्यदर्पणे—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति । "निष्पादको हेतुः काव्यलिङ्गस्य विषय" इति च तत्रैव ।

**भावार्थः**—स तारकासुरो वरप्रदानसमये तपसा सन्तुष्ट मा प्रति मत्तोऽवध्यत्वमेवाभ्यर्थितवान्, तथाऽस्त्विति मया तं प्रत्यनुज्ञातश्च । यदि तदा तदभ्यर्थित वरं नादास्यं, तर्हि तस्य मूर्धानं निर्भिद्य निर्गतस्तपोमयो वह्निः सर्वानपि लोकान् भस्मसादकरिष्यदिति भावः ।

**भाषा**—तारकासुरके घोर तपश्चर्या से खुश होकर हमने उसको न मारने की प्रतिज्ञा की है । अगर ऐसा वर न देते तो उसके ब्रह्मरन्ध्र से निकलने वाले तपोमय अग्नि से सकल लोक भस्म हो जाता ।

अथापत्प्रतीकारोपाय दर्शयितुमारभते—

**संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः ।**
**अंशादृते निषिक्तस्य, नीललोहितरेतसः ॥ ५७ ॥**

**वह युद्ध तत्पर तारकासुर समर-कुशल अपार है ।**
**कोई गिरिश-सुत के विना उसको न सकता मार है ॥**

**अन्वयः**—संयुगे उद्यतं सांयुगीनं तं निषिक्तस्य नीललोहितरेतसः अंशात् ऋते कः प्रसहेत ।

**व्याख्या**—संयुगे=युद्धे, उद्यतं=व्याप्रियमाणं तत्परम् इत्यर्थः, सांयुगीनं=रणसाधुं, तं=तारकाऽसुरं, निषिक्तस्य=क्षरितस्य स्त्रीयोनौ प्रजार्थमाहितस्येत्यर्थः, नीललोहितरेतसः=शिवशुक्रस्य, अंशात् ऋते=भागं विना, कः, प्रसहेत=सोढुं शक्नुयात्, अभिभवेद्वा ।

**व्युत्पत्तिः**—संयुगे="सम्प्रहाराऽभिसम्पातकलिसंस्फोटसंयुगाः" इत्यमरः । सांयुगीनं=संयुगे साधुः सांयुगीनः, तं सांयुगीनं, संयुगशब्दात् "प्रतिजनादिभ्यः खञ्" इति खञ्प्रत्ययः, खस्य "आयनेयीनीयियः" इत्यादिना ईनादेशः । नीललोहितरेतसः="नीलः कण्ठे लोहितश्च केशेष्विति नीललोहितः" इति पुराणप्रसिद्धिः । "कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः" इत्यमरः । नीललोहितस्य रेतः नीललोहितरेतः, तस्य नीललोहितरेतसः । "शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इत्यमरः । अंशात्="ऋते' शब्देन योगे "अन्यारादितरर्ते दिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । कः प्रसहेत=प्रोपसर्गपूर्वकात् "षह मर्षणे" इति धातोः लिङि रूपम् । "धात्वादेः षः सः" इति षस्य सत्वम् । "प्रसहनमभिभवः" इति च वृत्तिकारः । नान्यः कोऽपीति काकुवक्रोक्तिः ।

**भावार्थः**—संग्रामे व्याप्रीयमाणं युद्धविशारदं तारकासुरं क्वचित् स्त्रीयोनौ क्षरितस्य हरवीर्यस्याऽशाद्विनाऽन्यः कः सोढुं शक्नुयात् । न कोऽपीत्यर्थः ।

**भाषा**—युद्धभूमि में लड़ने वाले युद्धविशारद तारकासुरका नाश, किसी स्त्री में शङ्कर के द्वारा उत्पन्न होने वाले शङ्कर के अंश के सिवाय, दूसरा कोई नहीं कर सकता है ।

कथमसौ हर ईदृक्शक्तिरित्याह—

**स हि देवः परं ज्योतिस्तमः पारे व्यवस्थितम् ।**
**परिच्छिन्नप्रभावर्धिर्न मया न च विष्णुना ॥ ५८ ॥**

वे शिव तमोगुण से परे उत्कृष्ट ज्योति स्वरूप हैं ।
मुझसे यथा हरि से अगम शुचि विविध उनके रूप हैं ॥

**अन्वयः**—हि यतः स देवः तमःपारे व्यवस्थितं परं ज्योतिः अस्ति । अत एव मया विष्णुना च परिच्छिन्नप्रभावर्द्धिः न भवति ।

**व्याख्या**—हि यतः=यस्मात्कारणात् स देवः=नीललोहितः, शङ्कर इत्यर्थः,

तमःपारे=तमोगुणपरतः, व्यवस्थित = प्रतिष्ठितं, तमोगुणाऽतीतमित्यर्थः । परं देश कालाद्यनवच्छिन्नं ज्योतिः=तेजः, परमात्मास्तीति शेषः । अत एव मया— ब्रह्मणा, विष्णुना च नारायणेन च, परिच्छिन्नप्रभावर्द्धिः=ज्ञातसामर्थ्यसम्पत्तिः, न भवतीत्यर्थः ।

**व्युत्पत्तिः**—देवः=दीव्यतीति देवः । तमःपारे = तमस = अविद्यायाः पारं तमःपार, तस्मिन् तमःपारे । विष्णुना = "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" इत्यमरः । परिच्छिन्नप्रभावर्द्धिः = प्रभावस्य ऋद्धिः प्रभावर्द्धिः परिच्छिन्ना प्रभावर्द्धिः यस्य सः परिच्छिन्नप्रभावर्द्धिः ।

हरतेजसामन्तमवगन्तुं हंसमारुह्य प्रजापतिरूर्ध्वं गतः । विष्णुस्तु भूदाररूपमादायाधोभागं गतः । बहुदिव्यसवत्सरं गत्वराभ्यामुभाभ्यामपि न तदन्तोऽवगत इति पौराणिकी कथात्रानुसन्धेया । तदुक्तम्—

"नोर्ध्वं गम्यः सरसिजभुवो नाप्यधः शार्ङ्गपाणे" रिति ।

**भावार्थः**—स हि देवो हरः देशकालाद्यनवच्छिन्नमुत्कृष्टं तेजः, अविद्यायाः परस्तात् स्थितश्चास्ति । यतो भगवान्नारायणोऽहं चेत्युभावप्यावां तस्य हरस्य महिम्नः समृद्धिमियत्तया परिच्छेत्तुं नालमभूवेति भावः ।

**भाषा**—वह शङ्कर भगवान् निरवच्छिन्न तेज है, और अविद्या के परे है, क्योंकी हम और विष्णु दोनों उस शङ्कर के महिमा के समृद्धि का पता नहीं लगा सके थे ।

सम्प्रति तदंशोत्पत्तावुपायं दर्शयति—

**उमारूपेण ते यूयं संयमस्तिमितं मनः**
**शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥**

मन पार्वती छवि पर खिचे, कैलास पति का इस तरह ।
हे देव ! चुम्बक से सदा, है लौह खिचता जिस तरह ॥

**अन्वयः**—ते यूयं सयमस्तिमित शम्भोः मनः उमारूपेण अयस्कान्तेन लोहवत् आक्रष्टुं यतध्वम् ।

**व्याख्या**—ते = कार्यार्थिन इत्यर्थः, यूयं = देवाः, सयमस्तिमितं = समाधिनिश्चलं, शम्भोः = शिवस्य, मनः=चित्तम् , उमारूपेण = पार्वतीसौन्दर्येण, अयस्कान्तेन = चुम्बकमणिना, लोहवत = अयोधातुम् इव आक्रष्टुम् = आहर्तुं, यतध्वम्=यत्नं कुरुत ।

व्युत्पत्तिः—सयमस्तिमितं = रागद्वेषादिविरहः सयमः, संयमेन स्तिमितं संयमस्तिमितं, तत्, शम्भोः=“शम्भुरीशः पशुपतिः शिव. शूली महेश्वरः” इत्यमर. । मनः = “चित्त तु चेतो हृदय स्वान्त हृन्मानसं मनः” इत्यमरः । उमारूपेण=उमायाः रूपम् उमारूपं, तेन उमारूपेण, “उमा कात्यायनी गौरी काली हैमवतीश्वरी” इत्यमरः । “रूप स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थावृतौ नाटकादावाकारश्लोकयोरपि” इति विश्वः । अयस्कान्तेन=“कस्कादिषु च” इति सकारः । लोहवत्=लोहमिव लोहवत् ।

अत्र द्वितीयान्तात् “तत्र तस्येव” “तेन तुल्यं क्रिया चेद्वतिः” इति सूत्राभ्यां सप्तम्यन्ततृतीयान्ताद्विहितो वतिप्रत्ययश्चिन्त्य” इति मल्लिनाथस्तन्न । सूत्रयोस्तत्र, तेनेति वा पदं सर्वविभक्त्यर्थानन्तर्भावयतीति कैयटपदमञ्जर्योः प्रतिपादितत्वात् । तथा च ब्राह्मणमिव ब्राह्मणवत् भवन्तं पश्यामीति द्वितीयार्थे वतिरुदाहृतः । अत्र प्रमाणं तु “पूर्ववत् सनः” सूत्रे भगवता पाणिनिना पूर्वस्मादिव पूर्ववत् इति पञ्चम्यर्थेऽपि वतिप्रत्ययस्य निर्देशः कृतः । अन्यथा सप्तम्यन्ततृतीयान्ताभ्यामेव वतिप्रत्ययस्य विधानेन पूर्ववदिति निर्देशानुपपत्तिरित्यलमुपजीव्यविरोधेन ।

यतध्वं = “यती प्रयत्ने” इति धातोर्लोटि रूपम् । अत्रोपमाऽलङ्कारः ।

**भावार्थः**—सेनानीसर्गद्वारेणापत्प्रतीकारं प्रार्थयमानो यूय रागद्वेषादिविरहेण निश्चलं हरस्य चित्तमयस्कान्तमणिना लोहधातुमिव पार्वतीसौन्दर्येणाहर्तुं यत्नं कुरुतेति भावः ।

**भाषा**—किसी योग्य सेनापति की उत्पत्ति कराकर तारकासुर का नाश करने की प्रार्थना करने वाले आप लोग “लोहचुम्बक से लोहधातु की तरह” पार्वती के सौन्दर्य से रागद्वेषरहित, शङ्कर के स्थिरचित्त का आकर्षण करने के लिये प्रयत्न करें ।

निषेक प्रत्यधिकरणान्तरस्यायोग्यत्वं दर्शयति—

**उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।**
**सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥**

मेरे तथा शिव-तेज को है कौन जो सुख से धरे ।
पर शिव सलिलमय मूर्ति अथवा पार्वती धारण करे ॥

**अन्वयः**—उभयोः शम्भोः मम वा आहितं बीज वोढुं, क्रमेण शम्भोः सा वा, मम च तदीया जलमयी मूर्तिर्वा, उभे एव क्षमे ।

**व्याख्या**—उभयोः=द्वयोः, शम्भोः = शङ्करस्य, मम वा = ब्रह्मणः वा,

आहितं=निषिक्तं, बीजं=वीर्यं, वोढु,=धारयितुं क्रमेण, शम्भोः, सा वा= पार्वती वा, मम च, तदीया=तत्सम्बन्धिनी, जलमयी=तोयरूपिणी, मूर्त्तिर्वा= तनुर्वा, उभे एव=द्वे एव, क्षमे=समर्थे । नान्याः स्त्रिय इत्यर्थः ।

**व्युत्पत्तिः**—बीजं="शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इत्यमरः । तदीया=तस्य इयं तदीया, तच्छब्दाच्छप्रत्ययः । जलमयी=जलं रूपं यस्याः सा जलमयी, स्वरूपाऽर्थे मयट्प्रत्ययः, टित्वान्ङीप् । मूर्तिः="मूर्तिः काठिन्यकाययोः" इत्यमरः । वाशब्दो द्वन्द्वाऽर्थे, न तु अन्याऽर्थे । एतदेवोदाहृत्येत्थमेव व्याख्यातं गणव्याख्याने इति मल्लिनाथः ।

अत्र दीपकाऽलङ्कारः । प्रस्तुतयोः उमामहेश्वरयोः, अप्रस्तुतयोः ब्रह्मजलमूर्त्योश्च औपम्यस्य व्यङ्ग्यत्वात् । यथाह—"प्रस्तुतानामप्रस्तुताना चोपम्यस्य गम्यत्वे दीपकम्" इति । नेय तुल्ययोगिता, तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन च उत्थानादिति ।

**भावार्थः**—उभाभ्या निषिक्तमुभयोर्विर्यं धर्तुं शम्भोः सा पार्वती, मम च तदीया जलमूर्तिरित्युभे एव यौषितौ क्षमे । नान्याः स्त्रिय इति भावः ।

**भाषा**—शङ्कर से निषिक्त विर्य का धारण करने के लिये सिवाय पार्वती के, और हमारे निषिक्त वीर्य का धारण करने के लिये तदीय जलमयी मूर्ति के सिवाय दूसरी स्त्री समर्थ नही हो सकती है ।

एवं कृते सति युष्माकं सिद्धिरवश्यम्भाविनीत्याह—

**तस्यात्मा शितिकण्ठस्य, सेनापत्यमुपेत्य वः ।**
**मोक्ष्यते सुरवन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥**

**शिव पुत्र सेनापति तुम्हारा हो हरेगा दुख तुरत ।**
**देवस्त्रियों के कैद का मोचन करेगा दुख तुरत ॥**

**अन्वयः**—तस्य शितिकण्ठस्य आत्मा वः सैनापत्यम् उपेत्य वीर्यविभूतिभिः सुरबन्दीना वेणीः मोक्ष्यते ।

**व्याख्या**—तस्य=प्रसिद्धस्य । श्रुतिस्मृतिपुराणादिप्रसिद्धस्येत्यर्थः, । शितिकण्ठस्य=नीलकण्ठस्य, महादेवस्येत्यर्थः । आत्मा=पुत्रः, वः=युष्माकं, सैनापत्यं=सेनापतित्वम्, उपेत्य=प्राप्य, वीर्यविभूतिभिः=पराक्रमसम्पत्तिभिः, सुरबन्दीना=देवप्रग्रहस्त्रीणा, वेणीः=कचोच्चयान्, मोक्ष्यते=विस्रंसयिष्यति ।

**व्युत्पत्तिः**—शितिकण्ठस्य=शितिः कण्ठः यस्य सः शितिकण्ठः, तस्य

शितिकण्ठस्य । "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्" इत्यमरः। आत्मा= "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदा शतम्" इति श्रुतेः । सैनापत्यं=सेनाना पतिः सेनापतिः, तस्य भावः सैनापत्यं, तत्, सेनापतिशब्दात् "पत्यन्तपुरोहितादिभ्यो यक्" इति यक्प्रत्ययः, "किति च" इति आदिवृद्धिश्च । वीर्यविभूतिभिः=वीर्यस्य विभूतयः वीर्यविभूतयः, ताभिः वीर्यविभूतिभिः, "विभूतिर्भूतिरैश्वर्यम्" इत्यमर । सुरबन्दीना = सुराणा बन्द्यः सुरबन्द्यः, तासा सुरबन्दीना । वेणीः="वेणिप्रवेणी" इत्यमरः ।

भर्तृविरहिता हि पतिव्रताः कुलस्त्रियः स्वकेशान् भर्तृसमागमपर्यन्त दृढ निबध्नन्तीति सदाचारः । अत्र "कार्यभूतेन वेणीविश्लेषणेन कारणभूतस्तारकासुरवधः प्रतीयत" इति पर्यायोक्तमलङ्कारः ।

**भावार्थः**—तस्य नीलकण्ठस्यात्मजो युष्माक सेनापतित्व प्राप्य स्वपराक्रमातिशयैस्तारकासुरेण बलादाहृताना देवाङ्गनाना सश्लिष्टकेशान् विश्लेषयिष्यतीति भावः ।

**भाषा**—उस शङ्कर का पुत्र आप लोगों का सेनापति बनकर, अपने उत्कृष्ट पराक्रम से, तारकासुर ने जबरदस्ती से हरण की हुई देवाङ्गनाओं के उलझे हुए केशपाशों को सुलझावेगा, अर्थात् वह तारकासुरको मारेगा ।

अथ प्रकरणमुपसंहरति—

> **इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।**
> **मनस्याहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२ ॥**
> **विधि ने कहा इस तरह सबसे, फिर गये निज धाम को ।**
> **कर्त्तव्य निश्चय कर, सकल सुर भी, गये सुरधाम को ॥**

**अन्वयः**—विश्वयोनिः विबुधान् इति व्याहृत्य तिरोदधे । ते देवा अपि मनसि आहितकर्तव्याः सन्तः दिवं ययुः ।

**व्याख्या**—विश्वयोनिः=ससारहेतुः, ब्रह्मदेव इत्यर्थः । विबुधान्=देवान्, इति=पूर्वोक्तं, व्याहृत्य=उक्त्वा, तिरोदधे=अन्तर्हितवान् । ते, देवा अपि= सुरा अपि, मनसि=हृदये, आहितकर्तव्याः=समारोपितकार्याः सन्तः, दिवं= स्वर्गं, ययुः=प्रापुः ।

**व्युत्पत्तिः**—विश्वयोनिः=विश्वस्य योनिः, "योनिः स्त्रीणा भगस्थाने कारणे तन्त्रिके पणे" इति वैजयन्ती । विबुधान् = विशेषेण बुध्यन्ते इति विबुधाः, तान्

विबुधान् । "त्रिदशा विबुधाः सुराः" इत्यमरः । आहितकर्तव्याः = कर्तुं योग्य कर्तव्यं, "डुकृञ् करणे" इति धातोः "तव्यत्तव्यानीयरः" इति तव्यत् प्रत्ययः । आहित कर्त्तव्यं यैस्ते आहितकर्तव्याः । अनन्तरकरणीय मनसा निश्चित्येत्यर्थः । दिवं = "सुरलोको द्योदिवौ द्वे स्त्रिया, क्लीबे त्रिविष्टपम्" इत्यमरः ।

**भावार्थः**—जगतः कर्ता ब्रह्मा सुरान् पूर्वोक्तप्रकारेणोक्त्वाऽन्तर्हितोऽभूत् । तेऽपि सुराः अनन्तरकरणीयं मनसा निश्चित्य स्वर्गं जग्मुरिति भावः ।

**भाषा**—जगत् का निर्माण करने वाले ब्रह्माजी देवताओं से इस प्रकार कह-कर गुप्त होगये । वे देवता भी आगे जो करना है उसका मनमें निश्चय करके स्वर्ग को चले गये ।

अथ पार्वतीपरमेश्वरसङ्गमोपायानुष्ठानरूपमुत्तरसर्गार्थं बिन्दुमुपक्षिपति—

**तत्र निश्चित्य कन्दर्पमगमत्पाकशासनः ।**
**मनसा कार्यसंसिद्धौ, त्वराद्विगुणरंहसा ॥ ६३ ॥**

**उसमें सहायक काम को समझा अमरपति ने सफल ।**
**अत्यन्त उत्सुकता लिये रतिनाथ-ध्यान किया अटल ॥**

**अन्वयः**—पाकशासनः तत्र निश्चित्य कार्यसंसिद्धौ त्वराद्विगुणरंहसा मनसा कन्दर्पम् अगमत् ।

**व्याख्या**—पाकशासनः=इन्द्रः, तत्र = दिवि, निश्चित्य = सम्यगवधार्य, कार्यसंसिद्धौ = कर्मनिष्पत्तौ । हरगौरीसमागमरूपायामिति शेषः, त्वराद्विगुणरंहसा= औत्सुक्यद्विरावृत्तवेगेन, मनसा = चित्तेन, कन्दर्पं = कामदेवम्, अगमत् = अयात् । समीपागमनार्थं सस्मारेत्यर्थः ।

**व्युत्पत्तिः**—पाकशासनः=पाकं शासयति पाकशासनः, पाकोपपदपूर्वकात् णिजन्तात् "शासु अनुशिष्टौ" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति नन्द्यादित्वाल्ल्युप्रत्ययः, 'युवोरनाकौ" इति तस्य अनादेशः । "इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः" इत्यमरः । तत्र=तस्मिन् इति तत्र, "सप्तम्यास्त्रल्" इति त्रल्प्रत्ययः । निश्चित्य=करिष्यमाणमुपायानुष्ठान मन्त्रिभिः सह संमन्त्र्येत्यर्थः । कार्यसंसिद्धौ=सम्यक् सिद्धिः संसिद्धिः, गतिसमासः । कार्यस्य संसिद्धिः कार्यसंसिद्धिः, तस्या कार्यसंसिद्धौ । त्वराद्विगुणरंहसा=द्वौ गुणौ=आवृत्ती, यस्य तत् द्विगुणं, "गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । त्वरया = सम्भ्रमेण, औत्सुक्येन वा, द्विगुणं=प्रवृद्धं, त्वराद्विगुणं रंहः यस्य तत् त्वराद्विगुण-

रंहः, तेन त्वराद्विगुणरंहसा । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । कन्दर्पं = "कम्" इति अव्ययं कुत्सायाम् । कुत्सितः दर्पः यस्य सः कन्दर्पः, तं कन्दर्पं, "कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मर" इत्यमरः । अगमत् = "गम्लृ गतौ" इति धातोर्लुङ् । लृदित्वात् च्लेः "पुषादिद्युताद्यलृदितः परस्मैपदेषु" इति अङादेशः ।

**भावार्थः**—इन्द्रः स्वर्गे करिष्यमाणमुपायानुष्ठानं देवैः सम्यगवधार्य स्वाभिलषितस्य सेनानीलाभरूपस्यार्थस्य स्वमनोरथानुरूपे लाभे त्वरया प्रवृद्धवेगेन मनसा मदनं सस्मारेति भावः ।

**भाषा**—स्वर्ग में जाकर इन्द्र ने देवताओं के साथ सलाह कर स्वमनोरथानुरूप सेनापति के प्राप्ति के लिये त्वरा रखने वाले अत्यन्त वेग शील मन से कामदेव का स्मरण किया ।

अथोपक्षिप्तस्योत्तरसर्गबिन्दोराविर्भावं दर्शयति—

**अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं**
**रतिवलयपदाङ्के चापमासज्य कण्ठे ।**
**सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः**
**शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥**

**निज धनुष स्त्री-भ्रू सम लिया रतिवलय चिह्नित कण्ठ में ।**
**आ साथ ऋतुपति काम बोला देव ! क्या आज्ञा हमें ॥**

**अन्वयः**—अथ स पुष्पधन्वा ललितयोषिद्भ्रूलताचारुशृङ्गं चापं रतिवलयपदाङ्के कण्ठे आसज्य सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः प्राञ्जलिः सन् शतमखम् उपतस्थे ।

**व्याख्या**—अथ=अनन्तरं, स्मरणाऽनन्तरमित्यर्थः, सः=स्मृतः, पुष्पधन्वा=कुसुमकार्मुकः, कामदेव इत्यर्थः, ललितयोषिद्भ्रूलताचारुशृङ्गं=सुन्दरस्त्री भ्रूततिमनोहरकोटि, चापं=धनुः, रतिवलयपदाऽङ्के=कामप्रियाकङ्कणस्थानचिह्ने, कण्ठे=गले, आसज्य=आरोप्य, स्थापयित्वेत्यर्थः । सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः=सखिवसन्तकराऽर्पितरसालङ्कुरायुधः, प्राञ्जलिः=कृताञ्जलिः सन्, शतमखं = शतमन्युम्, इन्द्रमित्यर्थः, उपतस्थे = सङ्गतवान् ।

**व्युत्पत्तिः**—पुष्पधन्वा=पुष्पं धनुर्यस्य सः पुष्पधन्वा, "वा संज्ञायाम्" इति समासान्तः अनङ्, "सर्वनामस्थाने चाऽसम्बुद्धौ" इति दीर्घः । "पुष्पधन्वा

रतिपतिर्मकरध्वज आत्मभूः" इत्यमरः । ललितयोषिद्भ्रूलताचारुशृङ्गं = ललिता चासौ योषित् ललितयोषित्, "विशेषणं विशेष्येण बहुलम्" इति समासः, तस्य "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति कर्मधारयसंज्ञा । ततः "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पूर्वपदस्य पुंवद्भावः । "ललितं त्रिषु सुन्दरम्" इति "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यप्यमरः । भ्रुवौ एव लते भ्रूलते, "वल्ली तु व्रततिर्लता" इत्यमरः । ललितयोषितः भ्रूलते ललितयोषिद्भ्रूलते, ते इव चारुणी ललितयोषिद्भ्रूलताचारुणी, "उपमानानि सामान्यवचनैः" इति समासः । "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः । ललितयोषिद्भ्रूलताचारुणी शृङ्गे=कोटी, यस्य तत् ललितयोषिद्भ्रूलताचारुशृङ्ग, तत् । चापम्="अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः=सह चरतीति सहचरः, "चरगतिभक्षणयोः" इति धातोः । "चरेष्टः" इति टप्रत्ययः । सहचरश्चासौ मधुः सहचरमधुः, "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवशोके मधुद्रुमे" इति विश्वः । सहचरमधोः हस्तः सहचरमधुहस्तः, तस्मिन् न्यस्तं, सहचरमधुहस्तन्यस्तम् । चूतस्य अङ्कुरः चूताङ्कुरः, "आम्रश्चूतो रसालोऽसौ" इत्यमरः । चूताऽङ्कुर एवाऽस्त्रं चूताङ्कुराऽस्त्र, "मयूरव्यंसकादयश्च" इति समासः । सहचरमधुहस्तन्यस्तम् । चूताऽङ्कुराऽस्त्रं यस्य सः सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः । शतमखं=शतं मखाः यस्य सः शतमखः, तं शतमखं । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः । उपतस्थे=उपोपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्तिकेन सङ्गतिकरणाऽर्थे आत्मनेपदम् ।

अत्र स्वभावोक्तिरलङ्कारः, तल्लक्षणं यथा साहित्यदर्पणे—"स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्" इति । अत्र मालिनीवृत्तं, तल्लक्षणं यथा वृत्तरत्नाकरे—"ननमयययुतेयं मालिनी भोगिलोकैः" इति ।

**भावार्थः**—महेन्द्रस्मरणानन्तरमेव स मदनः सुन्दरस्त्रीभ्रुकुटिकोमलाग्रं स्वधनू रतिवलयप्रतिबिम्बलाञ्छिते स्वकण्ठे संवेष्ट्य, त्रैलोक्यविजयसहायभूतवसन्तस्य करे चूतकुसुमबाणं च संन्यस्य, कृताञ्जलिर्भूत्वा शतक्रतुं सञ्जगामेति भावः ।

**भाषा**—इन्द्र के स्मरण करते ही कामदेव सुन्दर स्त्रीयों के भ्रुकुटि समान कोमल धनुष्य को रतिकङ्कण से चिह्नित स्वकीय कण्ठ में लटका कर, तीनों लोक

के विजयमें सहायता करने वाले मित्र वसन्त के हाथ में आम्रकुसुमरूप स्वकीय बाण को देकर, हाथ जोड़ के इन्द्रके सन्मुख खडा होगया ।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः समाप्तः ।

## अथ तृतीयः सर्गः ।

अथ कामदेवागमनानन्तरमिन्द्रस्य तद्विषया प्रतिपत्तिमाह—

**तस्मिन्मघोनस्त्रिदशान्विहाय, सहस्रमक्ष्णां युगपत्पपात ।**
**प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥**

सहस्राक्ष-दृग सुरत्याग कर रति-नाथ पर यकदम पड़े ।
प्रभु आश्रितों में स्वार्थ के हित चपल होते हैं बड़े ॥

**अन्वयः**—मघोनः अक्ष्णा सहस्रं त्रिदशान् विहाय तस्मिन् युगपत् पपात । प्रायः प्रभूणाम् आश्रितेषु गौरवं प्रयोजनापेक्षितया चलं भवति ।

**व्याख्या**—मघोनः = इन्द्रस्य, अक्ष्णा=नेत्राणा, सहस्र=दशशती, त्रिदशान्=देवान्, विहाय = त्यक्त्वा, तस्मिन् = कामे, युगपत् = एकदैव, पपात= पतितवान् । प्रायः=प्रायेण, प्रभूणाम्=अधिपानाम् , आश्रितेषु सेवकेषु, विषये, गौरवम्=आदरः, प्रयोजनाऽपेक्षितया = कार्यार्थित्वेन हेतुना, चल=चञ्चलं, भवतीति शेषः ।

**व्युत्पत्तिः**-मघोनः="श्वयुवमघोनामतद्धिते" इति सम्प्रसारणम् । अक्ष्णाम्="अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः"इत्यनङ् । "ईक्षण चक्षुरक्षिणी"इत्यमरः त्रिदशान् = तिस्रः =जन्मसत्ताविनाशाख्याः, दशाः = अवस्थाः, येषा ते त्रिदशाः, तान् त्रिदशान् , "सङ्ख्ययाव्ययासन्नादूराऽधिकसङ्ख्याः सङ्ख्येये" इति बहुव्रीहिः, "बहुव्रीहौ सङ्ख्येये डजबहुगणात् इति डच्प्रत्ययः । उक्तार्थत्वात् सुचो निवृत्तिः । "त्रिदशा विबुधाः सुराः" इत्यमरः । प्रभूणा ="प्रभुः परिवृढोऽधिपः" इत्यमरः । आश्रितेषु=अत्र कर्तरि क्तप्रत्ययः । इय वैषयकी सप्तमी । गौरवं=गुरोर्भावः गौरवम् । प्रयोजनापेक्षितया = प्रयोजनम् अपेक्षते तच्छीलः प्रयोजनापेक्षी, णिनि

प्रत्ययः । प्रयोजनापेक्षिणो भावः प्रयोजनापेक्षिता, तया प्रयोजनापेक्षितया । चलं= चलतीति चलम् ।

अत्र युगपत् सहस्रनेत्रावलोकनेन कामदेवे महेन्द्रस्यादरातिशयोक्तिर्व्यज्यते । सकलान् देवाननादृत्य सबहुमानं कामदेवावलोकनस्योत्तरवाक्येन समर्थनादर्थान्तरन्यासोऽलङ्कारः । कार्यापेक्षितया परिजनेषु गौरवस्य चलत्वप्रतिपादनेन महेन्द्रस्य धीरोद्धतनायकत्वं च द्योत्यते ।

**भावार्थः**—पूर्वं मन्त्राय समासीनानखिलान् देवाननादृत्य मरुत्वान् अक्षिसहस्रेण तत्कालसमागत कामदेवमेव सबहुमानमवलोकितवान्, यस्मात् प्रभवः प्रयोजनापेक्षिणस्तमादाश्रितविषयस्तेषामादरः प्रायेण तत्तदर्थसाधकेषु सेवकजनेषु चञ्चलो भवीत्यर्थः ।

**भाषा**—तारकासुर के मारने के उपाय की सलाह के लिये बैठे हुये समस्त देवताओं के तरफसे दृष्टि हटाकर, इन्द्रने एकसाथ अपने हजारनेत्रों से आये हुए कामदेव के तरफ सन्मान पूर्वक देखा, क्योंकि मालिक लोग अपने मतलब के होते हैं, इसलिये सेवक विषयक उनका आदर उन उन कामों को करने वाले आश्रित मनुष्यों पर बहुधा अस्थिर रहा करता है ।

अथ वाचिकसम्भावनाप्रदर्शनपुरस्सरं मन्मथस्य वचनावसरमाह—

**स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः ।**
**भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना, वक्तुं मिथः प्राक्रमतैवमेनम् ॥२॥**

**आसन दिया नज़दीक उसको इन्द्र ने सुविचार कर ।**
**उसने कहा इस तरह वासव को कृपा स्वीकार कर ॥**

**अन्वयः**—सः वासवेन आसनसनिकृष्टम् इतः निषीद इति विसृष्टभूमिः सन् भर्तुः प्रसाद मूर्ध्ना प्रतिनन्द्य मिथः एनम् एवं वक्तुं प्राक्रमत ।

**व्याख्या**—सः=कामदेवः, वासवेन = इन्द्रेण, आसनसनिकृष्टं = सिंहासनसंनिहित यथा स्यात्तथा, इतः = इह, निषीद इति = उपविश इति, विसृष्टभूमिः= दत्तस्थानः सन्, भर्तुः = स्वामिनः, इन्द्रस्येत्यर्थः प्रसादम् = अनुग्रहं, मूर्ध्ना = शिरसा, प्रतिनन्द्य =सम्भाव्य, मिथः = परस्परम् रहसि वा, एनम् = इन्द्रम्, एवं = वक्ष्यमाणप्रकारेण, वक्तुं = कमयितुं, प्राक्रमत=उपक्रान्तवान् ।

**व्युत्पत्तिः**—वासवेन="वासवो वृत्रहा वृषा" इत्यमरः । आसनसन्निकृष्टम् = सन्निकृष्टम् आसनं यथा स्यात् तथा आसनसन्निकृष्टम्, अहिताग्न्यादिषु

पाठात् साधुत्वम् । 'न पुनरत्रासनस्य सन्निकृष्टमिति समासः, "न लोकाव्यय-निष्ठाखलर्थतृनाम्" इति षष्ठीनिषेधात् । निषीद=न्युपसर्गपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लोट् । "सदिरप्रतेः" इति षत्वम् । विसृष्टभूमिः = विसृष्टा भूमिः यस्मै सः विसृष्टभूमिः, "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः । भर्तुः=बिभर्तीति भर्ता, तस्य भर्तुः । मूर्ध्ना = "अल्लोपोऽनः" इति अल्लोपः, "उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । मिथ = "मिथोऽन्योन्य रहस्यपि" इत्यमरः । एनं = "द्वितीयाटौस्स्वेनः" इति इदं शब्दस्य एनादेशः । प्राक्रमत = "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ।

**भावार्थः**—महेन्द्रेणास्मिन्प्रदेशे स्थितिं कुर्विति हस्तेन निर्दिश्य सन्निकटासनं यथा स्यात्तथाऽऽदरेण दत्तावस्थानप्रदेशः स कामः स्वामिनः सन्मानं नम्रेण शिरसाऽभिनन्द्य रहसि महेन्द्र वक्तुमुपक्रान्तवानिति भावः ।

**भाषा**—"यहा हमारे समीप बैठो" इस प्रकार हाथ के इशारे से इन्द्र ने कामदेव को अपने समीप आसन पर आदर से बैठाया, तब कामदेव ने मालिकके आदर का नम्र मस्तक से अभिनन्दन कर, एकान्त मे इन्द्र से इस तरह कहने का आरम्भ किया ।

अथाष्टभिः श्लोकैः कामदेवस्य वक्ष्यमाणप्रकारेण प्रतिपादनमेव प्रपञ्चयति—

**आज्ञापय ज्ञातविशेष ! पुंसां लोकेषु यत्ते करणीयमस्ति ।**
**अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्द्धितमाज्ञया ते ॥ ३ ॥**

तत्वज्ञ प्रभु बतलाइये इच्छा हुई क्या आप की ।
आदेश से उन्नत कृपा को चहता हूँ आपकी ॥

**अन्वयः**—पुंसां ज्ञातविशेष ! आज्ञापय, लोकेषु ते यत् करणीयम् अस्ति । संस्मरणप्रवृत्तं ते अनुग्रहम् आज्ञया संवर्द्धितम् इच्छामि ।

**व्याख्या**—हे पुंसा ज्ञातविशेष = हे पुरुषाणा ज्ञातसार, आज्ञापय = अनुज्ञा देहि, लोकेषु = भुवनेषु, ते = तव, यत् , करणीयम् = कर्तव्यम् , अस्ति । संस्मरणप्रवृत्त = संस्मृत्युत्पन्न, ते = तव, अनुग्रह = प्रसादम्, आज्ञया = अनुज्ञया, संवर्द्धित = वृद्धिं गमितम् , इच्छामि = वाञ्छामि ।

**व्युत्पत्तिः**—पुंसा = पूञ्धातोः "पूञो डुम्सुन्" इति डुम्सुन्प्रत्ययः, डित्त्व-सामर्थ्यात् अभस्याऽपि टेर्लोपः । "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इत्यमरः । ज्ञातविशेषः = ज्ञातः विशेषः येन स ज्ञातविशेषः, तत्सम्बुद्धौ हे ज्ञात

विशेष ! सापेक्षत्वेऽपि गमकत्वात् समासः । लोकेषु = "लोकस्तु भुवने जने" इत्यमरः । करणीयम् = कर्तुं योग्यं करणीयं "डुकृञ् करणे" इति धातोः "तव्य-त्तव्याऽनीयरः" इति अनयीर् प्रत्ययः । संस्मरणप्रवृत्तं = सम्यक् स्मरणं सस्मरणं गतिसमासः । संस्मरणेन प्रवृत्तः ससमरणप्रवृत्तः, तं संस्मरणप्रवृत्तं, संवर्द्धितं= सम्यक् वर्द्धितः संवर्द्धितः, तं संवर्द्धितम् = वर्तमाने क्तः ।

अत्र पुंसां ज्ञातविशेष इत्यनेन आत्मन इतरेभ्य उत्कर्षो द्योतितः ।

**भावार्थः**—हे ज्ञातसकलपुरुषसामर्थ्यविशेष ! हे स्वामिन् ! लोकत्रये तव मया यत् कर्त्तव्यमस्ति, तदाज्ञापय, सर्वलोकाधिपतेस्तव योऽनुग्रहः संस्मरणेन मय्यङ्कुरितोऽभूत्, तमहमाज्ञया वर्द्धमानमिच्छामीति भावः ।

भाषा—हे सकल सेवक जनके सामर्थ्य को जानने वाले, मालिक ! तीनों लोक में जो कुछ आपका कार्य हो, उसे करने की मुझे आज्ञा दीजिये । याद करने से मेरे विषयमें अङ्कुरित भया हुआ आपका अनुग्रह, आज्ञा से पल्लवित करना चाहता हूँ ॥ ३ ॥

न च मे किञ्चिदसाध्यमस्तीत्याह—

**केनाऽभ्यसूया पदकाङ्क्षिणा ते, नितान्तदीर्घैर्जनिता तपोभिः ।**
**यावद्भवत्याहितसायकस्य, मत्कार्मुकस्याऽस्य निदेशवर्त्ती ॥४॥**

**भवदीय पदकी चाह से है कौन तप करता बड़ा ।**
**बतलाइये उसको प्रभो ! धनुबाण से दुख दूँ कड़ा ॥**

**अन्वयः**—ते पदकाङ्क्षिणा केन नितान्तदीर्घैः तपोभिः अभ्यसूया जनिता । तं ब्रूहि ! यतः स आहितसायकस्य अस्य मत्कार्मुकस्य निदेशवर्त्ती यावत् भवति ।

**व्याख्या**-ते = तव, पदकाङ्क्षिणा = स्वर्गराज्यकामेन, केन = पुंसा, नितान्तदीर्घैः = अतिप्रभूतैः, तपोभिः = नियमैः, अभ्यसूया = ईर्ष्या, जनिता = कृता । तं ब्रूहीति शेषोऽर्थः । सः = भवद्वैरी, आहितसायकस्य = संहितबाणस्य, अस्य= पुरोवर्तिनः, मत्कार्मुकस्य = मद्धनुषः, निदेशवर्ती = आज्ञावशः, यावत् भवति= भविष्यति ।

**व्युत्पत्तिः**—पदकाङ्क्षिणा = पदं काङ्क्षतीति तच्छीलः पदकाङ्क्षी, तेन पदकाङ्क्षिणा, ताच्छील्ये णिनिप्रत्ययः । इन्द्रपदं प्रार्थयतेत्यर्थः । नितान्तदीर्घैः=नितान्तं यथा स्यात्तथा दीर्घाणि नितान्तदीर्घाणि, तैः नितान्तदीर्घैः "तीव्रैकान्तनितान्तानि

गाढबाढदृढानि च" इत्यमरः । आहितसायकस्य=आहितः सायकः यस्मिन् तत् आहितसायकं, तस्य आहितसायकस्य,="शरे खड्गे च सायकः" इत्यमरः । मत्कार्मुकस्य = कर्मणे प्रभवतीति कार्मुकं, "कर्मण उकञ्"इति उकञ्प्रत्ययः । "अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । मम कार्मुकं मत्कार्मुकं, तस्य मत्कार्मुकस्य । उत्तरपदे कार्मुके परे "प्रत्ययोत्तरपदयोश्च" इति अस्मच्छब्दस्थाने मदादेशः । निदेशवर्ती=निदेशे वर्तते तच्छीलः निदेशवर्ती, निर्देशोपपदपूर्वकात् "वृतु वर्तने" इति धातोः णिनिप्रत्ययः । "सौ च" इति दीर्घः । यावत् भवति=अविलम्बेनैव भविष्यतीत्यर्थः, "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ।

**भावार्थः**—त्रैलोक्ये कः पुमान् बहुकालकृतैस्तपोभिस्त्वां दूरतो निराकृत्य स्वयमेवामरावतीमधिष्ठाय माहेन्द्रं पदमहमेवानुभवामीति कृतोद्योगस्तवासूया जनयति, तं त्वरितं वद, यतः स पुमान् सन्निहितबाणस्यास्य मद्धनुष आज्ञावशो भवतीति भावः ।

**भाषा**—घोर तपश्चर्या करके आप को हटाकर इन्द्रासन को चाहने वाले किस पुरुषने आपकी असूया की है, जल्दी उसका नाम बताइये, जिससे वह पुरुष हमारे धनुष्यबाण की आज्ञा के वशीभूत हो जाय ।

सम्प्रति चतुर्वर्गेषु मोक्षमधिकृत्य आह—

**असंमतः कस्तव मुक्तिमार्गं, पुनर्भवक्लेशभयात्प्रपन्नः ।**
**बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः ॥५॥**

जो जन्म दुख से मुक्ति पथ पर चल रहा है कौन नर ।
उसको अभी प्रमदा-कटाक्षों से करूँ अति चपल तर ॥

**अन्वयः**—तव असंमतः कः पुनर्भवक्लेशभयात् मुक्तिमार्गं प्रपन्नः । तं वद । यतः सः आरेचितभ्रूचतुरैः सुन्दरीणां कटाक्षैः बद्धः सन् चिरं तिष्ठतु ।

**व्याख्या**—हे प्रभो ! तव=भवतः, असमतः = अनभीष्टः, कः = पुमान्, पुनर्भवक्लेशभयात्=संसारकष्टभीतेः, मुक्तिमार्गं = मोक्षपथं, प्रपन्नः = प्राप्तः। तं वद, इति शेषः । यतः सः आरेचितभ्रूचतुरैः = नर्तितभ्रूरुचिरैः, सुन्दरीणां = रूपवतीनां, कटाक्षैः—अपाङ्गदर्शनैः, बद्धः = बन्धनं नीतः सन् , चिरम्=अधिककालपर्यन्तं, तिष्ठतु = तिष्ठेत् ।

**व्युत्पत्तिः**—असंमतः = नः संमतः असम्मतः । पुनर्भवक्लेशभयात्=पुन-

भवनं पुनर्भवः=पुनरुत्पत्तिः, संसार इति यावत् । पुनर्भवे क्लेशाः=जन्मजरामरणादयः, पुनर्भवक्लेशाः, "आदीनवाश्रवौ क्लेशे" इत्यमरः । यद्वा "अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" इति पातञ्जलं योगदर्शनसूत्रम् । पुनर्भवक्लेशेभ्यः भय पुनर्भक्लेशभय, "भीत्रार्थाना भयहेतुः" इत्यपादानसज्ञा, "अपादाने पञ्चमी" इति पञ्चमी । तस्मात् पुनर्भवक्लेशभयात् , "विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । आरेचितभ्रूचतुरैः=आरेचिताश्च=एकैकशो विवर्तिताश्च ता भ्रुवः आरेचितभ्रुवः, ताभिः चतुराः आरेचितभ्रूचतुराः, तैः आरेचितभ्रूचतुरैः ।

आरेचितलक्षणं तु—

"स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् ।
तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः" इति ॥

**भावार्थः**—तव सम्मतिं विनैव कः पुरुषः सांसारिकजन्मजरामरणादिपीडाभयात् मोक्षपथं प्राप्तः । तं वद । यतः स त्वत्प्रसादपर्यन्तं सर्वावयवसुन्दरीणां कटाक्षविक्षेपादिविलासैर्वशीकृतः सन् चिरकालं तिष्ठत्विति भावः ।

**भाषा**—आपकी सम्मतिके विनाही कौन पुरुष सांसारिक जन्म मरण के दुःख से भयभीत होकर मोक्ष मार्ग को प्राप्त हो रहा है, कहिये, जो की आपकी कृपा होने तक सर्वाङ्गसुन्दरियों के कटाक्षविलासों से वशीभूत होकर चिर काल तक बन्धन मे पडा रहें ।

धर्माऽर्थौ अधिकृत्य आह—

**अध्यापितस्योशनसाऽपि नीतं प्रयुक्तरागप्रणिधिर्द्विषस्ते ।**
**कस्याऽर्थधर्मौ वद पीडयामि, सिन्धोस्तटावोघ इव प्रवृद्धः ॥९॥**

**धर्मार्थ को किसके विषय से पूर्ण कर दूँ इस तरह ।**
**करता प्रवाह नदी तटों को वाढ़ पीडित जिस तरह ॥**

**अन्वयः**—उशनसा नीतिम् अध्यापितस्य अपि ते द्विषः कस्य अर्थधर्मौ प्रयुक्तरागप्रणिधिः अहं प्रवृद्धः ओघः सिन्धोः तटौ इव पीडयामि, वद ।

**व्याख्या**—उशनसा=शुक्रेण, नीतिं=नीतिशास्त्रम् , अध्यापितस्य अपि=पाठितस्य अपि, ते=तव, द्विषः=शत्रोः, कस्य=पुरुषस्य, अर्थधर्मौ=वर्गद्वय, प्रयुक्तरागप्रणिधिः=प्रहितविषयाऽभिलाषदूतः, अहम् , प्रवृद्धः=अतिवृद्धि गतः, ओघः=प्रवाहः, सिन्धोः=नद्याः, तटौ इव=तीरे इव, पीडयामि=बाधे। वद=कथय

**व्युत्पत्तिः**—उशनसा = "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः" इत्यमरः । अध्यापितस्य = णिजन्तात् अधिपूर्वात् द्विकर्मकात् "इङ् अध्ययने" इति धातोः प्रधाने कर्मणि क्तप्रत्ययः । "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति वचनात् । द्विषः=द्वेष्टीति द्विट् तस्य द्विषः, "द्विष अप्रीतौ" इति धातोः क्विप्प्रत्ययः, "द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशात्रवः" इत्यमरः । अर्थधर्मौ = अर्थश्च धर्मश्च अर्थधर्मौ, तौ "चाऽर्थे द्वन्द्वः" इति द्वन्द्वसमासः । प्रयुक्तरागप्रणिधिः=राग एव प्रणिधिः रागप्रणिधिः, "प्रार्थने प्रणिधिश्चरे" इति यादवः । प्रयुक्तः रागप्रणिधिः येन सः प्रयुक्तरागप्रणिधिः । प्रवृद्धः="वृधु वृद्धौ" इति धातोः क्तप्रत्ययेन वृद्धपदसिद्धिः । प्रकर्षेण वृद्धः प्रवृद्धः, "सह सुपा" इति समासः । सिंन्धोः="देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । तटौ="कूलं रोधश्च तीरं च प्रतीरं तटं त्रिषु" इत्यमरः ।

**भावार्थः**—प्रहितविषयाभिलाषदूतोऽहं "वर्षाकाले महतीं वृद्धिं प्राप्तो नदीवेगो नद्यास्तीरप्रदेशाविव" भार्गवेण स्वयं शिक्षितनीतिशास्त्रस्यापि तव शत्रुभूतस्य कस्य धर्मार्थौ विनाशयेयं कथयेति भावः ।

**भाषा**—वर्षा काल में बढा हुवा नदी का वेग जैसे दोनों तरफ के तटों का नाश करता है, उसी तरह मैं प्रवृद्धविषयवासनारूपी दूतको भेजकर साक्षात् शुक्राचार्य से भी नीतिशास्त्र के ज्ञान को पाने वाले आपके किस शत्रुका धर्म और अर्थ दोनों का नाश करदूं । कहिये ।

काममधिकृत्य आह—

**कामेकपत्नीव्रतदुःखशीलां, लोलं मनश्चारुतया प्रविष्टाम् ।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥७॥**

सुन्दर सती है कौन जिसको चाहते बतलाइये ।
निर्लज्ज चपल उसे बनादूं कण्ठ से लगजाइये ॥

**अन्वयः**—एकपत्नीव्रतदुःखशीला चारुतया लोलं मनः प्रविष्टा का नितम्बिनीं मुक्तलज्जा सती कण्ठे स्वयंग्राहनिषक्तबाहुम् इच्छसि ।

**व्याख्या**—एकपत्नीव्रतदुःखशीला=पातिव्रत्यदुःखस्वभावा, दृढव्रतामित्यर्थः, चारुतया = सुन्दरत्वेन हेतुना, लोलं=चञ्चलं, मनः = चित्तं, त्वदीयमित्यर्थः । प्रविष्टां = प्रवेशं कृतवतीं, कां, नितम्बिनीं=वारारोहां, मुक्तलज्जां=त्यक्तत्रपां सतीं, कण्ठे=गले, स्वयंग्राहनिषक्तबाहूम्=आत्मग्राहस्थापितभुजाम्, इच्छसि=वाञ्छसि ।

**व्युत्पत्तिः**—एकपत्नीव्रतदु:खशीलाम्=एकः पतिर्यस्याः सा एकपत्नी=पतिव्रता, "नित्यं सपत्न्यादिषु" इति ङीप् नकारादेशश्च । एकपत्न्याः व्रतं=पुरुषान्तरादर्शनादिरूपम्, एकपत्नीव्रतम् । दुःखं शीलं यस्याः सा दुःखशीला, "पीडा बाधा व्यथा दुःखम्" इति, "शीलं स्वभावे सद्वृत्ते" इति चाऽमरः । एकपत्नीव्रतेन दुःखशीला एकपत्नीव्रतदुःखशीला, ताम् एकपत्नीव्रतदुःखशीला । चारोर्भावः चारुता, तया चारुतया, "हेतौ" इति तृतीया । "सुन्दरं रुचिरं चारु सुषमं साधुशोभनम्" इत्यमरः । लोल="चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्" इत्यमरः । नितंम्बिनीं=प्रशस्तः नितम्बः अस्ति यस्याः सा नितम्बिनी, ता नितम्बिनीम्, इनिप्रत्ययः तदन्तात् "ऋन्नेभ्यो ङीप" इति ङीप्प्रत्ययः । "पश्चान्नितम्बः स्त्री कट्याः" इत्यमरः । मुक्तलज्जा=मुक्ता लज्जा यया सा मुक्तलज्जा, ता मुक्तलज्जा "मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । स्वयंग्राहनिषक्तबाहु='स्वयं गृह्णातीति स्वयंग्राहा, "विभाषा ग्रहः" इति णप्रत्ययः, "न च जलचर एव ग्राह इति नियमः । जलचरे ग्राह एवेति नियमादिति" मल्लिनाथः । निषक्तौ बाहू यस्याः सा निषक्तबाहुः, "भुजबाहू प्रवेष्टो दोः" इत्यमरः । स्वयंग्राहा चाऽसौ निषक्तबाहुः स्वयंग्राहनिषक्तबाहुः, ता स्वयंग्राहनिषक्तबाहुम् ।

अत्र रूपसौन्दर्याणा निरवधिकत्वाद्, मनसः स्वभावलौल्याद्, अहिल्यावृत्तान्तेन महेन्द्रस्य पारदारिकत्वाच्च न काचिदनुपपत्तिः । श्रुतिरप्याह—"अहिल्यायै जार" इति ।

**भावार्थः**—हे महेन्द्र ! पतिव्रताव्रतदुःखस्वभावा सौन्दर्यातिशयेन ( अहिल्यावत् ) तव चञ्चलचित्तप्रविष्टा की सुन्दरीं मद्बाणभिन्नहृदयत्वेन परित्यक्तत्रपा सतीं स्वयमेव कृतालिङ्गनां कारयितुमिच्छसीति वदेति भावः ।

**भाषा**—हे महेन्द्र ! पातिव्रतधर्म से क्रूर स्वभाव वाली, किन्तु सुन्दरता से अहिल्या के समान आपके चञ्चल चित्त में धसी हुई, किस सुन्दरी स्त्री को हमारे बाण से पीडित होकर लज्जा छोड के खुद आकर आपके गले में आलिङ्गन कराना चाहते हैं कहिये ? ।

"अथ नायिका त्रिभेदा स्वाऽन्या साधारणा स्त्रीति । तत्र परकीया प्रत्युत्तम् । इतरे प्रत्याहुः—

**कयासि कामिन् ! सुरतापराधात्पादानतः कोपनयाऽवधूतः ।**
**तस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥ ८ ॥**

किस कोपना से हैं तिरस्कृत विफल कामुक चपल तर ।
तन कामज्वर पीड़ित बना, उसको सुला दूँ सेज पर ॥

**अन्वयः**—हे कामिन् ! सुरताऽपराधात् पादानतः सन् कोपनया कया अवधूतः असि, तस्याः शरीरं दृढाऽनुताप प्रवालशय्याशरण करिष्यामि ।

**व्याख्या**—हे कामिन् = हे कामुक, सुरताऽपराधात्=मैथुनाऽपराधात् अन्यासङ्गादित्यर्थः, पादानतः = प्रणतः सन्, कोपनया = क्रोधशीलया, कया = सुन्दर्या, अवधूतः असि = तिरस्कृतः असि । तस्याः = सुन्दर्याः, शरीर = देहं, दृढाऽनुताप = गाढपश्चात्तापम्, अत एव प्रवालशय्याशरण = पल्लवशयनीयरक्षकं, करिष्यामि = विधास्यामि ।

**व्युत्पत्तिः**—हे कामिन्=कामः अस्याऽस्तीति कामी, तत्सम्बुद्धौ हे कामिन्, इनि प्रत्ययः । "कन्दर्पो दर्पकोऽनङ्ग कामः पञ्चशरः स्मरः" इत्यमरः । सुरतापराधात् = रमणं रतं, "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्" इत्यमरः । शोभन रतं सुरतं, तस्मिन् अपराधः = सपत्नीजननामग्रहणादिरूपः सुरताऽपराधः, तस्मात् सुरतापराधात्, हेतौ पञ्चमी । पादानतः = पादयोः आनतः पादानतः, "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । कोपनया=कुप्यतीति कोपना, तया कोपनया, "कोपना सैव भामिनी" इत्यमरः । शरीरं = शीर्यते यत्तत् शरीरं, "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । दृढानुतापं=दृढः अनुतापः यस्मिन् तत् दृढाऽनुतापं, तत् । "पश्चापोऽनुतापश्च विप्रतीसार इत्यपि" इत्यमरः । प्रवालशय्याशरणं=प्रवालाना शय्या प्रवालशय्या, प्रवालशय्या शरणं यस्य तत् प्रवालशय्याशरणं, तत् "शरण गृहरक्षित्रोः" इत्यमरः । प्रवालशय्याशरण त्वमनुतापस्यानुभावः । अत्र पुरुषार्थप्रकरणे धर्मार्थमोक्षाणा प्रतिबन्धकत्वेनोक्तिः । कामस्य तु साधकत्वेनेत्यात्मनः स्वभावः प्रदर्शितः ।

**भावार्थः**—हे कामुक ! गोत्रस्खलनाद्यपराधेन चरणप्रणतोऽपि त्वं कोपशीलया कया निराकृतोऽसि, वद । तस्याः शरीरं कामज्वरसन्तापेन पल्लवास्तरणमात्रशरण विधास्यामीति भावः ।

**भाषा**—हे कामुक ! सपत्नीनामग्रहणादि अपराध होने से क्रुद्ध होकर किस स्त्री ने चरणों में प्रणत होनेपर भी, अपका निराकरण कर दिया है, कहिये । मैं उस स्त्री के शरीर को कामज्वर के सन्ताप से पल्लवों के शीतल शयन पर पड़ा रहने वाला बना दूँगा ।

अथ शास्त्रसाध्यं शत्रुविजयमप्यहमेव करिष्यामीत्याह—

**प्रसीद विश्राम्यतु वीर ! वज्रं शरैर्मदीयैः कतमः सुराऽरिः ।**
**बिभेतु मोघीकृतबाहुवीर्यः, स्त्रीभ्योऽपि कोपस्फुरिताऽधराभ्यः ॥९॥**

हों बहु प्रसन्न, न दुख करें, अब आप का पवि, सुख करे ।
है कौन सुर-अरि कम्पिताधर नायिका से जो डरे ॥

**अन्वयः**—हे वीर ! प्रसीद । वज्रं विश्राम्यतु । मदीयैः शरैः मोघीकृतबाहुवीर्यः कतमः सुराऽरिः कोपस्फुरिताऽधराभ्यः स्त्रीभ्यः अपि बिभेतु ॥

**व्याख्या**—हे वीर ! = हे विक्रान्त, हे पराक्रमिन् । इत्यर्थः । प्रसीद = प्रसन्नो भव । वज्रं=कुलिशं, विश्राम्यतु=विश्रमं कुर्यात् । उदास्तामित्यर्थः । मदीयैः=मत्सम्बन्धिभिः, ममेत्यर्थः । शरैः=बाणैः, मोघीकृतबाहुवीर्यः = निष्फलीकृतभुजपराक्रमः, कतमः=दैत्यदानवराक्षसादिषु यः कश्चन, सुराऽरिः = देवशत्रुः, कोपस्फुरिताऽधराभ्यः=क्रोधस्फुरितोष्ठाभ्यः, स्त्रीभ्यः अपि = नारीभ्यः अपि, बिभेतु = बिभियात् ।

**व्युत्पत्तिः**—हे वीर="शूरो वीरश्च विक्रान्तः" इत्यमरः । वज्रं="ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः" इत्यमरः । मदीयैः=मम इमे मदीयाः, तैः मदीयैः छप्रत्ययः । शरैः="कर्तृकरणयोस्तृतीया" इति करणे तृतीया । मोघीकृतबाहुवीर्यः = अमोघं मोघं यथा सम्पद्यते तथा कृतं मोघीकृतं, च्विप्रत्ययः । बाह्वोर्वीर्यं बाहुवीर्यम् । मोघीकृतं बाहुवीर्यं यस्य सः मोघीकृतबाहुवीर्यः, "अनेकमन्यपदार्थे" इति बहुव्रीहिसमासः । कतमः=किंशब्दात् "वा बहूनां जातिपरिप्रश्ने डतमच्" इति डतमच्प्रत्ययः । टेर्लोपः । सुराऽरिः = सुराणाम् अरिः सुरारिः । कोपस्फुरिताऽधराभ्यः = स्फुरितः अधरः यासां ताः स्फुरिताऽधराः, "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । कोपेन हेतुना स्फुरिताऽधराः कोपस्फुरिताऽधराः, ताभ्यः कोपस्फुरिताधराभ्यः, "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । स्त्रीभ्यः="स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यमरः । अत्र "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी । बिभेतु="ञिभी भये" इति धातोर्लोट् । किमतः परं तव रिपूणां क्लीवत्वं सम्पादयिष्यामीत्यर्थः ।

**भावार्थः**—हे स्वामिन् ! मयि कृपां कुरु । तव वज्रं परिश्रमापनोदनार्थं कञ्चित्

कालं विश्रान्ति लभता कतमो दैत्यो मदीयैः बाणैर्निष्फलीकृतभुजपराक्रमः सन् रोषेण चञ्चलाधरेभ्यः स्त्रीजनेभ्योऽपि बिभेत्विति वदेति भावः ।

**भाषा**–हे स्वामिन् ! मेरे ऊपर दया कीजिये, आपका वज्र परिश्रम दूर करने के लिये कुछ दिन विश्रान्ति करें, मेरे बाणों से जिसका बाहुबल नष्ट होगया, ऐसा कौनसा दैत्य, क्रोध से चञ्चल ओष्ठ वाली नारी से भी डरजाय, बतलाइयें।

अथ विकत्थनोदीर्णदर्पस्तेषा मन्त्रमजानन्नपि दैवात् तदभिमते परमदुस्साध्येऽपि कार्ये स्वशक्त्युपन्यास कुर्वन् काम. सर्वातिशायितामात्मनः प्रकटयति—

**तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्याऽपि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥**

**माधव सहायक कुसुम शर ले आपकी लेकर दया ।**
**क्षण में पिनाकी से विजय लूँगा पिनाकी और क्या ॥**

**अन्वयः**—तव प्रसादात् कुसुमायुधोऽपि [ अहम् ] एक मधुम् एव सहायं लब्ध्वा पिनाकपाणेः हरस्य अपि धैर्यच्युतिं कुर्याम् , अन्ये धन्विनः मम के ।

**व्याख्या**—हे प्रभो ! तव = भवतः, प्रसादात् = अनुग्रहात् , कुसुमाऽऽयुधोऽपि = पुष्पाऽस्त्रोऽपि, अपिदुर्बलास्त्रोऽपीत्यर्थः, [ अहम् ], एकम् = एकाकिनं, मधुम् एव = वसन्तम् एव, सहायम् = अनुचरं, लब्ध्वा = प्राप्य, पिनाकपाणेः = अजगवहस्तस्य, हरस्य अपि = महादेवस्य अपि, धैर्यच्युतिं=धीरताहानिं, कुर्याम = कर्तुं शक्नुयाम् , अन्ये = अपरे, धन्विनः = धनुर्धारिणः, मम, के=न केऽपीत्यर्थः ।

**व्युत्पत्तिः**—कुसुमायुधः=कुसुमानि आयुधं यस्य स कुसुमायुधः "आयुधं तु प्रहरणं शस्त्रमस्त्रम्" इत्यमरः । सहायम्="अनुप्लवः सहायश्चाऽनुचरोऽभिसरः समाः" इत्यमरः । पिनाकपाणेः = पिनाकः पाणौ यस्य सः पिनाकपाणिः, तस्य पिनाकपाणेः "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति पाणिपदस्य परनिपातः, अन्यथा "सप्तमी विशेषणे बहुव्रीहौ" इति पूर्वनिपातेन भवितव्यम् । "पिनाकोऽजगवं धनुः" इत्यमरः । हरस्य = हरतीति हरः, तस्य हरस्य,

अत्र 'पिनाकपाणेः' इति पदस्य पौनरुक्त्यं न शङ्कनीयम् । "पिनाकपाणेः अपि हरस्य धैर्यच्युतिं कुर्यामन्येषा का कथा" इत्यनेन स्वस्य उत्कर्षद्योतनात् पिनाकपाणिपदस्य साकूतविशेषणभूतस्य चारितार्थ्यं भवतीति बोध्यम् ।

"हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुराऽन्तकः" इत्यमरः । धैर्यच्युतिं = धीरस्य भावः कर्म वा धैर्यम् , धीरशब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति

ष्यञ्प्रत्ययः । धैर्यस्य च्युतिः । धैर्यच्युतिः, तां धैर्यच्युतिं, कुर्याम् = "शकि लिङ् च" इति शक्याऽर्थे लिङ् । धन्विनः = "धन्वी धनुष्मान्धानुष्को निषङ्गयस्त्री धनुर्धरः" इत्यमरः । के=कुत्सायां किंशब्दः "कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते" इति शाश्वतः ।

अत्र शिवेतरधन्विना विजयस्य दण्डापूपिकान्यायेन सिद्धत्वप्रतिपादनादर्थापत्तिरलङ्कारः । जयकारणाना प्रबलायुधादीनामभावेऽपि जयोत्पत्तिवर्णनात् विभावनालङ्कारश्च । तयोर्लक्षणे यथा—

"दण्डापूपिकया न्यायादर्थागमोऽर्थापत्तिरिष्यते" इति ।

"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते" इति च ।

**भावार्थः**—अत्यन्तदुर्बलसाधनोऽप्यहं केवलं वसन्तमेव सहायकं सम्प्राप्य प्रभोस्तव सामर्थ्यात् प्रबलसाधनभूतपिनाकधरस्य चतुर्दशभुवनसहर्तुरपि महेश्वरस्यापि धैर्यहानिं कर्तुं शक्नुयाम् । हरव्यतिरिक्ता अन्ये धनुष्मन्तो मम पुरः के । न केऽपीति भावः ।

**भाषा**—अत्यन्त दुर्बल साधन वाला भी मैं केवल मित्र वसन्त की सहायता से, हे प्रभु ! आपके प्रभावसे प्रबल साधन भूत पिनाक नामक धनुष्य को धारण करनेवाले और चौदहों भुवनों का संहार करने की तकत रखने वाले शङ्कर के भी धैर्य का नाश करसकता हूं, तब दूसरे और धनुर्धारी मेरे सामने क्या चीज है ।

अथ निजाभिलषितमदनवचनेन लब्धाश्वासस्य महेन्द्रस्य प्रवृत्तिमाह—

**अथोरुदेशादवतार्य पादमाक्रान्तिसम्भावितपादपीठम् ।**
**सङ्कल्पिताऽर्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥ ११ ॥**

उरु देश से तब इन्द्र आसन पर चरण रखने लगे ।
निज कार्य में लख योग्य स्मर को यों वचन कहने लगे ॥

**अन्वयः**—अथ आखण्डलः ऊरुदेशात् पादम् आक्रान्तिसम्भावितपादपीठम् यथा स्यात्तथा अवतार्य सङ्कल्पिताऽर्थे विवृतात्मशक्तिं कामम् इदं बभाषे ।

**व्याख्या**—अथ=हरविजयसामर्थ्यप्रतिपादनानन्तरम् , आखण्डलः=इन्द्रः, ऊरुदेशात्=सक्थिप्रदेशात् , पादं=चरणम् , आक्रान्तिसम्भावितपादपीठम् = आक्रमणसफलीकृतचरणपीठम् यथा स्यात्तथा, अवतार्य=अवतारणं कृत्वा, सङ्कल्पिताऽर्थे =सङ्कल्पीकृतविषये, हरचित्ताकर्षणरूपे इत्यर्थः । विवृताऽऽत्मशक्तिं = प्रकटीकृतस्वसामर्थ्यं, कामं=स्मरम् , इदं=वक्ष्यमाणं, बभाषे=जगाद ।

**व्युत्पत्तिः**—आखण्डलः="आखण्डलः सहस्राक्ष ऋभुक्षाः, इत्यमरः । ऊरुदेशात्=ऊरोः देशः ऊरुदेशः, तस्मात् ऊरुदेशात्, "सक्थि क्लीबे पुमानूरुः" इत्यमरः । आक्रान्तिसम्भावितपादपीठम्=आक्रान्त्या सम्भावितम् आक्रान्तिसम्भावितम्, पादयोः पीठं पादपीठम् । आक्रान्तिसम्भावित पादपीठं यस्मिन् तद्यथा स्यात्तथा आक्रान्तिसम्भावितपादपीठ । सङ्कल्पिताऽर्थे=सङ्कल्पःसञ्जातःयस्य सङ्कल्पितः, "तदस्य सञ्जातं तारकादिभ्य इतच्" इति सङ्कल्पशब्दात् इतच् प्रत्ययः । "सङ्कल्प' कर्म मानसम्" इत्यमरः । सङ्कल्पितश्चाऽसौ अर्थः सङ्कल्पिताऽर्थः, तस्मिन् सङ्कल्पितार्थे, "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । विवृतात्मशक्तिम्=आत्मनः शक्तिः आत्मशक्तिः, विवृता आत्मशक्तिः येन स विवृतात्मशक्तिः, त विवृतात्मशक्ति, बभाषे=भाषधातुर्द्विकर्मकः, "कामम्" "इदं" च इति कर्मद्वयं बोध्यम् ।

**भावार्थः**—स्मरवाक्यश्रवणानन्तर लब्धाश्वासो महेन्द्रः आक्रमणसफलीकृतपादपीठं चरणं जङ्घाप्रदेशादवतार्य स्वाभीष्टहरचित्ताकर्षणरूपे विषये प्रकटितस्वसामर्थ्यं मदनमिदं वक्ष्यमाणमुक्तवानिति भावः ।

**भाषा**—कामदेव की बात सुनके धाडस पाकर इन्द्रदेव पैर को जाघ से उतार कर चौकी पर रखते हुवे, अपने को भी अभीष्ट ऐसे शङ्कर के चित्ताकर्षणविषय में स्वयमेव अपनी शक्ति को प्रकट करनेवाले कामदेव से इस तरह बोले ।

अथ स्तुत्या कामस्य वीर्यं सन्धुक्षयन्नाह—

**सर्वं सखे ! त्वय्युपपन्नमेतदुभे ममाऽस्त्रे कुलिशं भवांश्च ।**
**वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥१२॥**

**हे मित्र ! कहते सत्य पवि, तुम, अस्त्र मेरे हो प्रबल ।**
**पर वज्र विफल तपस्वियों में, हर जगह तुम हो सफल ॥**

**अन्वयः**—सखे ! सर्वम् एतत् त्वयि उपपन्नम । मम कुलिशं भवान् च उभे अस्त्रे । वज्रं तपोवीर्यमहत्सु कुण्ठ, त्वं सर्वतोगामि च साधकं च ।

**व्याख्या**—सखे=हे मित्र, सर्वं=सकलम्, एतत्=इमं, त्वदुक्तमित्यर्थः । त्वयि=भवति, उपपन्न=सिद्धम् । मम, कुलिशं=वज्रं, भवान् च=त्वं च, उभे=द्वे अस्त्रे=शस्त्रे, विद्येते इति शेषः । वज्रं=कुलिश, तपोवीर्यमहत्सु=तपोबलप्रबलेषु, कुण्ठ=मन्दम् । त्व, सर्वतोगामि च=सर्वत्र अप्रतिहतगति च, साधकं च= कार्यसम्पादकं च ॥

**व्युत्पत्तिः**—सखे="अथ मित्रं सखा सुहृत्" इत्यमरः । सेवकेऽपि सखे इति सम्बोधनं गौरवार्थम् । भवान्=भातीति भवान्, "भातेर्डवतुः इति डवतुः । 'अत्वसन्तस्य चाधातोः" इति दीर्घः । तपोवीर्यमहत्सु=तपसः वीर्यं तपोवीर्यं, तपोवीर्येण महान्तः तपोवीर्यमहान्तः, तेषु तपोवीर्यमहत्सु, कुण्ठ="कुण्ठो मन्दः क्रियासु यः" इत्यमरः । सर्वतोगामि=सर्वेषु इति सर्वतः, सप्तम्यर्थे तसिः । सर्वतः गच्छतीति तच्छीलं सर्वतोगामि, ताच्छील्ये णिनिप्रत्ययः । साधकं = साधयतीति साधकं । सर्वतोगामि, साधकं, च इति पदद्वयमायुधविशेषणत्वेन प्रयुज्यते, अतः तस्य नपुंसकलिङ्गता ।

**भावार्थः**—हे प्रिय ! काम ! मम वज्रं, भवांश्च, द्वे शस्त्रे स्तः । तत्र मदीयं वज्रास्त्रं तपोबलेन प्रबलेषु प्रतिहतं भवति, त्वमस्त्र पुनः सर्वत्राप्रतिहतगतिकार्यसम्पादकं चेति भावः ।

**भाषा**—हे प्रियकामदेव ! वज्र और तुम दो ही हमारे हथियार हो, उसमें हमारा वज्र अस्त्र तो तपोबल से प्रबल शत्रु के विषय में बे काम है । किन्तु तुम्हारी गति सर्वत्र अप्रतिहत है, और तुम सब कार्य का सम्पादन कर सकते हो ।

यदहं त्वद्वीर्यं जानामि, तन्न केवलमनया मदुक्त्यावसेयम्, अपि तु मत्प्रवृत्त्यापीत्याह—

**अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।**
**व्यादिश्यते भूधरतामवेक्ष्य, कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥**

इस कार्य में रखता तुम्हें, बल जानता हूं इस लिये ।
हरि ने कहा ज्यों शेष ही को भूमिधारण के लिये ॥

**अन्वयः**—हे सखे ! ते सारम् अवैमि, अतः खलु आत्मसमं त्वा गुरुणि कार्ये नियोक्ष्ये । कृष्णेन भूधरताम् अवेक्ष्य शेषः देहोद्वहनाय व्यादिश्यते ।

**व्याख्या**—हे सखे ! ते = तव, सारं = बलम्, अवैमि=वेद्मि, अतः खलु= अस्मादेव कारणात्, आत्मसमं=मत्तुल्य, त्वा=भवन्त, गुरुणि=महति, कार्ये=कर्मणि, वक्ष्यमाणे हरचित्ताकर्षणरूपे इत्यर्थः । नियोक्ष्ये=आज्ञापयामि । कृष्णेन=विष्णुना, भूधरता=पृथ्वीधारकत्वं, पृथ्वीधारणशक्तिमित्यर्थः । अवेक्ष्य=दृष्ट्वा, ज्ञात्वेत्यर्थः, शेषः=अनन्तः, देहोद्वहनाय=स्वदेहमुद्वोढु, व्यादिश्यते=नियुज्यते ।

**व्युत्पत्तिः**—सारं=:"सारो बले स्थिराऽशे च न्याय्ये क्लीबं वरे त्रिपु"

इत्यमरः । अवैमि=अवोपसर्गपूर्वकात् "इण्गतौ" इति धातोर्लट् । आत्मसमम्=आत्मना समः आत्मसमः, तम् आत्मसमं । नियोक्ष्ये="स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्तिकादात्मनेपदनियमः । कृष्णेन="विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" इत्यमरः । भूधरता = धरतीति धरः, "धृञ् धारणे" इति धातोः पचाद्यच् । भुवः धरः भूधरः, कर्मणः शेषत्वविवक्षा । भूधरस्य भावः भूधरता, ता भूधरता । "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः । शेषः=अनन्तः । शेषोऽनन्तः" इत्यमरः । देहोद्वहनाय=देहस्य उद्वहनं देहोद्वहनं, तस्मै देहोद्वहनाय, "क्रियार्थोपपदस्य कर्मणि स्थानिनः २।३।१४" इति चतुर्थी । व्यादिश्यते=व्याङुपसर्गद्वयपूर्वकात् "दिश अतिसर्जने" इति धातोः कर्मणि प्रत्ययः । अत्र प्रतिवस्तूपमालङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—

"प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।
एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति ।

**भावार्थः**—हे मदन ! तव बलमहं जानामि, अत एव स्वसदृशं भवन्तमीदृशे महति वक्ष्यमाणे कर्तव्येऽर्थे नियोगं करिष्ये । अनन्तस्य पृथिवीधारणसामर्थ्यमवधार्यैव हि भगवता नारायणेन त्रैलोक्याधिष्ठितस्य स्वशरीरस्योद्धरणाय नियुज्यत इति भावः ।

**भाषा**—हे मदन ! तुह्मारे बल को मैं जानता हूं इसीलिये स्वसदृश तुह्मारा ऐसे विशिष्ठ महान् कार्य में नियोग करता हूं । अनन्त का समस्त पृथिवी धारण करने का सामर्थ्य जानकर ही भगवान् विष्णुने युगान्त में त्रैलोक्य धारण करने वाले अपने शरीर के वहन कार्य में नियोग किया है ।

नियोगश्च त्वयाङ्गीकृतप्राय एवेत्याह—

**आशंसता बाणगतिं वृषाऽङ्के, कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांऽशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥**

हर में तुम्हारे बाण की गति कार्य मम स्वीकार है ।
तुम जान लो ईप्सित यही इसमें अमर-सुख-सार है ।

**अन्वयः**—वृषाऽङ्के बाणगतिम् आशंसता त्वया नः कार्यं प्रतिपन्नकल्पम् । इदानीम् उच्चैर्द्विषा यज्ञाऽशभुजाम् ईप्सितम् एतत् एव निबोध ।

**व्याख्या**—वृषाऽङ्के = महादेवे, बाणगतिं = शरप्रसरम् , आशंसता = कथयता, त्वया = भवता, नः = अस्माकं, कार्यं = कर्म, प्रतिपन्नकल्पम् = अङ्गीकृत-

प्रायम् । अत एवाह, एदानीं=साम्प्रतम्, उच्चैर्द्विषाम्=उन्नतशत्रूणा, यज्ञाऽशभुजा=यागभागभुजा, देवानामित्यर्थः । ईप्सितम् = आप्तुमिष्टम्, एतत् एव = महादेवे बाणप्रयोगरूपमेव, निबोध = जानीहि ।

**व्युत्पत्तिः**—वृषाऽङ्क=वृषः अङ्कः यस्य स वृषाऽङ्कः, तस्मिन् वृषाङ्के, "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः" इति "कलङ्काऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्" इत्यप्यमरः । बाणगतिं =बाणस्य गतिः बाणगतिः, ता बाणगतिम् आशंसता = आशंसतीति आशसन्, तेन आशंसता । "शंसु स्तुतौ" इति धातोराङ्पूर्वस्य शत्रन्तमिदं रूपं, न तु "आङः शसि इच्छायाम्" इत्यस्य धातोः, तस्यात्मनेपदित्वात् । यथोक्तं देवेन—

> "आशंसते स्यादिच्छाया शंसतीति स्तुतौ भवेत् ।
> हिंसाया शसतीच्छायामाशास्ते शास्ति शासने ॥" इति,

प्रतिपन्नकल्पम् = ईषत् असमाप्तं प्रतिपन्नं प्रतिपन्नकल्पम्, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । इदानीम् = "एतर्हि साम्प्रतीदानीमधुना सम्प्रत तथा" इत्यमरः । उच्चैर्द्विषा, द्विषन्ति ते द्विषः, उच्चैः द्विषः येषा ते उच्चैर्द्विषः, तेषाम् उच्चैर्द्विषा, यज्ञाऽशभुजा = यज्ञस्य अशः यज्ञाऽशः, तं भुञ्जतीति यज्ञाशभुजः, तेषा यज्ञाशभुजाम् । एतेन सम्प्रति देवाना द्विषद्भिः लुप्त-यज्ञभागत्वं सूच्यते । निबोध = "बुध बोधने" इति धातोर्लोट् ।

**भावार्थः**—हरे स्वबाणगतिं कथयता भवताऽस्माकं कार्यमङ्गीकृतप्रायं भवति । प्रवृद्धतारकासुरोपद्रवेऽस्मिन् । काले प्रवृद्धशत्रूणा देवानामस्माकमेतदेव प्रयोजनं जानीहीति भावः ।

**भाषा**—हे काम ! तुमने शङ्कर के विषय में स्वकीय बाणोंकी गति को कह· कर हम लोगों का कार्य करना एक प्रकार स्वीकार ही किया है । प्रवृद्धतारकासुर· दैत्य के इस उपद्रव काल में शत्रुपीडित हम देवता लोगों का यही प्रयोजन हैं, जानों ।

हरविषयाभिलाषमेव स्फुटयति—

> **अमी हि वीर्यप्रभवं भवस्य, जयाय सेनान्यमुशन्ति देवाः ।**
> **स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५ ॥**

> शिव पुत्र को विजयार्थं सेनापति बनाना चाहते ।
> ये देव तेरे बाण से शिव को रिझाना चाहते ॥

**अन्वयः**—हि अमी देवाः जयाय भवस्य वीर्यप्रभवं सेनान्यम् उशन्ति । ब्रह्माङ्गभूः ब्रह्मणि योजितात्मा स च त्वदेकेषुनिपातसाध्यः अस्ति ।

**व्याख्या**—हि = यस्मात्, अमी=एते, देवाः = सुराः, जयाय = विजयाय, भवस्य=महादेवस्य, वीर्यप्रभव=तेजःसम्भूतं, सेनान्य=सेनापतिम्, उशन्ति= कामयन्ते । ब्रह्माऽङ्गभूः=सद्योजातादिहृदयादिमन्त्रस्थानं ब्रह्मप्रभवो वा, ब्रह्मणि= परमात्मनि, योजितात्मा=नियमितचित्तः । मन्त्रन्यासपूर्वकं ब्रह्मध्यायन्नित्यर्थः । स च=भवश्च, त्वदेकेषुनिपातसाध्यः=भवदेकबाणनिक्षेपसाध्यः, अस्तीति शेषः ।

**व्युत्पत्तिः**—भवस्य=भावयति इति भवः, तस्य भवस्य, "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः । वीर्यप्रभवं=विर्यात् प्रभवतीति वीर्यप्रभवः तं वीर्यप्रभवं, सेनान्य==सेना नयतीति सेनानीः, त सेनान्यम् । उशन्ति = "वश कान्तौ" इति धातोर्लट्, सम्प्रसारणञ्च । ब्रह्माङ्गभूः=ब्रह्मणां==सद्योजातादिमन्त्राणाम्, अङ्गानि=हृदयादिमन्त्राः, ब्रह्माङ्गनि । "वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । ब्रह्माऽङ्गाना भूः=स्थानम्, ब्रह्माङ्गभूः, यद्वा ब्रह्मा=सकलजगन्निर्माणकर्ता विधिरङ्गभूः=तनयो यस्य स ब्रह्माङ्गभूः । वक्ष्यति च "यमामनन्त्यात्मभुवोऽपि कारणमिति । योजितात्मा=योजितः आत्मा येन सः योजितात्मा, जीवपरैक्यमवगम्य स्थित इत्यर्थः । त्वदेकेषुनिपातसाध्यः=एकश्चाऽसौ इषुः, एकेषु, "कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इत्यमरः । तव एकेषुः त्वदेकेषुः, तस्य निपातः त्वदेकेषुनिपातः, तेन साध्यः त्वदेषुनिपातसाध्यः ।

**भावार्थः**—यस्मादमी देवाः शत्रुविजयार्थं हरस्य तेजःसम्भूतं सेनापतिं कामयन्ते । कृतमन्त्रन्यासः समाधिस्थः स शिवोऽपि भवता एकस्यैव बाणस्य निपातेन वशीकर्तुं शक्यो भवतीति भावः ।

**भाषा** - क्योंकि ये देवतालोग शत्रु का पराजय करने के लिये शङ्कर के तेज से उत्पन्न भया सेनापति को चाहते है । सम्प्रति मन्त्र न्यास करके समाधि में बैठे हुये भगवान् शङ्कर का मनोविकार तुह्मारे एक ही बाण के निपात से हो सकता है ।

ननु मया हरः कस्या योषितो वशं नेतव्य इत्यत्राह—

**तस्मै हिमाद्रेः प्रयतां तनजां यतात्मने रोचयितुं यतस्व ।**
**योषित्सु तद्वीर्यनिषेकभूमिः, सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥**

ऐसा करो रुचिकर लगे गिरिजा उमापति को सखे ।
शिव-वीर्य क्षरण यही उमा है और अन्य न हे सखे ॥

**अन्वयः**—यतात्मने तस्मै प्रयता हिमाद्रेः तनूजा रोचयितुं यतस्व। योषित्सु तद्वीर्यनिषेकभूमिः सा एव क्षमा, इति आत्मभुवा उपदिष्टम्॥

**व्याख्या**—यतात्मने = नियतचित्ताय, तस्मै = भवाय, प्रयता = पवित्रा, हिमाद्रेः = हिमाचलस्य, तनूजा,=सुता, पार्वतीमित्यर्थः। रोचयितुं = प्रीणयितुं, यतस्व=यत्नं कुरु। योषित्सु=स्त्रीषु मध्ये, तद्वीर्यनिषेकभूमिः=हररेतःक्षरणक्षत्रं, सा एव = पार्वती एव, क्षमा=समर्था, इति=इदम्, आत्मभुवा = ब्रह्मणा, उपदिष्टं =कथितम्। "उमे एव क्षमे वोढुम्" २।६०, इत्यादिना उक्तमित्यर्थः।

**व्युत्पत्तिः**—यतात्मने = यतः आत्मा यस्य स यतात्मा, तस्मै यतात्मने, तस्मै = अत्र 'रोचयितुम्' इत्यत्र सम्बन्धात् "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वात् चतुर्थी। योषित्सु= "यतश्च निर्द्धारणम्" इति सप्तमी। तद्वीर्यनिषेकभूमिः = तस्य वीर्यं तद्वीर्यं, तस्य निषेकः तद्वीर्यनिषेकः, तस्य भूमिः तद्वीर्यनिषेकभूमिः। स्त्रीणां मध्ये सैव पार्वती हरवीर्यनिषेकाधिकरणत्वयोग्येत्यर्थः। आत्मभुवा= आत्मना एव भवतीति आत्मभूः, तेन आत्मभुवा। "न भूसुधियोः" इति यण्निषेधात् "अचि श्नुधातुभ्रुवा य्वोरियङुवङौ" इत्युवङ्। "ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः", इत्यमरः।

**भावार्थः**—विषयव्यावृत्तचित्ताय हराय परिशुद्धान्तःकरणा पार्वतीं रोचयितुं यत्नं कुरु। स्त्रीणां मध्ये सैव हरवीर्यनिषेकाधिकरणत्वयोग्ये ब्रह्मणा स्वयं कथितमस्तीति भावः।

**भाषा**—विषय वासनाओं से पराङ्मुख शङ्कर के मन में अत्यन्त शुद्ध अन्तःकरण वाली पार्वती की चाह उत्पन्न करने के लिये प्रयत्न करो। क्योंकि सकल-स्त्रियों में वही एक पर्वती शङ्कर के वीर्यनिषेक की योग्य अधिकारिणी है, यह बात स्वयं ब्रह्माजी ने कही हुई है।

साऽपि इदानीं तस्य सनिकृष्टैवास्तीत्याह—

**गुरोर्नियोगाच्च नगेन्द्रकन्या, स्थाणुं तपस्यन्तमधित्यकायाम्।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः, श्रुतं मया मत्प्रणिधिः स वर्गः॥१७॥**

हे सेविका गिरिजा जहाँ है रुद्र तप करते प्रवर।
मैं ने सुना है अप्सरा-गण से बने जो गुप्त चर॥

**अन्वयः**—नगेन्द्रकन्या च गुरोः नियोगात् अधित्यकाया तपस्यन्तं स्थाणुम् अन्वास्ते, इति मया अप्सरसां मुखेभ्यः श्रुत, स वर्गः मत्प्रणिधिः अस्ति।

**व्याख्या**—नगेन्द्रकन्या च = पर्वतेन्द्रकुमारी च, पार्वती चेत्यर्थः, गुरोः = पितुः, हिमालयस्येत्यर्थः, नियोगात् = शासनात् = , अधित्यकायाम् = ऊर्ध्वभूमौ, हिमालयस्येति शेषः, तपस्यन्त = तपश्चरंतं, तपः कुर्वन्तमित्यर्थः, स्थाणुं = रुद्रम्, अन्वास्ते = उपास्ते । इति = इद, मया = इन्द्रेण, अप्सरसाम् = स्ववेंश्याना, मुखेभ्यः = आननेभ्यः, श्रुतम् = आकर्णितम् । यतः, स वर्गः = अप्सरसा गणः, मत्प्रणिधिः = मद्गूढचरः अस्तीति शेषः ।

**व्युत्पत्तिः**—नगेन्द्रकन्या = स गच्छन्तीति नगाः, "अन्येष्वपि दृश्यते" इति डप्रत्ययः, "नगोऽप्राणिष्वन्यतरस्याम्" इति नञो वा प्रकृतिभावः। "शैल-वृक्षौ नगावगौ" इत्यमरः। नगाना नगेषु वा इन्द्रः, नगेन्द्रः "यतश्च निर्द्धारणम्" इति षष्ठी सप्तमी वा, नगेन्द्रस्य कन्या नगेन्द्रकन्या, "कन्या कुमारी" इत्यमरः, "कन्या त्वजातोपयमा सलज्जा नवयौवना" इति साहित्यदर्पणश्च । अधित्यका-याम् = अध्युपसर्गात् "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः। "भूमिरूर्ध्वमधित्यका" इत्यमरः। तपस्यन्तं = तपश्चरन् तपस्यन्, तं तपस्यन्त, तपः शब्दात् "कर्मणो रोमन्थपोभ्या वर्तिचरोः" इति क्यङ् प्रत्ययः, ततः शतृ प्रत्ययः। स्थाणु = तिष्ठति इति स्थाणुः, तं स्थाणु "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः। अप्सरसा = "स्त्रिया बहुष्वप्सरसः स्ववेंश्या उर्वशी-मुखाः" इत्यमरः। मत्प्रणिधिः = मम प्रणिधिः। मत्प्रणिधिः। "यथार्हवर्णः प्रणि-धिरपसर्पश्चरः स्पशः" इत्यमरः।

**भावार्थः**—पार्वती पितुराज्ञया हिमालयशिखरे तपश्चरन्तं हरमुपास्त इति मदीयगूढचराणामप्सरसा मुखेभ्यो मया श्रुतमस्तीति भावः।

**भाषा**—इस समय पार्वती अपने पिता की आज्ञा से हिमालय के शिखर-पर तपश्चर्या करने वाले शङ्कर की उपासना कर रही है, यह खबर हमारे गुप्तचर अप्सराओं के मुख से हमने सुनी है।

प्रकृतमुपसंहरति—

**तद्गच्छ सिद्धयै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव।**
**अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥**

बीजार्थ अङ्कुर जन्म के पहले सलिल सम हे सखे।
पर हेतु से है सिद्धि तो भी सुखद जाओ हे सखे॥

**अन्वयः**—तत् सिद्धयै गच्छ। देवकार्यं कुरु। अयम् अर्थः अर्थान्तरभाव्य

एव, बीजाङ्कुरः उदयात् प्राक् अम्भ इव त्वाम् उत्तमं प्रत्ययम् अपेक्षते ।

**व्याख्या**—तत् = तस्मात् कारणात्, सिद्ध्यै = सिद्ध्यर्थम्, कार्यस्येति शेषः । गच्छ = याहि । देवकार्यं = सुरकर्म, कुरु = विधेहि । अयम्, अर्थः=प्रयोजनम्, अर्थान्तरभाव्य एव = करणान्तरसाध्य एव अस्तीति शेषः । तच्च करणान्तरं पार्वतीसंनिधानमिति यावत्, तथापि बीजाऽङ्कुरः = बीजसाध्यः अङ्कुरः । उदयात् = उत्पत्तेः, प्राक् = पूर्वम्, अम्भ इव==जलम् इव, त्वा==भवन्तम्, उत्तम==प्रकृष्टं, प्रत्ययं==कारणम्, अपेक्षते==अपेक्षा करोति ।

**व्युत्पत्तिः**—सिद्ध्यै== अत्र "द्ध्यै" इति श्रुतिकटुदोषः इति साहित्यदर्पणः । देवकार्यं==देवाना कार्यं देवकार्यं, तत् । कुरु==आशिषि लोट् । अर्थः=="अर्थः प्रकारे विषये वित्तकारणवस्तुषु । अभिधेये च शब्दाना वृत्तौ चाऽपि प्रयोजने॥" इति विश्वः । अर्थान्तरभाव्य.==अन्यः अर्थः अर्थान्तरम् । मयूरव्यंसकादायश्च" इति समासः अर्थान्तरेण भाव्यः अर्थान्तरभाव्यः । बीजाऽङ्कुरः = बीजेन साध्यः, अङ्कुरः बीजाङ्कुरः । "शाकपार्थिवादीना सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः । उदयात्='प्राक् इत्यनेन अञ्चूत्तरपदेन योगे "अन्यारादितरर्ते दिवशब्दाञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । प्रत्ययं = प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । अत्रोपमालङ्कारः ।

**भावार्थः**—तस्मात् त्वं पार्वतीपरमेश्वरसङ्गममात्रलभ्यस्य सेनापतिलाभरूपस्य कार्यस्य सिध्यर्थं गच्छ । परमेश्वरवशीकरणरूप देवाना कार्यं सम्पादय । पार्वतीसन्निधानादिभिः साध्यमपि हरचित्ताकर्षणरूपं देवकार्यं प्रकृष्टहेतुभूतं त्वा प्रतिपालयति । यथा क्षितिवपनादिसयोगसाध्योऽपि बीजाङ्कुरः स्वोत्पत्तेः प्राक् प्रकृष्टकारणभूत जलमपेक्षते तथैवेति भावः ।

**भाषा**—इस लिये तुम उमा महेश्वर के सङ्गम ही से होने वाले सेनापति के लाभ कार्य की सिद्धि के लिये जाओ । शङ्कर के चित्ताकर्षणरूप देवताओं के कार्य का सम्पादन करें । जैसे पृथिवी और कृषि के संयोग से उत्पन्न होने वाला बीजाङ्कुर, जल की अपेक्षा रखता है, उसी तरह पार्वती के सान्निध्य मात्र से होने वाला शङ्कर का चित्ताकर्षण रूप देवताओं का यह कार्य भी प्रकृष्टकारणभूत तुम्हारी अपेक्षा रखता है ।

इत्थं कामदेव नियुज्य, त्रिभिः श्लोकैः पुनस्तमेव प्रोत्साहयति—

**तस्मिन्सुराणां विजयाभ्युपाये, तवैव नामाऽस्त्रगतिः कृती त्वम् ।**

अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १६ ॥

शिव में तुम्हारी अस्त्रगति है धन्य हो तुम इस लिये ।
जो अन्य कर्म समान कर्म न है वही यश के लिये ॥

**अन्वयः**—सुराणां विजयाऽभ्युपाये तस्मिन् अस्त्रगतिः तव एव नाम, अतः त्वं कृती । हि अप्रसिद्धम् अपि अनन्यसाधारणम् एव कर्म पुंसां यशसे भवति ॥

**व्याख्या**—सुराणां = देवानां, विजयाऽभ्युपाये = जयोपायभूते, तस्मिन्= महादेवे, अस्त्रगतिः=आयुधप्रसरः, तव एव नाम = भवतः एव, सम्भाव्यते । अतः, त्वं=भवान् , कृती=धन्यः । हि=यतः, अप्रसिद्धम् अपि = अप्रतिथम् अपि, अनन्यसाधारणम् एव = अनपरसामान्यम् एव, लोकोत्तरमेवेत्यर्थः । कर्म=कार्यं, पुंसां = पुरुषाणां, यशसे = कीर्तये, भवतीति शेषः । इदं तु कर्म सुप्रसिद्धं सर्व-साधारणं चेत्यतियशस्करमिति ध्वन्यते ।

**व्युत्पत्तिः**—विजयाऽभ्युपाये=विशिष्टो जयः विजयः, तस्य अभ्युपायः विजयाऽभ्युपायः, तस्मिन् विजयाभ्युपाये । अस्त्रगतिः=अस्त्रस्य गतिः अस्त्रगतिः। नाम=इदं पद सम्भावनायाम् । कृती=कृतम् अस्याऽस्तीति कृती "अत इनि-ठनौ" इति इनिप्रत्ययः, "सौ च" इति दीर्घः । अप्रसिद्धम्=न प्रसिद्धम् अप्र-सिद्धम् । अनन्यसाधारणम् = अन्येषु साधारणम् अन्यसाधारणम् , "साधारणं तु सामान्यम्" इत्यमरः । न अन्यसाधारणम् अनन्यसाधारणं । पुंसां="स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इत्यमरः । यशसे = "यशः कीर्तिः समज्ञा च" इत्यमरः ॥

**भावार्थः**—देवानां तारकासुरविजयस्योपायभूते तस्मिन् हरे तवैव शस्त्राणां गतिः सम्भाव्यते, नान्येषाम् । अतस्त्वं कृतार्थोऽसि । यस्मादन्यैः कदाचिदपि कर्तुमशक्यं प्रसिद्धिरहितमपि कर्म पुरुषाणां यशः सम्भावयितुं समर्थं भवति । परमेश्वरचित्ताकर्षणलक्षणमिदं तु कर्मान्यैर्दुष्करं सुप्रसिद्धञ्चेति भवानतिमहतो यशसो भाजनं भविष्यत्येवेति भावः ।

**भाषा**—देवताओं के तारकासुर विजय के उपायभूत इस शङ्कर में तुम्हारे ही शस्त्रों की गति सम्भावित है । दूसरों के शस्त्रों की नहीं, अतः तुम कृतार्थ है । क्योंकि लोक साधारण से नहीं होने वाला, ऐसा लोकोत्तर अप्रसिद्ध कार्य ही दुनिया में यशको फैलाने के लिये समर्थ होता है ।

न केवलं भावियशोभाजनतया धन्यस्त्वं, किन्त्विदानीमपि त्वं धन्य एवासीत्याह·

**सुराः समभ्यर्थयितार एते, कार्यं त्रयाणामपि विष्टपानाम् ।**
**चापेन ते कर्म न चाऽतिहिंस्रमहो ! बताऽसि स्पृहणीयवीर्यः ॥२०॥**

**प्रार्थी अमर, त्रयलोक का यह कार्य तुमसे सिद्ध है ।**
**इस कार्य में हिंसा न, तुममें अमित शक्ति प्रसिद्ध है ॥**

**अन्वयः**—एते सुराः समभ्यर्थयितारः। कार्यं त्रयाणाम् अपि विष्टपानाम् । कर्म ते चापेन, अतिहिंस्रं च न । अहो बत । स्पृहणीयवीर्यः असि ॥

**व्याख्या**—एते सुराः=एते देवाः, समभ्यर्थयितारः=याचितारः । कार्यं= प्रयोजनं त्रयाणामपि=वह्निसंख्यकानामपि, विष्टपाना=लोकानाम् , अस्तीति शेषः । सर्वलोकाऽर्थमित्यर्थः । कर्म = क्रिया, ते=तव, चापेन=धनुषा, न त्वन्येनेति शेषः । अतिहिंस्र च न=अतिघातुकं च न । सर्वेषामपि चापेन क्रियमाणं कर्म शरीरनाशकत्वेन घातुकमेव भवति । तव तु तपोमात्रहिंसया नात्यन्तघातुकमित्यर्थः । अहो=आश्चर्यं, बत=संतोषोऽस्ति, त्वं, स्पृहणीयवीर्यः असि = अभिलषणीयपराक्रमः असि ।

**व्युत्पत्तिः**—समभ्यर्थयितारः=समभ्यर्थयन्त इति ' समभ्यर्थयितारः=त्रयाणा=त्रिशब्दात् आमि "त्रेस्त्रयः" इति त्रयादेशः । अपि=सङ्ख्याशब्दसन्निकर्षे उपादीयमानोऽपि शब्दः सङ्ख्येयस्य सजातीयान्तरं व्यवच्छिनत्ति । अतोऽत्र लोकान्तरव्यवच्छेद उक्तः । विष्टपानाम्="अथो जगती लोको विष्टपं भुवन जगत्" इत्यमरः । कर्म= "कर्म क्रिया" इत्यमरः । अहो="अहो ही च विस्मये" इत्यमरः । बत="बतामन्त्रणसन्तोषखेदाऽनुक्रोशविस्मये" इति विश्वः । स्पृहणीयवीर्यः=स्पृहयितुं योग्य स्पृहणीयं, तत् वीर्यं यस्य स स्पृहणीयवीर्यः । त्वद्वीर्यस्वरूपनिरूपणावस्थाया ममापि विस्मयसन्तोषौ जायेते इत्यर्थः ।

**भावार्थः**-ये देवाः सर्वेषामपि लोकाना वरदास्ते त्वामभ्यर्थयन्ते । सेनानीलाभरूपं कार्यं त्रयाणामपि जगता प्रयोजनम् । तव धनुषा क्रियमाणं कर्म तपोमात्रहिंसया नात्यन्तहिंस्रं, प्राणघातकत्वाभावात् । अहो ममाप्येव विधं वीर्यं भूयादिति सर्वैरप्यभिलाषणीयवीर्योऽसीति भावः ।

**भाषा**–दुनिया को वर प्रदान करने वाले, ये देवता लोग तुम्हारे याचक है। सेनापति की प्राप्ति होना सकल जगत का कार्य है । तुम्हारे धनुष्य से सिद्ध होने

वाला यह कार्य तपो मात्र का भङ्ग करने से किसी का प्राणघातक नहीं है। अहो तुम्हारा पुरुषार्थ सबके लिये श्लाघनीय है।

यच्चोक्तं "सहायमेकं मधुमेव लब्ध्वा" इति तदपि ते प्रार्थनां विनैव सिद्धमित्याह—

**मधुश्च ते मन्मथ ! साहचर्यादसावनुक्तोऽपि सहाय एव।**
**समीरणो नोदयिता भवेति, व्यादिश्यते केन हुताऽशनस्य ॥२१॥**

**हे कामदेव ! वसन्त ऋतु तव मददगार बना स्वयम्।**
**ज्यों ज्वलित पावक का सहायक वायु होता है स्वयम् ॥**

**अन्वयः**—हे मन्मथ ! असौ मधुश्च ते साहचर्यात् अनुक्तोऽपि सहाय एव अस्ति। समीरणः हुताशनस्य नोदयिता भव इति केन व्यादिश्यते।

**व्याख्या**—हे मन्मथ ! हे काम, असौ=पुरो निर्दिष्टः, मधुश्च=वसन्तोऽपि, ते = तव, साहचर्यात् = सहचरत्वात्, अनुक्तोऽपि = अकथितोऽपि, सहाय एव= सहकारी एव, अस्तीति शेषः। [ तथा हि ] समीरणः=वायुः, हुताशनस्य=हुतभुजः, अग्नेरित्यर्थः, नोदयिता भव = प्रेरयिता भव, इति=इत्थं, केन = पुरुषेण, व्यादिश्यते=अभिधीयते। अपि तु न केनाऽपीति काकुध्वनिः।

**व्युत्पत्तिः**—हे मन्मथ="मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः" इत्यमरः साहचर्यात् = सह चरतीति सहचरः, "चरेष्टः" इति टप्रत्ययः। सहचरस्य भावः साहचर्यं, तस्मात् साहचर्यात्, "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्प्रत्ययः। अनुक्तः=न उक्तः अनुक्तः। समीरणः="समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः। हुताशनस्य = हुतम् अश्नाति इति हुताशनः, तस्य हुताशनस्य "हिरण्यरेता हुतभुग्दहनो हव्यवाहनः" इत्यमरः। नोदयिता=नोदयतीति नोदयिता। अत्र वसन्तसमीरणयोः उक्तिं विना सहायताकरण सामान्यधर्मः। स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथक् निर्दिष्ट इति प्रतिवस्तूपमालङ्कारोऽयम्। तदुक्त साहित्यदर्पणे—

"प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।
एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति।

**भावार्थः**—हे मदन ! यस्त्वया पूर्वं हरविजये सहायतया निर्दिष्टः, स वसन्तः अप्रेरितोऽपि तव स्वाभाविकसख्यात् सहकार्येवास्ति। त्वमग्नेः प्रेरको भवेति पवनः केन नियुज्यते, न केनापीति भावः।

**भाषा**—और तुमने शङ्कर के विजयमें सहायक के रूपमें जो वसन्त का

नाम लिया था, वह तो विना कहे ही स्वाभाविक मैत्री के कारण तुम्हारा सहकारी बना ही है । हवा किसी अन्यकी प्रेरणाके विना ही अग्नि की सहायता करती है।

अथ महेन्द्रेण तथा नियुक्तस्य मदनस्य प्रवृत्तिमाह—

**तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।**
**ऐरावतास्फालनकर्कशेन, हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥२२॥**

**कह कर तथाऽस्तु सुहार सम आदेश ले शिर से, चला ।**
**गज-तन-कठिन-कर इन्द्र ने सुहला दिया तन शुचि भला ॥**

**अन्वयः**—तथा इति भर्तुः-शेषाम् इव आज्ञा मूर्ध्ना आदाय मदनः प्रतस्थे । इन्द्रः ऐरावतास्फालनकर्कशेन हस्तेन तदङ्गं पस्पर्श ।

**व्याख्या**—तथा इति=एवमस्त्विति, भर्तुः=स्वामिनः, इन्द्रस्येत्यर्थः, शेषाम् इव=प्रसाददत्ता मालाम् इव, आज्ञाम्=अनुज्ञा, मूर्ध्ना=शिरसा, आदाय=गृहीत्वा, मदनः=मन्मथः प्रतस्थे=प्रस्थानं चकार, जगामेत्यर्थः । इन्द्रः=पाकशासन, ऐरावतास्फालनकर्कशेन=ऐरावणताडनकठोरेण, हस्तेन=करेण तदङ्गं=तद्देहं, मदनशरीरमित्यर्थः, पस्पर्श=स्पृष्टवान् । हस्तस्पर्शेन सम्भावयामासेत्यर्थः ।

**व्युत्पत्तिः**—भर्तुः=बिभर्तीति भर्त्ता तस्य भर्तुः । शेषां ॥ "प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिना" इति विश्वः । "माल्याऽक्षतादिदाने स्त्री शेषा" इति वैजयन्तीकेशवौ च । मूर्ध्ना="उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । "अल्लोपोऽनः" इत्यकारलोपः । मदनः=मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः" इत्यमरः । प्रतस्थे=प्रोपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । इन्द्रः="इन्द्रो मरुत्वान्मघवा" इत्यमरः । ऐरावतास्फालनकर्कशेन=ऐरावतस्य आस्फालनम् ऐरावतास्फालनम्, "ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः" इत्यमरः । ऐरावतास्फालनेन कर्कशः ऐरावतास्फालनकर्कशः, तेन ऐरावतास्फालनकर्कशेन "कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्" इत्यमरः तदङ्गं=तस्य अङ्ग तदङ्गं, तत् । पस्पर्श="स्पृश स्पर्शने" इति धातोर्लिट् "शर्पूर्वाः खयः" इति सकरलोपः ।

"शेषामिवाज्ञाम् इत्यत्र साधकबाधकप्रमाणाऽभावादुपमोत्प्रेक्षयोः सन्देहसङ्करः । यदि भर्त्रा शेषाऽपि दत्ता तदा, तामाज्ञामिवेत्युपमा । अथ न दत्ता, तर्हि शेषात्वेन उत्प्रेक्षिता । शेषादानं तु सन्दिग्ध"मिति मल्लिनाथः ।

**भावार्थः**—मदनः महेन्द्रस्याज्ञा प्रस्थानादिसमये बन्धुभिर्दीयमानं माल्याक्षतादिकमिव शिरसा समादाय प्रस्थानोद्यमं चकार। इन्द्रोऽपि प्रयाणप्रणामसमये ऐरावतताडनकर्कशेन करेण मदनदेहं स्पृष्टवानिति भावः।

**भाषा**—कामदेव, यात्रा के समय बान्धवों से दिया जाने वाला माल्य अक्षत के समान महेन्द्र की आज्ञा का नम्र मस्तक से ग्रहण कर, जाने के लिये तैयार हो गया, इन्द्र ने भी ऐरावत हाथी के ताडन से कठोर भये हुए अपने हाथ से जाते समय काम देव की पीठ ठोक दिया।

अथ प्रस्थितस्य मदनस्य हरपदप्राप्तिमाह—

**स माधवेनाऽभिमतेन सख्या, रत्या च साशङ्कमनुप्रयातः।**
**अङ्गव्ययप्रार्थितकार्यसिद्धिः, स्थाण्वाश्रमं हैमवतं जगाम॥ २३॥**

**रति–ऋतु–वसन्त लिये मदन पहुँचा अचल में शिव निकट।**
**चाहे शरीर रहे न तो भी कार्य यह होगा विकट॥**

**अन्वयः**—सः अभिमतेन सख्या माधवेन रत्या च साशङ्कम् अनुप्रयातः सन् अङ्गव्ययप्रार्थितकार्यसिद्धिः हैमवतं स्थाण्वाश्रम जगाम।

**व्याख्या**—सः = कामदेवः, अभिमतेन = प्रियेण, सख्या = सुहृदा, माधवेन=वसन्तेन, रत्या च=स्वप्रियया च, साशङ्कम् = आशङ्कासहितम् , सभयमित्यर्थः। अनुप्रयातः=अनुगतः सन् , अङ्गव्ययप्रार्थितकार्यसिद्धिः=शरीरनाशप्रार्थितकर्मसाफल्यः, शीर्त्वा मृत्वाऽपि सर्वथा देयकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः।। हैमवतं=हिमालयस्थ, स्थाण्वाश्रमं, महादेवाश्रमं, जगाम = ययौ।

**व्युत्पत्तिः**—सख्या="अथ मित्रं सखा सुहृत्" इत्यमरः। माधवेन= मधुरेव माधवः, तेन माधवेन, स्वार्थे अण्प्रत्ययः। साशङ्कम्=आशङ्कया सहितं यथा स्यात्तथा साशङ्क, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभाव.। अङ्गव्ययप्रार्थितकार्यसिद्धिः = अङ्गस्य व्ययः अङ्गव्ययः, "अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्" इत्यमरः। अङ्गव्ययेन प्रार्थिता अङ्गव्ययप्रार्थिता। कार्यस्य सिद्धिः कार्यसिद्धिः। अङ्गव्ययप्रार्थिता कार्यसिद्धिः। येन सः अङ्गव्ययप्रार्थितकार्यसिद्धिः। हैमवतं=हिमम् अस्ति अस्मिन् हिमवान्, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्प्रत्यः। हिमवति भवः हैमवतः, तं हैमवतं "तत्र भवः" इत्यण्प्रत्ययः। "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च। हिमवत्प्रस्थ-

गतमित्यर्थः । स्थाण्वाश्रमं=स्थाणोः आश्रमः स्थाण्वाश्रमः, तं स्थाण्वाश्रमं "स्थाणू रुद्र उमापतिः" इत्यमरः" । जगाम="गम्लृ गतौ" इति धातोर्लिट् "कुहोश्चुः" इति अभ्यासकवर्गस्य चवर्गादेशः ।

**भावार्थः**—स्वप्रियबन्धुना वसन्तेन स्वभार्यया रत्या च सभयमनुगतो मदनः शीर्वा मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्, हिमालय-प्रस्थगतं शिवास्याश्रम गतोऽभूदिति भावः ।

**भाषा**—प्रियमित्र वसन्त और प्रियपत्नी रती इन दोनों से समय अनुगत भया हुवा कामदेव "जान देकर भी देवताओं के इसकार्य को मैं करूंगा" ऐसा दृढ निश्चयकर हिमालय के शिखर पर शङ्कर के आश्रमको चला ।

अथ हराश्रमे कामोद्दीपनार्थमादौ वसन्तस्य प्रादुर्भावमाह—

**तस्मिन्वने संयमिनां मुनीनां, तपः समाधेः प्रतिकूलवर्ती ।**
**सङ्कल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥२४॥**

**वन बीच मुनि संयम विरोधी मंजु माधव छागया ।**
**मानो मदन अभिमान ही शुचि रूप धर कर आगया ॥**

**अन्वयः**—तस्मिन् वने संयमिना मुनीना तपः समाधेः प्रतिकूलवर्ती मधुः सङ्कल्पयोनेः अभिमानभूतम् आत्मानम् आधाय जजृम्भे ।

**व्याख्या**—तस्मिन् वने=स्थाण्वाश्रमे, संयमिना=समाधिमता, मुनीनाम् = ऋषीणां, तपःसमाधेः=चित्तैकाग्रतायाः, प्रतिकूलवर्ती=विपरीतवर्ति, विरोधी-त्यर्थः । मनुः=वसन्तः, सङ्कल्पयोनेः=मनोभवस्य, कामदेवस्येत्यथः । अभिमा-नभूतं=गर्वभूतं, गर्वकारणभूतमित्यर्थः आत्मान=स्वस्वरूपम्, आधाय= संनिधाय, जजृम्भे=प्रादुर्बभूव, वसन्तधर्मान् प्रवर्तयामासेत्यर्थः ।

**व्युत्पत्तिः**—वने="अटव्यरण्य विपिनं गहनं काननं वनम्" इत्यमरः । संयमिना=सयमः अस्ति येषा ते सयमिनः, तेषा सयमिनाम् । इनिप्रत्ययः । तपःसमाधेः=तपसः समाधिः तपःसमाधिः, तस्य तपःसमाधेः । प्रतिकूलवर्ती= प्रतिकूलं यथा स्यात्तथा वर्तते ताच्छीलः प्रतिकूलवर्ती । प्रतिकूलशब्दपूर्वकात् "वृतु वर्तने" इति धातोः ताच्छील्ये णिनिप्रत्ययः । सङ्कल्पयोनेः=सङ्कल्पः योनिः यस्य सः सङ्कल्पयोनिः, तस्य सङ्कल्पयोनेः "सङ्कल्पः कर्म मानसम्" इत्य-मरः । अभिमानभूतम्=अभिमानः भूतः अभिमानभूतः, तम् अभिमानभूतं,

गर्वोऽभिमानोऽहङ्कारः" इत्यमरः। "सुप्सुपा" इति समासः। अत्र "आयुर्घृतम्" इतिवत् कार्यकारणयोरभेद लक्षणा। जजृम्भे="जभी जृभि गात्रविनामे" इति धातोः, लिट्, "इदितो नुम् धातोः" इति नम्॥

**भावार्थः**—समाधिमता चित्तैकाग्रताया विरोधी वसन्तो मदनहृदयानुरूपं स्वरूपमादाय हरतपोवने कुसुमपल्लवकोकिलकूजितादिलिङ्गबाहुल्येन प्रकटोऽभूदिति भावः।

**भाषा**—चित्त की एकाग्रता कर समाधि में रहने वाले मुनियो का विरोधी वसन्त, कामदेव के मन के अनुसार अपने स्वरूप को बनाकर कुसुम, नवपल्लव, कोकिल कूजित, भ्रमर झङ्कार इत्यादि चिह्नों से शङ्कर के तपोवन में प्रकट हुआ।

अथ वसन्तागमन सविस्तरं प्रतिपादयन् प्रथमं मलयमारुतप्रवृत्तिमाह—

**कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं, प्रवृत्ते समयं विलङ्घ्य।**
**दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज॥ २५॥**

**आया मनोज्ञ वसन्त, भास्कर दक्षिणायन हो गये।**
**दक्षिण दिशा से बह चला मारुत सकल दुख खो गये॥**

**अन्वयः**—उष्णरश्मौ समयं विलङ्घ्य कुबेरगुप्ता दिशं गन्तुं प्रवृत्ते सति दक्षिणा दिक् मुखेन गन्धवह व्यलीकनिश्वासम् इव उत्ससर्ज॥

**व्याख्या**—उष्णरश्मौ = सूर्ये, साहसिके नायके च, समयं=दक्षिणायनकालं सङ्गमकालं च, विलङ्घ्य=व्यतिक्रम्य, पूर्वव्यवस्थापित गमनकालमतिक्रम्येत्यर्थः। कुबेरगुप्ता = धनपतिरक्षिता, कुत्सितशरीररेण केन चिद्रक्षिता च, दिश=दिशाम् उदीचीमित्यर्थः स्त्रीलिङ्गाक्षिप्ता काचित् नायिका च, गन्तुं=चलितुं संगन्तु च प्रवृत्ते = कृतारम्भे सति, दक्षिणा दिक्=दक्षिणदिशा, दाक्षिण्यवती काचित् नायिका च, मुखेन = पुरोभागेन, वक्त्रेण च, गन्धवहं = वायुं, व्यलीकनिश्वासम् इव=दुःखनिश्वासम् इव, उत्ससर्ज=प्रवर्त्तयामास।

**व्युत्पत्तिः**—उष्णरश्मौ = उष्णा रश्मयः यस्य स उष्णरश्मिः, तस्मिन् उष्णरश्मौ "किरणोस्रमयूखांऽशुगभस्तिघृणिरश्मयः" इति "भास्वद्विवस्वत्सप्ताऽश्वहरिदश्वोष्णरश्मयः" इत्यमरः। समयं="समयः शपथाऽऽचारकालसिद्धान्तसंविदः" इत्यमरः। कुबेरगुप्ता = कुबेरेण गुप्ता कुबेरगुप्ता, त कुबेरगुप्तां, "कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः" इत्यमरः। यद्वा कुत्सितं वेरं = शरीरं यस्य स कुवेरः = कश्चित्पुरुषः, तेन गुप्ता कुवेरगुप्ता, ता कुवेरगुप्ता॥

दिशं = "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । गन्धवहं = वहतीति वहः पचाद्यच् । गन्धस्य वहः गन्धवहः, तं गन्धवहं । पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः'" इत्यमरः । व्यलीकनिश्वासम् = व्यलीकेन निश्वासः व्यलीकनिश्वासः, तं व्यलीकनिश्वासं, "व्यलीक स्वप्रियेऽनृते" इति वैजयन्ती । उत्ससर्ज = उदुपसर्गपूर्वकात् "सृज विसर्गे" इति धातोः "परोक्षे लिट्" इति लिट् । अत्र कुबेरगुप्तामिति विशेषणेन, दक्षिणेति विशेष्येण, स्त्रीलिङ्गत्वेन च पर-परिग्रहभूतप्रतिनायिकात्वमुदीच्या प्रतीयते ।

"अत्र उत्प्रेक्षाऽलङ्कारः । न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यं, केवलविशेषणसामर्थ्यादेवाऽप्रस्तुतप्रतीतौ सोक्तिष्ठते । अत्र तु दक्षिणेति विशेष्य-सामर्थ्यादपि नायिका प्रतीयते । न च श्लेष एव प्रकृताऽप्रकृतविषयः, उभयश्लेषे श्लिष्टविशेष्याऽनङ्गीकारात् । तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः, सच व्यलीकनिश्वा-सरूपचेतनधर्मसम्भावनार्थं दक्षिणस्या दिशो नायिकया सहाऽभेदमासादयन्नभेद-लक्षणाऽतिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षा निर्वहतीति वाच्यसि-सिद्ध्यङ्गभूत इत्युत्पश्यामः" इति म०म०मल्लिनाथाः ।

**भावार्थः**—साहसिके स्वभर्तरि सदाचारं व्यतिक्रम्य परङ्गनासङ्गति प्रवृत्ते सति स्त्रियो दाक्षिण्याद् अकिञ्चिद्वदन्त्यो दुःखान्निःश्वसन्ति, तद्वत्, सूर्ये दक्षिणाय-नकालं व्युत्क्रम्य धनपतिपालितामुदीचीं दिशं चलितुं प्रवृत्ते सति, दक्षिणा दिक् अग्र-भागेन पवनं प्रवर्तयामास । संप्रति उत्तरायणे सति मलयानिलःप्रवृत्ता इति भावः

**भाषा**—साहसी पति की सदाचार का अतिक्रमण कर पराङ्गना में आसक्ति होने पर, चतुर स्त्रिया मुख से कुछ भी न कहकर दुःख से केवल दीर्घ निश्वास लेती है, उसी तरह सूर्यके दक्षिणायनं काल की मर्यादा को छोड़कर कुबेर की उत्तर दिशा में प्रवृत्त होने पर दक्षिण दिशा अग्रभाग से मलय पवन को प्रवृत्त करने लगी ।

अथाशोकपुष्पोद्गमं वर्णयति—

**असूत सद्यः कुसुमान्यशोकः, स्कन्धात्प्रभृत्येव सपल्लवानि ।**
**पादेन नापेक्षत सुन्दरीणां, सम्पर्कमासिञ्जितनूपुरेण ॥ २६ ॥**

तत्क्षण अशोक प्रसन्नतासे सरस कुसुमित बन गया ।
स्त्री चरण ताडन की अपेक्षा की न वह बन ठन गया ॥

**अन्वयः**—अशोकः सद्यः स्कन्धात् प्रभृति एव सपल्लवानि कुसुमानि असूत, आसिञ्जितनूपुरेण सुन्दरीणां पादेन सम्पर्कं न अपैक्षत ।

**व्याख्या**—अशोकः = वञ्जुलः सद्यः=सपदि, तत्क्षणे इत्यर्थः । स्कन्धात् प्रभृत्येव = काण्डात् आरभ्यैव, सपल्लवानि = किसलयसहितानि, कुसुमनि पुष्पाणि, असूत = उत्पादयामास । उभयमपि पल्लवानि कुसुमानि च सहैवा-जीजनदित्यर्थः । आसिञ्जितनूपुरेण, शब्दायमानमञ्जीरेण सुन्दरीणा = रूपवतीना, पादेन = चरणेन, सम्पर्कं = सम्बन्ध, ताडनमित्यर्थः, न अपैक्षत = न प्रतीक्षितवान् ।

**व्युत्पत्तिः**—अशोकः="वञ्जुलोऽशोके" इत्यमरः । सद्यः = "सद्यः सपदि तत्क्षणे" इत्यमरः । स्कन्धात् = भाष्यकारवचनात् प्रभृतियोगे पञ्चमीति कैयटः । भाष्य च 'मूलात् प्रभृत्यग्राद् वृक्षास्तद्गुणवन्ति" इति, "कार्तिक्याः प्रभृत्याग्रहायणी मासे" इत्यादि च । सपल्लवानि=पल्लवैः सहितानि सपल्लवानि, तानि, बहुव्रीहिसमासः । "पल्लवोऽस्त्री किसलयम्" इत्यमरः । असूत="षूङ् प्राणिप्रसवे" इति धातोर्लङि रूपम् । आसिञ्जितनूपुरेण=आसिञ्जितः नूपुरः यस्य सः आसिञ्जितनूपुरः, तेन आसिञ्जितनूपुरेण, "सिजि अव्यक्ते शब्दे" इति धातोःकर्तरि क्तः प्रत्ययः । "पादाङ्गद तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् । हंसकः पाकदटकः" इत्यमरः । अशोकपुष्पोद्गमप्रकारश्च—

"सनूपुररवेण स्त्रीचरणेनाऽभिताडनम् ।
दोहद यदशोकस्य ततः पुष्पोद्गमो भवेत् ॥"

इत्युक्तिदिशा ज्ञेयः । तथाहि—

पादाहतः प्रमदया विकसत्यशोकः, शोकं जहाति बकुलो मुखसीधुसिक्तः ।
आलोकितः कुरुबकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति ॥" इति ।

अत्र कामिनीसम्पर्करूपप्रसिद्धकारणविरहेऽपि पुष्पोद्गमरूपकार्योत्पत्तिप्रतिपादनाद् विभावनालङ्कारः । सा चात्रानुक्तनिमित्ता ।

**भावार्थः**—मूर्तिमति वसन्ते स्वयमेव तपोवन समागने सति अशोकः सनूपुररवेण स्त्रीचरणेनाभिताडनरूपं दोहदमनपेक्ष्यैव स्कन्धादारभ्य पल्लवान् कुसुमानि चोभयमप्यजीजनदिति भावः ।

**भाषा**—मूर्तिमान् वसन्त के स्वय तपोवन में आने से, अशोकवृक्ष पयजेब

सहित सुन्दरस्त्रियों के पादाघात रूपी खाद की अपेक्षा न कर, नीचे से ऊपर तक नव पल्लव और कुसुमों से सम्पन्न होने लगा ।

चूतपुष्पोद्गमं वर्णयति—

**सद्यः प्रवालोद्गमचारुपत्रे, नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान्, नामाक्षराणीव मनोभवस्य ॥२७॥**

पल्लव अमल अंकुर बने थे पक्ष शर के ही सदृश ।
थे चूत बाण समाप्त मधुकर मदन नामाक्षर सदृश ॥

**अन्वयः**—मधुः प्रवालोद्गमचारुपत्रे नवचूतबाणे समाप्तिं नीते सति सद्यः मनोभवस्य नामाक्षराणि इव द्विरेफान् निवेशयामास ।

**व्याख्या**—मधुः=वसन्तः, स एव इषुकारः । प्रवालोद्गमचारुपत्रे=पल्लवाऽङ्कुरसुन्दरपक्षे, नवचूतबाणे=नवीनाम्रकुसुमशरे, समाप्तिं=सम्पूर्णतां, नीते=प्रापिते सति, सद्यः=सपदि, मनोभवस्य=मनसिजस्य, धन्विनः कामदेवस्येत्यर्थः । नामाक्षराणि इव=अभिधानवर्णान् इव, द्विरेफान्=भ्रमरान्, निवेशयामास=निदधौ ।

**व्युत्पत्तिः**—प्रवालोद्गमचारुपत्रे=प्रवालानाम् उद्गमाः प्रवालोद्गमाः, चारूणि च तानि पत्राणि चारुपत्राणि, "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्"-इति "पत्रं वाहनपक्षयोः" इत्यप्यमरः । प्रवालोद्गमाः एव चारुपत्राणि यस्य स-प्रवालोद्गमचारुपत्रः, तस्मिन् प्रवालोद्गमचारुपत्रे । नवचूतबाणे = चूतस्य पुष्पं चूतम्, "तस्य विकारः" इत्यधिकारे "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्यण्, तस्य "पुष्पमूलेषु बहुलम्" इति लुक् । नवं च तत् चूतं नवचूतं, "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । नवचूतम् एव बाणः, नवचूतबाणः, तस्मिन् नवचूतबाणे । मनोभवस्य = मनसि भवः मनोभवः, तस्य मनोभवस्य, "शम्बराऽरिर्मनसिजः कुसुमेषुरनन्यजः" इत्यमरः । नामाऽक्षराणि = नाम्नः-अक्षराणि नामाऽक्षराणि, तानि, "आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च" इत्यमरः । द्विरेफान्=द्वौ रेफौ येषा ते द्विरेफाः, तान् द्विरेफान् । "लक्षितलक्षणाया-द्विरेफशब्दः भ्रमरवाचकः" । "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराऽलयः" इत्यमरः-उत्तेजनवाजरचनादिभिः सम्पूर्णतां नीतेहि शरे स्वामिनो नामाक्षराणि लिख्यन्ते शिल्पिभिरिति लोकप्रसिद्धिरत्रानुसन्धेया ।

"अत्र प्रवालपत्र इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वं रूपं यन्नामाऽक्ष-

राणीवेत्युत्प्रेक्षाया निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा" इति-मल्लिनाथः ।

**भावार्थः**—वसन्त एव बाणनिर्माता शिल्पी सम्पूर्णता प्रापिते पल्लवाङ्कुरच्छा-रूपक्षे नूतने चूतकुसुम एव बाणे सद्यः कामदेवस्य धन्विनो नामद्योतकान्यक्षराणीव भ्रमरान् निवेशितवान् । सम्पूर्णता नीते हि नूतने बाणे कारुणा धन्विनो-नामक्षराणि लिख्यत इति लोकप्रसिद्धिरिति भावः ।

**भाषा**—अच्छा कारीगर नया पदार्थ बनकर तयार हो जानेपर, वह जिसके लिये बनाया गया है उसके नाम के अक्षर उसपर लिख देता है, इस लौकिक प्रथा के अनुसार, वसन्तने आम्र कुसुम रूपी नूतन बाणों के तयार हो जानेपर उसपर आने वाले भ्रमररूपी कामदेव के नाम के अक्षरों को मानो लिख दिया ।

कर्णिकारपुष्पोद्गम वर्णयति—

**वर्णप्रकर्षे सति कर्णिकारं, दुनोति निर्गन्धतया स्म चेतः ।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखो विश्वसृजः प्रवृत्तिः॥२८॥**

**थे कर्णिकार कुसुम सुघर, पर गन्धरहित न थे सुखद ।**
**प्रायः गुणों की पूर्णता में विधिप्रवृत्ति बनी दुखद ॥**

**अन्वयः**—कर्णिकारं वर्णप्रकर्षे सति निर्गन्धतया चेतः दुनोति स्म । प्रायेण विश्वसृजः प्रवृत्तिः गुणाना सामग्र्यविधौ पराङ्मुखी भवति ।

**व्याख्या**—कर्णिकारं=परिव्याधकुसुमम् , वर्णप्रकर्षे सति=वर्णोत्कर्षे सति, निर्गन्धतया==गन्धरहितत्वेन हेतुना, चेतः = चित्तम् , दुनोति स्म = पर्यताप-यत् । प्रायेण==प्रायः, विश्वसृजः =ब्रह्मणः, प्रवृत्तिः =व्यापारः, गुणाना = द्रव्याश्रिताना, सामग्र्यविधौ = साकल्यसम्पादनविषये, पराङ्मुखी =पराचीना भवतीति शेषः ।

**व्युत्पत्तिः**—कर्णिकार=कर्णिकारस्य पुष्पं कर्णिकारं । "अवयवे च प्राण्यो-षधिवृक्षेभ्यः" इति विधीयमानस्य तद्धितप्रत्ययस्य "पुष्पमूलेषु बहुलम्" इति लुक् । "कर्णिकारः परिव्याधः" इत्यमरः । वर्णप्रकर्षे=वर्णस्य प्रकर्षः वर्णप्रकर्षः, तस्मिन् वर्णप्रकर्षे । निर्गन्धतया=गन्धात् निर्गतः निर्गन्धः "निरादयः क्रान्ता-द्यर्थे पञ्चम्या" इति समासः । निर्गन्धस्य भावः निर्गन्धता, तया निर्गन्धतया । चेतः=चित्तं तु चेतो हृदय स्वान्त हृन्मानसं मनः ' इत्यमरः । दुनोति स्म= "टुदु उपतापे" इति धातोर्लट् , 'लट् स्मे" इति तस्य भूतार्थता । विश्वसृजः=

विश्वं सृजतीति विश्वसृट्; तस्य विश्वसृजः, क्विप्प्रत्ययः । "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः । सामग्र्यविधौ=समग्रस्य भावः कर्म वा सामग्र्य' ष्यञ्प्रत्ययः । "समग्रं सकलं पूर्णमखण्डं स्यादनूनके" इत्यमरः । सामग्र्यस्य विधिः सामग्र्यविधिः, तस्मिन् सामग्र्यविधौ, "विधिर्विधाने दैव च" इत्यमरः । पराङ्मुखी = पराक् मुखं यस्याः सा पराङ्मुखी ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

**भावार्थः**—कर्णिकारकुसुमं तथा नामात्युज्ज्वलं पुंसा हृदयहारि जातं, यथा तेषा निर्गन्धतामवधार्य सहृदयहृदयैर्दूयते । तथा च सति सर्वपदार्थेषु विधातृदौश्शील्यादेवमेव गुणसामग्र्याभावो भवतीति भावः ।

**भाषा**—कर्णिकार नामक पुष्प देखने में अत्यन्त सुन्दर होते हुये भी उनमें गन्ध के न होने से सहृदयपुरुषों के हृदय में उनपर तरस आती थी । ब्रह्मदेव की यह एक बुरी आदत है की वह सकल पदार्थों में कुछ न कुछ गुण की कमी रखकर, किसी को सम्पूर्ण गुण सम्पन्न नहीं होने देता है ।

पलाशकुसुमोद्गमं वर्णयति—

**बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां, नखक्षतानीव वनस्थलीनाम् ॥२६॥**

**नव लाल कुसुम पलास के थे सम सुधाकर बाल ही ।**
**(नखक्षत किया वनभूमि का ऋतु राज ने तत्काल ही ॥**

**अन्वयः**—अविकाशभावात् बालेन्दुवक्राणि अतिलोहितानि पलाशानि वसन्तेन समागतानां वनस्थलीनां सद्यः नखक्षतानि इव बभुः ।

**व्याख्या**—अविकाशभावात्=निर्विकाशत्वात् मुकुलभावाद्धेतोः, बालेन्दुवक्राणि = बालचन्द्रकुटिलानि, अतिलोहितानि = अतिरक्तानि, पलाशानि=किंशुकपुष्पाणि,वसन्तेन =सुरभिणा, नायकेन, समागतानां=सङ्गतानां, वनस्थलीनाम=अरण्यस्थलीनां स्त्रीणाम् , सद्यः=सद्यो दत्तानि, नखक्षतानि इव=नखक्षतानि इव बभुः=शुशुभिरे ।

**व्युत्पत्तिः**—अविकाशभावात्=विकाशस्य भावः विकाशभावः, न विकाशभावः अविकाशभावः, तस्मात् अविकाशभावात् । बालेन्दुवक्राणि=बालश्चाऽसौ इन्दुः, बालेन्दुः, "हिमांऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः । बालेन्दुरिव वक्राणि बालेन्दुवक्राणि "अविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि"

इत्यमरः । अतिलोहितानि=अत्यन्त लोहितानि अतिलोहितानि "लोहितो रोहित रक्तः शोणः कोकनदच्छविः" इत्यमरः । पलाशानि=पलाशस्य पुष्पाणि पलाशानि, "पलाशे किंशुकः पर्णः" इत्यमरः । वसन्तेन = "वसन्ते पुष्पसमयः सुरभिः" इत्यमरः । वनस्थलीनां=वनस्य स्थल्यः वनस्थल्यः, 'अटव्यरण्यं विपिनं गहनं काननं वनम्" इति "स्थलं स्थली" इत्यप्यमरः । नखक्षतानि=नखस्य क्षतानि नखक्षतानि । "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्"- इत्यमरः । बभुः="भा दीप्तौ" इति धातोः लिट् ।

'अत्र वसन्तस्य वनस्थलीना च विशेषणसाधारण्यात् नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति । समासोक्तिलक्षणं यथा साहित्यदर्पणे—"समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ।" इति । पुनः "नखक्षतानि इव" इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति । सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालत्वैवेति मल्लिनाथः ।

**भावार्थः**—मुकुलभावात् बालचन्द्रवत् कुटिलानि अत्यन्तरक्तवर्णानि किंशुकपुष्पाणि वसन्तेन पुंसा सङ्गताना वनस्थलीना स्त्रीणा दत्तानि नखव्रणानीव शुशुभिरे इति भावः ।

**भाषा**—कलिका रूप होने से अर्धचन्द्र के सदृश टेढ़े अत्यन्त लाल वर्ण के पलाश के पुष्प, वसन्तरूपी पुरुष के साथ मिली हुई वनस्थली रूपी स्त्री के शरीर पर ताजे भये हुये नखक्षतों के समान शोभित होते थे ।

तिलकुसुमोद्गम चूतपल्लवोद्गमं च युगपत् वर्णयति—

**लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य ।**
**रागेण बालाऽरुणकोमलेन, चूतप्रवालोष्ठमलञ्चकार ॥ ३० ॥**

ऋतुराजश्री ने भ्रमर का कज्जल तिलक का तिलक कर ।
शिशु दिवसपति के सम बनाया आम पल्लव का अधर ॥

**अन्वयः**—मधुश्रीः लग्नद्विरेफाऽञ्जनभक्तिचित्रं तिलकं मुखे प्रकाश्य बालाऽरुणकोमलेन रागेण चूतप्रवालोष्ठम् अलञ्चकार ।

**व्याख्या**—मधुश्रीः = वसन्तलक्ष्मीः, लग्नद्विरेफाऽञ्जनभक्तिचित्रं=लग्नभ्रम रकज्जलरचनाचित्रवर्णं, तिलकं=क्षुरकं तदेव विशेषकम् , मुखे =प्रारम्भे वक्त्रे वा प्रकाश्य=प्रकटय्य, बालारुणकोमलेन=बालाऽर्कसुन्दरेण, रागेण=रक्तवर्णेन, लाक्षारागेण वा चूतप्रवालोष्ठम्=आम्रपल्लवाऽधरम्=अलञ्चकार=प्रसाधयामास ।

**व्युत्पत्तिः**—मधुश्रीः=मधोः श्रीः मधुश्रीः, लग्नद्विरेफाऽञ्जनभक्तिचित्रं = द्वौ रेफौ येषां ते द्विरेफाः, लग्नाश्च ते द्विरेफाः लग्नद्विरेफा अञ्जनस्य भक्तय अञ्जनभक्तयः। लग्नद्विरेफा एव अञ्जनभक्तयः लग्नद्विरेफाऽञ्जनभक्तयः, ताभिः चित्रं लग्नद्विरेफाऽञ्जनभक्तिचित्रं, तत्, तिलकं=तिलकस्य पुष्पं तिलकं, तत्, "तिलकः क्षुरकः श्रीमान्" इति, "तमालपत्रतिलकचित्रकाणि विशेषक"मिति चामरः। बालाऽरुणकोमलेन = बालश्चाऽसौ अरुणः बालाऽरुणः, "अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु" इत्यमरः। बालाऽरुण इव कोमलः बालारुणकोमलः, तेन बालारुणकोमलेन। चूतप्रवालोष्ठं=चूतस्य प्रवालाः चूतप्रवालाः, ते एव ओष्ठः चूतप्रवालोष्ठः, तं चूतप्रवालोष्ठम्। "ओत्वोष्ठयोः समासे वा" इति पररूपत्वम्। "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः।

अत्र प्रवालादीनामोष्ठत्वादिरूपाणि शब्दैरेवोक्तानि। मधुश्रियः प्रसाधनप्रवृत्तनायिकात्वरूपण पुनरर्थसामर्थ्यात् प्रतीयते इत्येकदेशविवर्तिरूपकाऽलङ्कारः। एकदेशविवर्तिरूपकलक्षणं यथा साहित्यदर्पणे—

"रूपकं रूपितारोपाद्विषये निरपह्नवे"।
"यत्र यस्य चिदार्थत्वमेकदेशविवर्ति तत्" इति।

**भावार्थः**—वसन्तलक्ष्मीः स्त्री, सक्तभ्रमरा कज्जलरचनास्ताभिश्चित्रवर्णं तिलकं कुसुमं, विशेषकञ्च, प्रारम्भे, वक्त्रे च प्रकटय्य बालार्कसुन्दरेण रक्तिम्ना, लाक्षारागेण च सहकारपल्लवमोष्ठं प्रसाधयामासेति भावः।

**भाषा**—वसन्त शोभा रूपी स्त्री ने भ्रमररूपी कज्जल से युक्त तिलक कुसुम रूपी तिलक को मुखमें लगाकर सबेरे के सूर्य की लाली रूप, महावर से आम्र पल्लव रूप ओष्ठ को अलङ्कृत किया था।

इत्थं वसन्तागमनेन स्थावराणा विकारं प्रतिपाद्य सम्प्रति जङ्गमाना विकारमप्याह—

**मृगाः प्रियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः।**
**मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥**

तरुवर-प्रियाल पराग से अन्धे मदोद्धत मृग सकल।
वन भूमि में सम्मुख हवा के गमन करते थे चपल ॥

**अन्वयः**—प्रियालद्रुममञ्जरीणा रजःकणैः विघ्नितदृष्टिपाताः मदोद्धताः मृगाः प्रत्यनिलं मर्मरपत्रमोक्षाः वनस्थलीः विचेरुः।

**व्याख्या**—प्रियालद्रुममञ्जरीणा=राजादनवृक्षवल्लरीणा, रजःकणैः=परा-

गकणिकाभिः, विघ्नितदृष्टिपाताः=सञ्जातविघ्ननेत्रप्रचाराः, मदोद्धताः=मदोद्दण्डाः, मृगाः=हरिणाः, प्रत्यनिलम्=अनिलाऽभिमुखं, मर्मरपत्रमोक्षाः=मर्मरशब्दवज्जीर्णपर्णपाताः, वनस्थलीः=अरण्यस्थलीः, वनप्रदेशेष्वित्यर्थः । विचेरुः=चरन्ति स्म ।

**व्युत्पत्तिः**—प्रियालद्रुममञ्जरीणा=प्रियालाना द्रुमाः प्रियालद्रुमाः, "राजादनः प्रियालः स्यात्" इति "पलाशी द्रुद्रुमागमाः" इत्यप्यमरः । प्रियालद्रुमाणां मञ्जर्यः प्रियालद्रुममञ्जर्यः, तासा प्रियालद्रुममञ्जरीणा । रजःकणैः=रजसा कणाः रजः कणाः, तैः रजःकणैः, "स्त्रिया मात्रा त्रुटी पुंसि लवलेशकणाऽणवः" इत्यमरः । विघ्नितदृष्टिपाताः=विघ्नः संजातः येषां ते विघ्निताः, "तदस्य संजातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः । "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः । दृष्टीना=नेत्राणां, पाताः=प्रचाराः दृष्टिपाताः, "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टी" इत्यमरः । विघ्निताः दृष्टिपाताः येषा ते विघ्नितदृष्टिपाताः । मदोद्धताः=मदेन हेतुना उद्धताः मदोद्धताः । मृगाः="मृगे कुरङ्गवातायुहरिणाऽजिनयोनयोः" इत्यमरः । प्रत्यनिलम्=अनिलं प्रति प्रत्यनिलम् , अव्ययीभावसमासः । मर्मरपत्रमोक्षाः=मर्मरः एवं ध्वनिकः शब्दः, अस्ति येषा ते मर्मराः, 'अर्शआदिभ्योऽच्" इति अच्प्रत्ययः । "अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्" इत्यमरः । पत्राणा मोक्षाः पत्रमोक्षाः, "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इत्यमरः । मर्मराः पत्रमोक्षाः यासु ताः मर्मरपत्रमोक्षाः, ताः । वनस्थलीः=वनस्य स्थल्यः वनस्थल्यः, ताः वनस्थलीः "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्" इति चरतेः सकर्मकत्वम् । विचेरुः=व्युपसर्गपूर्वकात् "चर गतिभक्षणयोः" इति धातोर्लिटि "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वाऽभ्यासलोपौ । अत्र स्वभावोक्तिरलङ्कारः ।

**भावार्थः**—राजादनमञ्जरीरजःकणप्रतिहतालोकनसामर्थ्या मदगर्विता एणादयः पवनाभिमुखं जीर्णपर्णाना पातेन मर्मध्वनियुक्तासु वनभूमिषु इतस्ततो जग्मुरिति भावः ।

**भाषा**—आखों में पुष्पों की पराग गिरनेसे अच्छी तरह देखने में असमर्थ और मद से उन्मत्त भये हरिणादिक, हवा के सन्मुख सूखे पत्तों के गिरने से मर्मर शब्दको करने वाली वन भूमि पर इधर से उधर दौड़ते थे ।

कोकिलकूजितं वर्णयति—

**चूताङ्कुरास्वादकषायकण्ठः, पुंस्कोकिलो यन्मधुरं चकूज ।**

**मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ ३२ ॥**

**खा आम्र के अङ्कुर नये जो मधुर-रव पिकने किया ।**
**स्मर वचन बनकर मानिनी का मान उसने दल दिया ॥**

**अन्वयः**—चूताऽङ्कुरास्वादकषायकण्ठः पुंस्कोकिलः यत् मधुरं चुकूज, तत् एव मनस्विनीमानविघातदक्षं स्मरस्य वचनं जातम् ॥

**व्याख्या**—चूताऽङ्कुरास्वादकषायकण्ठः=आम्राङ्कुरास्वादरक्तकण्ठः, पुंस्कोकिलः = पिकः, यत् , मधुरं = सुन्दरं, चुकूज = कूजितवान् , तत् एव = कूजनम् एव, मनस्विनीमानविघातदक्षं = मानिनीमाननिरासनिपुणं, स्मरस्य = कामस्य, वचन = वचः "मानं त्यजत" इत्याशावचः इत्यर्थः । जातम् = अभूत ।

**व्युत्पत्तिः**—चूताऽङ्कुरास्वादकषाकण्ठः = चूतानाम् अङ्कुराः चूताङ्कुराः, "अङ्कुरोऽभिनवोद्भिदि" इत्यमरः । चूताङ्कुराणाम् आस्वादः चूताङ्कुरास्वादः, तेन कषायः चूताङ्कुरास्वादकषायः, "सरभावपथे रक्ते कषायः" इति केशवः । चूताऽङ्कुरास्वादकषायः कण्ठः यस्य स चूताङ्कुरास्वादकषायकण्ठः । पुंस्कोकिलः= पुमान् चाऽसौ कोकिलः पुंस्कोकिलः "पुमः खय्यम्परे" इति पुमो रुः । "अनुनासिकात्परोऽनुस्वारः, "इत्यनुस्वारः, "खरवसानयोर्विसर्जनीयः" इति विसर्गः, ततः "सम्पुंकाना सो वक्तव्यः" इति सः । पुंग्रहणं प्रागल्भ्यद्योतनाऽर्थम् । "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः । मधुरं = "चुकूज" इत्यस्य क्रियापदस्य विशेषणमेतत् । चुकूज="कूज अव्यक्ते शब्दे" इति धातोः लिट् "कुहोश्चुः" इत्यनेन ककारस्थ चकारः । मनस्विनीमानविघातदक्षं = प्रशस्तं मनः अस्या अस्तीति मनस्विनी, "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः, तदन्तात् "ऋन्नेभ्यो ङीप्" इति स्त्रीत्वविवक्षाया ङीप्प्रत्ययः । मनस्विन्याः मानः मनस्विनीमानः । विशिष्टो घातः विघातः । मनस्विनीमानस्य विघातः मनस्विनीमानविघातः, तस्मिन्दक्षं मनस्विनीमानबिघातदक्षं, स्मरस्य = "कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः । वचनं = "व्याहार उक्तिर्लपित भाषितं वचनं वचः" इत्यमरः ।

अत्र निरर्थकस्यापि कोकिलालापस्य, कामिजनबन्धुभूतस्य विदग्धतरस्य स्मरस्य प्रियतमाभिमानविघातदक्षवचनत्वेन रूपणाद् रूपकालङ्कारः ।

**भावार्थः**—वसन्तागमनवेलाया रसालकुसुमप्राशनेन सुस्वरकण्ठाना कोकिलानां यत्कूजितं जातम्, तदेव कूजनं मदनस्य प्रणयिनीमानोन्मूलनविदग्धं

"मानं त्यजते" त्याज्ञावचनमभूदिति भावः ।

**भाषा**—वसन्त के आरम्भ में आम्रकुसुम के भक्षण से सुस्वर ध्वनि करने वाला कोकिल का कूजित ही मानवती स्त्री के मान को दुर करने वाली कामदेव की "मान करना छोड़ दो" इस प्रकार की आज्ञा का वचन(हुकुम) हो रहा था ।

हिमवच्छिखरवर्तिनीनां किम्पुरुषाङ्गनानामपि तत्कालसुलभ विकारं वर्णयति—

**हिमव्यपायाद्विशदाऽधराणामापाण्डरीभूतमुखच्छवीनाम् ।**
**स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥**

**हिम बीतने से मृदु–अधर, पाण्डुर–वदन वाली अभय ।**
**किन्नर–प्रिया की पत्र—रचना मध्य स्वेद हुआ उदय ॥**

**अन्वयः**—हिमव्यपायात् विशदाऽधराणाम् आपाण्डरीभूतमुखच्छवीनां किंपुरुषाऽङ्गनानां पत्रविशेषकेषु स्वेदोद्गमः पदं चक्रे

**व्याख्या**—हिमव्यपायात् = तुहिनाऽपगमात् हेतोः, विशदाऽधराणां=नीरुजोष्ठानाम्, आपाण्डरीभूतमुखच्छवीनाम् = किञ्चिच्छुभ्रीभूताननकान्तीनां, कुङ्कुमपरिहारादिति यावत् । किंपुरुषाङ्गनानां = किन्नरस्त्रीणां, पत्रविशेषकेषु = पत्ररचनासु, स्वेदोद्गमः = घर्मोद्गमः, पदं = स्थानं, चक्रे = कृतवान्, घर्मोदयात् स्वेदोदयोऽभूदित्यर्थः । विशदाधरत्व मधूच्छिष्टराहित्यादिति बोध्यम् । हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति लोके प्रसिद्धम् ।

**व्युत्पत्तिः**—हिमव्यपायात् = विशिष्टः, अपायः व्यपायः, हिमस्य व्यपायः हिमव्यपायः, तस्मात् हिमव्यपायात्, हेतौ पञ्चमी । "तुषारस्तुहिनं हिमम्" इत्यमरः । विशदाऽधराणां = विशदाः अधराः यासां ताः विशदाधराः तासां विशदाऽधराणाम् । "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । आपाण्डरीभूतमुखच्छवीनाम् = ईषत् पाण्डरा आपाण्डरा, "शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः" इत्यमरः । अनापाण्डरा आपाण्डरा यथा सम्पद्यन्ते तथा भूता आपाण्डरीभूता "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति च्विप्रत्ययः । मुखस्य छविः मुखच्छविः, "शोभा कान्तिर्द्युतिश्छविः" इत्यमरः । आपाण्डरीभूता मुखच्छविः यासां ता आपाण्डरीभूतमुखच्छवयः, तासाम् आपाण्डरीभूतमुखच्छवीनां, किंपुरुषाङ्गनानां = प्रशस्तम् अङ्गं यासां ताः अङ्गनाः, "अङ्गात्कल्याणे" इति अङ्गशब्दान्नप्रत्ययः, ततः "अजाद्यतष्टाप्" । किंपुरुषाणाम् अङ्गनाः किंपुरुषाङ्गनाः, तासां किंपुरुषाङ्गनानां, "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः । पत्रविशेष-

केषु = पत्राणां विशेषकाणि पत्रविशेषकाणि, तेषु पत्रविशेषकेषु । स्वेदोद्गमः = स्वेद स्य उद्गमः स्वेदोद्गमः, "घर्मो निदाघः स्वेदः स्यात्" इत्यमरः । पदं = पदं व्यवसितत्राणस्थानलक्ष्माऽङ्घ्रिवस्तुषु" इत्यमरः ।

**भावार्थः**—तुषारस्यापगमात् निर्मलाधरोष्ठाना श्वेतीभूताननकान्तीना किन्नरस्त्रीणां पत्रभङ्गतिलकेषु आतपकृताः स्वेदविन्दवः किञ्चिदुच्छूनतामजनयन्निति भावः

**भाषा**—तुषार के न गिरने से कोमल ओष्ठ और सुन्दर मुख वाली किन्नरों की स्त्रियों के मकरिकादिपत्र रचनाओं का रङ्ग धाम से पैदाभयी पसीनेकी बुन्दोंसे कुछ कुछ फैलने लगा ।

इत्थमुपवर्णितस्योद्दीपनस्य प्रस्तुतविषये प्रवृत्तिं प्रतिपादयति—

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथं चिदीशा मनसां बभूवुः ॥ ३४ ॥**

**शिव के तपोवन में तपस्वी लख वसन्त हुए चपल ।**
**मन जीतने में कठिनता से, वे समर्थ हुए विकल ॥**

**अन्वयः**—स्थाणुवनौकसस्तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नसंस्तम्भितविक्रियाणां मनसां कथञ्चित् ईशाः बभूवुः ॥

**व्याख्या**—स्थाणुवनौकसः = हराश्रमवासिनः, तपस्विनः = तापसाः, वानप्रस्था इत्यर्थः । आकालिकीम् = अकालभवां, मधुप्रवृत्तिं = वसन्तव्यापारं, वीक्ष्य = दृष्ट्वा, प्रयत्नसंस्तम्भितविक्रियाणां = परिश्रमनिरुद्धविकाराणां मनसां = मानसानां, कथञ्चित् = केनाऽपि प्रकारेण, कष्टेनेत्यर्थः । ईशाः = प्रभवः, नियन्तारः इत्यर्थः । बभूवुः = अभूवन् ।

**व्युत्पत्तिः**—स्थाणुवनौकसः = स्थाणोः वनं स्थाणुवनं, "स्थाणू रुद्र उमापतिः" इत्यमरः । स्थाणुवनम् ओको येषां ते स्थाणुवनौकसः । तपस्विनः = तपः अस्ति येषां ते तपस्विनः । तपः शब्दात् "तपः सहस्राभ्यां विनीनी" इति विनिप्रत्ययः । आकालिकीम् = "समानकालौ आद्यन्तौ यस्याः इति आकालिकी, अकाल भवत्वात् आशु विनाशिनीत्यर्थः । "आकालिकडाद्यन्तवचने ५।१।११४' इति समानकालस्य आकालादेशः इकट् प्रत्ययश्च । "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति स्त्रीत्वविवक्षायां ङीप्प्रत्ययः । केचित् अकालाद् देहात् अध्यात्मादित्वात् भावार्थे ठक् इत्याहुः । ताम् आकालिकीं । मधुप्रवृत्तिं = मधोः = वसन्तस्य प्रवृत्तिः = विजृम्भणव्यापारः, मधुप्रवृत्तिः तां मधुप्रवृत्तिं । वीक्ष्य = विशे-

षेण ईक्षित्वेति वीक्ष्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" । प्रयत्नसंस्तम्भितविक्रियाणा=प्रकृष्टो यत्नः प्रयत्नः, गतिसमासः । विरुद्धा क्रिया विक्रिया । सम्यक् स्तम्भिता संस्तम्भिता । संस्तम्भिता विक्रिया येषा तानि संस्तम्भितविक्रियाणि । प्रयत्नेन संस्तम्भितविक्रियाणि प्रयत्नसंस्तम्भितविक्रियाणि, तेषा प्रयत्नसंस्तम्भितविक्रियाणा । मनसा="चित्तं तु चेतो हृदय स्वान्तं हृन्मानसं मनः" इत्यमरः । ईशाः=ईशते इति ईशाः "ईश ऐश्वर्ये" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः ॥

**भावार्थः**—पूर्वोक्तामसामयिकीं वसन्तसमृद्धिमवलोक्य हराश्रमवासिनो महर्षयः कृतबहुविधतपस्त्वात् परमेश्वरसान्निध्यवशाच्च प्राणायामप्रत्यहारादिभिरात्मनो मनोविकारं कथमपि निवारयामासुरिति भावः ।

**भाषा**—इस प्रकार असमय में वसन्तकी समृद्धि को देखकर शङ्कर के आश्रम में रहने वाले बहुकाल से तप करने से परमात्मा के सान्निध्य को पाने वाले महर्षि लोग, प्राणायाम प्रत्याहार इत्यादि द्वारा अपने मन के विकार को किसी तरह रोकने लगे ।

इत्थ वसन्तागमनप्रभावमुक्त्वा सम्प्रति मदनागमनप्रभावमाह—

**तं देशमारोपितपुष्पचापे, रतिद्वितीये मदने प्रपन्ने।**
**काष्ठागतस्नेहरसाऽनुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥**

**रति काम के आगमन से नव पुष्प धनु में ज्या चढ़ा ।**
**प्रमदा पुरुष सम्पर्क मय रति भाव हृदयों में बढा ॥**

**अन्वयः**—आरोपितपुष्पचापे रतिद्वितीये मदने तं देश प्रपन्ने सति द्वन्द्वानि काष्ठागतस्नेहरसाऽनुविद्धं भावं क्रियया विवव्रुः ।

**व्याख्या**—आरोपितपुष्पचापे = सज्जीकृतकुसुमधनुषि, रतिद्वितीये रतिसहाये, मदने = कामदेवे, त = पूर्वोक्तं, देशं = स्थानं, हरतपोवनमित्यर्थः । प्रपन्ने = प्राप्ते सति, द्वन्द्वानि=युग्मानि, स्थावराणि जङ्गमानि च मिथुनानीति शेषः । काष्ठागतस्नेहरसाऽनुविद्ध=उत्कर्षयातप्रेमरससम्पृक्तं, भावम्=अभिलाषं सम्भोगेच्छामीत्यर्थः । क्रियया=चेष्टया, कार्यभूतयेति शेषः । विवव्रुः=प्रकाशयामासुः । शृङ्गारचेष्टाः प्रावर्तन्त इत्यर्थः ॥

**व्युत्पत्तिः**—आरोपितपुष्पचापे = पुष्पाणा चापं पुष्पचापम्, आरोपितम्= अधिज्यं कृतं, पुष्पचापं येन स आरोपितपुष्पचापः, तस्मिन् आरोपितपुष्पचापे ।

रतिद्वितीये = द्वयोः पूरणी द्वितीया, द्विशब्दात् "द्वेस्तीयः" इति तीयप्रत्ययः। रतिः द्वितीया यस्य स रतिद्वितीयः, तस्मिन् रतिद्वितीये। प्रपन्ने = प्रोपसर्गपूर्वकात् "पद गतौ" इति धातोः क्तप्रत्ययः, "रदाभ्या निष्ठातो नः पूर्वस्य च दः" इति नत्वम्। द्वन्द्वानि = "द्वन्द्वं कलहयुग्मयोः" इत्यमरः। काष्ठागतस्नेहरसाऽनुविद्धं= काष्ठा गतः काष्ठागतः, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुषः। "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः। स्नेहः एव रसः स्नेहरसः, "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः। काष्ठागतश्चाऽसौ स्नेहरसः काष्ठागतस्नेहरसः, तेन अनुविद्धः काष्ठागतस्नेहरसाऽनुविद्धः, त काष्ठागतस्नेहरसानुविद्धं। क्रियया=क्रियते या सा क्रिया, तया क्रियया, "डुकृञ् करणे" इति धातोः "कृञः श च" इति शप्रत्ययः, ततः "अजाद्यतष्टाप" इति टाप्प्रत्ययः।

**भावार्थः**—सज्जीकृतपुष्पमयशरासने रतिसहिते कामे स्थाणवाश्रमं प्राप्ते सति स्थावराणि जङ्गमानि च मिथुनानि कामागमनवशात् पराकाष्ठामधिगता सम्भोगेच्छा तत्प्रकाशकैरालिङ्गनादिकर्मभिः प्रकाशयामासुरिति भावः।

**भाषा**—शङ्कर कें आश्रम में कुसुम मय धनुष्य बाणको लेकर रति के साथ कामदेवका आगमन होने से स्थावर, जंगमात्मक सब तरह के स्त्रीपुरुष अत्यन्त बढ़ी हुई सम्भोगकी इच्छा को परस्पर मे आलिङ्गनादिकर्म के द्वारा जाहिर करने लगे।

अथ भ्रमरमिथुनाना मृगमिथुनाना च भावप्रकाशनमाह—

**मधु द्विरेफः कुसुमैकपात्रे, पपौ प्रियां स्वामनुवर्तमानः।**
**शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥ ३६॥**

**अलि मधुकरी ने पुष्प का रस एक बरतन में पिया।**
**मृग ने मृगी तन कामना मय सींग से सुजला दिया॥**

**अन्वयः**—द्विरेफः कुसुमैकपात्रे मधु स्वा प्रियाम् अनुवर्तमानः सन् पपौ। कृष्णसारः च स्पर्शनिमीलिताक्षीं मृगीं शृङ्गेण अकण्डूयत॥

**व्याख्या**—द्विरेफः = भ्रमरः, कुसुमैकपात्रे = पुष्पैकचषके, मधु = मकरन्दं, स्वाम् = आत्मीया, प्रिया = वल्लभा, भृङ्गीमित्यर्थः। अनुवर्तमानः = अनुसरन्, सन्, पपौ = पीतवान्, तत्पीतशेषं पपावित्यर्थः। कृष्णसारः = कृष्णमृगः, च= अपि, स्पर्शनिमीलिताक्षीं=स्पर्शसुखमुकुलितनेत्राम्; मृगीं=हरिणीं, शृङ्गेण=विषाणेन, अकण्डूयत = कण्डूयितवान्। सहपानं कण्डूयनं च कामाभिप्रायसूचकम्।

**व्युत्पत्तिः**—द्विरेफः=द्वौ रेफौ=रकारौ यस्य स द्विरेफः। उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः—"शब्दधर्मेणाऽपि अर्थस्य व्यपदेशो दृश्यते, यथा भ्रमरशब्दस्य द्विरेफवत्वात् द्विरेफो भ्रमरः" इति। "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराऽलयः" इत्यमरः। कुसुमैकपात्रे = एक च तत् पात्रम् एकपात्रं। कुसुमम् एव एकपात्रं कुसुमैकपात्रं तस्मिन् कुसुमैकपात्रे, "स्त्रियः सुमनसः पुष्पं प्रसून कुसुमं सुमम्" इत्यमरः। मधु = "मधुमद्ये पुष्परसे" इति विश्वः। स्वा = "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने" इत्यमरः। प्रिया= प्रीणातीति प्रिया, ता प्रिया "प्रीञ् तर्पणे" इति धातोः कप्रत्ययः, अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः। अनुवर्तमानः अनुवर्तते इति अनुवर्तमानः "लटः शतृशानचावप्रथमाऽसमानाधिकरणे" इति शानच् प्रत्ययः, "आने मुक्" इति मुगागमः,। पपौ = "पा पाने" इति धातोः लिट्, णलः "आत औ णलः" इति औकारादेशः। कृष्णसारः=कृष्णश्चासौ सारश्च=शबलश्च, कृष्णसारः, "वर्णो वर्णेन" इति समासः। "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इति, "कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषः" इत्यप्यमरः। स्पर्शनिमीलिताक्षी = निमीलिते अक्षिणी यस्याः सा निमीलिताक्षी, "अनेकमन्यपदार्थे" इति बहुव्रीहिः, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्तः षच् प्रत्ययः। "षिद्गौरादिभ्यश्च" इति ङीष् प्रत्ययः। स्पर्शेन हेतुना निमीलिताक्षी, स्पर्शनिमीलिताक्षी, तां स्पर्शनिमीलिताक्षीम्। अत्राक्षिनिमीलन स्पर्शसुखस्यानुभावः। शृङ्गेण = "साधकतमं करणम्" इति शृङ्गशब्दस्य करणसंज्ञा, ततः "कर्तृकरणयोस्तृतीया" इति तृतीया। अकण्डूयत = "कण्डूञ् गात्रविघर्षणे" इति धातोः "कण्ड्वादिभ्यो यक्" इति यक्। ततः कर्तरि लङ्। अत्र स्वभावोक्तिरलङ्कारः।

**भावार्थः**—आत्मीया वल्लभा भ्रमरीमनुसरन् भ्रमरः पुष्पमये एकस्मिन् चषके मधु पीतवान्, "नागरिका ह्येकस्मिन् एव पात्रे सम्भृत म ं वल्लभा पाययन्ति, तत्पीतशेषं स्वय चानुपिबन्तीति लोकप्रसिद्धिरत्रानुसन्धेया"। कृष्णसारो मृगश्च स्पर्शसुखेन निमीलितनयना स्वा वल्लभां मृगीं स्वेनैव विषाणेन कण्डूयनादिभिरनुवर्तितवानिति भावः।

**भाषा**—रसिक लोग एक ही प्याले में मदिरा को भरकर अपनी प्रिया के पान करने पर बचा हुआ स्वयं पीते है, इसी तरह भ्रमर एक ही पुष्प में स्वकीय भ्रमरी का अनुसरण करता हुआ मधु का पान करने लगा। और कृष्णसार

नामक मृग स्पर्शजन्य सुखसे आख मूंद कर खडी रहने वाली स्वकीय प्रिया मृगी की अपने सींग से खजवाता हुआ खुशामत करने लगा ।

गजमिथुनाना चक्रवाकमिथुनाना च भावप्रकाशनमाह—

**ददौ रसात्पङ्कजरेणुगन्धि, गजाय गण्डूषज ।**
**अर्धोपमुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा ॥ ३७ ॥**

**गज को प्रिया ने सुरभिमय गण्डूषजल गज को दिया ।**
**उपभुक्त-अर्ध-मृणाल चकवा ने प्रिया को दे दिया ॥**

**अन्वयः**—रसात् करेणुः पङ्कजरेणुगन्धि गण्डूषजलं गजाय ददौ। रथाऽङ्गनामा अर्धोपभुक्तेन बिसेन जाया सम्भावयामास ।

**व्याख्या**—रसात्=अतिरागात् हेतोः, करेणुः=हस्तिनी, पङ्कजरेणुगन्धि= कमलपरागगन्धि, गण्डूषजलं = मुखान्तर्धृताम्बु, गजाय = हस्तिने, ददौ = दत्तवती । रथाङ्गनामा = चक्रवाकः, अर्धोपभुक्तेन = अर्धजग्धेन, बिसेन=मृणालेन, जायां = भार्यां, चक्रवाकीमित्यर्थः । सम्भावयामास = संमानितवान् , स्वजग्धशेषं ददावित्यर्थः ।

**व्युत्पत्तिः**—रसात्=हेतौ पञ्चमी, "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः । करेणुः="करेणुरिभ्या स्त्री नेभे" इत्यमरः । पङ्कजरेणुगन्धि= पङ्कात् जायते इति पङ्कजं, "पङ्कोऽस्त्री शादकर्दमौ" इति कोषः । पङ्कजस्य रेणुः पङ्कजरेणुः, तस्य गन्धः पङ्कजरेणुगन्धः, सः अस्याऽस्तीति पङ्कजरेणुगन्धि, तत् । गण्डूषजलं= गण्डूषस्य जलं गण्डूषजलं, तत् "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः । गजाय="मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति गजस्य सम्प्रदानसंज्ञा, ततः चतुर्थी सम्प्रदाने इति चतुर्थी । ददौ="डुदाञ् दाने" इति धातोर्लिट् । रथाऽङ्गनामा=रथस्य अङ्ग=चक्र, रथाङ्गं, तत् नाम यस्य सः रथाऽङ्गनामा । "कोकश्चक्रश्चक्रवाको रथाऽङ्गाह्वयनामकः" इति "आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च" इत्यप्यमरः । अर्धोपभुक्तेन = अर्धं यथा स्यात्तथा उपभुक्तम् अर्धोपभुक्तं, तेन अर्धोपभुक्तेन । "अर्धं समेऽशके" इत्यमरः । बिसेन="मृणालं बिसम्" इत्यमरः । जायाम्="भार्या जयाऽथ पुं भूम्नि दाराः" इत्यमरः । संभावयामास= समुपसर्गपूर्वकात् णिजन्ताद् "भू सत्तायाम्" इति धातोर्लिट् ।

अत्र सर्वत्र रतेस्तिर्यग्गतत्वेन रसाभासः ।

**भावार्थः**—यथा कामिनी सुरभिलकुसुमादिसंस्कृतं मुखासवं कामिने ददाति, तद्वत् अतिरागात् करिणी कमलपरागसुगन्धयुक्तं मुखान्तर्गतजलं करिणे दत्तवती। चक्रवाकोऽपि मुखताम्बूलार्पणेनेवार्धजग्धेन मृणालेन प्रियतमा चक्रवाकीं सम्मानितवानिति भावः।

**भाषा**—जैसे कामिनी सुगन्धित पुष्पों से संस्कृत मद्य का मुखगण्डूष से कामी को पान कराती है, इसी तरह अत्यन्त प्रेम से हथिनी कमलों के पराग से सुगन्धित मधुर जल का अपनी सूंड से हाथी को पान कराने लगी। और चक्रवाक पक्षी भी कामियों के परस्पर में मुखताम्बूल के अर्पण के समान स्वयं आधा चबा कर मृणाल दण्ड चक्रवाकी को खिलाने लगा।

एवं हिमवच्छिखरवर्तिना मृगपक्षिणा कामविकारमुक्त्वा सम्प्रति किम्पुरुषादीना मनोविकारमाह—

**गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखम्।**
**पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥ ३८ ॥**

**थी पत्र रेखा मलिन जल से मद्यमय किन्नर किया।**
**प्रिय गान में प्रिय ने प्रिया के वदन का चुम्बन किया ॥**

**अन्वयः**—किंपुरुषः गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखं पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं चुचुम्बे।

**व्याख्या**—किंपुरुषः=किंनरः, गीतान्तरेषु=गानमध्येषु, श्रमवारिलेशैः=श्रमजलकणैः, स्वेदोदबिन्दुभिरित्यर्थः। किञ्चित्समुच्छ्वासितपत्रलेखम्=ईषद्विश्लेषितपत्रावलि, पुष्पासवाघूर्णितनेत्रशोभि=पुष्पोद्भवमद्योद्भ्रान्तनयनद्योति, प्रियामुखं=वल्लभाननं, चुचुम्बे=चुचुम्ब।

**व्युत्पत्तिः**—किंपुरुषः="स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयु"रित्यमरः, गीतान्तरेषु=गीतानाम् अन्तराणि गीतान्तराणि, तेषु गीतान्तरेषु, "गीतं गानमिमे समे" इति "अन्तरमवकाशाऽवधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यप्यमरः। श्रमवारिलेशैः=श्रमस्य वारि श्रमवारि, "आपः स्त्री भूम्नि, वार्वारि सलिलं कमलं जलम्" इत्यमरः। श्रमवारिणो लेशाः श्रमवारिलेशाः तैः श्रमवारिलेशैः, "स्त्रिया मात्रा त्रुटी पुंसि लवलेशकणाऽणवः" इत्यमरः। किञ्चित्समुच्छ्वासितपत्रलेखं=पत्राणां लेखाः पत्रलेखाः, किञ्चित् समुच्छ्वासिताः पत्रलेखाः यस्य तत् किञ्चित् समुच्छ्वासितपत्रलेखं, तत्। पुष्पासवाघूर्णितनेत्रशोभि=पुष्पाणाम् आसवः=

मद्यं, पुष्पासवः, पुष्पोद्भवमद्यमित्यर्थः । ईषत् घूर्णिते आघूर्णिते । पुष्पासवेन आघूर्णिते पुष्पासवाघूर्णिते, ते च ते नेत्रे पुष्पासावाघूर्णितनेत्रे, ताभ्या शोभते तच्छीलं पुष्पासवाघूर्णितनेत्रशोभि, तत्, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः । प्रियामुखं=प्रियायाः मुखं प्रियामुखं, तत्, "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः । चुचुम्बे="चुबि वक्त्रसंयोगे" इति धातोः "परोक्षे लिट्" इति लिट् "इदितो नुम् धातोः" इति नुमागमश्च ।

**भावार्थः**—किन्नरः अतीतानागतयोर्गानयोरन्तरालेषु गानश्रमसञ्जातस्वेदजलकणैरीषदुच्छूनितपत्रभङ्गं माध्वीसुरोद्भ्रान्तनयनशोभं किन्नरीमुख चुम्बितवानिति भावः ।

**भाषा**—किन्नर एक गाना समाप्त कर दूसरे गानेके आरम्भ के मध्यमें, गाने के परिश्रम से जायमान प्रस्वेद से कुछ मिटगये मकरिकादि पत्र रचना वाले, और मद्यपान से लाल नेत्र की शोभा से युक्त, स्वप्रिया किन्नरी के मुख का चुम्बन करने लगा ।

अथ स्थावराणामपि मदनोन्मादं दर्शयति—

**पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥३९॥**

**सुम गुच्छ कुच पल्लव अधर सुन्दर लता प्रमदा बनी ।**
**आश्लेष तरुवर ने किया, थी तरु भुजा शाखा घनी ॥**

**अन्वयः**—तरवः अपि पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः लतावधूभ्यः विनम्रशाखाभुजबन्धनानि अवापुः ।

**व्याख्या**—तरवः अपि=स्थावरात्मकाः वृक्षा अपि, लिङ्गादेव पुंस्त्वं व्यज्यते । पर्याप्तपुष्पस्तबकस्तनाभ्यः=समग्रकुसुमगुच्छककुचाभ्यः, स्फुरत्प्रवालोष्ठमनोहराभ्यः=स्फुरत्पल्लवाऽधररुचिराभ्यः, लतावधूभ्यः, व्रततिनारीभ्यः, सकाशात्, विनम्रशाखाभुजबन्धनानि=अवनतविटपबाहुबन्धनानि, अवापुः=प्रापुः, लता वधूभिः वृक्षा आलिङ्गिता इत्यर्थः ।

**व्युत्पत्तिः**—तरवः="वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः । पर्याप्तपुष्पस्तबकस्तनाभ्यः=पुष्पाणा स्तबकाः पुष्पस्तबकाः, "स्याद् गुच्छकस्तु स्तबकः" इत्यमरः । पर्याप्ताश्च ते पुष्पस्तबकाः पर्याप्तपुष्पस्तबकाः, ते एव स्तनाः यासा ता पर्याप्तपुष्पस्तबकस्तनाः, ताभ्यः पर्याप्तपुष्पस्तबकस्तनाभ्यः । "स्वाङ्गा-

चोपसर्जनादसंयोगोपधात्" इति विकल्पान्न ङीत्। "स्तनौ कुचौ" इत्यमरः। स्फुरत्प्रवालोष्ठमनोहराभ्यः = स्फुरन्तश्च ते प्रवालाः स्फुरत्प्रवालाः, ते एव ओष्ठाः स्फुरत्प्रवालोष्ठाः, "ओत्वोष्ठयोः समासे वा" इति पररूपत्वम्। हरन्ति ताः हराः, "हृञ् हरणे" इति धातोः पचाद्यच्। मनसः हराः मनोहराः। स्फुरत्प्रवालोष्ठैः मनोहराः स्फुरत्प्रवालोष्ठमनोहराः, ताभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः। लतावधूभ्यः = लता एव वध्वः लतावध्वः, ताभ्यः लतावधूभ्यः, "वल्ली तु व्रततिर्लता" इति "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यप्यमरः। विनम्रशाखाभुजबन्धनानि = विशेषेण नम्राः, विनम्राः, 'सुप्सुपा' इति समासः। विनम्राश्च ता शाखाः विनम्रशाखाः, ता एव भुजाः विनम्रशाखाभुजाः, तैः बन्धनानि विनम्रशाखाभुजबन्धनानि तानि।

एतच्च वृक्षलतानामपि चेतनत्वादुक्तम्। यथाऽऽह मनुः—

"अन्तः सञ्ज्ञा भवन्त्येते सुखदुःखसमन्विताः" (१-४९) इति।

सन्निहिते हि प्रियतमे वधूना स्तनपूर्तिधरस्फुरणं च भवतीति कामशास्त्रप्रसिद्धम्। अत्र रूपकाऽलङ्कारः।

**भावार्थः**—समग्रकुसुमगुच्छककुचाभ्यः कम्पमानपल्लवोष्ठचेतोहराभ्यो लताभ्य एवाङ्गनाभ्यः सकाशात् स्थावरात्मका वृक्षा अपि विनम्रविटपभुजैरालिङ्गनानि प्राप्तवन्तः। स्थावराणामपि मदनविकारोऽभूत्किमुतान्येषामिति भावः।

**भाषा**—कुसुमगुच्छक रूपी स्तनों से परिपूर्ण और हिलने वाले पल्लव रूपी ओष्ठों से मनोहारिणी लता रूपी कामिनीयों से स्थावर वृक्ष रूपी कामुक पुरुष भी फैली हुई शाखा रूपी भुजा के द्वारा अलिङ्गन को प्राप्त करने लगे। अर्थात् जब वृक्षादि स्थावर पदार्थों को भी काम विकार उत्पन्न होगया, तब दूसरे प्राणियों की अवस्था का क्या कहना है।

अथ यथावसरमाधिकारिकं वृत्तमवतारयति—

**श्रुताऽप्सरोगीतिरपि क्षणेऽस्मिन्, हरः प्रसंख्यानपरो बभूव।**
**आत्मेश्वराणां न हि जातु विघ्नाः, समाधिभेदप्रभवो भवन्ति ॥४०॥**

सुन अप्सरा-गण गान शंकर योग में तत्पर हुए।
क्या योगि-मन को जीतने में विघ्न बलवत्तर हुए॥

**अन्वयः**—अस्मिन् क्षणे हरः श्रुताऽप्सरोगीतिः अपि प्रसंख्यानपरः बभूव। आत्मेश्वराणां विघ्नाः जातु समाधिभेदप्रभवः न भवन्ति।

**व्याख्या**—अस्मिन् क्षणे=अस्मिन् अवसरे, वसन्तप्रादुर्भावसमये इत्यर्थः । हरः=महादेवः, श्रुताऽप्सरोगीतिरपि = आकर्णितस्ववेंश्यागानोऽपि, दिव्याऽङ्गना गानं शृण्वन्नपीत्यर्थः । प्रसंख्यानपरः = आत्माऽनुसन्धानतत्परः, बभूव=अभवत् । हिः यतः, आत्मेश्वराणा=स्ववशमनसा, जितेन्द्रियाणामित्यर्थः । विघ्नाः = प्रत्यूहा, जातु=कदाचिदपि, समाधिभेदप्रभवः=चित्तैकाग्रयभञ्जनसमर्थाः, न भवन्ति ।

**व्युत्पत्तिः**—क्षणे="निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । श्रुताऽप्सरोगीतिः = अप्सरसा गीतिः अप्सरोगीतिः, "स्त्रियां बहुष्वप्सरसः स्ववेंश्या उर्वशीमुखा" इत्यमरः । श्रुता अप्सरोगीतिर्येन सः श्रुताप्सरोगीतिः । प्रसंख्यानपरः = प्रसंख्याने परः प्रसख्यापरः, आत्मेश्वराणाम्=आत्मनः ईश्वराः आत्मेश्वराः, तेषाम् आत्मेश्वराणा, "स्वामी त्वीश्वरः पतिरीशिता" इत्यमरः । विघ्नाः=विहन्यन्ते मनोरथाः एभिः इति विघ्नाः, घञर्थे कप्रत्ययः । "विघ्नेऽन्तरायः प्रत्यूहः" इत्यमरः । जातु = "कदाचिज्जातु" इत्यमरः । समाधिभेदप्रभवः= समाधेर्भेदः समाधिभेदः, तस्मिन् प्रभवः समाधिभेदप्रभवः ।

अत्र पूर्वार्धस्योत्तरार्धेन समर्थनादर्थान्तरन्यासालङ्कारः ।

**भावार्थः**—एवं विषसकलचेतनवर्गमनःक्षोभकरे समयेऽपि हरोऽस्खलितचित्तवृत्तिः सन् परमात्मानुसन्धानात् किञ्चिदपि न विरराम । यस्मात् सकलचित्तक्षोभविधायिनोऽपि पदार्थाः कदाचिदपि धीराणा मनसः क्षोभं नोत्पादयन्तीति भावः

**भाषा**—इस प्रकार सकल चेतन प्राणियों के मन में काम वासना को उत्पन्न करने वाले समय में भी शङ्कर भगवान् चित्तवृत्ति को अस्खलित रख कर समाधि से जरा भी विरत नहीं हुए । क्योंकि दुनिया के चित्त में क्षोभ पैदा करने वाले भी पदार्थ धीर पुरुष के मन में थोड़ा भी क्षोभ उत्पन्न नहीं कर सकते है ।

अथ हरप्रतिहारपदे वर्तमानस्य नन्दिकेश्वरस्य तत्कालोचिता प्रवृत्तिमाह—

**लतागृहद्वारगतोऽथ नन्दी, वामप्रकोष्ठाऽर्पितहेमवेत्रः ।**
**मुखाऽर्पितैकाङ्गुलिसंज्ञयैव, मा चापलायेति गणान्व्यनैषीत् ॥ ४१ ॥**

ले वाम कर में दण्ड नन्दी ने लता-गृह द्वार पर ।
आकर कहा गण वृन्द से मन को सधिक चंचल न कर ॥

**अन्वयः**—अथ लतागृहद्वारगतः वामप्रकोष्ठाऽर्पितहेमवेत्रः नन्दी मुखाऽर्पितैकाङ्गुलिसञ्ज्ञया एव गणान् "चापलाय मा भवत" इति व्यनैषीत् ॥

**व्याख्या**—अथ = सर्वभूतानामविनयवर्धनानन्तरं, लतागृहद्वारगतः=लता-

ऽऽलयप्रतीहारस्थितः, वामप्रकोष्ठाऽर्पितहेमवेत्रः = दक्षिणेतरमणिबन्धन्यस्तसुवर्ण-दण्डः, नन्दी = नन्दिकेश्वरः, मुखाऽर्पितैकाङ्गुलिसञ्ज्ञया एव = आननधारित तर्जनीसूचनया एव, गणान् = प्रमथान्, चापलाय=चाञ्चल्यं कर्तुं, मा=न भवत, इति = इत्थं, व्यनैषीत् = शिक्षितवान् ।

व्युत्पत्तिः—लतागृहद्वारगतः = लताभिः निर्मित लतानिर्मितं, तत् गृहं लतागृह, "शाकपार्थिवादीना सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्" इति मध्यम-पदलोपी समासः । "गृहं गेहोदवसिते वेश्म सद्म निकेतनम्" इत्यमरः । लता-गृहस्य द्वार लतागृहद्वार, "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । लतागृहद्वारं गतः लतागृहद्वारगतः, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति समासः । वामप्रकोष्ठाऽर्पितहेमवेत्रः = वामश्चासौ प्रकोष्ठः वामप्रकोष्ठः, हेम्नः वेत्रं हेमवेत्रम् । अर्पितं हेमवत्र येन सः अर्पितहेमवेत्रः । वामप्रकोष्ठे अर्पितहेमवेत्रः वामप्रकोष्ठा-र्पितहेमवेत्रः । नन्दी="शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः" इत्यमरः । मुखाऽर्पितैकाङ्गुलिसञ्ज्ञया = मुखे = वदने, अर्पिता सक्रोधाश्चर्यस्तिमिताऽवलोक निहिता, मुखाऽर्पिता । एका चाऽसौ आङ्गुलिः एकाङ्गुलिः । मुखाऽर्पिता चाऽसौ एकाऽङ्गुलिः मुखार्पितैकाङ्गुलिः, तस्याः सञ्ज्ञा मुखाऽर्पितैकाङ्गुलिसंज्ञा, तया मुखाऽ-र्पितैकाङ्गुलिसंज्ञया । "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना" इत्यमरः । गणान्="सङ्घाते प्रमथे गण." इत्यमरः । चापलाय = चपलस्य भावः चापलं, तस्मै चापलाय, चपलशब्दात् "हायनाऽन्तयुवादिभ्योऽण्" इत्यण् प्रत्ययः । "क्रियार्थोपपदस्य कर्मणि स्थानिनः" इति चतुर्थी ।

भावार्थः—अथ सर्वभूतानामविनयवर्षनानन्तरं हरप्रतिहारपदे वर्तमानो दक्षिणेतरमणिबन्धन्यस्तसुवर्णदण्डो नन्दिकेश्वरो भूतगणान् चापल कर्तुं मा भव-तेति नासारोपिततर्जनीसूचनयैव शिक्षितवानिति भावः ।

भाषा—सकल भूत पदार्थ के होने वाले अविनय भाव को देखकर शङ्करके आश्रममें पहरे पर रहनेवाला, वामहस्तमें सोने के दण्डे को धारण करनेवाला नन्दिकेश्वर नामक गण, भूतगणों को चाञ्चल्य न करने के लिये "नाक पर अङ्गुली रखकर" इशारे से ही मना करने लगा ।

अथ न केवलं गणा एव विनीताः, किन्तु जरायुजादिचतुर्विधं प्राणिजातम-पीति नन्दिनः प्रभावातिशयमाह—

**निष्कम्पवृक्षं निभृतद्विरेफं, मूकाऽण्डजं शान्तमृगप्रचारम् ।**

तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवाऽवतस्थे ॥४२॥

तरु भ्रमर पक्षी सर्प मृग गण एक दम चुप होगया ।

इससे अधिक मैं क्या कहूँ बन सकल निश्चल होगया ॥

**अन्वयः**—निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारं सर्वम् एव काननं तच्छासनात् चित्राऽर्पितारम्भम् इव अवतस्थे ॥

**व्याख्या**—निष्कम्पवृक्षं=कम्परहितपादपम्, "इदमुद्भिजोपलक्षणम्", निभृतद्विरेफं=निश्चलभ्रमरं "स्वेदजोपलक्षणमेतत्", मूकाण्डजं=निःशब्दपक्षिसर्पादिकम्, "एतेन अण्डजजातिरुक्ता", शान्तमृगप्रचारं = निवृत्तपशुभ्रमणं "जरायुजोपलक्षणमेतत्", सर्वम् एव = सम्पूर्णम् एव, काननं = वनं, तच्छासानात् = नन्दिकेश्वराज्ञया, चित्राऽर्पितारम्भम् इव = आलेख्यलिखितारम्भम् इव, अवतस्थे = स्थितवान् ।

**व्युत्पत्तिः**—निष्कम्पवृक्षं=निर्गतः कम्पः येभ्यस्ते निष्कम्पाः, "अथ वेपथुः कम्पः" इत्यमरः । निष्कम्पाः वृक्षाः यस्मिन् तत् निष्कम्पवृक्षं । निभृतद्विरेफं=द्वौ रेफौ येषा ते द्विरेफाः । निभृताः द्विरेफाः यस्मिन् तत् निभृतद्विरेफं, मूकाऽडजम्= अण्डात् जाताः अण्डजाः अण्डोपपदपूर्वकात् 'जनी प्रादुर्भावे" इति धातोः "पञ्चम्यामजातौ' इति डप्रत्ययः । मूकाः अण्डजाः यस्मिन् तत् मूकाऽण्डजम्, "अवाचि मूकः" इत्यमरः । शान्तमृगप्रचारं=मृगाणा प्रचारः मृगप्रचारः, "पशवोऽपि मृगाः" इत्यमरः । शान्तः मृगप्रचारः यस्मिन् तत् शान्तमृगप्रचारं, काननम्="अटव्यरण्यं विपिनं गहनं कानन वनम्" इत्यमरः । तच्छासनात्=तस्य शासनं तच्छासनं, तस्मात् तच्छासनात्, "अववादस्तु निर्देशो निदेशः शासनं च सः । शिष्टिश्चाज्ञा च" इत्यमरः । चित्राऽर्पितारम्भम् = चित्रे अर्पितः चित्राऽर्पितः, सः, आरम्भः यस्मिन् तत् चित्रार्पितारम्भं । "प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्धात आरम्भः" इत्यमरः । अवतस्थे=अवोपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः लिट् । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । "नृगवाद्या जरायुजाः ॥स्वेदजाः । कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः" इत्यमरः । तथा चोक्तं भोजराजेन—

"उद्भिजा वृक्षगुल्माद्याः पक्षिसर्पादयोऽण्डजाः ।

स्वेदजाः कृमिदंशाद्या नृमृगाद्या जरायुजाः ॥" इति ।

**भावार्थः**—स्थिरवृक्षं, निश्चलभ्रमरं, निश्शब्दपक्षिसङ्घं, त्यक्तसञ्चारमृगमेवं

विनीतोद्भिज्जाण्डजस्वेदजजरायुजप्राणिजातं तत् सम्पूर्णमेवारण्यं नन्दिकेश्वरशासनात् चित्रलिखिताऽऽरम्भमिवावस्थितमासीदिति भावः ।

**भाषा**—नन्दिकेश्वर के इशारा करते ही आश्रम में वृक्ष स्थिर होगये, भ्रमर निश्चल होगये, पक्षिगण चुप होगये, और मृगोंने इधरसे उधर दौड़ना छोड़ दिया, इस तरह उद्भिज, अण्डज, स्वेदज, और जरायुज सकल प्राणिसमूह चित्र में लिखित के समान स्थिर होगया ।

अथ प्रस्तुतं कामस्य हरसमाधिभङ्गव्यापारमेवानुसन्धत्ते—

**दृष्टिप्रपातं परिहृत्य तस्य, कामः पुरः शुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥**

**रतिनाथ सम्मुख शुक्र सम कर त्याग नन्दी दृष्टिका ।**
**शिव निकट आया तुरत करने अन्त अपनी सृष्टिका ॥**

**अन्वयः**—कामः प्रयाणे पुरःशुक्रं [ देशम् ] इव तस्य दृष्टिप्रपातं परिहृत्य प्रान्तेषु संसक्तनमेरुशाखं भूतपतेः ध्यानास्पदं विवेश ।

**व्याख्या**—कामः = स्मरः, प्रयाणे=यात्रायां, पुरःशुक्रम् इव = सम्मुखभार्गवं [ देशम् ] इव, तस्य = नन्दिकेश्वरस्य, दृष्टिप्रपातं=दृग्विषयं, परिहृत्य = त्यक्त्वा, प्रान्तेषु = पार्श्वदेशेषु, संसक्तनमेरुशाखं=लग्नसुरपुन्नागशाखं, भूतपतेः= शिवस्य, ध्यानास्पदं = समाधिस्थानं, विवेश = प्रविष्टवान् ।

**व्युत्पत्तिः**—पुरःशुक्रं = पुरोगतः शुक्रः यस्मिन् [ देशे ] स पुरःशुक्रः, तं पुरःशुक्रं । "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः" इत्यमरः ।

प्रयाणे हि पुरश्शुक्रः प्रतिषिद्धो मुहूर्तशास्त्रे यथा—

"आग्नेयाद्यास्तारकाः साभिजित्का प्रागाद्याशासंस्थिताः सप्त सप्त ।
यस्या तिष्ठेद् भार्गवो दिश्यमुष्या-यात्रा पुंसा प्राणमानार्थहन्त्री॥" इति

दृष्टिप्रपात = दृष्टीना प्रपातः, दृष्टिप्रपातः, तं दृष्टिप्रपात, "दृग्दृष्टी" इत्यमरः । परिहृत्य = पर्युपसर्गपूर्वकात् "हृञ् हरणे" इति धातोः क्त्वाप्रत्ययः, तस्य ल्यबादेशः । ततः "ह्रस्वस्य पिति कृति तुक्" इति तुगागमः । संसक्तनमेरुशाखं=नमेरूणा शाखाः नमेरुशाखाः, संसक्ताः नमेरुशाखाः यस्य तत् संसक्तनमेरुशाखं, तत् । तिरोधानयोग्यमिति भावः, भूतपतेः=भूताना पतिः भूतपतिः, तस्य भूतपतेः "भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः" इत्यमरः । ध्यानाऽऽस्पद = ध्यानस्य आस्पद ध्यानास्पदं, तत् "आस्पदं प्रतिष्ठायाम्" इति निपातः । विवेश="विश-

प्रवेशने" इति धातोर्लिट् ।

**भावार्थः**-कामदेवः यात्रायां पुरोभागस्थितशुक्रमिव नन्दिकेश्वरस्य दृग्विषयं परित्यज्य क्षितितलपर्यन्तनिरन्तराश्लिष्टसुरपुन्नागविटप गिरीशस्य समाधिस्थानं प्राविशदिति भावः ।

**भाषा**—कामदेव यात्रामें सन्मुख शुक्र के समान नन्दिकेश्वर के अवलोकन विषय का परित्याग कर "अर्थात् नन्दिकेश्वर की आंख बचा कर" नागकेशर के वृक्षोंकी घनी झाड़ी से घिरे हुए शङ्करके समाधिस्थान में घुस गया ।

कामदेवस्य शिवदर्शनप्रकारमाह—

**स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥**

**जिस पर बिछा हरि चर्म उस तरु सरल वेदी पर अचल ।**
**आसीन देखा संयमी शिव को मनोभव ने अटल ॥**

**अन्वयः**—आसन्नशरीरपातः स शार्दूलचर्मव्यवधानवत्या देवदारुद्रुमवेदिकायाम् आसीनं संयमिनं त्रियम्बकं ददर्श ॥

**व्याख्या**—आसन्नशरीरपातः = समीपदेहपातः, निकटवर्तिमृत्युरित्यर्थः । सः = कामः, शार्दूलचर्मव्यवधानवत्या=व्याघ्रव्यवाययुक्तायां, व्याघ्रचर्मास्तृताया-मित्यर्थः। देवदारुद्रुमवेदिकायां=परिभद्रकवृक्षवेद्याम्, आसीनम्=उपविष्टं,संयमिनं= ससंयमं, समाधिनिष्ठमित्यर्थः । त्रियम्बकं=त्रिनेत्रं, हरमित्यर्थः। ददर्श = अपश्यत् ।

**व्युत्पत्तिः**—आसन्नशरीरपातः = शरीरस्य पातः शरीरपातः, "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । आसन्नः शरीरपातः यस्य स आसन्न-शरीरपातः "समीपे निकटासन्नसंनिकृष्टसनीडवत्" इत्यमरः । शार्दूलचर्मव्यवधा-नवत्या=शार्दूलस्य चर्म शार्दूलचर्म, "शार्दूलद्वीपिनौ व्याघ्रे" इति "अजिनं चर्म कृत्तिः स्त्री" इत्यप्यमरः । व्यवधानम् अस्ति यस्याः सा व्यवधानवती, मतुप्प्रत्ययः। तदन्तात् स्त्रीत्वविवक्षायाम् "उगितश्च"इति ङीप्प्रत्ययः ।।शार्दूलचर्मणा,करणेन, व्यवधानवती शार्दूलचर्मव्यवधानवती, तस्या शार्दूलचर्मव्यवधानवत्या । "मोक्ष· श्रीर्व्याघ्रचर्मणि" इति प्राशस्त्यादिति यावत् । देवदारुद्रुमवेदिकाया=देवदारुश्चा-ऽसौ द्रुमः देवदारुद्रुमः, "शक्रपादपः पारिभद्रकः । भद्रदारु द्रुकिलिम पीतदारु च दारु च । पूतिकाष्ठं च सप्त स्युर्देवदारुणि" इत्यमरः। वेदिरेव वेदिका, "वेदिः परिष्कृता भूमिः" इत्यमरः । देवदारुद्रुमस्य वेदिका देवदारुद्रुमवेदिका, तस्या

देवदारुद्रुमवेदिकाया । संयमिनं = संयमः अस्याऽस्तीति सयमी, तं संयमिनम् , "अत इनिठनौ" इति इनिप्रत्ययः । त्रियम्बकं=त्रीणि अम्बकानि = नेत्राणि, यस्य सः त्रियम्बकः, तं त्रियम्बकम् ।

अत्र त्र्यम्बकम् इत्यस्य वक्तव्यत्वे छान्दसप्रयोगाऽनुकरणं कृत्वा महाकविना इयङादेशविशिष्टं रूपमङ्गीकृतम् । तच्च अभियुक्तैरपि अभ्युपगतम् । तथा च भर्तृहरिः "त्रियम्बकं नान्यमुपस्थितासा" वति "त्र्यम्बकमित्युक्ते पादपूरणान्यस्यासात् त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दस" इति मल्लिनाथोक्तिस्तु नाऽऽदरणीया, "त्रिलोचनम्" इत्यनेनैव पादपूरणसद्भावात् ।

"हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुराऽन्तकः" इत्यमरः ।

अत्रानवसरोपस्थानेन कामदेवस्य शरीरनाशः कविना "आसन्नशरीरपातः" इति विशेषणेन सम्भावितः । अवसरोपस्थानेनानुग्रहः पुनः "तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम्" ( ७स० ६७श्लो० ) इत्यादिना वक्ष्यते चेति न पूर्वापरस्त्वोक्तिविरोध इति बोध्यम् ।

**भावार्थः**—आसन्नमृत्युः स कामो व्याघ्रचर्मास्तृताया देवदारुवृक्षमूलप्रदेशे शिलादिभिर्बद्धाया वेदिकाया समाधिनिष्ठ त्रिलोचनमवलोकयामासेति भावः ।

**भाषा**—मौत के मुख में पडे हुऐ कामदेव ने, देवदारु पेडके नीचे पत्थरसे बने चबुतरे पर व्याघ्रचर्म को बिछा के समाधिमें बेठे हुए शङ्कर को देखा ।

अथ तमेव देवं शिव पञ्चभिः श्लोकैः वर्णयति, तत्र तपसामासनस्थैर्यमूलत्वादादावासनप्रकारमाह—

**पर्य्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं सन्नमितोभयांसम् ।**
**उत्तानपाणिद्वयसन्निवेशात्, प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

पर्य्यङ्क बन्ध मनोज्ञ तन ऋजु नमित अस महान थे ।
उत्तान पाणि निवेश से विकसित सरोज समान थे ॥

**अन्वयः**—पर्यङ्कबन्धस्थिरपूर्वकायम् ऋज्वायतं सन्नमितोभयासम् उत्तानपाणिद्वयसन्निवेशात् अङ्कमध्ये प्रफुल्लराजीवम् इव स्थित ददर्शेति पूर्वेणान्वय. ।

**व्याख्या**—पर्यङ्कबन्धस्थिरपूर्वकायं = वीराऽऽसननिश्चलपूर्वार्धम्, ऋज्वायतं=प्रगुणदीर्घं, सन्नमितोभयाऽसं=सन्नमितद्विस्कन्धम्, उत्तानपाणिद्वयसन्निवेशात्= ऊर्ध्वतलहस्तद्वयसंस्थानात्, अङ्कमध्ये=क्रोडमध्ये, प्रफुल्लराजीवम् इव=विकचकमलम् इव, स्थितं तं ददर्शेति पूर्वेणान्वय. ।

**व्युत्पत्तिः**—पर्यङ्कबन्धस्थिरपूर्वकायं = पर्यङ्कस्य बन्धः पर्यङ्कबन्धः । पूर्वं कायस्य इति पूर्वकायः, "पूर्वाऽपराऽधरोत्तरमेकदेशिनैकाधिकरणे" इति समासः। स्थिरः पूर्वकायः यस्य स स्थिरपूर्वकायः, पर्यङ्कबन्धेन स्थिरपूर्वकायः पर्यङ्कबन्धस्थिरपूर्वकायः, तं पर्यङ्कबन्धस्थिरपूर्वकायं, "वीरासनबन्धनेन निश्चलशरीरपूर्वार्धं" मित्यर्थः । ऋज्वायतम् = ऋजुश्चाऽसौ आयतः ऋज्वायतः, तम् ऋज्वायतम्, "ऋजावजिह्मप्रगुणौ" इति "दीर्घमायतम्" इत्यप्यमरः । सन्नमितोभयासम् = सन्नमितौ उभौ असौ यस्य स सन्नमितोभयाऽसः त सन्नमितोभयासम् । "वृत्ति विषये उभशब्दस्थाने उभयशब्दप्रयोगः" इत्युक्तं कैयटेन । "स्कन्धो भुजशिरोऽसोऽस्त्री" इत्यमरः । उत्तानपाणिद्वयसन्निवेशात् = द्वौ अवयवौ यस्य तत् द्वय, पाण्योर्द्वयं पाणिद्वयम् । "पञ्चशाखः शयः पाणिः" इत्यमरः । पाणिद्वयस्य सन्निवेशः पाणिद्वयसन्निवेशः । उत्तानश्चासौ पाणिद्वयसन्निवेशः उत्तानपाणिद्वयसन्निवेशः, तस्मात् उत्तानपाणिद्वयसन्निवेशात् । अङ्कमध्ये=अङ्कस्य मध्यम् अङ्कमध्यं, तस्मिन् अङ्कमध्ये "उत्सङ्गचिह्नयोरङ्कः" । प्रफुल्लराजीवं=प्रफुल्लतीति प्रफुल्लं, प्रोपसर्गपूर्वकात् "फुल्ल विकसने" इति धातोः पञ्चाद्यच् । प्रफुल्लोत्फुल्लसफुल्लव्याकोशविकचस्फुटाः । फुल्लश्चैते" इत्यमरः । प्रफुल्ल राजीव यस्य सः प्रफुल्लराजीवः, त प्रफुल्लराजीवं, "बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च" इत्यमरः ॥

वीरासने वशिष्ठः—"एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् ।
इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥" इति ।

तथा योगसारे—"उत्तानिते करतले करमुत्तानितं परम् ।
आदायाऽङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥" इति ।

**भावार्थः**—वीरासनेन निश्चलशरीरपूर्वार्धमवक्रायतोर्ध्वकायमत एव सन्नमितोभयस्कन्धमुत्तानयोः करतलयोरङ्कमध्येऽवस्थापितत्वादङ्कमध्ये प्ररूढारविन्दमिव दृश्यमानं हर ददर्शेति भावः ।

**भाषा**—वीरासन से शरीर के पूर्व भाग को सीधा और स्थिर बनाकर दोनो कन्धों को नीचा कर, गोद में कमल के समान दोनों पञ्जों को उताना रख कर बैठे हुए शङ्कर को देखा ।

ध्यानोद्योगद्योतकमलङ्कारविशेषमाह—

**भुजङ्गमोन्नद्धजटाकलाप कर्णावसक्तद्विगुणाक्षसूत्रम् ।**
**कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥**

अहि मय जटा श्रुति सूत्र मय गल कान्ति मिश्रण श्यामतम ।
धारण किये शिव को विलोका कृष्ण मृग के मृदु चरम ॥

**अन्वयः**—भुजङ्गमोन्नद्धजटाकलाप कर्णाऽवसक्तद्विगुणाक्षसूत्रं कण्ठप्रभा-सङ्गविशेषनीला ग्रन्थिमतीं कृष्णत्वच दधान त ददर्शेति पूर्वेणान्वयः ।

**व्याख्या**—भुजङ्गमोन्नद्धजटाकलापं=सर्पोद्बद्धसटासमूहं, कर्णाऽवसक्तद्वि-गुणाक्षसूत्रं=दक्षिणश्रवणनिक्षिप्तद्विरावृत्ताक्षमालम् , कण्ठप्रभासङ्गविशेषनीला=जलकान्तिमिश्रणविशेषकृष्णा, ग्रन्थिमतीं = बन्धनयुक्ता, कृष्णत्वचं = कृष्णमृग-चर्म, दधानं=धारयन्त शिवं ददर्शेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—भुजङ्गमोन्नद्धजटाकलाप=भुजङ्गमेन = सर्पेण, उन्नद्ध=उन्न-मय्य बद्धः, भुजङ्गमोन्नद्धः उदुपसर्गपूर्वकात् "णह बन्धने" इति धातोः क्तप्र-त्ययः । "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । जटाना कलापः जटाकलापः । "वृतिनस्तु जटा सटा" इति "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यप्यमरः । भुजङ्गमोन्नद्धः जटाकलापः येन स भुजङ्गमोन्नद्धजटाकलापः, तं भुजङ्गमोन्नद्धजटाकलापं कर्णाऽवसक्तद्विगुणाऽक्षसूत्रं=कर्णे=दक्षिणकर्णे, अवसक्तं=स्थितं, कर्णावसक्तं, कर्णालम्बीत्यर्थः । द्वौ गुणौ=आवृत्ती, यस्य तत् द्विगुणम् । अक्षाणा सूत्रम् अक्षसूत्रम् । कर्णाऽवसक्तं [अत एव] द्विगुणम् अक्षसूत्रं, यस्य सः कर्णाऽवसक्तद्विगुणाक्षसूत्रः, त कर्णाऽवसक्तद्विगुणाक्षसूत्रं,कण्ठप्रभासङ्गविशेषनीला=कण्ठस्य प्रभाः कण्ठप्रभाः,"स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्य-मरः । कण्ठप्रभाणा सङ्गः कण्ठप्रभासङ्गः । विशेषेण नीला विशेषनीला, "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इत्यमरः । कण्ठप्रभासङ्गेन विशेषनीला कण्ठप्रभासङ्गविशेषनीला, ता कण्ठप्रभासङ्गविशेषनीला, ग्रन्थिमतीं=ग्रन्थिः अस्या अस्तीति ग्रन्थिमती, ता ग्रन्थिमतीं, मतुप्प्रत्ययः तदन्ताङ्गीप् । कृष्णत्व-चं=कृष्णस्य=कृष्णसारस्य, त्वक् कृष्णत्वक्, ता कृष्णत्वच, "नामैकदेशे नामग्रहणम्" इति न्यायात् कृष्णसारवाचकः ।

**भावार्थः**-सर्पोद्ग्रन्थितजटाजूट दक्षिणकर्णावस्थितद्विरावृत्ताक्षमालं गलग लि-तबहलतरंगरलप्रभाधिकश्यामलं निबिडग्रथित मृगचर्म वसानं हरं ददर्शेति भावः।

**भाषा**—सर्प से जटा जूट को बाधे हुए, कान में रुद्राक्ष माला को दुहेरी लपेट कर, गलेके हलाहल की प्रभा से अत्यन्त काले दिखपड़ने वाले मृग चर्म को गाठ लगा कर धारण किये हुए शङ्कर को देखा ।

नेत्राणामपि योगानुगुणमवस्थानविशेषमाह—

**किञ्चित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।**
**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥**

कुछ दीप्त उग्र कनीनिका-मय पक्ष्म-पतन रहित अचल ।
अपलक अधोमुख-किरण-दृग नासाग्र लखते थे अटल ।

**अन्वयः**—किञ्चित्प्रकाशस्तिमितोग्रतारैः भ्रूविक्रियाया विरतप्रसङ्गैः अविस्पन्दितपक्ष्ममालैः अधोमयूखैः नेत्रैः लक्ष्यीकृतघ्राणं तं ददर्शेति पूर्वेणान्वयः ।

**व्याख्या**—किञ्चित्प्रकाशस्तिमितोग्रतारैः = ईषत्प्रकाशनिश्चलरौद्रकनीनिकैः, भ्रूविक्रियाया = भ्रूविक्षेपे, विरतप्रसङ्गैः=निवृत्ताऽवसरैः प्रसक्तरहितैरित्यर्थः । अविस्पन्दितपक्ष्ममालैः = अचलितपक्ष्मपङ्क्तिभिः, अधोमयूखैः = निम्नप्रसृतकिरणैः, नेत्रैः = नयनैः, त्रिनेत्रत्वाद् बहुवचनम् , लक्ष्यीकृतघ्राणं=लक्ष्यीकृतनासं, नासिकाऽग्रनिविष्टदृष्टिमित्यर्थः । तं शिव ददर्शेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—किञ्चित्प्रकाशस्तिमितोग्रतारैः = किञ्चित् यथा तथा प्रकाशः यासा ताः किञ्चित्प्रकाशाः, ताः स्तिमिताः उग्राः ताराः येषा तानि किञ्चित्प्रकाशस्तिमितोग्रताराणि, तैः किञ्चित्प्रकाशस्तिमितोग्रतारैः । "भयङ्कर प्रतिभयं रौद्र तूग्रममी त्रिषु"इति "तारकाऽक्ष्णः कनीनिका" इत्यप्यमरः । भ्रूविक्रियाया=भ्रुवोः विक्रिया भ्रूविक्रिया, तस्या भ्रूविक्रियाया । विरतप्रसङ्गैः = विरतः प्रसङ्गः येषा तानि विरतप्रसङ्गानि, तैः विरतप्रसङ्गैः, "प्रसङ्गः स्यादवसरः" इत्यमरः । अविस्पन्दितपक्ष्ममालैः = न विस्पन्दिता अविस्पन्दिता, पक्ष्मणा माला पक्ष्ममाला । अविस्पन्दिता पक्ष्ममाला येषा तानि अविस्पन्दितपक्ष्ममालानि, तैः अविस्पन्दितपक्ष्ममालैः । अधोमयूखैः = अधः प्रसृता मयूखा येषा तानि अधोमयूखानि, तैः अधोमयूखैः, "किरणोस्रमयूखाऽशुगभस्तिघृणिधृष्णयः"इत्यमरः । नेत्रैः=नीयन्ते विषयाः एभिः इति नेत्राणि, तैः नेत्रैः, "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः । लक्ष्मीकृतघ्राणं=अलक्ष्यं लक्ष्य यथा सम्पद्यते तथा कृत लक्ष्मीकृतं, च्विप्रत्ययः । लक्ष्यीकृतं घ्राणं येन स लक्ष्यीकृतघ्राणः, तं लक्ष्यीकृतघ्राणं, "क्लीवे घ्राणं गन्धवहा घोणा नासा च नासिका" इत्यमरः ।

समाधौ नासाग्रदृष्टिरुक्ता योगसारे यथा—

"करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः ।
आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः ॥" इति ।

"अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः। अनुत्तरङ्गम्=अविद्यमानः उत्तरङ्गः यस्य स अनुत्तरङ्गः, तम् अनुत्तरङ्ग। "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रिया वीचिः" इत्यमरः।अपाम्="आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः। निवातनिष्कम्पं=निर्गतः वातः यस्मात् देशात् स निवातो देशः, "नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः। निर्गतः कम्पः यस्मात् स निष्कम्पः, "अथ वेपथुः कम्पः" इत्यमरः। निवाते निष्कम्पः निवातनिष्कम्पः, तं निवातनिष्कम्पं प्रदीपम्=प्रकृष्टो दीपः प्रदीपः, तं प्रदीपम्। "निवातावाश्रयावातौ" इत्यमरः।

अत्र मालोपमालङ्कारः। तल्लक्षणं यथा—

"मालोपमा यदेकस्योपमानं बहु-दृश्यते ॥" इति।

**भावार्थः**—शरीरान्तर्वर्तिनां प्राणादिवायूना नियमनात् वर्षोद्योगरहितं मेघमिव दृश्यमानम्, अनुद्वीचिजलाशयमिव दृश्यमानं, निर्वातदेशनिश्चलप्रदीपमिव दृश्यमानं, कुम्भितपवनत्वेन कुत्रापि पवनप्रवृत्त्यभावान्निश्चलशरीरमिति यावत् हरं ददर्शेति भावः।

**भाषा**—शरीर के भीतर सञ्चरण करनेवाले प्राणादि वायु का नियमन करने से, वृष्टिव्यापार को नहीं करने वाले जलसे भरे मेघों के सामन, तरङ्ग को रोककर निश्चल जलाशयके समान, निर्वातप्रदेशमें स्थिर दीपक के समान, अर्थात् कहींसे वायुकी प्रवृत्ति न होने से शरीर को निश्चल बनाये हुए शङ्कर को देखा।

इत्थं प्रतिपादितस्यासनजयादिरूपस्य योगस्य सिद्धिं दर्शयति—

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः।**
**मृणालसूत्राऽधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥४९॥**

**शुचि जोति शिर के नेत्र पथ से निकलती थी या अनिल।**
**मृदु कमल सूत्र अधिक नरम बालेन्दु श्री होती धुमिल ॥**

**अन्वयः**—कपालनेत्रान्तरलब्धमार्गैः शिरस्तः उदितैः ज्योतिःप्ररोहैः मृणालसूत्राऽधिकसौकुमार्यां बालस्य इन्दोः लक्ष्मीं ग्लपयन्तं तं ददर्शेति पूर्वेणान्वयः।

**व्याख्या**—कपालनेत्रान्तरलब्धमार्गैः = कर्परनयनविवरप्राप्तपथैः, ब्रह्मकरोटिनेत्रविवरप्राप्तमार्गैरित्यर्थः। शिरस्तः=मूर्ध्नः, ब्रह्मरन्ध्रादित्यर्थः। उदितैः= उत्थितैः ज्योतिःप्ररोहैः = तेजोऽङ्कुरैः, मृणालसूत्राधिकसौकुमार्यां = बिसतन्तुविशेषसुकुमारता, बालस्य इन्दोः = शिरश्चन्द्रस्य, अर्द्धचन्द्रस्येत्यर्थः। लक्ष्मीं = कान्तिं, ग्लपयन्तं = मलिनीकुर्वन्तं, तं शिवं ददर्शेति पूर्वश्लोकेनान्वयः।

**व्युत्पत्तिः**—कपालनेत्रान्तरलब्धमार्गैः=कपालस्य नेत्रं कपालनेत्रं, "स्यात्कर्परः कपालोऽस्त्री" इत्यमरः । कपालनेत्रस्य अन्तरं कपालनेत्रान्तरम्, "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥" इत्यमरः । लब्धः मार्गः यैस्ते लब्धमार्गाः, "अयन वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः । कपालनेत्रान्तरेण लब्धमार्गाः कपालनेत्रान्तरलब्धमार्गाः, तैः कपालनेत्रान्तरलब्धमार्गैः । शिरस्तः = शिरस इति शिरस्तः, पञ्चम्यास्तसिल् । "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । ज्योतिःप्ररोहैः =ज्योतिषा प्ररोहाः, ज्योतिःप्ररोहाः, तैः ज्योतिःप्ररोहैः । मृणालसूत्राऽधिकसौकुमार्यां =मृणालस्य सूत्रं मृणालसूत्रं, 'मृणाल बिसम्" इति, "सूत्राणि नरि तन्तवः" इति चाऽमरः । मृणालसूत्रात् अधिकं मृणालसूत्राऽधिकम् । सुकुमारस्य भावः सौकुमार्यं, ष्यञ्प्रत्ययः। मृणालसूत्राधिकं सौकुमार्यं यस्याः साः मृणालसूत्राऽधिकसौकुमार्या, ता मृणालसूत्राधिकसौकुमार्याम् । इन्दोः="हिमाऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः ।

अयभिप्रायः-योगिनो हि नियमितप्राणा आग्नेयमण्डलापरनामधेयं कुण्डलिनीशब्दाभिधेयमात्मतेजो मूलाधारादुत्थाप्य क्रमात् सुषुम्नान्तरं नाभिप्रदेश हृदयं भ्रूमध्य च नीत्वा द्वादशान्तस्थिते परमात्मनि योजयन्ति । परमेश्वरस्य तु तदानीं तेन तेजसा तन्मध्यवर्तिनो बालचन्द्रस्य प्रभासङ्कोचोऽपि सञ्जातः । बालचन्द्रे परमात्मसाम्यं च प्रतीयते ।

**भावार्थः**—ब्रह्मशिरःकपालनेत्ररन्ध्रनिर्गतैः ब्रह्मरन्ध्रादुद्भूतैस्तेजोऽङ्कुरैः बिसतन्तुविशेषमार्दवा जटाकोटितटघटितबालचन्द्ररश्मीं तिरस्कुर्वन्तं हरं ददर्श । प्रबलसन्निधौ दुर्बल ग्लानिमेतीति हि लोकप्रसिद्धमिति भावः ।

**भाषा**—नेत्र और ब्रह्मरन्ध्र से निकलने वाले तीक्ष्ण तेज से बिसतन्तु के सदृश कोमल जटाजूट के अग्रभाग में स्थित चन्द्रकला के सूक्ष्म रश्मि का तिरस्कार करने वाले शङ्कर को देखा ।

अथ योगसिद्धेः फलमाह—

**मनो नवद्वारनिषिद्धवृत्ति, हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

**नव द्वार रुद्ध समाधिवश्य सुमन हृदय में रख सदा ।**
**अक्षर जिसे बुध जानते निज में स्व को लखते सदा ॥**

**अन्वयः**—नवद्वारनिषिद्धवृत्ति समाधिवश्य मनः हृदि व्यवस्थाप्य क्षेत्रविदः यम् अक्षरं विदुः। तम् आत्मानम् आत्मनि अवलोकयन्तं तं ददर्शेति पूर्वेणान्वयः।

**व्याख्या**—नवद्वारनिषिद्धवृत्ति = नवद्वारनिवर्तितसंचार समाधिवश्यं = प्रणिधानवशंगतं, मनः = मानस, हृदि=हृदये, व्यवस्थाप्य = निवेश्य, क्षेत्रविदः= क्षेत्रज्ञाः पुरुषाः, यम् , अक्षरम्=अविनाशिन, विदुः = विदन्ति । तं = प्रसिद्धम् , आत्मानं=पुरुषम् , आत्मनि = स्वस्मिन् , अवलोकयन्तं=साक्षात्कुर्वन्तम् । एवम्भूतं शिवं ददर्शेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**-नवद्वारनिषिद्धवृत्ति = नवभ्यः द्वारेभ्यः निषिद्धा नवद्वारनिषिद्धा, "तद्धितार्थोत्तरपदसमाहारे च" इति समासः । नवद्वारनिषिद्धा वृत्तिर्यस्य तत् नवद्वारनिषिद्धवृत्ति, तत्। शरीरस्य नव द्वाराणि सन्ति, यथाहुः—

"नयनश्रवणे द्वे द्वे नासिके वदनं तथा ।
पायूपस्थौ च देहेऽस्मिन्नव द्वाराणि देहिनाम् ॥" इति ।

समाधिवश्यं=वशं गतं वश्यम्, यत्प्रत्ययः। समाधिना वश्यं, समाधिवश्य, तत्, समाधिपरिशीलनमेव हि विषयेभ्यो मनोनिवारणस्योपायः। "प्रणिधानं समाधानं समाधिश्च समाश्रयः" इति हलायुधः । हृदि = "हृदयं हृत्" इत्यमरः । मनोनिवासस्थान हि हृदयमित्याह भगवान् वसिष्ठः । तथा हि—

"यतो निर्याति विषयान्यस्मिंश्चैव प्रलीयते ।
हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥" इति ।

क्षेत्रविदः=क्षेत्रं=शरीरं, विदन्तीति क्षेत्रविदः, गीतायां भगवान् श्रीकृष्णश्चाह-

"इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥" इति ।

"क्षेत्रज्ञ आत्मा पुरुषः"इत्यमरः। अक्षरम्=न क्षरतीति अक्षरः, तम् अक्षरं, कूटस्थमिति यावत्। तथा च गीतायां भगवान् श्रीकृष्णोऽप्याह—

"द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षरमेव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥" इति ।

विदुः = "विदज्ञाने" इति धातोः लट्। "विदो लटो वा" इति झेर्जुस्। अवलोकयन्तम्=अवलोकयतीति अवलोकयन्, तम् अवलोकयन्तं। शतृप्रत्ययः।

**भावार्थः**-नयनश्रवणादिनवेन्द्रियेभ्यो निवृत्तसञ्चारं समाधिपरिशीलनेन वशीभूतमन्तःकरणं मनोनिवासस्थानभूते हृदयाख्याधिष्ठाने निरुध्य "योगिनः यमविना

शिनं विदन्ति" तं परमात्मानं स्वस्मिन् जीवात्मनि पश्यन्तं हरं ददर्शेति भावः ।

**भाषा**-नयन, श्रवण इत्यादि नव इन्द्रियों के सञ्चारको रोककर समाधि के परिशीलनसे वशीभूत अन्तः करण को मन का निवासस्थानभूत हृदय नामक अधिष्ठान में स्थिर करके "योगी लोग जिसको अविनाशी कहते है" उस परमात्मा का अपनेही जीवात्मामें साक्षात्कार करने वाले शङ्करको देखा ।

अथ तथाभूतं शिवमवलोक्य कामस्यावस्थामाह—

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम् ।**
**नाऽलक्षयत्साध्वससन्नहस्तः, स्रस्तं शरं चापमपि स्वहस्तात् ५१**

**देखा मनोभव ने निकट से शम्भु तो डर गया ।**
**उसको पता न तनिक चला धनुबाण कर से गिर गया ॥**

**अन्वयः**—स्मरः तथाभूतं मनसा अपि अधृष्यम् अयुग्मनेत्रम् अदूरात् पश्यन् साध्वससन्नहस्तः सन् स्वहस्तात् स्रस्तं शरं चापम् अपि न अलक्षयत् ॥

**व्याख्या**—स्मरः = कामदेवः, तथाभूतं = पूर्वोक्तरूपं, मनसा अपि = चित्तेन अपि, अधृष्यम् = अनभिभवनीयम् अयुग्मनेत्रम् = त्र्यम्बकम् , अदूरात् = समीपात् प्रदेशात् , पश्यन् = अवलोकयन् , साध्वससन्नहस्तः—भयविश्लथपाणिः, सन् स्वहस्तात् = आत्मपाणेः, स्रस्त=गलितं, शर = बाणं, चापम् अपि=धनुश्च, अपिशब्दः समुच्चये । न अलक्षयत=न विवेद ।

**व्युत्पत्तिः**—स्मरः="कामः पञ्चशरः स्मरः" इत्यमरः । तथाभूत=तथा भूतः तथाभूतः, तं तथाभूत, "सुप्सुपा" इति समासः । अधृष्यम् = धर्षितुं शक्यः धृष्यः, न धृष्यः अधृष्यः, तम अधृष्यम् । अयुग्मनेत्रं = न युग्मानि अयुग्मानि, "युग्मं तु युगलं युगम्" इत्यमरः । अयुग्मानि नेत्राणि यस्य सः अयुग्मनेत्रः, तम् अयुग्मनेत्रम् । अदूरात्=न दूरः अदूरः, तस्मात् , अदूरात, "[illegible]-कम्"-इत्यमरः पश्यन् = पश्यतीति पश्यन्, "दृशिर् प्रेक्षणे" इति धातोः शतृप्रत्ययः । साध्वस सन्नहस्तः=सन्नौ हस्तौ यस्य स सन्नहस्तः, साध्वसेन सन्नहस्तः साध्वससन्नहस्तः, "भीतिर्भीः साध्वसं भयम्" इत्यमरः । स्वहस्तात्=स्वस्य= आत्मनः हस्त = करः स्वहस्तः, तस्मात् स्वहस्तात् । स्रस्त="स्रंसु अवस्रंसने" इति धातोः क्तप्रत्ययः । अलक्षयत = "लक्षदर्शनाऽङ्कनयोः" इति धातोर्लङ् ॥

**भावार्थः**-कामः पूर्वोक्तरूप सङ्कल्पेनाप्यनभिभवनीय त्र्यम्बकं समीपेऽवलोकयन् भयकम्पितहस्तः सन् स्वकीयकरात् गलितबाणं बाणासनमपिन विवेदेतिभावः ।

**भाषा**—पूर्वोक्तस्वरूपवाले और मन से भी जिसका अभिभव होना दुशवार है, ऐसे शङ्कर को समीप में देखकर भयसे कापने वाला कामदेव, अपने हाथ से धनुष्य और बाण दोनों कब गिर गये यह भी नही जान सका।

अथ प्रथमसर्गे प्रतिपादितं पार्वतीकर्तृकं शुश्रूषादिलक्षण प्रयोज्योपावर्तनं स्वावसरेऽवतारयति—

**निर्वाणभूयिष्ठमथाऽस्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या॥ ५१॥**

**बल नष्ट प्रायः होगया था लौट जीवन आगया।**
**देखा सखी के साथ गिरिजा को सकल सुख पागया॥**

**अन्वयः**—अथ निर्वाणभूयिष्ठम् अस्य वीर्यं वपुर्गुणेन संधुक्षयन्ती इव स्थिता वनदेवताभ्याम् अनुप्रयाता स्थावरराजकन्या अदृश्यत।

**व्याख्या**——अथ = कामदेवशरचापपतनाऽनन्तरम्, निर्वाणभूयिष्ठं=नष्टप्रायम्, अस्य = कामदेवस्य, वीर्यं = बलम्, वपुर्गुणेन = शरीरसौन्दर्येण, संधुक्षयन्ती इव = वर्द्धयन्ती इव स्थिता, वनदेवताभ्याम् = अरण्यदेवताभ्या "सखीभूताभ्या विजयामालिनीभ्यामिति शेषः"। अनुप्रयाता=अनुगता, स्थावरराजकन्या=पर्वतराजकुमारी, पार्वतीत्यर्थः। अदृश्यत=दृष्टाभूत्, कामेनेति यावत्।

**व्युत्पत्तिः**—निर्वाणभूयिष्ठ=भूयिष्ठेन निर्वाणं निर्वाणभूयिष्ठं, तत्, आहिताग्न्यादिषु पाठात् पूर्वनिपातनियमाभावः। कर्तरि निष्ठान्तश्चाय निर्वाणशब्दो "निर्वाणोऽवाते" इति सूत्रेण निपातितः। वपुर्गुणेन = वपुषः गुणः वपुर्गुणः, तेन वपुर्गुणेन, "गात्र वपुः संहननं शरीर वर्ष्म विग्रहः" इत्यमरः। वनदेवताभ्या= वनस्य देवते वनदेवते, ताभ्या वनदेवताभ्या। "वृन्दारका दैवतानि पुसि वा, देवता स्त्रियाम्" इत्यमरः। स्थावरराजकन्या = स्थावराणां राजा स्थावरराजः, "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच्। स्थावरराजस्य कन्या स्थावरराजकन्या, "कन्या कुमारी" इत्यमरः। अदृश्यत = "दृशिर् प्रेक्षणे" इति धातोः कर्मणि लङ्, "सार्वधातुके यक्, कामदेवेनेत्यर्थः।

**भावार्थः**—साध्वसप्राप्त्यनतरं नष्टप्रायं कामस्य बलं स्वशरीरस्य सौन्दर्यातिशयेन गुणेन वर्धयन्तीव स्थिता सखीभूताभ्या विजयामालिनीभ्यामनुगता पार्वती नेत्रगोचरा बभूवेति भावः।

**भाषा**—मारे डरके नष्टप्राय होनेवाले कामदेव के बल को अपने शरीरके

लोकोत्तर सौन्दर्य गुणसे बढ़ती हुई पार्वती को, विजया और मालिनी नामक दोनों सखियों के साथ कामदेव ने देखा ।

अथ चतुर्भिः श्लोकैः कलापकेन पार्वतीं वर्णयति । तत्रादौ तस्या वसन्तपुष्पाभरणरमणीयत्वमाह—

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥**

सुन्दर अशोक सुमन सहित नव कर्णिकार कुसुम मयी ।
देखा मदन ने पार्वती को सिन्धुवार कुसुम मयी ॥

**अन्वयः**—अशोकनिर्भर्त्सितपद्मरागम् आकृष्टहेमद्युतिकर्णिकार मुक्ताकलापीकृतसिन्धुवार वसन्तपुष्पाभरण वहन्ती स्थावरराजकन्या अदृश्यतेति पूर्वेणान्वयः ।

**व्याख्या**—अशोकनिर्भर्त्सितपद्मरागम् = वञ्जुलतिरस्कृतशोणरत्नम्, आकृष्टहेमद्युतिकर्णिकारम्=आहृतसुवर्णाभरणवर्णपरिव्याधं, मुक्ताकलापीकृतसिन्धुवारं= मौक्तिककलापीकृतनिर्गुण्डीकुसुमं, वसन्तपुष्पाभरण-सुरभिकुसुमभूषणं, वहन्ती = दधाना, पार्वती अदृश्यतेत्यर्थः ।

**व्युत्पत्तिः**—अशोकनिर्भर्त्सितपद्मरागम् = अशोकस्य पुष्पम् अशोकम्, "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्युत्पन्नतद्धितस्य "पुष्पमूलेषु बहुलम्" इति लुक् । निर्भर्त्सिताः पद्मरागाः येन तत् निर्भर्त्सितपद्मरागं, "शोणरत्नं लोहितकः पद्मरागः" इत्यमरः । अशोकेन निर्भर्त्सितपद्मरागम् अशोकनिर्भर्त्सितपद्मरागम्, तत् । आकृष्टहेमद्युतिकर्णिकार=हेम्नः द्युतिः हेमद्युतिः, "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । आकृष्टा हेमद्युतिर्यैस्तानि आकृष्टहेमद्युतीनि । कर्णिकारस्य पुष्पाणि कर्णिकाराणि । आकृष्टहेमद्युतीनि कर्णिकाराणि यस्मिन् तत् आकृष्टहेमद्युतिकर्णिकार, तत् । मुक्ताकलापीकृतसिन्धुवारं=मुक्तानां कलापाःमुक्ताकलापाः, अमुक्ताः किलापाः मुक्ताकलापाः यथा सम्पद्यन्ते तथा कृतानि मुक्ताकलापीकृतानि । सिन्धुवारस्य पुष्पाणि सिन्धुवाराणि । "सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः । मुक्ताकलापीकृतानि सिन्धुवाराणि यस्मिन् तत् मुक्ताकलापीकृतसिन्धुवार, तत् । वसन्तपुष्पाभरणं=वसन्तस्य पुष्पाणि वसन्तपुष्पाणि, "वसन्ते पुष्पसमयः सुरभिः" इत्यमरः । वसन्तपुष्पाणि एव आभरणं वसन्तपुष्पाऽऽभरणं, तत्, जातावेकवचनं । वहन्ति=वहतीति वहन्ती । शतृप्रत्ययः, नुमागमश्च ।

**भावार्थः**—अशोककुसुमनिन्दितपद्मरागमणीनि कर्णिकारकुसुमनिन्दितसु-

वर्णकान्तीनि मौक्तिकहारताप्रापितसिन्दुवारकुसुमानि वसन्तपुष्पमयान्याभरणानि दधाना पार्वती अदृश्यतेति भावः ।

**भाषा**—पद्मरागमणि के समान लाल अशोकके, सुवर्ण के समान पीले कर्णिकार के, और मोति के समान सफेद सिन्दुवार के वसन्त ऋतु में उत्पन्न होने वाले फूलों से बने आभरण को धारण करने वाली पार्वती को-देखा ।

अथ तस्याः स्तनजघनाद्यवयवविभागान् वर्णयति—

**आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।**
**पर्याप्तपुष्पस्तबकावनम्रा, सञ्चारिणी पल्लविनी लतेव ॥ ५४ ॥**

**स्तन भार से नत बाल रवि सम वस्त्र निर्मल धार कर ।**
**दल सुमन नत कम्पित लता की तरह गिरजा थी सुधर ॥**

**अन्वयः**—स्तनाभ्यां किंचित् आवर्जिता इव तरुणार्करागं वासः वसाना, अत एव, पर्याप्तपुष्पस्तबकाऽवनम्रा पल्लविनी सञ्चारिणी लता इव उत्प्रेक्ष्यमाणा पार्वती अदृश्यतेति पूर्वेणान्वयः ।

**व्याख्या**—स्तनाभ्यां=कुचाभ्यां, किञ्चित=ईषत्, आवर्जिता इव=आनमिता इव, स्तनभारगौरवादवनमितशरीरेत्यर्थः । तरुणाऽर्करागं=नवसूर्यरागं, बालाऽर्काऽरुणमित्यर्थः, वासः=वसनं, वसाना=आच्छादयन्ती, धारयन्तीत्यर्थः । अत एव, पर्याप्तपुष्पस्तबकाऽवनम्रा=प्रचुरकुसुमगुच्छकाऽवनता, पल्लविनी=किसलयवती, सपल्लवेत्यर्थः । सञ्चारिणी=जङ्गमा, लता इव=व्रततिः इव, उत्प्रेक्ष्यमाणा पार्वती अदृश्यतेति शेषः ।

**व्युत्पत्तिः**—तरुणाऽर्करागं=तरुणश्चाऽसौ अर्कः तरुणार्कः, "विकर्तनाऽर्कमार्तण्डमिहिराऽरुणपूषणः" इत्यमरः । तरुणाऽर्कस्य राग इव रागो यस्य तत् तरुणार्करागं, तत् । उपमानपूर्वपदो बहुव्रीहिः, उत्तरपदलोपश्च । वासः="वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्" इत्यमरः । वसाना="वस आच्छादने" इति धातोः शानच्प्रत्ययः । अत एव पर्याप्तपुष्पस्तबकाऽवनम्रा=पर्याप्तानि च तानि पुष्पाणि पर्याप्तपुष्पाणि, तेषां स्तबकाः पर्याप्तपुष्पस्तबकाः, "स्याद्गुच्छकस्तु स्तबकः" इत्यमरः । पर्याप्तपुष्पस्तबकैः "हेतुना" अवनम्रा पर्याप्तपुष्पस्तबकावनम्रा । पल्लविनी=पल्लवाः सन्ति यस्याः सा पल्लविनि । सञ्चारिणी=सञ्चारः अस्ति यस्याः सा सञ्चारिणी । अत्रोत्प्रेक्षालङ्कारः । तत्र च गौरीलतयोः, स्तनस्तबकयो, रक्तवासःपल्लवयोश्च परस्परसाम्यमुत्प्रेक्षाबीजम् ।

**भावार्थः**—स्तनभारगौरवादवनमितशरीरा अचिरोदितसूर्यरागारुणमम्बरं परिदधाना पार्वती, परिपूर्णकुसुमगुच्छकैरवनमिता सञ्जातपल्लवा सञ्चरणशीला लतेव स्थिताऽदृश्यतेति भावः ।

**भाषा**—स्तन के बोझ से शरीर को कुछ झुकाये हुई, प्रातःकाल के सूर्य प्रभा के समान लाल धोती पहिने हुई, पार्वतीको, फूलोंसे भरे हुवे गुच्छोंसे भार से लटकने वाली, नये पल्लवों को धारण करने वाली गमन शील (चलने फिरने वाली ) लता के समान स्थित ऐसी देखा ।

अथ श्लोकद्वयेन तस्या व्यापारविशेषं वर्णयति—

**स्रस्तां नितम्बादवलम्बमाना, पुनः पुनः केसरदामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण, मौर्वीं द्वितीयामिव कार्मुकस्य ५५**

**स्थानज्ञ स्मर से न्यस्त धनु की दूसरी ज्या की तरह ।**
**गिरती पुनः रखती जगह पर वकुल कांची कलित गह ॥**

**अन्वयः**—स्थानविदा स्मरेण न्यासीकृता कार्मुकस्य द्वितीया मौर्वीम् इव उत्प्रेक्ष्यमाणा नितम्बात् स्रस्तां केसरदामकाञ्चीं पुनः पुनः अवलम्बमाना "पार्वती अदृश्यते"ति पूर्वेणान्वयः ।

**व्याख्या**—स्थानविदा = स्थानवेदिना, निक्षेपयोग्यस्थानवेदिनेत्यर्थः । स्मरेण = कामदेवेन, न्यासीकृता = निक्षेपीकृता कार्मुकस्य = धनुषः, द्वितीया = द्वयोः पूरणीं, मौर्वीम् इव = ज्याम् इव, उत्प्रेक्ष्यमाणा, नितम्बात् = कटिपश्चाद्भागात् , स्रस्ता=चलिता, केसरदामकाञ्चीं = बकुलमालामेखला, पुनःपुनः=वारं वारम् , अवलम्बमाना=आलम्बमाना, हस्तेन धारयन्तीत्यर्थः । एवम्भूता पार्वती, अदृश्यतेति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—स्थानविदा=स्थान वेत्तीति स्थानवित् , तेन स्थानविदा, न्यासीकृताम् = अन्यासः न्यासः यथा सम्पद्यते तथा कृता न्यासीकृता, ता न्यासीकृता, च्विप्रत्ययः । कार्मुकस्य = कर्मणे प्रभवतीति कार्मुकं, तस्य कार्मुकस्य "कर्मण उकञ्" इति उकञ्प्रत्ययः । "अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपि" इत्यमरः । द्वितीया=द्वयोः पूरणी द्वितीया, ता द्वितीया । मौर्वीम्="मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । नितम्बात्—"पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः । केसरदामकाञ्चीं=केसराणा दाम केसरदाम्, सा एव काञ्ची केसरदामकाञ्ची ता केसरदामकाञ्चीं, "स्त्रीकट्या मेखला काञ्ची सप्तकी रश-

ना तथा" इत्यमरः । अवलम्बमाना=अवलम्बते इति अवलम्बलाना, अवोपसर्ग-पूर्वकात् "लबि अवस्रंसने" इति धातोः शानच्प्रत्ययः । "आने मुक्" इति मुगागमः । अत्राप्युत्प्रेक्षालङ्कारः ।

**भावार्थः**—निक्षेपस्थानज्ञेन मदनेन निक्षेपीकृता चापस्यातिरिक्ता प्रत्यञ्चामिव स्थितां, जघनप्रदेशात् गमनवशात् गलिता केसरमालामयीं रशना गमन-प्रतिबन्धनिरासाय स्वयमेव स्वस्थान नीत्वा करेण धारयन्ती पार्वती, अदृश्यतेति पूर्वेणान्वय इति भावः ।

**भाषा**—निक्षेप के योग्य स्थान को जानने वाले कामदेव ने रखी हुई धनुष्य की दूसरीडोरी के समान, और चलने से जघनस्थान से नीचे की तरफ कुछ खिसकी हुई, केसर की माला से बनी अपनी रशना को (करधनी को) गमन मे रुकावट न होय इस लिये स्वय ऊपर खसका कर हाथ से पकड़े हुई पार्वती को देखा ।

पुनस्तामेव वर्णयति—

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाऽधरासन्नचरं द्विरेफम् ।**
**प्रतिक्षणं सम्भ्रमलोलदृष्टिर्लीलाऽरविन्देन निवारयन्ती ॥ ५६ ॥**

**निश्वास-सुरभि-तृषित भ्रमर फिरते अधर के थे निकट ।**
**चञ्चल दृगी लीला कमल द्वारा हटाती सभय हट ॥**

**अन्वयः**—सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाऽधराऽऽसन्नचरं द्विरेफं प्रतिक्षणं सम्भ्रमलोलदृष्टिः सती लीलाऽरविन्देन निवारयन्ती पार्वती अदृश्यतेति पूर्वेणान्वयः

**व्याख्या**—सुगन्धिनिश्वासविवृद्धतृष्णम्=इष्टगन्धमुखमारुतोदीर्णतृष्णं, बिम्बाधरासन्नचरं = बिम्बतुल्योष्ठसनिकृष्टचरं, द्विरेफं = भृङ्ग, प्रतिक्षणं = प्रतिमुहूर्तं, सम्भ्रमलोलदृष्टिः = साध्वसचपलनेत्रा, सती, लीलारविन्देन = लीलाकमलेन, निवारयन्ती = निषेधयन्ती, पार्वती, अदृश्यतेत्यर्थः ।

**व्युत्पत्तिः**—सुगन्धिनिश्वासविवृद्धतृष्णं = शोभनः गन्धः येषा ते सुगन्धयः। "सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यात्" इत्यमरः । "गन्धस्येदुत्पूति सुसुरभिभ्यः" इति समासान्तेत्वम् । सुगन्धयश्च ते निश्वासाः सुगन्धिनिश्वासाः । विशेषेण वृद्धा विवृद्धा, सा तृष्णा यस्य सः विवृद्धतृष्णः । सुगन्धिनिश्वासैः विवृद्धतृष्णः सुगन्धिनिश्वासविवृद्धतृष्णः, तं सुगन्धिनिश्वासविवृद्धतृष्णं । बिम्बाऽधराऽऽसन्नचर = बिम्बम् इव अधरः बिम्बाऽधरः, "उपमानानि सामान्यवचनैः"

इति समासः । "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । आसन्नं चरतीति आसन्नचरः' "समीपे निकटाऽऽसन्नसन्निकृष्टसनीडवत् । उपकण्ठान्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ॥" इत्यमरः । बिम्बाऽधरस्य आसन्नचरः इति बिम्बाऽधराऽऽसन्नचरः, तं बिम्बाधरासन्नचरं, द्विरेफ = द्वौ रेफौ यस्य स द्विरेफः,भ्रमर इत्यर्थः । त द्विरेफं, प्रतिक्षणं=क्षणं क्षणं प्रतिक्षणं । वीप्सायामव्ययीभावः । सम्भ्रमलोलदृष्टिः=लोले दृष्टी यस्याः सा लोलदृष्टिः, "चलनं कम्पनं कम्रं चलं लोलं चलाचलम्" इति "दृग्दृष्टी" इत्यप्यमरः । सम्भ्रमेण लोलदृष्टिः सम्भ्रमलोलदृष्टिः । लीलाऽरविन्देन=लीलाया अरविन्दं लीलारविन्दं, तेन लीलारविन्देन "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । निवारयन्ती=निवारयतीति निवारयन्ती, शतृप्रत्ययः ।

अत्र किल कलापके महाकविः प्रतीभामय्या स्वदृष्ट्या लोकोत्तरसौन्दर्यसौकुमार्यादिभिः स्वत एव रमणीयं तत्कालोचितभूषाविलासादिभिश्च नितरा हृदयङ्गमं पार्वतीशरीरं साक्षात्कृत्य स्ववचनशक्त्या सहृदयानामपि साक्षात्कारपदवीं नीतवानिति भाविकमलङ्कारः । तल्लक्षण यथा साहित्यदर्पणे—

"अद्भुतस्य पदार्थस्य भूतस्याऽथ भविष्यतः ।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥" इति ।

**भावार्थः**—आमोदिमुखश्वसनैधिततृष्णं बिम्बौष्ठसन्निकृष्टगतं भ्रमरं प्रतिक्षणं सम्भ्रमेण चञ्चलाक्षी सती दूरीकुर्वाणा पार्वती दृष्टेति भावः ॥

**भाषा**—सुगन्धित निश्वासकी तृष्णा से ओठों के पास आने वाले भ्रमरों को घबराहट से ( भयसे ) आख को चञ्चल बनाकर दूर करने वाली पार्वती को देखा ।

अथ तादृशपार्वतीदर्शनलब्धबलस्य कामस्यावस्थामाह—

**तां वीक्ष्य सर्वोऽवयवाऽनवद्यां रतेरपि ह्रीपदमादधानाम् ।**
**जितेन्द्रिये शूलिनि पुष्पचापः, स्वकार्यसिद्धिं पुनराशशंसे ॥५७॥**

रति से अधिक अनवद्य अवयव देख कर सुन्दर सुघर ।
आशा हुई स्मर को जितेन्द्रिय में विजय की फिर प्रवर ॥

**अन्वयः**—सर्वाऽवयवाऽनवद्या रतेः अपि ह्रीपदम् आदधानां तां वीक्ष्य पुष्पचापः जितेन्द्रिये शूलिनि स्वकार्यसिद्धिं पुनः आशशंसे ॥

**व्याख्या**—सर्वाऽवयवाऽनवद्या=सकलाऽवयवाऽगर्ह्या, रतेः अपि=काम-

पत्न्या अपि, ह्रीपदं=लज्जानिमित्तम् , आदधाना=धारयन्तीं, तां=पूर्वोक्ता, पार्वतीमित्यर्थः, वीक्ष्य=दृष्ट्वा, पुष्पचापः=कुसुमधन्वा, कामदेव इत्यर्थः । जितेन्द्रिये=वशीकृतकरणे, शूलिनि=शूलधारिणि, हरे इत्यर्थः । वैषयिकी सप्तमीयम् । स्वकार्यसिद्धिम् = आत्मकर्मसाफल्यं, पुनः=भूयः, आशशंसे=चकमे ।

पूर्वं "साध्वससन्नहस्तः" ३।५१ इत्यादिना कार्यसिद्धेः उन्मूलितत्वाऽभिधानादिह पुनरित्युक्तम् ।

**व्युत्पत्तिः**—सर्वाऽवयवाऽनवद्या = सर्वे च ते अवयवाः सर्वाऽवयवाः, न उद्यते इति अवद्या । "अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु" इति निपातनम् । "कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः" इत्यमरः । न अवद्या अनवद्या । सर्वाऽवयवेषु अनवद्या, ता, सर्वावयवानवद्या, ह्रीपदं = ह्रियः पदं ह्रीपदं, तत्, "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इति, "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यप्यमरः । आदधानाम् = आदधातीति आदधाना, ताम् आदधाना । शानच्प्रत्ययः । पुष्पचापः=पुष्पं चापं यस्य स पुष्पचापः, "शम्बराऽरिर्मनसिजः कुसुमेषुरनन्यजः" इत्यमरः । जितेन्द्रिये=जितानि इन्द्रियाणि येन स जितेन्द्रियः, तस्मिन् जितेन्द्रिये, उपरतेन्द्रियव्यापारेऽपीत्यर्थः । शूलिनि=शूलम् अस्याऽस्तीति शूली, तस्मिन् शूलिनि, "शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्यमरः । स्वकार्यसिद्धिं = स्वस्य कार्यं स्वकार्यं, तस्य सिद्धिः स्वकार्यसिद्धिः, ता स्वकार्यसिद्धिम् , आशशंसे = "आङः शसु इच्छायाम्" इति धातोर्लिट् ॥

**भावार्थः**—सर्वाङ्गसुन्दरी स्वावलोकनेन रतीमपि लज्जयन्तीं तां पार्वतीं सम्यगवलोक्य कुसुमधन्वा व्युपरतेन्द्रियव्यापारेऽपि हरविषये स्वात्मनो हरचित्तवशीकरणव्यापारस्य फलसिद्धिं पुनरपि श्रद्दधे इति भावः ।

**भाषा**—सकल अवयवों से सुन्दर, और अपने सौन्दर्य से रतिको भी लज्जित करने वाली उस पार्वती को अच्छी तरह देखकर कामदेव को जितेन्द्रिय शङ्कर के विषय में भी चित्तको हरण करने के अपने व्यापार की सफलता का फिर से विश्वास हुआ ।

अथ प्रकृतकथामेवानुसन्धत्ते—

**भविष्यतः पत्युरुमा च शम्भोः, समाससाद प्रतिहारभूमिम् ।**
**योगात्स चान्त परमात्मसंज्ञं, दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥**

गिरिराज कन्या शम्भु की प्रतिहार भू पर आ गई ।

शिव ध्यान की विश्राम वेला भी कुटी में छा गई ॥

**अन्वयः**—उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं समाससाद। स च अन्तः परमात्मसंज्ञं पर ज्योतिः दृष्ट्वा योगात् उपरराम।

**व्याख्या**—उमा च=पार्वती च, भविष्यतः=भाविनः, पत्युः = स्वामिनः, शम्भोः=महेश्वरस्य, प्रतिहारभूमिं = द्वारदेशं, समाससाद = प्राप्तवती। स च = महेश्वरश्च, अन्तः = अन्तःस्थितं, परमात्मसंज्ञं=परमात्माऽभिधानं, परं = मुख्यं, ज्योतिः=प्रकाशं, दृष्ट्वा=साक्षात्कृत्य, योगात्=ध्यानात्, उपरराम=उपरतोऽभूत्, व्यरसीदित्यर्थः ॥

**व्युत्पत्तिः**—उमा = "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः। भविष्यतः=भविष्यतीति भविष्यन्, तस्य भविष्यतः। "भू सत्तायाम्" इति धातोः लृटः "लृटः सद्वा" इति शत्रादेशः। भर्तृत्वेन भविष्यत इत्यर्थः। प्रतिहारभूमिं प्रतिहारस्य भूमिः प्रतिहारभूमिः ता प्रतिहारभूमिं, "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः। परमाऽऽत्मसंज्ञं = परमश्चाऽसौ आत्मा परमात्मा, स संज्ञा यस्य तत् परमात्मसंज्ञं, तत्। "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना" इत्यमरः। ज्योतिः=दृश्यप्रपञ्चोत्तीर्णं स्वयं प्रकाशस्वरूपमित्यर्थः। योगात्="योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलं सूत्रम्। "योगः संनहनोपायध्यान सङ्गतियुक्तिषु" इत्यमरः। उपरराम=उपाङित्युपसर्गद्वयपूर्वकात् "रमु क्रीडायाम्" इति धातोः लिट्। "व्याङ्परिभ्यो रमः" इति परस्मैपदम्। उभावपि चकारौ तुल्यकालसूचकौ। अत्र समुच्चयालङ्कारः। तल्लक्षणं यथा–"गुणक्रियायौगपद्यं समुच्चयः" इति।

**भावार्थः**—पार्वती भर्तृत्वेन भविष्यतः शिवस्य द्वारप्रदेशं प्राप्तवती। स शम्भुश्च दृश्यप्रपञ्चोत्तीर्णं स्वयम्प्रकाशस्वरूपमुत्कृष्टं तेजः हृदयकुहरे साक्षात्कृत्य समाधेः उपरतोऽभूदिति भावः।

**भाषा**—इधर पार्वती आगे होने वाले पतिरूप शङ्कर के आश्रम के द्वारपर पहुची, उधर शङ्कर भी दृश्य प्रपञ्च से परे, स्वय प्रकाश स्वरूप, उत्कृष्ट तेज का हृदय में साक्षात्कार कर समाधि से उपरत हुवे।

अथ योगादुपरतस्य शिवस्य योगावसानकर्तव्यविधिमाह—

**ततो भुजङ्गाऽधिपतेः फणाग्रैरधः कथञ्चिद्धृतभूमिभागः।**
**शनैः कृतप्राणविमुक्तिरीशः, पर्यङ्कबन्धं निविडं बिभेद ॥५९॥**

धारण किया सप्रयत्न जिनका भूमि भाग फणीश ने।

पर्य्यङ्क बन्ध शिथिल किया तज वायु को जगदीश ने ॥

**अन्वयः**—ततः भुजङ्गाऽधिपतेः फणाग्रैरधः कथञ्चिद्धृतभूमिभागः शनैः-कृतप्राणविमुक्तिः ईशः निबिडं पर्यङ्कबन्धं बिभेद ॥

**व्याख्या**—ततः=ज्योतिर्दर्शनाऽनन्तरं, भुजङ्गाऽधिपतेः=भुजगाऽधीशस्य, शेषस्येत्यर्थः । फणाग्रैः=स्फटाऽग्रैः, अधः=नीचैः, भूमेरिति शेषः । कथञ्चिद्धृतभूमिभागः=अतियत्नधृतभूमिभागः, वायुधारणाहितलाघवनिवृत्त्या महेश्वरस्य गुरुत्वादित्यर्थः । शनैःकृतप्राणविमुक्तिः=शनैः कृताऽसुपुनःसञ्चारः, ईशः=महादेवः, निबिड=दृढं पर्यङ्कबन्धं=वीरासनं, बिभेद=भिन्नवान्, शिथिलीचकारेत्यर्थः ।

**व्युत्पत्तिः**—भुजङ्गाऽधिपतेः=अधिकः पतिः अतिपतिः, भुजङ्गानाम् अधिपतिः भुजङ्गाऽधिपतिः, तस्य भुजङ्गाधिपते., "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । फणाऽग्रैः=फणानाम् अग्राः फणाऽग्राः, तैः फणाग्रैः, "स्फटाया तु फणा द्वयो." इत्यमरः । कथञ्चित्धृतभूमिभागः=भूमेः भागः भूमिभागः, "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः । कथञ्चित् धृतः भूमिभागः स्वोपवेशनभूविभागो, यस्य सः कथञ्चिद्धृतभूमिभागः । शनैःकृतप्राणविमुक्तिः=प्राणाना विमुक्तिः प्राणविमुक्तः, शनैः कृता प्राणविमुक्तिः येनसः, शनैः कृतप्राणविमुक्तिः । ईशः="शम्भुरीशः पशुपतिः शिव. शूली महेश्वरः" इत्यमरः । पर्यङ्कबन्धं=पर्यङ्कस्य बन्ध. पर्यङ्कबन्धः, तं पर्यङ्कबन्धम् ।

**भावार्थः**—योगविरामानन्तरं योगशास्त्रोक्तक्रमेण प्राङ् निरुद्धाना प्राणवायूनां शनैरारचितपुनःसञ्चारः महेश्वरस्तद्भारमसहमानेनानन्तेन सर्वा अपि फणास्तदधो भाग एवाधाय यथा कथञ्चित् धृतस्वोपवेशनभूप्रदेश. सन्, अच्छिद्रं वीरासन शिथिलीचकारेति भावः ।

**भाषा**—योग का विराम होनेपर, शङ्करने योग शास्त्रमें कहे अनुसार पहिले रोके हुवे प्राण वायु का धीरे धीरे सञ्चार करके, भार को सहन करने में असमर्थ होकर अनन्तके सकलफणाओं से किसी तरह उस भूप्रदेशका धारण करने पर स्वकीय वीरासनको शिथिल किया ।

अथ प्रस्तुतनायिकानायकयोः उमामहेश्वरयोः परस्परदर्शनोपायमाह—

**तस्मै शशंस प्रणिपत्य नन्दी, शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्राऽनुमतप्रवेशाम् ॥ ६० ॥**

पहले प्रणाम किया उमा आई कहा नन्दीश ने ।
भ्रू के इशारे से बुलाया पार्वती को ईश ने ॥

**अन्वयः**—अथ नन्दी तस्मै प्रणिपत्य शुश्रूषया उपेता शैलसुतां शशंस । भर्तुः भ्रूक्षेपमात्राऽनुमतप्रवेशाम् एना प्रवेशयामास च ।

**व्याख्या**—अथ = अनन्तरं नन्दी = नन्दिकेश्वरः, तस्मै=शिवाय, प्रणिपत्य = नमस्कृत्य, शुश्रूषया = सेवया, निमित्तेन, उपेता = प्राप्ता, सेवाऽर्थमागतामित्यर्थः । शैलसुता = पर्वततनया, पार्वतीमित्यर्थः । शशंस = निवेदयामास । भर्तुः = स्वामिनः = शिवस्येत्यर्थः । भ्रूक्षेपमात्राऽनुमतप्रवेशा = भ्रूसंज्ञामात्राङ्गीकृतप्रवेशाम् , एना = पार्वतीं, प्रवेशयामास च = आनयामास च ।

**व्युत्पत्तिः**—तस्मै = 'प्रणिपत्य' इति क्रियाया ग्रहणात् ,"क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानत्वाच्चतुर्थी । प्रणिपत्य=प्रत्युपसर्गद्वयपूर्वकात् "पत्लृ पतने" इति धातोः क्त्वाप्रत्ययः, तस्य ल्यबादेशः, "नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति णत्वम् । शुश्रूषया=श्रोतुम् इच्छा शुश्रूषा, तया शुश्रूषया, शैलसुता=शैलस्य सुता शैलसुता, ता शैलसुताम् , "अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः । भ्रूक्षेपमात्राऽनुमतप्रवेशा=भ्रुवः क्षेपः=चालनं, भ्रूक्षेपः, स एव भ्रूक्षेपमात्रम् । अनुमतः प्रवेशः यस्याः सा अनुमतप्रवेशा । भ्रूक्षेपमात्रेण अनुमतप्रवेशा भ्रूक्षेपमात्राऽनुमतप्रवेशा, ता भ्रूक्षेपमात्रानुमतप्रवेशाम् , एनाम्=अन्वादेशे "द्वितीयाटौस्स्वेनः" इति एनादेशः । प्रवेशयामास = प्रोपसर्गपूर्वकात् णिजन्तात् "विश प्रवेशने" इति धातोर्लिट् । च = एककर्तृकयोः शसनप्रवेशनक्रिययोः समुच्चयार्थोऽत्र च शब्दः ।

**भावार्थः**—नन्दिकेश्वरः नमस्कृत्य सेवार्थमागता ता हिमवत्कन्या . योगादुपरतत्वेन लब्धावसराय हराय निवेदितवान् । अथ स्वामिनो भ्रूचालनमात्रेणैवानुज्ञातसमीपप्राप्तिं ता पर्वतराजपुत्रीमन्तर्भागं प्रापयामास चेति भावः ।

**भाषा**—नन्दिकेश्वर समाधि छूटनेसे मौका पाकर, शङ्करको प्रणाम करके, सेवाकरने के लिये आई हुई हिमालय की कन्या पार्वती का निवेदन कर, शङ्कर के आख के ईशारे से ले आने की अनुमति को समझ कर, पार्वती को आश्रम के भीतर ले गया।

शङ्करप्रथमदर्शनानन्तरं सञ्जातसात्त्विकविकारायाः पार्वत्याः लज्जापनोदार्थमादौ तत्सख्योः सेवामाह—

**तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले, पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥**

**निज हाथ से तोड़े हुए पल्लव सुमन जो थे सुघर ।**
**कर नमन सखियों ने रखे शिव के कमल मृदु चरण पर ॥**

**अन्वयः**—तस्याः सखीभ्या स्वहस्तलूनः पल्लवभङ्गभिन्नः शिशिरात्ययस्य पुष्पोच्चयः त्र्यम्बकपादमूले प्रणिपातपूर्वं व्यकीर्यत ।

**व्याख्या**—तस्याः = पार्वत्याः, सखीभ्या = विजयामालिनीभ्या स्वहस्तलूनः=आत्मकरोपचितः, पल्लवभङ्गभिन्नः=किसलयशकलमिश्रः, शिशिरात्ययस्य= वसन्तस्य सम्बन्धिनः, पुष्पोच्चयः = कुसुमप्रकरः, त्र्यम्बकपादमूले = त्रिलोचनचरणमूले, प्रणिपातपूर्वं = नमस्कारपूर्वकं, व्यकीर्यत = विक्षिप्तोऽभूत् ।

**व्युत्पत्तिः**—सखीभ्याम् = "आलिः सखी वयस्या च" इत्यमरः । स्वहस्तलूनः=स्वश्चासौ हस्तः स्वहस्तः, तेन लूनः स्वहस्तलूनः "लूञ् छेदने" इति धातोः क्तप्रत्ययेन लूनपदसिद्धिः । "ल्वादिभ्यः" इति नत्वम् । पल्लवभङ्गभिन्नः = पल्लवाना भङ्गाः पल्लवभङ्गाः, "पल्लवोऽस्त्री किसलयम्" इत्यमरः । पल्लवभङ्गैः भिन्नः पल्लवभङ्गभिन्नः । शिशिराऽत्ययस्य=शिशिरस्य अत्ययः = ध्वंसः, यस्मिन् स शिशिराऽत्ययः, तस्य शिशिरात्ययस्य, पुष्पोच्चयः = पुष्पाणाम् उच्चयः पुष्पोच्चयः । "हस्तादाने चेरस्तेये" इति सूत्रस्य घञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोगः इति वल्लभः । वसन्तकुसुमराशिरित्यर्थः । त्र्यम्बकपादमूले = त्रीणि अम्बकानि= नेत्राणि, यस्य स त्र्यम्बकः, "हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुराऽन्तकः" इत्यमरः । त्र्यम्बकस्य पादौ त्र्यम्बकपादौ, तयोर्मूलं, तस्मिन् त्र्यम्बकपादमूले, प्रणिपातपूर्वं= प्रणिपातः पूर्वः यस्मिन् कर्मणि तद् यथा स्यात्तथा प्रणिपातपूर्वं, क्रियाविशेषणमेतत् । व्यकीर्यत = व्युपसर्गपूर्वकात् "कॄ विक्षेपे" इति धातोः कर्मणि लङ् ।

**भावार्थः**—पार्वत्याः पूर्वोक्ताभ्या विजयामालिनीभ्या वयस्याभ्या भक्त्या स्वकरावचितः किसलयशकलमिश्रः वसन्तकुसुमराशिः हरचरणसमीपे नमस्कारपूर्वकं विक्षिप्तोऽभूदिति भावः ।

**भाषा**—पार्वतीके पूर्वोक्त विजया और मालिनी नामक दो सखियो ने भक्ति

से अपने हाथ से तोडा हुआ पल्लवसहित वसन्त ऋतु के पुष्प समूह को शङ्कर के चरण कमल पर प्रणाम पूर्वक अर्पण किया ।

अथ प्रधाननायिकायाः पार्वत्याः प्रणाममाह—

**उमाऽपि नीलाऽलकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।**
**चकार कर्णच्युतपल्लवेन, मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥**

**गिरिराज कन्या ने अलक से कर्णिकार दिया गिरा ।**
**शिवको प्रणाम किया उमाने कान से पल्लव गिरा ॥**

**अन्वयः**=उमा अपि नीलाऽलकमध्यशोभि नवकर्णिकारं विस्रंसयन्ती कर्णच्युतपल्लवेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार ॥

**व्याख्या**—उमा अपि=पार्वती, अपि, नीलाऽलकमध्यशोभि = कृष्णचूर्णकुन्तलाऽन्तरद्योति, अलकन्यस्तमित्यर्थः । नवकर्णिकारम् = नूतनपरिव्याधकुसुमं, विस्रंसयन्ती=निपातयन्ती, कर्णच्युतपल्लवेन = श्रवणपतितकिसलयेन, मूर्ध्ना = शिरसा, वृषभध्वजाय = वृषध्वजाय, शिवायेत्यर्थः । प्रणामं = नमस्कारं, चकार = अकरोत् ।

**व्युत्पत्तिः**—नीलाऽलकमध्यशोभि=नीलाश्च ते अलकाः नीलाऽलकाः, "अलकाश्चूर्णकुन्तलाः" इत्यमरः । नीलाऽलकाना मध्यं नीलाऽलकमध्यं, तस्मिन् शोभते तच्छीलम् इति नीलाऽलकमध्यशोभि, तत् । नवकर्णिकारं= कर्णिकारस्य पुष्पं कर्णिकारं, "कर्णिकारः परिव्याधः" इत्यमरः । नवं च तत् कर्णिकार नवकर्णिकारं, तत्, "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नव" इत्यमरः । कर्णच्युतपल्लवेन=कर्णात् च्युतः कर्णच्युतः, कर्णच्युतः पल्लवः यस्य सः कर्णच्युतपल्लवः, तेन कर्णच्युतपल्लवेन, मूर्ध्ना="उत्तमाऽङ्ग शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । "अल्लोपोऽनः"इत्यकारलोपः । वृषभध्वजाय= वृषभः ध्वजः=वाहनत्वेन चिह्नम् , यस्य स वृषभध्वजः, तस्मै वृषभध्वजाय, "गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः" इत्यमरः । "क्रियया यमभिप्रैति, सोऽपि सम्प्रदानम्' 'इति सम्प्रदानत्वात् चतुर्थी । चकार="डुकृञ् करणे"इति धातोर्लिट् ।

अत्र प्रणामक्रियाया लालित्यापादकानि विशेषणानि रत्युद्दीपनपरतया प्रयुक्तानीति परिकरोऽलङ्कारः । तल्लक्षण यथा—

"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः' इति ।

**भावार्थः**—पार्वत्यपि कृष्णवर्णकेशकलापन्यस्त नूतनकर्णिकारकुसुममत्यन्त-

नम्रशिरस्तथा निपातयन्ती श्रवणगलितावतंसपल्लवेन शिरसा परमेश्वराय प्रणामेति भावः ।

**भाषा**—पार्वती भी मस्तकको अत्यन्त झुकाने से काले केशों में गुथे हुवे ताजे कर्णिकार पुष्पको, और कानपर रखे हुवे अवतंसभूत पल्लवको गिराती हुई शङ्करको प्रणाम करने लगी ।

पार्वत्या प्रणतस्य महादेवस्याशीर्वादप्रकारमाह—

**अनन्यभाजं पतिमाप्नुहीति, सा तथ्यमेवाभिहिता भवेन ।**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥**

पा, पति सप्रेम 'अनन्यभोगी' शम्भुने आशिष दिया ।
वह सत्य था, सच है सुजन से ठीक होता सब किया ॥

**अन्वयः**—सा भवेन "अनन्यभाजं पतिम् आप्नुहि" इति तथ्यम् एव अभिहिता । हि ईश्वरव्याहृतयः कदाचित् अपि लोके विपरीतम् अर्थं न पुष्णन्ति ।

**व्याख्या**—सा = [ कृतप्रणामा ] पार्वती, भवेन = शिवेन, अनन्यभाजम्= अनपरभाजं, पतिं = स्वामिनम् , आप्नुहि = प्राप्नुहि, इति=इत्थं, तथ्यम् एव= सत्यम् एव, अभिहिता = उक्ता । उत्तरत्र तथैव सम्भावदिति भावः । हि = तथाहि, ईश्वरव्याहृतयः=महापुरुषोक्तयः, कदाचित् अपि = जातुचिदपि, कालत्रयेऽपीत्यर्थः । लोके = भुवने, विपरीतं = विसंवादिनम् , अर्थम्=अभिधेयं, न पुष्णन्ति = न बोधयन्ति अपि तु सत्यमेव बोधयन्तीत्यर्थः ।

**व्युत्पत्तिः**—भवेन=भवतीति भवः, पचाद्यच् , "भवतेश्च" इति काशिका । तेन भवेन । "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः । अनन्यभाजम् = अन्या न भजतीति अनन्यभाक् तम् अनन्यभाजं, भार्यान्तररहितमित्यर्थः । "भजो ण्विः" इति ण्विप्रत्ययः, "अत उपाधाया" इति उपधाऽकारस्य वृद्धिः, । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । तथ्यम् = "सत्यं तथ्यमृतं सम्यक्" इत्यमरः । अभिहिता = अभ्युपसर्गपूर्वकात् "डुधाञ् धारणपोषणयोः" इति ब्रुवर्थस्य धातोः दुहादित्वात् अप्रधाने कर्मणि क्तप्रत्ययः । ईश्वरव्याहृतयः= ईशते एते इति ईश्वराः, तेषा व्याहृतयः ईश्वरव्याहृतयः, लोके="लोकस्तु भुवने जने" इत्यमरः । अर्थम्="अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ।

अत्र पूर्वार्द्धस्थस्य विशेषाऽर्थस्य उत्तरार्द्धस्थेन सामान्येन समर्थनात् अर्थान्तरन्यासोऽलङ्कारः ।

**भावार्थः**—कृतप्रणामा पार्वती हरेण भार्यान्तररहितं भर्तारं प्राप्नुहीति सत्यमेवोक्ता। महात्मना वचनं देशान्तरे कालान्तरेऽवस्थान्तरे वा जातु न व्यभिचरतीति भाव.।

**भाषा**—शङ्कर ने प्रणाम करने के बाद पार्वती को "अन्य स्त्री का स्वीकार नहीं करने वाले पति को प्राप्तकरो" ऐसा सत्य आशीर्वाद दिया। महात्माओं का वचन किसी देश में, किसी काल में या किसी अवस्था में, कभी भी मिथ्या नहीं होता।

अथ लब्धावसरस्य कामदेवस्य प्रवृत्तिमाह—

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः।**
**उमासमक्षं हरबद्धलक्ष्यः, शरासनज्यां मुहुराममर्श॥ ६४॥**

बाणावसर लख काम पावक में पतङ्ग समान वह।
हर लक्ष्य कर वार छूने लग गया धनु बान वह॥

**अन्वयः**—कामस्तु बाणाऽवसरं प्रतीक्ष्य पतङ्गवत् वह्निमुखं विविक्षुः, उमासमक्षं हरबद्धलक्ष्यः सन्, शरासनज्या मुहुः आममर्श।

**व्याख्या**—कामस्तु = मदनस्तु, बाणाऽवसरं=शरक्षेपसमयं, प्रतीक्ष्य = प्रतीक्षा कृत्वा, "उमासन्निधानात् अयमेव बाणप्रयोगसमय" इति ज्ञात्वेत्यर्थः। पतङ्गवत्=शलभवत्, वह्निमुखम् = अग्निमुखं, विविक्षुः = प्रवेष्टुम् इच्छुः, उमासमक्षं = पार्वतीप्रत्यक्षं, हरबद्धलक्ष्यः=शिवबद्धलक्षः सन्, शरासनज्या = धनुर्मौर्वीम्, मुहुः = वारं वारम्, आममर्श=परामृष्टवान्।

**व्युत्पत्तिः**—बाणाऽवसरं=बाणस्य अवसरः=प्रसङ्गः, बाणाऽवसरः, तं बाणावसरं "प्रसङ्गः स्यादवसरः" इत्यमरः। पतङ्गवत् = पतङ्गेन तुल्यं पतङ्गवत्, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः। "समौ पतङ्गशलभौ" इत्यमरः। वह्निमुखं=वह्नेः मुखं वह्निमुखं, तत्, विविक्षुः="विश प्रवेशने" इति धातोः सन्नन्तात् उप्रत्ययः। अतिसाहसमेव कर्तुकाम इत्यर्थः। उमासमक्षं=अक्ष्णः समीपं समक्षम्, समीपार्थे अव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तोऽच्प्रत्ययः। उमायाः समक्षम् उमासमक्षं। हरबद्धलक्ष्य = लक्षितु योग्यं लक्ष्यं, "लक्षदर्शनाऽङ्कनयोः" इति धातोः, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः। "लक्षं लक्ष्य शरव्यं च" इत्यमरः। बद्धं लक्ष्यं येन स बद्धलक्ष्यः, हरे बद्धलक्ष्यः हरबद्धलक्ष्यः। शरासनज्या = शराः, अस्यन्ते अनेन इति शरासनम्, शरोपपदपूर्वकात् "असु क्षेपणे" इति धातोः "करणाऽधिकरणयोश्च" इति करणे ल्यु-

ट्प्रत्ययः, ल्युडन्तं नपुंसकम् । "अथाऽस्त्रियौ । धनुश्चापौ धन्वशरासनकोदण्ड-कार्मुकम् । इष्वासोऽपि" इत्यमरः । शरासनस्य ज्या इति शरासनज्या, ता शरा-सनज्या । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । आममर्श = आङुपसर्गपूर्व-कात् "मृश आमर्शने" इति धातोर्लिट् ।

**भावार्थः**—मदनस्तु पार्वतीपरमेश्वरयोः परस्परपरिचयविशेषरूपं स्वप्रहर-णावकाशं प्रतिपाल्य शलभवत् अग्निमुख प्रवेष्टुमिच्छुः, "अति साहसमेव कर्तुं-काम इति यावत्" पार्वत्याः प्रत्यक्षं शरनिपाताधिकरण परमेश्वरमेव सावधान-मवलोकयन्=सन् , स्वचापशिञ्जिनीं पुनः पुनः परामृष्टवानिति भावः ।

**भाषा**—कामदेव तो उमा महेश्वर के परस्पर परिचय काल में ही बाण को छोड़ने के मौके की राह देखता हुआ, अग्नि मुख में प्रवेश करने की इच्छा करने वाले शलभके समान अत्यन्त साहसी बन कर, पार्वतीके समक्ष शङ्कर को निशाना बना कर, अपने धनुष की डोरी को बारम्बार छूने लगा ।

परिचयस्य कारणान्तरमप्याह—

**अथोपनिन्ये गिरिशाय गौरी, तपस्विने ताम्ररुचा करेण ।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥**

**पश्चात् गौरी ने अरुण कर से महेश्वर का प्रवर ।**
**रवि शुष्क गङ्गा कमल की मृदु बीज माला दी सुघर ॥**

**अन्वयः**—अथ गौरी तपस्विने गिरिशाय ताम्ररुचा करेण भानुमतः मयूखैः विशोषिता मन्दाकिनीपुष्करबीजमालाम् उपनिन्ये ।

**व्याख्या**—अथ = अनन्तर, प्रणामानन्तरमित्यर्थः । गौरी = पार्वती, तप-स्विने = तापसाय, गिरिशाय = शिवाय, ताम्ररुचा=रक्तवर्णेन, करेण—हस्तेन, भानुमतः=अंशुमतः, सूर्यस्येत्यथः । मयूखैः=किरणैः, विशोषिता=शुष्कीकृता, मन्दाकिनीपुष्करबीजमाला = स्वर्णदीपद्मबीजस्रजम् , उपनिन्ये = समर्पितवती ।

**व्युत्पत्तिः**—गौरीं="षिद्गौरादिभ्यश्च" इति ङीप् । "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः । तपस्विने=तपः अस्याऽस्तीति, तपस्वी, तस्मै तपस्विने, तपश्शब्दात् "तपः सहस्राभ्या विनीनी" इति विनिप्रत्ययः । गिरिशाय= गिरिः अस्याऽस्तीति गिरिशः, "लोमादिपामादिपिच्छादिभ्यः शनेलच" इति शप्र-त्ययः, यद्वा गिरौ शेते इति गिरिशः, तस्मै गिरिशाय । गिर्युपपदपूर्वकात् "शीङ् स्वप्ने" इति धातोः लोकेऽपि डप्रत्ययमिच्छन्ति केचित् । वेदे तु "गिरौ डश्छ-

न्दसि" इति भवत्येव । "भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः" इत्यमरः । ताम्ररुचा=ताम्रस्य रुगिव रुक् यस्य सः ताम्ररुक्, तेन ताम्ररुचा, "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । भानुमतः = प्रशस्ता भानवः सन्ति यस्य स भानुमान्, तस्य भानुमतः, "भानू रश्मिदिवाकरौ" इत्यमरः । विशोषिता = विशेषेण शोषिता विशोषिता, ता विशोषिता । मन्दाकिनीपुष्करबीजमालाम् = मन्दाकिन्याः पुष्कराणि मन्दाकिनीपुष्कराणि, "मन्दाकिनी वियद्गङ्गा" इति "बिसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च" इति चाऽमरः । मन्दाकिनीपुष्कराणां बीजानि मन्दाकिनीपुष्करबीजानि, तेषां माला मन्दाकिनीपुष्करबीजमाला, तां मन्दाकिनीपुष्करबीजमालां । "माल्यं मालास्रजौ मूर्ध्नि" इत्यमरः । पद्माक्षमालामित्यर्थः । उपनिन्ये = उपोपसर्गपूर्वकात् णिञ्प्रापणे धातोर्लिटि रूपम् ।

**भावार्थः**—प्रणामानन्तरं पार्वती कृततपश्चरणाय हराय रक्तवर्णेन स्वहस्तेन सूर्यरश्मिकृतशोषणा गङ्गापद्मबीजनिर्मितमालिका समर्पितवतीति भावः ।

**भाषा**—पार्वती ने प्रणाम के अनन्तर, तपश्चर्या पूरी कर के उठे हुवे शङ्कर भगवान् को अपने हाथ से घाम में सुखाये हुवे गङ्गा के कमल गट्टों की माला को पहिनाया ।

परिचयस्य ततोऽप्याधिक्यमाह—

**प्रतिग्रहीतुं प्रणयिप्रियत्वात्, त्रिलोचनस्तामुपचक्रमे च ।**
**सम्मोहनं नाम च पुष्पधन्वा, धनुष्यमोघं समधत्त बाणम् ॥६६॥**

**शिव ने शिवा की बीज माला को किया स्वीकार जब ।**
**रतिनाथ ने भी धनुप पर रक्खा विशिख सुविचार तब ॥**

**अन्वयः**—त्रिलोचनश्च प्रणयिप्रियत्वात् तां प्रतिग्रहीतुम् उपचक्रमे । पुष्पधन्वा च सम्मोहनं नाम अमोघं बाणं धनुषि समधत्त ।

**व्याख्या**—त्रिलोचनश्च=त्र्यम्बकश्च, महादेवश्चेत्यर्थः । प्रणयिप्रियत्वात् = अर्थिवल्लभत्वात्, तां = मालां, प्रतिग्रहीतुं = स्वीकर्तुम्, उपचक्रमे = उपक्रमं कृतवान् । पुष्पधन्वा च=कुसुमेषुश्च, कामदेवश्चेत्यर्थः । सम्मोहनं नाम=सम्मोहनमिति प्रसिद्धम्, अमोघम्=अनिष्फलं, सफलमित्यर्थः । बाणं = शरं, धनुषि = कार्मुके, समधत्त = संहितवान् ।

**व्युत्पत्तिः**—त्रिलोचनश्च=त्रीणि लोचनानि यस्य स त्रिलोचनः, "लोचनं

नयनं नेत्रम्" इत्यमरः । प्रणयिप्रियत्वात्=प्रीणातीति प्रियः, "प्रीञ् तर्पणे" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः, "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः । प्रणयः अस्ति येषां ते प्रणयिनः, इनिप्रत्ययः । प्रणयिना प्रियः प्रणयिप्रियः, तस्य भावः प्रणयिप्रियत्वं, तस्मात् प्रणयिप्रियत्वात्, प्रतिग्रहीतुं=प्रत्युपसर्गपूर्वकात् "ग्रह उपादाने" इति धातोः तुमुन् प्रत्ययः । पुष्पधन्वा=पुष्प धनुर्यस्य सः पुष्पधन्वा, "वा सञ्ज्ञायाम्" इति अनङादेशः, "सर्वनामस्थाने चाऽसम्बुद्धौ" इत्युपधादीर्घः । च=अत्र चकारद्वयेन यौगपद्यमुक्तम् । सम्मोहनं=सम्मोह्यते अनेन इति सम्मोहनं, तत् । नाम = इदमव्ययं प्रसिद्धौ प्रसिद्धम् । अमोघं=न मोघः अमोघः, तम् अमोघं, "मोघं निरर्थकम्" इत्यमरः । अत्र समुच्चयोऽलङ्कारः । कामदेवस्य पञ्च बाणा यथा—

> "द्रावणः क्षोभणश्चैव वशीकरण इत्यपि ।
> आकर्षणश्च कामस्य बाणः सम्मोहनोऽपरः ॥" इति ।

**भावार्थः**—शिवः भक्तवत्सलत्वात् तां पद्माक्षमालां स्वीकर्तुमारब्धवान् । कामश्च चापे सम्मोहनाख्यं सफलं स्वशरं संयोजयामासेति भावः ।

**भाषा**—शङ्कर भगवान ने भक्तवत्सल होने के कारण पार्वती की दी हुई उस पद्माक्षमाला को स्वीकार किया । इधर कामदेव ने भी संमोहन नामक सफल बाण को अपने धनुष पर चढ़ाया ।

तादृशबाणसन्धानस्य फलमाह—

**हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाऽम्बुराशिः ।**
**उमामुखे बिम्बफलाऽधरोष्ठे, व्यापारयामास विलोचनानि ॥ ६७ ॥**

**शशि के उदय से सिन्धु सम हर धैर्य कुछ डर से भगे ।**
**सानन्द बिम्बाधर वदन पर फेरने लोचन लगे ॥**

**अन्वयः**—हरस्तु चन्द्रोदयारम्भे अम्बुराशिः इव किञ्चित् परिलुप्तधैर्यः सन् बिम्बफलाऽधरोष्ठे उमामुखे विलोचनानि व्यापारयामास ।

**व्याख्या**—हरस्तु = शिवोऽपि, चन्द्रोदयाऽऽरम्भे = हिमांऽशूदयोपक्रमे, अम्बुराशिः इव = जलराशिः इव, समुद्र इवेत्यर्थः । किञ्चित् = ईषत्, परिलुप्तधैर्यः= अपगतधीरत्वः सन्, न तु साधारणजनवत् अत्यन्तलुप्तधैर्यं इत्यर्थः । बिम्बफलाऽधरोष्ठे = बिम्बफलतुल्याधरोष्ठे, उमामुखे = पार्वतीवदने, विलोचनानि = नेत्राणि, व्यापारयामास = प्रवर्तयामास । त्रिभिरपि लोचनैः साभिलाषमपश्यदि-

त्यर्थः । एतेन हरस्य पार्वतीविषयकरतिभावोदय उक्तः ।

व्युत्पत्तिः—चन्द्रोदयारम्भे = चन्द्रस्य उदयः चन्द्रोदयः, तस्य आरम्भः चन्द्रोदयारम्भः, तस्मिन् चन्द्रोदयारम्भे । अम्बुराशिः=अम्बूना राशिः अम्बुराशिः, परिलुप्तधैर्यः = धीरस्य भावः कर्म वा धैर्यं, "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्प्रत्ययः । परिलुप्तं धैर्यं यस्य स परिलुप्तधैर्यः । बिम्बफलाऽधरोष्ठे = बिम्बं च तत् फल बिम्बफलम् । अधरश्चाऽसौ ओष्ठः अधरोष्ठः, "ओत्वोष्ठयोः समासे वा" इति पररूपत्वम् । बिम्बफलम् इव अधरोष्ठः यस्य तत् बिम्बफलाऽधरोष्ठं, तस्मिन् बिम्बफलाधरोष्ठे । उमामुखे=उमायाः मुखम् उमामुखं, तस्मिन् उमामुखे । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः । विलोचनानि= विशिष्टानि लोचनानि विलोचनानि तानि । अत्रोपमालङ्कारः ।

**भावार्थः**—इन्दूदये समुद्र इव नात्यन्तगलितधैर्यः शिवोऽपि बिम्बफलरक्ताधरोष्ठे पार्वत्या वदने त्रीण्यपि नयनानि प्रवर्तयामासेति भावः ।

**भाषा**—शङ्कर भी चन्द्रोदय के होने से समुद्र की तरह थोड़े अधीर होकर बिम्बफल के समान ओष्ठ वाले पार्वती के मुख को तीनों आख से देखने लगे ।

हरदृष्टिपाते पार्वत्या अवस्था वर्णयति—

**विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।**
**साचीकृता चारुतरेण तस्थौ, मुखेन पर्यस्तविलोचनेन ॥६८॥**

गिरिजा कदम्ब समान तन से भाव दिखलाने लगी ।
बैठी त्रपा से नत वदन कर हाव जतलाने लगी ॥

**अन्वयः**—शैलसुता अपि स्फुरद्बालकदम्बकल्पैः अङ्गैः भावं विवृण्वती चारुतरेण पर्यस्तविलोचनेन मुखेन साचीकृता तस्थौ ।

**व्याख्या**—शैलसुता अपि = अद्रितनया अपि, पार्वत्यपीत्यर्थः । स्फुरद्बालकदम्बकल्पैः = विकसत्कोमलनीपसदृशैः, पुलकितैरित्यर्थः । अङ्गैः = अवयवैः, भावं = रत्याख्य, विवृण्वती = प्रकाशयन्ती, चारुतरेण=अतिसुन्दरेण, पर्यस्तविलोचनेन=विभ्रान्तनेत्रेण, लज्जया इति योजनीयोऽर्थः । मुखेन=वक्त्रेण, साचीकृता = तिर्यक्कृता, तस्थौ=स्थितवती । लज्जया मुखं तिर्यक्कृत्य स्थितवतीत्यर्थः ।

**व्युत्पत्तिः**—शैलसुता = शैलस्य सुता शैलसुता । स्फुरद्बालकदम्बकल्पैः= बालाश्च ते कदम्बाः बालकदम्बाः, "नीपप्रियककदम्बास्तु हलिप्रियः" इत्यमरः ।

स्फुरन्तश्च ते बालकदम्बाः, स्फुरद्बालकदम्बाः, ईषत् असमाप्ताः स्फुरद्बालकदम्बाः स्फुरद्बालकदम्बकल्पानि, तैः स्फुरद्बालकदम्बकल्पैः । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । यद्यप्यत्र प्रकृतिलिङ्गत्वमपेक्षितं, परन्तु 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते"इति वचनात् 'गुणकल्पा द्राक्षा'इत्यादिवत्, अत्राऽपि प्रकृतिलिङ्गाऽतिक्रमो बोधनीयः । अङ्गैः = "अङ्गं प्रतीकोऽवयवोऽपघनः" इत्यमरः । चारुतरेण=अतिशयेन चारु चारुतरं, तेन चारुतरेण । सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः । पर्यस्तविलोचनेन=विशिष्टे लोचने विलोचने, "कुगतिप्रादयः" इति गतिसमासः । पर्यस्ते विलोचने यस्मिन् तत् पर्यस्तविलोचनं, तेन पर्यस्तविलोचनेन, साचीकृता=असाचि साचि यथा सम्पद्यते तथा कृता साचीकृता, च्विप्रत्ययः । "तिर्यगर्थे साचि तिरः" इत्यमरः । न केवलं शिवस्यैव, पार्वत्या अपि हाव उदित इत्यर्थः ।

हावलक्षणं च यथोक्तं साहित्यदर्पणे—

'भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाऽल्पसंलक्ष्यविकारो हाव उच्यते ॥" इति ।

**भावार्थः**—पार्वत्यपि विकसत्कोमलनीपसदृशैः, रोमाञ्चितैरिति यावत्, शरीरावयवै रत्याख्यं भावं प्रकाशयन्ती सती, हरदृष्टिपातसञ्जातलज्जया विवर्तितनयनमत्यन्तसुन्दरमाननमीषत्तिर्यक्कृत्य स्थिताऽभूदिति भावः ।

**भाषा**—पार्वती भी कदम्ब पुष्प के समान रोमाञ्चित अङ्गों से रत्याख्य भाव को प्रकाशित करती हुई, शङ्कर से चार आख होने पर लज्जा से सकुचाती हुई, अपने सुन्दर मुख को थोड़ा फेर कर, खडी रह गई ।

अथ नैसर्गिकभावान्तरोदयेन सत्वनिधौ हरे रतेः प्रशमं दर्शयति—

**अथेन्द्रियक्षोभमयुग्मनेत्रः, पुनर्वशित्वाद्बलवन्निगृह्य ।**
**हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥**

इन्द्रिय विकारों को वशाने रोक जब बल से लिया ।
तब हेतु लखने के लिय प्रत्येक दिशि में दृग दिया ॥

**अन्वयः**—अथ अयुग्मनेत्रः वशित्वात् इन्द्रियक्षोभं पुनः बलवत् निगृह्य स्वचेतोविकृतेः हेतुं दिदृक्षुः सन् दिशाम् उपान्तेषु दृष्टिं ससर्ज ।

**व्याख्या**—अथ = अनन्तरम्, अयुग्मनेत्रः = अयुग्मनयनः, त्रिनेत्र इत्यर्थः । हर इति यावत्, वशित्वात् = जितेन्द्रियत्वात्, इन्द्रियक्षोभं=करणविकार,

पूर्वोक्तमित्यर्थः। पुनः=भूयः, बलवत्=दृढं, निगृह्य=निवार्य, स्वचेतोविकृतेः = आत्मचित्तविकारस्य, हेतुं = कारणं, दिदृक्षुः = द्रष्टुमिच्छुः, सन्, दिशा = ककुभाम्, उपान्तेषु = प्रान्तभागेषु, दृष्टिं=नेत्रं, ससर्ज = सृष्टवान्, प्रसारयामासेत्यर्थः ।

**व्युत्पत्तिः**—अयुग्मनेत्रः=न युग्मानि अयुग्मानि, "युग्मं तु युगलं युगम्" इत्यमरः । अयुग्मानि नेत्राणि यस्य सः अयुग्मनेत्रः । वशित्वात्=वशः अस्याऽस्तीति वशी, इनिप्रत्ययः । वशिनः भावः वशित्वं, तस्मात् वशित्वात् । इन्द्रियक्षोभम्=इन्द्रियाणां क्षोभः इन्द्रियक्षोभः, तम् इन्द्रियक्षोभं, बलवत् = अव्ययमेतत् । "बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे" इत्यमरः । स्वचेतोविकृतेः = स्वस्य चेतः स्वचेतः, "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः । स्वचेतसः विकृतिः स्वचेतोविकृतिः, तस्याः स्वचेतोविकृतेः, हेतु="हेतुर्ना कारणं बीजम्" इत्यमरः । दिदृक्षुः = सन्नन्तात् "दृशिर प्रेक्षणे" इति धातोः "सनाशंसभिक्ष उः" इति उप्रत्ययः । दिशा="दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । ससर्ज="सृज विसर्गे" इति धातोर्लिट् ।

**भावार्थः**—तादृशावस्थाप्राप्त्यनन्तरं त्रिलोचनः जितेन्द्रियत्वात् पूर्वोक्तमिन्द्रियविकार पुनरपि दृढं निवार्य, स्वमनोविकारस्य कारणं द्रष्टुमिच्छुः, दिङ्मुखेषु स्वनेत्रं प्रसारयामासेति भावः ।

**भाषा**—ऐसी अवस्था प्राप्त होने पर शङ्कर भगवान् जितेन्द्रिय होने से स्वकीय इन्द्रियों के विकार को अच्छी तरह से दमन कर, अपने मनके विकृत होने के कारण को देखने की इच्छा से चारो तरफ देखने लगे ।

दृष्टिविसर्गस्य फलमाह—

**स दक्षिणाऽपाङ्गनिविष्टमुष्टिं नतांऽसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥**

**पद वाम मोड़ नतांस मनसिज ने किया धनु चक्र सा ।**
**देखा वशी ने मारने को बाण सम्मोहन कसा ॥**

**अन्वयः**—सः दक्षिणापाङ्गनिविष्टमुष्टिं नताऽसम् आकुञ्चितसव्यपादं चक्रीकृतचारुचापं प्रहर्तुम् अभ्युद्यतम् आत्मयोनिं ददर्श ।

**व्याख्या**—स=भगवान् हरः, दक्षिणाऽपाङ्गनिविष्टमुष्टिं = वामेतरनेत्राऽन्तस्थितमुष्टिं, नताऽसं = नम्रस्कन्धम्, आकुञ्चितसव्यपादम् = आकुञ्चितवामचरणम्,

आलीढाख्यस्थानके स्थितमित्यर्थः । चक्रीकृतचारुचापं = मण्डलीकृतसुन्दरकोदण्डं, प्रहर्तुम् = प्रहारं कर्तुम् , अभ्युद्यतम् = कृतोद्यमम् , आत्मयोनि=मनोभवं, कामदेवमित्यर्थः । ददर्श = अपश्यत् ।

**व्युत्पत्तिः**—दक्षिणाऽपाङ्गनिविष्टमुष्टिं=दक्षिणश्चाऽसौ अपाङ्गः दक्षिणाऽपाङ्गः, "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः । निविष्टा = स्थिता, मुष्टिर्यस्य स निविष्टमुष्टिः, दक्षिणाऽपाङ्गे निविष्टमुष्टिः दक्षिणाऽपाङ्गनिविष्टमुष्टिः, तं दक्षिणापाङ्गनिविष्टमुष्टिं । नताऽसं = नतौ अंसौ यस्य स नताऽसः, त नतासं, "स्कन्धो भुजशिरोऽसोऽस्त्री" इत्यमरः । आकुञ्चितसव्यपादम्=सव्यश्चाऽसौ पादः सव्यपादः, "वामं शरीरं सव्यं स्यात्" इत्यमरः । आकुञ्चितः सव्यपादः यस्य स आकुञ्चितसव्यपादः, तम् आकुञ्चितसव्यपादम् । आलीढलक्षणमाह यादवः—

"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् ।
वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति ॥
समानौ स्यात् समपदमालीढं पदमग्रतः ।
दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥" इति ।

चक्रीकृतचारुचापम्=अचक्रं चक्रं यथा सम्पद्यते तथा कृत चक्रीकृतं, च्वि-प्रत्ययः । चक्रीकृतं=मण्डलीकृतं, चारु = सुन्दरं, चापं=धनु', येन स चक्रीकृतचारुचापः, तं चक्रीकृतचारुचापं । प्रहर्तुम्=प्रोपसर्गपूर्वकात् "हृञ् हरणे" इति धातोः तुमुन्प्रत्ययः । आत्मयोनिम्=आत्मा=मनः, योनिः = उत्पत्तिहेतुः, यस्य स-आत्मयोनिः' तम् आत्मयोनिम् ।

**भावार्थः**—स शिवः दक्षिणनेत्रकोणस्थितमुष्टिं नम्रस्कन्धं वक्रीकृतवामपादजानुं मण्डलीकृतसुन्दरकोदण्डं स्वस्मिन् बाणप्रयोगं कर्तुमुद्युक्तं कामदेवमवलोकयामासेति भावः ।

**भाषा**—तब शङ्कर ने दहिने आंख के कोने तक मुट्ठी को खींचे हुवे, कन्धे को लटका कर, बायें पैर के घुटने को टेढा किये हुवे, धनुष को पूरा खींचकर, अपने ऊपर बाण छोड़ने को तत्पर, ऐसे कामदेव को देखा ।

हरस्य तत्तादृशमदनदर्शनजं क्रोधं तत्फलं चाह—

**तपःपरामर्षविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।**
**स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥७१॥**

**झट तीसरा दृग खुल गया अत्यन्त हर के क्रोध से ।**

उससे भभकती वह्नि की ज्वाला चली अनिरोध से ॥

**अन्वयः**—तपःपरामर्शविवृद्धमन्योः भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य तृतीयात् अक्ष्णः स्फुरन् उदर्चिः कृशानुः सहसा निष्पपात किल।

**व्याख्या**—तपःपरामर्शविवृद्धमन्योः = तप आस्कन्दनप्रवृद्धकोपस्य, भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य = भ्रूकौटिल्यदुर्दर्शाननस्य, तस्य=हरस्य, तृतीयात्=त्रयाणां पूरकात्, अक्ष्णः = नेत्रात्, स्फुरन् = प्रकाशमानः, उदर्चिः=उद्भूतज्वालः, कृशानुः = अग्निः, सहसा=अकस्मात्, अतर्कितमेवेत्यर्थः। निष्पपात किल = निश्चक्राम खलु।

**व्युत्पत्तिः**—तपःपरामर्शविवृद्धमन्योः=तपसः परामर्शः तपःपरामर्शः। विशेषेण वृद्धः, विवृद्धः, 'सुप्सुपा" इति समासः। विवृद्धः मन्युः यस्य स विवृद्धमन्युः, "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। तपःपरामर्शेन विवृद्धमन्युः तपःपरामर्शविवृद्धमन्युः, तस्य तपःपरामर्शविवृद्धमन्योः। भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य=भ्रुवोः भङ्गः भ्रूभङ्गः। दुःखेन प्रेक्षितुं शक्यं दुष्प्रेक्ष्यम्। भ्रूभङ्गेन दुष्प्रेक्ष्यं भ्रूभङ्गदुष्प्रेक्ष्यं, तत् मुखं यस्य स भ्रूभङ्गदुष्प्रेक्ष्यमुखः, तस्य भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तृतीयात्= त्रयाणां पूरणः तृतीयः, तस्मात् तृतीयात्, त्रिशब्दात् "त्रेः सम्प्रसारणं च" इति तीयप्रत्ययः सम्प्रसारणं च। अक्ष्णः = "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्यनङ् "ङिच्च" इत्यन्तादेशश्च, ततः "अल्लोपोऽनः" इत्यकारलोपः। "ईक्षणं चक्षुरक्षिणी" इत्यमरः। स्फुरन्=स्फुरतीति स्फुरन्, शतृप्रत्ययः। उदर्चिः=उद्भूता अर्चिः यस्य सः उदर्चिः, ज्वालाभासोर्न पुंस्यर्चिः" इत्यमरः। कृशानुः=आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः" इत्यमरः। यः किल कल्पान्ते सकलमपि लोकं भस्मसात् करिष्यति, सोऽग्निरित्यर्थः। सहसा="अतर्कितं तु सहसा" इत्यमरः। अत्र रौद्रो रसः। तद्रसव्यभिचारिणः क्रौर्यस्य भ्रूभङ्गेत्याद्यनुभावप्रदर्शनात्।

**भावार्थः**—तपसो धर्षणेन प्रवृद्धक्रोधस्य भ्रूविकृत्या दुर्दर्शाननस्य त्रिलोचनस्य ललाटस्थतृतीयनेत्रात् प्रकाशमानः उद्गतज्वालो वह्निः झटिति निर्जगामेति भावः।

**भाषा**—तपके ऊपर आघात करने से अत्यन्त क्रोध में आकर भ्रुकुटी को टेढी किये हुवे शङ्कर के ललाटस्थ तृतीय नेत्र से चमकती हुई जाज्वल्यमान आग की एक लपट झट से बाहर निकल पडी।

कृशानुनिष्पतनस्य फलमाह—

**क्रोधं प्रभो संहर संहरेति, यावत् गरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा, भस्माऽवशेषं मदनं चकार ॥ ७२ ॥**

हे हे प्रभो, मत क्रोधकर जबतक अमर बोले वचन ।
तबतक नयन की आगसे भस्मावशेष हुआ मदन ॥

**अन्वयः**—प्रभो ! क्रोधं संहर संहर, इति मरुतां गिरः खे यावत् चरन्ति, तावत् भवनेत्रजन्मा स वह्निः मदनं भस्माऽवशेषं चकार ।

**व्याख्या**—प्रभो=हे स्वामिन् , क्रोधं=कोपं, संहर संहर=निवर्तय निवर्तय । इति=एवं, मरुतां = देवानां, गिरः =वाचः, खे = व्योम्नि, यावत् = यत्कालं, चरन्ति=प्रवर्तन्ते, तावत् = तत्कालम् एव, भवनेत्रजन्मा = हरनयनोद्भवः, सः, वह्निः = अग्निः, मदनं = कामदेवं, भस्माऽवशेषं = भसितपरिशेषं, चकार=कृतवान् , ददाहेत्यर्थः ।

**व्युत्पत्तिः**—क्रोधं = "कोपक्रोधाऽमर्षरोषप्रतिघारुट्क्रुधौ स्त्रियौ" इत्यमरः । संहर संहर = "सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः" इति द्वित्वम् । मरुतां = "मरुतौ पवनाऽमरौ" इत्यमरः । गिरः–"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । खे = "नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम्" इत्यमरः । भवनेत्रजन्मा = भवस्य नेत्रं भवनेत्रं, तस्मात् जन्म यस्य स भवनेत्रजन्मा, "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः । "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः । वह्निः = "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः" इत्यमरः । भस्माऽवशेषं = भस्म एव अवशेषः यस्य स भस्माऽवशेषः, तं भस्मावशेषं, "भूतिर्भसितभस्मनी" इति कोषः ।

**भावार्थः**—हे त्रैलोक्याधिपते ! हर ! त्वं कोपं निवर्तय निवर्तयेत्येवं निजमनीषितलाभदर्शनार्थं हरसमीपे वर्तमानानां देवानां वाचो व्योम्नि यावत् प्रवर्तन्ते, तावदेव शिवनेत्रोत्पन्नोऽग्निः कामं भस्मावशिष्टं कृतवानिति भावः ।

**भाषा**—हे त्रैलोक्यके मालिक शङ्कर भगवान् ! अपने क्रोध को रोकिये रोकिये, इसतरह प्रार्थना करनेवाले अपने स्वार्थसिद्धि को देखने के लिये शङ्कर के समीप आये हुवे देवताओं की आवाज जबतक आकाशमें होती है, तबतक तो शङ्कर के तृतीय नेत्रसे निकली हुई आगने कामदेव को भस्म कर दिया ।

अथ शङ्करगतस्य तथाविधस्य रौद्ररसस्य "रौद्रात्तु करुणो रस" इति न्यायेन

कार्यभूतं चतुर्थसर्गे वर्णयिष्यमाणं करुणरसमुपक्षिपति—

**तीव्राऽभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥**

पति की दशा यह देखकर मूर्च्छित हुई मनसिजप्रिया ।
कुछ देरतक रह मोहने उपकार उसका कर दिया ॥

**अन्वयः**—तीव्राऽभिषङ्गप्रभवेण इन्द्रियाणां वृत्तिं संस्तम्भयता मोहेन रतिः मुहूर्त्तम् अज्ञातभर्तृव्यसना सती कृतोपकारा इव बभूव ॥

**व्याख्या**—तीव्राऽभिषङ्गप्रभवेण=अतिदुःसहाऽभिभवसम्भवेन, इन्द्रियाणां= करणानां, चक्षुरादीनामित्यर्थः । वृत्तिं=व्यापारं, संस्तम्भयता = प्रतिबध्नता, मोहेन = मूर्च्छया, कर्त्रा, रतिः =कामपत्नी, मुहूर्त्तं = कियत्कालपर्यन्तम्, अज्ञातभर्तृव्यसना = अविदितपतिनाशा, सती, कृतोपकारा इव = विहितोपकृतिः इव, बभूव = अभवत् । सहसा दुःखोपनिपातात् मुमूर्च्छेत्यर्थः । मोहेन दुःखसवेदनाऽभावात् तस्य उपकारत्वोक्तिः ।

**व्युत्पत्तिः**—तीव्राऽभिषङ्गप्रभवेण = तीव्रश्चासौ अभिषङ्गः तीव्राऽभिषङ्गः, "अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च" इति वैजयन्ती । तीव्राऽभिषङ्गात् प्रभवतीति तीव्राऽभिषङ्गप्रभवः, तेन तीव्राभिषङ्गप्रभवेण । इन्द्रियाणां="हृषीकं विषयीन्द्रियम्" इत्यमरः । मुहूर्त्तं="कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । अज्ञातभर्तृव्यसना=न ज्ञातम् अज्ञातम्, भर्तुः व्यसनं भर्तृव्यसनम् । "धवः प्रियः पतिर्भर्त्ता" इति "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इति चाऽमरः । कृतोपकारः = कृतः उपकारः यस्याः सा कृतोपकारा । अत्र कृतोपकारत्वोत्प्रेक्षायामज्ञातभर्तृव्यसनेति हेतोरुपादानात् हेतूत्प्रेक्षालङ्कारः ।

**भावार्थः**—अतिदुःसहाभिभवसम्भवेन चक्षुरादीनां स्वस्वविषयव्यापारं प्रतिबध्नता मूर्च्छारूपप्रलयाख्येन सात्त्विकभावेन मदनभार्या क्षणमनवगतकान्तविपत्तिः सती कृतोपकारा इवासीदिति भावः ।

**भाषा** – अत्यन्त दुःसह अभिभवसे होनेवाली, चक्षु आदि इन्द्रियों के स्व स्व विषयक व्यापार को नष्ट करनेवाली, मूर्च्छासे, बेहोश होकर कामकी स्त्री रती कुछ देर तक कामदेवकी मरणरूपी आपत्तिको न जानकर उपकृत की गयी ।

अथ मदने दग्धे मति प्रशान्तरोषस्य हरस्य पुनरपि शान्तरसे विश्रान्तिमाह—

**तमाशु विघ्नं तपसस्तपस्वी, वनस्पतिं वज्र इवाऽवभज्य ।**

स्त्रीसन्निकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

प्रत्यूह को तप के अशनि सम वृक्ष को दलकर तुरत ।
ले भूतगण शिव त्याग प्रमदा सन्निकर्ष छिपे तुरत ॥

**अन्वयः**—तपस्वी भूतपतिः तपसः विघ्नं तम् आशु वज्रः वनस्पतिम् इव अवभज्य, स्त्रीसन्निकर्षं परिहर्तुम् इच्छन् सन् सभूतः अन्तर्दधे ॥

**व्याख्या**—तपस्वी = तपोनिष्ठः, भूतपतिः = प्रमथाऽधिपः, शिव इत्यर्थः । तपसः = नियमस्य, विघ्न = प्रत्यूहभूतं, तं=कामदेवम् , आशु = शीघ्रं, वज्रः = अशनिः, वनस्पतिम् इव = वृक्षम् इव, अवभज्य=भङ्क्त्वा, स्त्रीसन्निकर्ष=योषित्सन्निधानं, परिहर्तुम् = अपहर्तुम , इच्छन्=वाञ्छन् सन् , तस्यैवानर्थकारणत्वादित्यर्थः । सभूतः=सगणः, अन्तर्दधे=अन्तर्हितोऽभूत् ॥

**व्युत्पत्तिः**—तपस्वी = तपः अस्याऽस्तीति तपस्वी "तपः सहस्राभ्या विनीनी" इति विनिप्रत्ययः, "सौ च" इति दीर्घः । भूतपतिः=भूताना पतिः भूतपतिः । विघ्न = "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः । वज्रः="ह्लादिनी वज्रमस्त्री स्यात्कुलिश भिदुरं पविः" इत्यमरः । स्त्रीसन्निकर्ष = स्त्रियाः सन्निकर्षः स्त्री सन्निकर्षः, त स्त्रीसन्निकर्ष । सभूतः,=भूतैः सह सभूतः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, 'वोपसर्जनस्य" इति सहस्य सभावः । अत्र भूतशब्दः सर्वपरिच्छदानामुपलक्षणम् । तेषामपि स्वेच्छामात्रपरिकल्पितत्वादिच्छाभावे तिरोधानम् ।

**भावार्थः**—तपोनिष्ठो भूतेशः शिवः शरीरमवलम्ब्यावस्थितं तपसोऽन्तरायं तं काममशनिर्वृक्षमिव सद्यो विनाश्य नारीसन्निधान त्यक्तुमभिलषन् भूतगणसहितः तिरोदध इति भावः ।

**भाषा**—तपस्वी शङ्करभगवान् सशरीर तपके विघ्नस्वरूप उस कामदेवको भस्मकर, स्त्री सान्निध्यके त्याग की इच्छासे, बिजली जैसे पेड़को नष्ट कर गुप्त हो जाती है, उसी तरह भूतगणों के साथ गुप्त हो गये ।

अथ पार्वत्याः शुश्रूषावृत्तान्तमप्युपसंहरति—

शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं,
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाऽधिकजातलज्जा,
शून्या जगाम भवनाऽभिमुखी कथञ्चित् ॥ ७५ ॥

गिरिराज कन्या भी दुःखी हा निज जनकके घर गई ।

सौन्दर्य निष्फल जान सखि सम्मुख त्रपा से भर गई ॥

**अन्वयः**—शैलात्मजा अपि उच्छ्रिरसः पितुः अभिलाषम् , ललितम् आत्मनः वपुश्च व्यर्थं समर्थ्य सख्योः समक्षम् इति च अधिकजातलज्जा शून्या सती कथञ्चित् भवनाऽभिमुखी जगाम ॥

**व्याख्या**—शैलात्मजा अपि = अद्रितनया अपि, पार्वत्यपीत्यर्थः । उच्छ्रिरसः = उन्नतशीर्षस्य, पितुः=जनकस्य, हिमालयस्येत्यर्थः । अभिलाषं = मनोरथं, "हरःवरोऽस्तु" इत्याकारकमित्यर्थः । ललित = सुन्दरम् , आत्मनः = स्वस्य, वपुश्च = शरीरं च, व्यर्थं = निष्फलं, समर्थ्य=विचार्य, सख्योः=आल्योः, समक्षं= पुरः, इति च = अनेन च हेतुना, अधिकजातलज्जा = अधिकोत्पन्नव्रीडा, समानजनसमक्षमपमानस्यातिदुःसहत्वादित्यर्थः । शून्या=निरुत्साहा सती, कथञ्चित्= कष्टेन, भवनाऽभिमुखी=गृहाऽभिमुखी, जगाम = अगमत् , भवनमभिमुखीकृत्य प्रतस्थे इत्यर्थः ।

**व्युत्पत्तिः**—शैलात्मजा=आत्मनः जाता आत्मजा, शैलस्य आत्मजा शैलात्मजा । "अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः । उच्छ्रिरसः = उन्नतं शिरः यस्य सः उच्छ्रिराः, तस्य उच्छ्रिरसः, पितुः="तातस्तु जनकः पिता" इत्यमरः । अभिलाषम् = "कामोऽभिलाषस्तर्षश्च" इत्यमरः । वपुः="गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । व्यर्थं = विगतः अर्थः यस्मात् तत् व्यर्थं, तत् । सख्योः = "आलिः सखी वयस्या च" इत्यमरः । समक्षम्=अक्ष्णोः समीपं समक्षं, "प्रतिपरसमनुभ्योऽक्ष्णः" इति समासान्तष्टच् । प्रत्यक्षमित्यर्थः । अधिकजातलज्जा = अधिक यथा तथा जाता अधिकजाता, सा लज्जा यस्याः सा अधिकजातलज्जा । "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । भवनाऽभिमुखी = भवने अभिमुखी भवनाभिमुखी, "निशान्तपस्त्यसदनं भवनागारमन्दिरम्" इत्यमरः । अत्र पार्वत्याः शोकः पूर्वानुरागहेतुकः, चिन्तालज्जे च शोकस्य व्यभिचारिण्यौ । इदं वृत्तं वसन्ततिलकाऽभिधानं ज्ञेयं, तल्लक्षणं यथा—

"उक्ता वसन्ततिलका तभजा जगौ गः" इति ।

**भावार्थः**—पार्वत्यपि मानिनः पितुः हिमालयस्य "हरो वरोऽस्त्विति" मनोरथं" स्वस्य सुन्दरं शरीरञ्च निष्फल विचार्य विजयामालिन्योर्वयस्ययोः प्रत्यक्षमिति च हेतुनाऽधिकलज्जिता, अत एव शून्यहृदया सती, कृच्छ्रेण भवनमभिमुखीकृत्य प्रतस्थ इति भावः ।

**भाषा**—पार्वती ने भी मानी पिता हिमालयके "कन्या का पति शङ्कर हो" इस प्रकार के मनोरथ को, और स्वकीय सुन्दर शरीर को भी निष्फल जानकर, विजया वो मालिनी नामक सखियों के सामने अपना तिरस्कार होने से अधिक लज्जित होकर उदास हो बड़े कष्टसे घरकी तरफ प्रयाण किया।

अथ कन्यायास्तादृशीं दशामवलोकयतो हिमालयस्य तत्कालोचिता प्रवृत्तिं दर्शयति—

**सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या,**
**दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।**
**सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां,**
**प्रतिपथगतिरासीद् वेगदीर्घीकृताऽङ्गः ॥ ७६ ॥**

**संरम्भ से शिवके डरी निज बालिका को प्यार से।**
**रद पद्मिनी मय देव गज सम, ले गया सत्कार से ॥**

**अन्वयः**—सपदि अद्रिः रुद्रसंरम्भभीत्या मुकुलिताक्षीम् अनुकम्प्यां दुहितरं दोर्भ्याम् आदाय दन्तलग्नां पद्मिनीं बिभ्रत् सुरगज इव वेगदीर्घीकृताऽङ्गः सन् प्रतिपथगतिः आसीत् ॥

**व्याख्या**—सपदि = द्राक्, अद्रिः=पर्वतः, हिमालय इत्यर्थः। रुद्रसंरम्भभीत्या = हरकोपभयेन, मुकुलिताक्षीं=निमीलितनेत्राम्, अत एव अनुकम्प्याम्= अनुकम्पनीया, दयाऽर्हामित्यर्थः। दुहितरं = पुत्रीं, पार्वतीमित्यर्थः। दोर्भ्यां= भुजाभ्याम्, आदाय = गृहीत्वा, दन्तलग्नां = दशनलग्नां, पद्मिनीं = नलिनीं, बिभ्रत्=दधानः, सुरगज इव=देवहस्ती इव, ऐरावत इवेत्यर्थः। वेगदीर्घीकृताऽङ्गः=स्यायतीकृतशरीरः सन्, प्रतिपथगतिः = मार्गाऽनुसारिगमनः, आसीत्=अभवत्, पन्थानमनुसृत्य जगामेत्यर्थः।

**व्युत्पत्तिः**—सपदि = "द्राङ् मङ्क्षु सपदि द्रुते" इत्यमरः। रुद्रसंरम्भभीत्या=रुद्रस्य संरम्भः रुद्रसंरम्भः, "संरम्भः सम्भ्रमे कोपे" इति विश्वः। रुद्रसंरम्भात् भीतिः रुद्रसंरम्भभीतिः, तया रुद्रसंरम्भभीत्या। मुकुलिताक्षीं=मुकुलः सञ्जातः अनयोस्ते मुकुलिते, "तदस्य सञ्जातं तारकादिभ्य इत" इतीतच् प्रत्ययः। "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः। मुकुलिते अक्षिणी यस्याः सा मुकुलिताक्षी, ता मुकुलिताक्षीं। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्तः षच् "षिद्गौरादिभ्यश्च" इति ङी। अनुकम्प्याम्=अनुकम्पितुम् अर्हा अनु-

कम्प्या, ताम् अनुकम्प्याम्। "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः। दोर्भ्यां="भुज-बाहू प्रवेष्टोदोः" इत्यमरः। दन्तलग्ना=दन्तयोर्लग्ना दन्तलग्ना, ता दन्तलग्नाम्, "रदना दशना दन्ता रदाः" इत्यमरः। पद्मिनीं=पद्मानि सन्ति यस्या सा पद्मिनी, ता पद्मिनीम् "अत इनिठनौ" इति इनिप्रत्ययः। "ऋन्नेभ्यो ङीप्" इति ङीप्। बिभ्रत्=बिभ्रतीति बिभ्रत्। सुरगजः=सुराणा गजः सुरगजः, वेगदीर्घीकृताङ्गः=अदीर्घं दीर्घं यथा सम्पद्यते तथा कृतं, दीर्घीकृतं, तत् अङ्ग यस्य सः दीर्घीकृताङ्गः, वेगेन दीर्घीकृताङ्गः वेगदीर्घीकृताङ्गः। प्रतिपथगतिः=पन्थान प्रतिगता प्रतिपथा, "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अकारः। प्रतिप्रथा गतिः यस्य सः प्रतिपथगतिः।

अत्र हरगता दाक्षायणीविषया य ारतिस्तद्देहत्यागेन कारणेन विच्छिन्ना सती तत्त्वज्ञानोपबृंहिता शान्तरसे विश्रान्तिमुपयाता, सैवात्र देहान्तरमवलम्ब्योपगतायाः पार्वत्या दर्शनादिभिः समुन्मिषिता। ततः सापि चिरकालपरिचितेन शान्तरसेना-भिभूता, पुनश्च तस्यापि रौद्रसेनाभिभवः, तस्य च पुनरपि शान्तरसे विश्रान्तिः, पुनश्च पार्वत्यास्तपश्चरणानन्तरं प्राचीना शृङ्गारस्थायिभावात्मिका रतिरेवोन्मेष-मुपयास्यतीति वितर्कः। मालिनीवृत्तमेतत्। तल्लक्षणं यथा—

ननमययुतेयं मालिनी भोगिलोकैः" इति

**भावार्थः**—तत्क्षणे हिमवान् हरकोपभयेन निमीलितनेत्रा दयनीया स्वकन्यां पार्वतीं स्वहस्ताभ्यां गृहीत्वा, दन्ताभ्यां कमलिनीमादायैरावत इव, रयेणायतीकृतशरीरः सन् पन्थानमनुसृत्य जगमेति भावः।

**भाषा**—उसी समय हिमालय, शङ्कर के कोप के डर से आंख बन्द किये हुई, अत्यन्त दीन कन्या पार्वती को अपने हाथों पर उठा कर, दातों से कम-लिनी को लिये ऐरावत हाथी के समान, वेग से शरीर को सीधा कर, रास्ता पकड़ घर की तरफ चला गया।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः श्रीकालीदासकृतौ कुमारसम्भवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः समाप्तः॥

# अथ चतुर्थः सर्गः ।

अथ पूर्वसर्गोपक्षिप्तो रतिगतः करुणरसश्चतुर्थेनानेन सर्गेण वर्ण्यते । तत्र हरे तिरोहिते, गतायां च पार्वत्यां कामदहनप्रस्तावमोहमुपगताया रत्या विबोधन प्रकारमाह—

**अथ मोहपरायण सती, विवशा कामवधूर्विबोधिता ।**
**विधिना प्रतिपादयिष्यता, नववैधव्यमसह्यवेदनम् ॥ १ ॥**

निश्चेष्ट बनकर कठिन अतिशय वेदनादुख में पगी ।
वैधव्य-अनुभव के लिये रति मोह-निद्रा से जगी ॥

**अन्वयः**—अथ मोहपरायणा सती विवशा कामवधूः असह्यवेदनं नववैधव्यं प्रतिपादयिष्यता विधिना विबोधिता ।

**व्याख्या**—अथ = अनन्तरं मोहपरायणा = मोहैकशरणा, सती = भवन्ती, विवशा = निश्चेष्टा मूढत्वादित्यर्थः । कामवधूः=मदनपत्नी, रतिरित्यर्थः । असह्यवेदनम् = दुःसहवेदनं, नववैधव्यं = नवीनाऽभर्तृकत्वं, नवग्रहणं दुःसहत्व-द्योतनार्थम् । प्रतिपादयिष्यता = अनुभावयिष्यता, विधिना = दैवेन, बोधिता= प्रबोधिता ।

**व्युत्पत्तिः**—मोहपरायणा = मोहः परम् अयनम् = आश्रयः, यस्याः सा मोहपरायणा । "परायणमभिप्रेते तत्परे परमाश्रये" इति यादवः । विवशा = विगतः वशः यस्याः सा विवशा, कामवधूः=कामस्य वधूः कामवधूः । असह्यवेद-नम्=सोढुम् शक्या सह्या, न सह्या असह्या, सा वेदना यस्मिन् तत् असह्यवेदनं, तत् । नववैधव्यं = विगतः धवः यस्याः सा विधवा, "विश्वस्ताविधवे समे" इत्य-मरः । विधवायाः भावः वैधव्यं, नवं च तत् वैधव्यं नववैधव्यं, तत् । "प्रत्यग्रो-ऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । प्रतिपादयिष्यता=प्रतिपादयिष्य-तीति प्रतिपादयिष्यन्' तेन प्रतिपादयिष्यता । क्रियार्थक्रियायां लृट्, तस्य शत्रा-देशः । विधिना = "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः । अस्मिन् सर्गे वियोगिनीवृत्तानि, तल्लक्षण यथा—

"विषमे ससजा गुरुः समे, सभरा लोऽथ गुरुर्वियोगिनी ।" इति

**भावार्थः**—हरतिरोधानपार्वतीगमनान्तर मूर्च्छिता निश्चेष्टा रतिर्नूतनवैधव्य-दुस्सहदुःखमनुभावयिष्यता दैवेनोपलब्धचेतनाभूदिति भावः ।

**भाषा**—महादेवजी के तिरोधान होनेसे पार्वतीके चले जानेपर, बेहोश होकर

निश्चेष्ट पड़ी हुई रतिको नवीन वैधव्य के असह्य दुःखका अनुभव कराने के लिये अदृष्टने फिरसे होशमें लाया ।

विबोधनस्य कार्यमाह—

**अवधानपरे चकार सा, प्रलयान्तोन्मिषिते विलोचने ।**
**न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥**

**मूर्छान्त में प्रिय प्राणपति के दर्शनार्थ खुले नयन ।**
**पर तनिक जान सकी न वह अति लुप्तदर्शन था मदन ॥**

**अन्वयः**—सा प्रलयान्तोन्मिषिते विलोचने अवधानपरे चकार । किन्तु प्रियम् अतृप्तयोः तयोः अत्यन्तविलुप्तदर्शनं न विवेद ।

**व्याख्या**—सा=रतिः, प्रलयान्तोन्मिषिते=मूर्च्छाऽवसानोन्मीलिते, विलोचने=नेत्रे, अवधानपरे=प्रणिधानपरे, दिदृक्षया सावधाने इत्यर्थः । चकार=अकरोत् । किन्तु, प्रियं=वल्लभं, काममित्यर्थः । अतृप्तयोः=तृप्तिं न गतयोः, नित्यदिदृक्षमाणयोरित्यर्थः । तयोः=लोचनयोः, दर्शनक्रियाऽपेक्षया सम्बन्धे षष्ठी । अत्यन्तविलुप्तदर्शनम्=अत्यर्थविनष्टावलोकनं, न विवेद=न ज्ञातवती ।

**व्युत्पत्तिः**—प्रलयान्तोन्मिषिते=प्रलयस्य अन्तः प्रलयान्तः, "प्रलयो नष्टचेष्टता" इत्यमरः । प्रलयाऽन्ते उन्मिषिते प्रलयान्तोन्मिषिते, ते । अवधानपरे=अवधानं परं ययोस्ते अवधानपरे, ते, "अवधानं समाधानं प्रणिधानं तथैव च" इति कोषः । प्रियं=प्रीणातीति प्रियः, तं प्रियम् "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभ प्रियम्" इत्यमरः । अतृप्तयोः=न तृप्ते अतृप्ते, तयोः अतृप्तयोः, अत्यन्तविलुप्तदर्शनम्=अत्यन्त विलुप्तं दर्शनं यस्य सः अत्यन्तविलुप्तदर्शनः, तम् अत्यन्तविलुप्तदर्शनं । विवेद="विद ज्ञाने" इति धातोर्लिट् ।

**भावार्थः**—रतिः मूर्च्छासमाप्तौ कृतोन्मेषे नेत्रे कामं द्रष्टुमिच्छया सावधाने चकार, किन्तु हरकोपानलोद्गमनसमय एव मोहमुपगतत्वादात्मकान्तं कामदेवं मृतं न ज्ञातवतीति भावः ।

**भाषा**—होशमें आनेपर रतिने कामदेवके दर्शनकी इच्छासे आख खोलकर देखा, किन्तु इन तरसी हुई अपनी आखों के लिये अब कामदेवका दर्शन अत्यन्त दुर्लभ है, यह बात "शङ्करके नेत्राग्नि निकलते समय ही स्वयं मूर्च्छित हो जानेसे" वह न जान सकी ।

विलोचनयोरवधानपरत्वविधानस्य फलमाह—

**अयि जीवितनाथ! जीवसीत्यभिधायोत्थितया तया पुरः।**
**ददृशे पुरुषाकृति क्षितौ, हरकोपाऽनलभस्म केवलम्॥ ३॥**

क्या प्राणनाथ! सजीव है उठती हुई रति ने कहा।
नर-सदृश हर-क्रोधाग्नि का भूपर भसम देखा महा॥

**अन्वयः**—अयि जीवितनाथ! जीवसि? इति अभिधाय उत्थितया तया पुरः क्षितौ पुरुषाकृति केवल हरकोपाऽनलभस्म ददृशे।

**व्याख्या**—अयि जीवितनाथ!=हे प्राणनाथ, जीवसि=प्राणधारणं करोषि कच्चित्?, इति=एतत्, अभिधाय=उक्त्वा, उत्थितया==कृतोत्थानतया, तया= रत्या, पुरः=अग्रे, क्षितौ = पृथिव्या, पुरुषाकृति = नराऽऽकारं, केवलम् = एकं, हरकोपाऽनलभस्म=ईश्वरक्रोधाऽग्निभसित, ददृशे=दृष्टम्, न तु पुरुष इत्यर्थः।

**व्युत्पत्तिः**—अयि = "अयि प्रश्नाऽनुनयोः" इति विश्वः। जीवितनाथ = जीवितस्य नाथः जीवितनाथः, तत्सम्बुद्धौ हे जीवितनाथ!। जीवसि = "जीव प्राणधारणे" इति धातोर्लट्। अभिधाय=अभ्युपसर्गपूर्वकात् "डुधाञ् धारणपोषणयोः" इति धातोः क्त्वाप्रत्ययः, तस्य ल्यबादेशः। क्षितौ="क्षोणिर्ज्या काश्यपी क्षितिः" इत्यमरः। पुरुषाकृति=पुरुषस्य आकृतिरिव आकृतिर्यस्य तत् पुरुषाकृति, कर्मपदं, 'हरकोपाऽनलभस्म' इत्यस्य विशेषणम् परं "ददृशे" इति क्रियापदेन उक्तत्वात् तस्मात् प्रथमा, "कर्मणि द्वितीया" इत्यत्र "अनभिहिते" इत्यस्याधिकारात् द्वितीयाया अप्राप्तेः। हरकोपानलभस्म=कोप एव अनल इति,कोपाऽनलः, "मयूरव्यंसकादयश्च" इति रूपकसमासः, "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ"इति "आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः"इति चाऽमरः। हरस्य कोपाऽनलः हरकोपानलः, तस्य भस्म हरकोपानलभस्म। ददृशे="दृशिर् प्रेक्षणे" इति धातोः कर्मणि लिट्। अनेन श्लोकेन करुणरसस्य विभावोद्बोधो दर्शितः।

**भावार्थः**—हरकोपानलनिष्पतनानन्तरमेव मोहमुपगता रतिः ईषन्मोहविगमानन्तरं पुरस्तात्पतितं प्रियशरीरसंस्थानमापाततः पूर्ववदेवावलोक्य सत्वरमुत्थाय"अयि प्राणनाथ! जीवसि कच्चिदि" त्यभिधाय तत्समीपमुपगम्य सम्यगवलोकनान्तरं भूमौ पतितं हरकोपानलभस्ममात्रमवलोकयामास, न प्रियमिति भावः।

**भाषा**—रतिः आपाततः पूर्ववत् सामने पड़ा हुआ कामके शरीरसंस्थानको देख, हे प्राणनाथ! जीवित हो क्या! ऐसा कहती हुई जलदी से पास जाकर

अच्छी तरह से देखती है तो केवल शङ्कर के कोपाग्नि की पड़ी हुई राख दिखाई पड़ी, प्रिय कामका दर्शन नहीं हुवा ।

भस्ममात्रावलोकनोद्बोधितस्य करुणस्यानुभावव्यभिचार्यादिकं प्रपञ्चयति—

**अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।**
**विललाप विकीर्णमूर्धजा, समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥**

**रज मय उरज थे केश बिखरे विह्वला होने लगी ।**
**वनभूमि को निज सम बनाती इस तरह रोने लगी ॥**

**अन्वयः**—अथ पुनः एव विह्वला वसुधालिङ्गनधूसरस्तनी विकीर्णमूर्धजा सा स्थलीं समदुःखा कुर्वती इव विललाप ।

**व्याख्या**—अथ=अनन्तरं, प्रियतमस्यात्यन्तिकविनाशावगमनाऽनन्तरमित्यर्थः । पुनः एव = भूय एव, विह्वला = विक्लवा, वसुधालिङ्गनधूसरस्तनी = पृथिव्याश्लेषेषत्पाण्डुकुचा, विकीर्णमूर्धजा = विक्षिप्तकेशा, सा = रतिः, स्थलीं = वनभूमिं, तत्रत्यान्प्राणिनः इत्यर्थः । एषोऽर्थः लक्षणया प्राप्यते "मञ्चाः क्रोशन्ति" इतिवत् । समदुःखा=तुल्यपीडा, स्वतुल्यशोकामित्यर्थः । कुर्वती इव = कुर्वाणा इव, विललाप = परिदेवितवती, विलापमकरोदित्यर्थः ।

**व्युत्पत्तिः**—विह्वला="विक्लवो विह्वलः स्यात्तु" इत्यमरः । वसुधाऽऽलिङ्गनधूसरस्तनी=वसुधाया आलिङ्गनं वसुधालिङ्गनं, "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" इत्यमरः । धूसरौ स्तनौ यस्याः सा धूसरस्तनी, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङी, "ईषत्पाण्डुस्तु धूसरः" इत्यमरः । वसुधालिङ्गनेन [ हेतुना ] धूसरस्तनी वसुधालिङ्गनधूसरस्तनी । विकीर्णमूर्धजा=विशेषेण कीर्णाः विकीर्णाः, "सुप्सुपा" इति समासः । मूर्ध्नि जाताः मूर्धजाः "सप्तम्यां जनेर्डः" इति डप्रत्ययः, "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । विकीर्णाः मूर्धजाः यस्याः सा विकीर्णमूर्धजा । स्थलीं="जानपदकुण्डगोणस्थल" इत्यादिना ङीष् । समदुःखा=समं दुःखं यस्याः सा समदुःखा, तां समदुःखां । कुर्वती = करोतीति कुर्वती, "डुकृञ् करणे" इति धातोः लटः स्थाने शत्रादेशः, ततः स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप्प्रत्ययः । विललाप = व्युपसर्गपूर्वकात् "लप व्यक्तायां वाचि" इति धातोर्लिट् । "विलापः परिदेवनम्" इत्यमरः ।

अनेन पूर्वमुत्थिताया रतेः परमार्थावगमनान्तरमवनतशरीरतया भूमौ पतनं द्योत्यते । इदं च ग्लानेरनुभावः । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—काममृत्युनिश्चयानन्तरं, पुनरपि विक्लवा रतिः पृथिव्या निपत्य-रजोदूषितकुचा, विक्षिप्तकेशा च भूत्वा सकरुणविलापं कुर्वती पश्यता पक्षिमृग-वनचरादीनामपि दुःखोत्पादनाद् वनभूमिमपि स्वसमानदुःखामकरोदिवेति भावः ।

**भाषा**—कामदेवके मृत्युका निश्चय होनेसे फिरसे दुःखित हो विलाप करती हुई जमीनपर लोटने से गरदासे लथपथ हुई बिखरे बाल वाली रतिको देखकर वहां के पशुपक्षिमृगादिकों को भी दुःख होने से मानों रतिने उस अरण्य भूमि को भी अपने समान दुःखित बना दिया था ।

अथ विलापप्रकारानाह—

**उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।**
**तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥**

**प्रिय ! कान्ति से तव तन विलासी मनुज का उपमान था ।**
**स्त्री कठिन होतीं, यों उसे लख उर न फटता सर्वथा ।**

**अन्वयः**—तव यत् करणं कान्तिमत्तया विलासिनाम् उपमानम् अभूत्, तत् इदम् ईदृशीं दशां गतं, तथाऽपि अहं न विदीर्ये, हि स्त्रियः कठिनाः खलु ।

**व्याख्या**—हे प्राणवल्लभ !, तव=भवतः, यत्, करणम्=गात्रं, कान्ति-मत्तया=सौन्दर्येण [ हेतुना ], विलासिना=विलासिपुरुषाणाम् , उपमानम् = उ-पमाऽऽधारम् , अभूत्=अभवत् , तत्=ते करणं=गात्रम् , इद=पुरोवर्ति, ईदृ-शीम् = एतादृशीं, दशाम्=अवस्था, गतं = प्राप्त, तथाऽपि अह, न विदीर्ये=न विदीर्णा भवामि, हि=यतः, स्त्रियः = योषितः, कठिना = कठोराः, खलु=निश्च-येन, भवन्तीति शेषः ।

**व्युत्पत्तिः**—करणं=क्रियते अनेन इति करणं "डुकृञ् करणे" इति धातोः "करणाऽधिकरणयोश्च" इति करणे ल्युट् प्रत्ययः । "युवोरनाकौ" इति अना-देशः । "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः । कान्तिमत्तया=प्रश-स्ता कान्ति र्यस्य तत् कान्तिमत् , प्राशस्त्ये मतुप् । कान्तिमतो भावः कान्तिमत्ता, तया कान्तिमत्तया, "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः । विलासिना=विलसन-शीलाः विलासिनः, तेषा विलासिना, व्युपसर्गपूर्वकात् लसधातोः "वौ कषलस-कत्थस्रम्भः" इति घिनुण्प्रत्ययः । उपमानम्=उपमीयते अनेन इति उपमानम् , ल्युट्प्रत्ययः । विदीर्ये = व्युपसर्गपूर्वकात् "दॄविदारणे" इति धातोः कर्तरि लट् । स्त्रियः=स्त्रीशब्दस्य जसि"स्त्रियाः" इति इयङ् । "स्त्री योषिदबला योषा नारी

सीमन्तिनी वधूः" इत्यमरः । कठिनाः="दारुणं कठिनं क्रूरं कठोरं निष्ठु दृढम्" इत्यमरः । अस्मिन् श्लोके कारणात्कार्यसमर्थनस्वरूपोऽर्थान्तरन्यासोऽलङ्कारः । विलासलक्षणं च

"धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाश्चिता ।

स्मितपूर्वं तथाऽऽलापो विलास इति कीर्तितः ॥" इति ।

**भावार्थः**—हे प्राणवल्लभ ! तव शरीरं सौन्दर्येण लोके विलासिपुरुषाणामुपमानभूतमभूत् । "यथा हि लोकोक्तिः, कामस्य शरीरमिवास्य शरीरं चारुतरमिति" तदिदं तव शरीरं सम्प्रति भस्मसाद्भावं प्राप्तं, किन्तु तादृशे त्वयीदृशीमवस्थां गतेऽपि यतोऽहं न म्रीये, ततोऽहं "स्त्रियो निष्ठुरा एवेति" तर्कयामीति भावः।

**भाषा**—हे प्यारे काम ! तुह्मारा शरीर सुन्दरतासे दुनिया में शौकीन पुरुषों का उपमान भूत हुवा था "कहावत है की इस पुरुष का शरीर काम के शरीर ऐसा सुन्दर है" वह तुह्मारा शरीर खाक होकर इस अवस्था को प्राप्त हुआ है, यह देखकर भी मेरी जान नही निकलती है, इसलिये "स्त्री जाति अत्यन्त कठोर है" यह मैं अनुमान करती हूं ।

प्रणयिनीं मा परित्यज्य क्व नु खलु गतोऽसीत्यनुगमनाकाङ्क्षाया सोन्मादमाह—

**क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।**
**नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवाऽसि विद्रुतः ॥ ६ ॥**

**पुल तोड़ ज्यों जाता चला जल कमलिनी को छोड़कर ।**
**प्राणेश ! ज्यों तज मग चले सोहार्द-नाता तोड़कर ॥**

**अन्वयः**—हे प्रिय ! क्षतसेतुबन्धनः जलसंघातः नलिनीम् इव त्वदधीनजीविता मा विनिकीर्य क्षणभिन्नसौहृदः सन् क्व नु विद्रुतः असि ।

**व्याख्या**—हे प्रिय = हे वल्लभ ! क्षतसेतुबन्धनः = भग्नाऽऽलिबन्धः, जलसङ्घातः = अम्भःसमूहः, नलिनीम् इव = कमलिनीम् इव, जलैकाऽऽधीनजीवितामिति शेषः, त्वदधीनजीविता = त्वन्निघ्नप्राणा, मा = रतिं, विनिकीर्य = विक्षिप्य, त्यक्त्वेत्यर्थः । क्षणभिन्नसौहृदः = क्षणात्यक्तसौहार्दः सन् , क्व नु = कुत्र वा, विद्रुतः असि=पलायितः असि ।

अत्र सेतुसौहृदयोः स्थितिकारणत्वेन परस्परसाम्यं प्रतीयते ।

**व्युत्पत्तिः**—क्षतसेतुबन्धनः = सेतोः बन्धनं सेतुबन्धनं, "सेतुरालौ स्त्रिया पुमान्" इत्यमरः । स्त्रीलिङ्गे विद्यमानस्य आलिशब्दस्य अर्थे वर्त्तमानः सेतुशब्दः

पुंल्लिङ्गे अस्ति इति तदर्थः । क्षतं सेतुबन्धनं येन स क्षतसेतुबन्धनः । जलसङ्घातैः = जलानां सङ्घातः जलसङ्घातः । त्वदधीनजीविता = तव अधीनं त्वदधीनं, "प्रत्ययोत्तरपदयोश्च" इति उत्तरपदे परे युष्मच्छब्दस्य त्वदादेशः । त्वदधीनं जीवितं यस्याः सा त्वदधीनजीविता, ता त्वदधीनजीविता, क्षणभिन्नसौहृदः = शोभनं हृदयं यस्य स सुहृत्, "सुहृद्दुर्हृदौ मित्राऽमित्रयोः" इति निपातः । "अथ मित्रं सखा सुहृत्" इत्यमरः । सुहृदो भावः सौहृदं "हायनाऽन्तयुवादिभ्योऽण्" इत्यण्प्रत्ययः । "हृदयस्य हृल्लेखयदण्लासेषु" इति हृदयस्य हृदादेशः । अणि "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । हृद्भूतस्य अणुविधाने तु उभयपदवृद्धिः स्यात्, यथा सुहृदो भावः सौहार्दमिति । तदेवाह काव्याऽलङ्कारसूत्रे वामनः "सौहृददौर्हृदशब्दावनणि हृद्भावात्" इति । विद्रुतः = व्युपसर्गपूर्वकात् "द्रु गतौ" इति धातोर्निष्ठायां क्तप्रत्ययः । अत्रोपमालङ्कारः ।

**भावार्थः**—हे वल्लभ ! यथा प्रचण्डजलप्रवाहः सेतुमवभज्य जलौकाधीनजीविता कमलिनीमितस्ततो विक्षिप्य त्वरित गच्छति, तद्वत् त्वं मत्सौहार्दं भङ्क्त्वा, त्वदेकाधीनजीविता मा परित्यज्य, कस्मिन् प्रदेशे गतोऽसीति भावः ।

**भाषा**—जैसे जल का प्रचण्ड प्रवाह बाधको तोड़ कर जलाधीन जीवन वाली कमलिनी को इधर उधर बिखराता हुवा जलदी से निकल जाता है, उसी तरह तुमभी मेरी मुहब्बत को तोड़कर तुह्मारे ही अधीन जीवन वाली मुझ रति को छोड़ कर कहा चले गये हो ? ।

अथवा प्रणयिनीं मां परित्यज्य गतोऽसीति यन्मया कथितं, तदनुचितमेव, विश्लेषमात्रेऽपि कारणाभावादित्याह –

**कृतवानसि विप्रियं न मे, प्रतिकूलं न च ते मया कृतम् ।**
**किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥**

मैने अप्रिय न किया तथा तुमने अप्रिय न किया कहीं ।
क्या हेतु जो मुझ विलपती को दे रहे दर्शन नहीं ॥

**अन्वय**—हे प्रिय ! त्वं, मे विप्रियं कृतवान् न असि, मया च ते प्रतिकूलं न कृतम् ; अकारणम् एव विलपन्त्यै रतये किं दर्शनं न दीयते ।

**व्याख्या** हे प्रिय=हे दयित ! त्व, मे=मम, विप्रियम्=अप्रियं, कृतवान्=कर्ता, न असि=न भवसि, मया च, ते तव, प्रतिकूलम्=अप्रिय, न कृत = न विहितम् । अकारणम् एव = निष्कारणम् एव, परस्पराऽपकाररूपकारणाऽभावे-

ऽपीत्यर्थः । विलपन्त्यै=विलापं कुर्वन्त्यै, रतये=मह्यं, किं=कथं, दर्शनं=विलोकनं, न दीयते = न वितीर्यते ।

**व्युत्पत्तिः**—कृतवान् = अकरोत् इति कृतवान्, "डुकृञ् करणे" इति धातोः "निष्ठा" इति सूत्रेण क्तवतुप्रत्ययः, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुम् । अकारणम् = अविद्यमानं करणं यस्मिन् कर्मणि तद्यथा तथा अकारणं, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति वार्तिकेन नञ्बहुव्रीहिः । विलपन्त्यै = विलपतीति विलपन्ती, तस्यै विलपन्त्यै, शतृप्रत्ययः । रतये = "न दीयते" इति क्रियाग्रहणात् "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानत्वाच्चतुर्थी ।

अत्र "रतये" इति स्वनामग्रहणेनात्मनः प्राचीनं प्रेमविषयत्वमनुस्मारयतीत्यर्थान्तरसङ्क्रमितवाच्यध्वनिः ।

**भावार्थः**—हे प्रिय ! त्वया ममानिष्टं कर्म स्वप्नेऽपि नाचरितम् । मया च तवानिष्टं कर्म न कृतम् । उभयमेव हि द्वन्द्वानां परस्परविश्लेषकारणम् । पूर्वोक्तयोरेकस्यापि कारणस्याभावेऽपि त्वं रुदत्या मम रतेः दृष्टिगोचरः कथं न भवसीति भावः।

**भाषा**—हे नाथ ! तुमने स्वप्न में भी कभी मेरी बुराई नहीं की, और न मैंने ही कभी तुम्हारी कोई बुराई की है, तब विना कारण ही क्यों बिलखती हुई मुझे अपना दर्शन नहीं देते हो ।

इत्थं निरस्तेऽपि गमने दर्शनाभावात् पुनरपि गमनमेवावधार्य गमने कारणमाशङ्कते—

**स्मरसि स्मर ! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।**
**च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि च ॥ ८ ॥**

गोत्र-स्खलन से मेखला गुण में बँधे क्या याद है ? ।
या कर्ण-भूषण कमल ताडन का अपार विषाद है ॥

**अन्वयः**—हे स्मर ! गोत्रस्खलितेषु मेखलागुणैः बन्धनं स्मरसि ? उत च्युतकेशरदूषितेक्षणानि अवतंसोत्पलताडनानि च स्मरसि ?

**व्याख्या**—हे स्मर=हे काम !, गोत्रस्खलितेषु=नामव्यत्यासेषु, प्रमादात् स्वयं मत्सपत्नीनामोच्चारणेषु कृतेष्वित्यर्थः । मेखलागुणैः=काञ्चीसूत्रैः, बन्धनं = प्रसितिं, स्मरसि=अध्येषि ?, उत=अथवा, च्युतकेशरदूषितेक्षणानि=भ्रष्टकिञ्जल्कदूषितनयनानि, अवतंसोत्पलताडनानि च=कर्णपूरोत्पलप्रहाराश्च, स्मरसि=अध्येषि ।

**व्युत्पत्तिः**—गोत्रस्खलितेषु=गोत्रे स्खलितानि गोत्रस्खलितानि, तेषु गोत्रस्खलितेषु, "गोत्रं नाम्न्यचले कुले" इति विश्वः । मेखलागुणैः=मेखलायाः गुणा इति मेखलागुणाः, तैः मेखलागुणैः, बन्धनं="बन्धनं प्रसितिश्चारः" इत्यमरः । उत= "विकल्पे कि किमूत च" इत्यमरः । च्युतकेशरदूषितेक्षणानि=च्युताश्च ते केशराः च्युतकेशराः,"किञ्जल्कः केशरोऽस्त्रियाम्" इत्यमरः । दूषिते ईक्षणे येषु तानि दूषितेक्षणानि, च्युतकेशरैःदूषितेक्षणानि च्युतकेशरदूषितेक्षणानि तानि, अवतंसोत्पलताडनानि=अवतंसस्य उत्पलानि अवतंसोत्पलानि, तैः ताडनानि अवतंसोत्पलताडनानि, तानि, सधूलिक्षेपताडनानीत्यर्थः ।

**भावार्थः**—हे मनोज ! रहसि सपत्नीनामाक्षरग्रहणे सति मया पूर्वं काञ्ची गुणैर्यत्तव बन्धनमाचरितम्, अथ च पतितकिञ्जल्कपीडितनेत्रं यथा तथा तव मुखे मया कर्णपूरकुवलयेन ताडनञ्च यत् कृतमासीत् । एतादृश्योर्मत्कृतयोरपराधयोरन्यतरस्य स्मरणेनैव त्वमिदानीं मत्समीप नोपयासि किम् ? इति भावः ।

**भाषा**—हे स्मर ! किसी समय एकान्तमें तुह्मारे मुखसे धोखे से निकला भया सपत्नी का नाम सुनकर मैंने प्रणय कोपसे तुमको काञ्चीगुणसे बाधा था, और अपने कर्ण भूषण कुवलय से तुह्मारे मुखमें ताडन कियाथा, जिस के पराग पड जाने से तुह्मारे आखों में कुछ तकलीफ भी हुई थी । इस प्रकार किये हुवे मेरे कसूरों को याद कर के ही मेरे सामने नही आरहे हो क्या !

अथवा त्वं मयि प्रागपि निःस्नेह एवासीत्याह—

**हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।**
**उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥**

**तुम हृदय में वसती प्रिये ! यह बात मिथ्या थी अहो ।**
**मैं नष्ट क्यों होती नहीं जब तुम अनंग बने कहो ॥**

**अन्वयः**—"हृदये वससि" इति मत्प्रियं यत् अवोचः, तत् कैतवम् अवैमि; इदम् उपचारपदं न चेत् त्वम् अनङ्गः, कथं रतिः अक्षता ।

**व्याख्या**—हृदये=हृदि, वससि=निवससि । अयं स्मरवाक्याऽनुवादः, इति=एवं रूपं, मत्प्रियं=मद्वल्लभं, वचनमिति शेषः । यत्, अवोचः=उक्तवानसि, तत्, कैतवं=मिथ्या, अवैमि=मन्ये; इदं=वचनम्, उपचारपद=चाटुस्थानं, सम्मानवाक्यमित्यर्थः । न चेत्-न यदि, त्वं=भवान्, अनङ्गः=अशरीरः, अभूः, कथं=केन प्रकारेण, रतिः=कामप्रिया, अहमिति शेषः । अक्षता

अविनष्टा जाता । आश्रयनाशेऽपि आश्रितमविनष्टमिति विरोधादित्यर्थः ।

**व्युत्पत्तिः**—मत्प्रियं = मम प्रिय मत्प्रियं, तत् । अवोचः="ब्रूञ् व्यक्ताया वाचि" इति धातोर्लुङि "वच उम्" इति उमागमः । कैतवं="कपटोऽस्त्री व्याज-दम्भोपधयश्छद्मकैतवे । कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः । अवैमि=अवोपसर्गपूर्वकात् "इण् गतौ" इति धातोर्लटि उत्तमपुरुषे रूपमिदम् । अवोपसर्गयोगादयं ज्ञानाऽर्थकः । उपचारपदम्=उपचारस्य पदम् उपचारपदं, "परस्य रञ्जनार्थं यद-सत्यभाषणं स उपचारः" । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । अनङ्गः = अविद्यमानम् अङ्गं यस्य सः अनङ्गः, नञ्बहुव्रीहिः । अक्षता=न क्षता अक्षता, "नञ्" इति नञ्समासः । "नलोपो नञः" इति नकारलोपः।

**भावार्थः**—हे रते ! त्वं सर्वदा मे मनसि स्थितिं करोषीति यत् त्वं मत्प्रियमब्रवीः । तत् केवलं मत्प्रसादनार्थं तव धूर्तालापमेवेत्यवगच्छामि । अन्यथा यद्यहं सत्यमेव ते हृदयं वसामि, तर्हि त्वयि भस्मीभूतेऽपि मम क्षतमात्रेणापि रहितत्वं कथमुपपद्यत इति भावः ।

**भाषा**—तुम हरवक्त कहा करते थे कीं "हे रति ! तुम निशदिन मेरे हृदय में बसती हो," यह तुह्मारा कहना मुझे खुश करने के लिये केवल फुसलाना ही था, ऐसा अब मालुम होता है, नही तो अगर मैं सचमुच ही तुह्मारे हृदय में वास करती तो तुह्मारे खाक होने पर मैं ज्यों की त्यों कैसे बनी रहती ।

अथ प्रियविरहे स्वकर्तव्यमाह—

**परलोकनवप्रवासिनः, प्रतिपत्स्ये पदवीमहं तव ।**
**विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥**

हे नव प्रवासी अनुगमन करती ठगा कर जग गया ।
आधीन तेरे जगत-सुख वह प्राणि-तन से भग गया ॥

**अन्वयः**—परलोकनप्रवासिनः तव पदवीं प्रतिपत्स्ये, विधिना एष जनः वञ्चितः, देहिना सुखं त्वदधीनं खलु ।

**व्याख्या**—परलोकनवप्रवासिनः = स्वर्गनूतनप्रवासिनः, अचिरप्रोषितस्येत्यर्थः । अनेन अनुगमनकालाऽनतिक्रमण सूच्यते । तव = भवतः, पदवीं=मार्गं, प्रतिपत्स्ये = आश्रयिष्ये, मृतं त्वा सद्य एवानुमरिष्यामीत्यर्थः । तर्हि तदानीमेव त्वं किं न मृतासीत्यत्राह—विधिना = दैवेन, एषः = अयं, जनः = लोकः, अहमित्यर्थः । वञ्चितः = प्रतारितः, कुतः, देहिना = प्राणिना, सुखम् = आनन्दः,

त्वदधीनं खलु=भवदायत्तं खलु।

**व्युत्पत्तिः**—परलोकनप्रवासिनः=परश्चाऽसौ लोकः परलोकः, प्रवासः अस्याऽस्तीति प्रवासी, "अत इनिठनौ" इति इनिप्रत्ययः। नवश्चाऽसौ प्रवासी नवप्रवासी, परलोकस्य नवप्रवासी इति परलोकनवप्रवासी, तस्य परलोकनवप्रवासिनः। चिरप्रवासिनो हि पदवी दुरबोधा स्यात्, नवप्रवासिनस्तु पथिकजनानुयोगादिभिः सुबोधेति नवशब्दस्य ग्रहणम्। विधिना="दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। देहिना=देहः अस्ति येषा ते देहिनः, तेषा देहिनाम् इनिप्रत्ययः। देहशब्दस्य "अर्धर्चादयः पुंसि च" इत्यत्र पाठात् पुंनपुंसकत्वं, "कायो देह क्लीबपुंसोः" इत्यमरः। "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यमरः। सुखं="स्यादानन्दथुरानन्दः शर्मशातसुखानि च" इत्यमरः। त्वदधीनं=त्वयि अधीनं त्वदधीनम्, अधिशब्दस्य शौण्डादिकत्वात् "सप्तमी शौण्डैः" इति समासः। "अध्युत्तरपदात्" इति खप्रत्ययः। "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति खस्य ईनादेशः। "अधीनो निघ्न आयत्तः" इत्यमरः।

**भावार्थः**—हे प्रिय! परलोकमुद्दिश्य नवं यथा भवति तथा प्रवासं कर्तुमुद्यतस्य तव मार्गमहं सत्वरं प्रतिपत्स्ये। मृतं त्वा सद्य एवाहमनुमरिष्यामीत्यर्थः। तदानीं मे मोहं विदधता दैवेन प्रतारणा कृता। यतो हि न केवलं ममैव, किन्तु सर्वेषामपि प्राणिनां सुखं त्वदायत्तमिति प्रसिद्धमेवेति भावः।

**भाषा**—हे प्यारे! परलोक का नया प्रवास करने के लिए चले हुए तुम्हारे रास्ते से आकर मैं भी तुमसे बहुत जल्दी भेट करती हूं। अदृष्ट ने मूर्च्छित कर मुझे ठग लिया, क्योंकि मेरा ही नहीं, सकल संसार का सुख तुम्हारे अधीन है।

अथ सुखस्य तदधीनत्वमुपपादयति—

**रजनीतिमिराऽवगुण्ठिते, पुरमार्गे घनशब्दविक्लवाः।**
**वसतिं प्रिय! कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः॥११॥**

घन रव विकल तम से ढके पथ में पढी जो भामिनी।
वह पहुँचती कामुक निकट तेरी मदद से कामिनी॥

**अन्वयः**—हे प्रिय! रजनीतिमिराऽवगुण्ठिते पुरमार्गे घनशब्दविक्लवाः प्रियाः कामिना वसतिं प्रापयितुं त्वत् ऋते कः ईश्वरः।

**व्याख्या**—हे प्रिया=हे वल्लभ!, रजनीतिमिराऽवगुण्ठिते=रात्रितमआवृते, पुरमार्गे=नगरवर्त्मनि, घनशब्दविक्लवाः=मेघगर्जितभीताः, प्रियाः=कामिनीः

[ कर्म ], कामिना = कामुकाना, वसतिं = स्थानं, प्रापयितुं = नेतुं, त्वत्=भवतः, ऋते = विना, कः, ईश्वरः=समर्थः । न कश्चिदित्यर्थः ।

न हि कामान्धानां समयाऽसमयविचारो भवति। उक्त च—

"न पश्यति च जन्मान्धः, कामाऽन्धो नैव पश्यति ।
मदोन्मत्ता न पश्यन्ति ह्यर्थी दोषं न पश्यति ।।' इति ।।

**व्युत्पत्तिः—**हे प्रिय=प्रीणातीति प्रियः, "तत्सम्बुद्धौ हे प्रिय, प्रीञ् तर्पणे" इति धातोः कप्रत्ययः। रजनीतिमिराऽवगुण्ठिते=रजन्याः तिमिरं रजनीतिमिरं, "विभावरीतमस्विन्यौ रजनी यामिनी तमी" इति "अन्धकारोऽस्त्रिया ध्वान्तं तमिस्रं तिमिर तमः" इत्यमरः। रजनीतिमिरेण अवगुण्ठितः रजनीतिमिराऽवगुण्ठितः, तस्मिन् रजनीतिमिरावगुण्ठिते । पुरमार्गे=पुरस्य मार्गः पुरमार्गः, तस्मिन् पुरमार्गे, घनशब्दविक्लवाः = घनस्य शब्दाः घनशब्दाः, "घनजीमूतमुदिरजलमुग्धूमयोनयः" इत्यमरः। घनशब्देभ्यः विक्लवाः घनशब्दविक्लवाः, ताः। कामिनां = कामः अस्ति येषा ते कामिनः, तेषा कामिना । प्रापयितु = णिजन्तात् प्रोपसर्गपूर्वकात् "आप्लृ" धातोः तुमुन्प्रत्ययः। त्वत् = ऋतेशब्देन योगे "अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी ।

**भावार्थः—**घनागमनसमये रात्रौ गाढान्धकारेण भयजनकेषु राजमार्गेषु भयजनकेषु मेघजनकेषु श्रूयमाणेषु च भीताना कामिनीना कामुकगृहप्राप्तौ सम्प्रति त्वद्विना कः सहायको भविष्यतीति भावः।

**भाषा—**वर्षा काल में रात के वक्त गाढ अन्धःकार से भयानक रास्तों में बिजली की भयप्रद कडकडाहट से डरनेवाली अभिसारिकाओं को प्रिय के घर तक पहुचने में अब तुह्मारे विना सहायक होगा।

ननु वारुणीमद एव प्रियाः प्रियवसतिं प्रापयिष्यति, किं मयेत्यत्राह—

**नयनान्यरुणानि घूर्णयन्, वचनानि स्खलयन्पदे पदे ।**
**असति त्वयि वारुणीमदः, प्रमदानामधुना विडम्बना ॥ १२ ॥**

पद पद वचन का स्खलन प्रमदा चपल दृग लालीसना ।
तेरे विना यह मद्य मद, है व्यर्थ और विडम्बना ॥

**अन्वयः**—अरुणानि नयनानि घूर्णयन् पदे पदे वचनानि स्खलयन् प्रमदाना वारुणीमदः अधुना त्वयि असति विडम्बना ।

**व्याख्या**—अरुणानि = आरक्तानि, नयनानि=नेत्राणि, घूर्णयन्=भ्रमयन्,

पदे पदे = प्रतिपद, वचनानि=वचासि, स्खलयन्=विपर्यासयन्, प्रमदाना= कामिनीना, वारुणीमदः = मद्यमदः, अधुना = साम्प्रतं, त्वयि = भवति, असति= अविद्यमाने, विडम्बना=अनुकृतिमात्रम्, मदनाऽभावे मदस्य निष्फलत्वादित्यर्थः।

व्युत्पत्तिः—घूर्णयन्=घूर्णयतीति घूर्णयन् "घूर्ण भ्रमणे" इति धातोः शतृप्रत्ययः। पदे पदे=वीप्साया द्विरुक्तिः। वचनानि = कर्म, "व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः। स्खलयन्=स्खलयतीति स्खलयन्, शतृ· प्रत्ययः। प्रमदाना = प्रकृष्टः मदः यासा ताः प्रमदाः, तासा प्रमदाना। वारुणी· मदः=वरुणस्य इयं वारुणी, "सुरा प्रत्यक् च वारुणी"इत्यमरः। वारुण्याः मदः वारुणीमदः। "सम्मोहानन्दसम्भेदो मदिरादिकृतो मदः" इति मदलक्षणम्। असति = अस्तीति सन्, न सन् असन्, तस्मिन् असति।

भावार्थः—हे काम! प्रथमं नेत्रयोः शोणिमानमातन्वन्, अनन्तरं वचनेषु स्खलितानि जनयन् स्त्रीणां मदिरादिकृतो मदः सम्प्रति त्वद्विना भावशून्यत्वात् तद्दर्शिना केवलं हासकारणं भविष्यतीति भावः।

भाषा—आखों को लाल बनाने वाला, बातों में जबान को लड़खड़ाने वाला, मदिरादि का पान करने से होने वाला नशा जब तुम्हारे बिना औरतों के उपहास मात्र का कारण हो जायगा।

हन्त त्वद्विना त्वत्परिच्छदा अपि सम्प्रति शोचनीयाः संवृत्ताः।

तत्रादौ प्रधानसुहृदश्चन्द्रस्य शोच्यत्वमाह—

**अवगम्य कथीकृतं वपुः, प्रियबन्धोस्तव निष्फलोदयः।**
**बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥**

तन शब्दशेष हुआ समझकर चन्द्र-उदय हुआ विफल।
बहुलान्त है तो भी तजेंगे क्षीणता बनकर विकल ॥

अन्वयः—हे अनङ्ग! प्रियबन्धोः तव वपुः कथीकृतम् अवगम्य, निष्फलोदयः निशाकरः बहुले गते अपि तनुता दुःख मोक्ष्यति।

व्याख्या—हे अनङ्ग = हे अशरीर!, प्रियबन्धोः = प्रियसखस्य, तव = भवतः, वपुः = शरीरं, [ कर्म ], कथीकृतं = शब्दमात्रावशिष्टम्' अवगम्य = ज्ञात्वा, निष्फलोदयः=विफलाविर्भावः, उद्दीप्याऽभावात् उद्दीपनवैफल्यमित्यर्थः। निशाकरः=चन्द्रः, बहुले=कृष्णपक्षे, गते अपि=याते अपि, तनुता=कार्श्यं, दुःखं-कष्टं [ यथा तथा, क्रि० वि० ], मोक्ष्यति=त्यक्ष्यति।

**व्युत्पत्तिः**—अनङ्गः=अविद्यमानम् अङ्गं यस्य सः अनङ्गः, तत्सम्बुद्धौ हे अनङ्ग, प्रियबन्धोः=प्रियाः बन्धवः यस्य सः प्रियबन्धुः, तस्य प्रियबन्धोः । वपुः="गात्र वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । कथीकृतम्=अकथा कथा यथा सम्पद्यते तथा कृत कथीकृत, तत् । च्विप्रत्ययः । अवगम्य=अवोपसर्ग-पूर्वकात् गम्लृधातोः क्त्वाप्रत्ययः, तस्य ल्यबादेशः । निष्फलोदयः=फलात् निर्गतः निष्फलः, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः । निष्फलः । उदयः यस्य सः निष्फलोदयः । निशाकरः=निशा करोतीति निशाकरः "कृञो हेतुता-च्छील्यानुलोम्येषु" इति टप्रत्ययः । "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्यमरः । तनुता=तनोर्भाव. तनुता, ता तनुता, तल् प्रत्ययः ।

**भावार्थः**—हे अनङ्ग ! प्रियमित्रस्य तव शरीरं कथावशेषीकृतं "मृतमिति यावत्" ज्ञात्वा कामिनीकामुकसम्भोगसौख्यरूपफलस्याभावेन वृथाविर्भूतश्चन्द्रः कृष्णपक्षे व्यतीतेऽपि "शुक्लपक्षेऽपीति यावत्" कृच्छ्रेणैव शरीरपुष्टिं प्राप्स्य-तीति भावः ।

**भाषा**—हे अनङ्ग ! प्रियमित्र तुह्मारे चले जाने से निष्फल उदय होने वाला यह चन्द्रमा शुक्ल पक्ष में भी मुश्किल से शरीरपुष्टि को पावेगा ।

सम्प्रति कामबाणस्य शोच्यत्वमाह—

**हरिताऽरुणचारुबन्धनः, कलपुंस्कोकिलशब्दसूचितः ।**
**वद सम्प्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥**

**हरिदरुण बन्धनमय मधुर पिक शब्द से सूचित सुघर ।**
**नूतन रसाल कुसुम बनेगा बाण किस जन का प्रखर ॥**

**अन्वयः**—हरिताऽरुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः नवचूतप्रसवः सम्प्रति कस्य बाणता गमिष्यति ? वद ।

**व्याख्या**—हरिताऽरुणचारुबन्धनः = पालाशारक्तसुन्दरबन्धनः, कलपुंस्को-किलशब्दसूचितः = मधुरपुरुषकोकिलनादाऽनुमापितः नवचूतप्रसवः = नूतनाम्र-कुसुमं, सम्प्रति = इदानीं, कस्य = पुरुषस्य, बाणता = शरत्वं, गमिष्यति = या-स्यति, वद = ब्रूहि ।

**व्युत्पत्तिः**—हरिताऽरुणचारुबन्धनः=हरितं च अरुणं च हरिताऽरुणं, "वर्णो वर्णेन" इति तत्पुरुषः । "पालाशो हरितो हरित्" इति "अव्यक्तरागस्त्व-रुणः" इत्युभयत्राप्यमरः । हरितारुणं चारु बन्धनं=वृन्तं पुङ्खश्च, यस्य स हरिता

रुणाचारुबन्धनः। "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः। कलपुस्कोकिलशब्दसूचितः=पुमांश्चासौ कोकिलः पुस्कोकिलः, "पुमः खय्यम्परे" इति रुः, "अनुनासिकात्परोऽनुस्वारः" इति अनुस्वारागमः, रोर्विसर्गः, ततः "संपुंकानां सो वक्तव्यः" इति सादेशः, पक्षे अनुनासिकागमः तत्र रूप—पुंस्कोकिलः इति। "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इति, "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यप्यमरः। पुस्कोकिलस्य शब्दः पुस्कोकिलशब्दः, कलश्चासौ पुंस्कोशब्दः कलपुम्कोकिलशब्दः, तेन सूचितः कलपुंस्कोकिलशब्दसूचितः। नवचूतप्रसवः = चूतस्य प्रसवः चूतप्रसवः, "आम्रश्चूतो रसालोऽसौ" इत्यमरः। नवश्चाऽसौ चूतप्रसवः नवचूतप्रसवः। बाणता = बाणस्य भावः बाणता, ता बाणताम्।

**भावार्थः**—हे कुसुमायुध! अद्य प्रभृति कलतरकोकिलालापश्रवणानुमितोदयं नीलरक्तमनोहरवृन्तं नूतनरसालकुसुमं त्वयि मृते सति कस्य शरत्व प्राप्स्यतीति कथयेति भावः।

**भाषा**—हे कुसुमायुध! कोयलके मधुर शब्द सुननेसे जिसके उदयका अनुमान किया जाता है, वह नीलालालबन्धन वाला, नया, आम का कुसुम इदानीं तुह्मारे परलोक जानेपर कहो किसका बाण बनेगा?।

धनुर्गुणस्यापि शोच्यत्वमाह—

**अलिपङ्क्तिरनेकशस्त्वया, गुणकृत्ये धनुषो नियोजिता।**
**विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम्॥ १५॥**

तेरी धनुष ज्या कार्य में बहुवार अलि श्रेणी लगी।
वह साथ मेरा दे रही गुञ्जार से दुख में पगी॥

**अन्वयः**—त्वया अनेकशः धनुषः गुणकृत्ये नियोजिता इयम् अलिपङ्क्तिः करुणस्वनैः विरुतैः गुरुशोका माम् अनुरोदिति इव।

**व्याख्या**—त्वया=भवता, अनेकशः=बहुशः, धनुषः=कार्मुकस्य, गुणकृत्ये=मौर्वीकार्ये, गुणवत्कर्मणि च, नियोजिता=अधिकृता, इयम्=एषा, अलिपङ्क्तिः = भ्रमरश्रेणी, करुणस्वनैः=दीनध्वनिभिः विरुतैः=कूजितैः, गुरुशोका=दुर्भरदुःखाम्, मा = रतिम्; अनुरोदिति इव = अनुशोचति इव।

**व्युत्पत्तिः**—अनेकशः=अनेकधा इति अनेकशः "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" इति शस्प्रत्ययः। गुणकृत्ये = गुणस्य कृत्यं, गुणकृत्य तस्मिन्

गुणकृत्ये । "गुणो मौर्व्यप्रधानयोः" इत्यमरः । अलिपङ्क्तिः = अलीनां पङ्क्तिः अलिपङ्क्तिः, "वीथ्यालिरावलिः पङ्क्तिः" इत्यमरः। करुणस्वनैः=करुणाः स्वनाः येषु तानि करुणस्वनानि, तैः करुणस्वनैः, गुरुशोका=गुरुः शोकः यस्याः सा गुरुशोका, ता गुरुशोका । "गुरुस्तु गीःपतौ श्रेष्ठे, गुरौ पितरि दुर्भरे" इति शब्दार्णवः । अनुरोदिति=उपसर्गयोगात्सकर्मकत्वम् । रुदिर् अश्रुविमोचने" इति धातोः लटि "रुदादिभ्यः सार्वधातुके" इति इडागमः । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—हे पञ्चशर ! भवता बहुषु कार्येषु कौसुमचापस्य मौर्वीत्व प्रापिता भ्रमरपङ्क्तिः करुणहुङ्कारैरत्यन्तदुःखिताया रुदत्या ममानुरोदन करोतीवेति भावः ।

**भाषा**—अनेक समय तुह्मारे कुसुमचापके प्रत्यञ्चाके काममें आने वाली यह भ्रमर पक्ति, अपने करुण हुङ्कारसे मानों तुह्मारे दुःखसे रोनेवाली मेरा अनुरोदन कर रही है ।

"तस्मात् त्वमेव कुरु" इति स्वाभीष्टमाह—

**प्रतिपद्य मनोहरं वपुः, पुनरप्यादिश तावदुत्थितः ।**
**रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥**

सुन्दर मनोहर देह धारण कर उठें आदेश दें ।
रति-दूति-पदमें कोकिला को आज कुछ सन्देश दें ॥

**अन्वयः**—तावत् पुनः अपि मनोहरं वपुः प्रतिपद्य उत्थितः सन् मधुरालाप-निसर्गपण्डिता कोकिला रतिदूतिपदेषु आदिश ।

**व्याख्या**—तावत्, पुनः अपि = भूयः अपि, मनोहर=सुन्दरं, वपुः = शरीरं, प्रतिपद्य = प्राप्य, उत्थितः=कृतोत्थानः सन्, मधुरालापनिसर्गपण्डिता = प्रियाभाषणस्वभावप्रगल्भा, कोकिला = पिका, रतिदूतिपदेषु = सुरतदूतीस्थानेषु, आदिश = आज्ञापय । प्रगल्भानामेव दौत्येऽधिकारादित्यर्थः ।

**व्युत्पत्तिः**—मनोहरं = हरतीति हर, "हृञ् हरणे इति धातोः पचाद्यच् । मनसः हरं मनोहरं तत्, प्रतिपद्य = प्रत्युपसर्गपूर्वकात् पदधातोः क्त्वा, तस्य ल्यबादेशः । मधुरालापनिसर्गपण्डिता=मधुराश्च ते अलापाः, मधुरालापाः "स्यादाभाषणमालापः" इत्यमरः । निसर्गात् पण्डिता निसर्गपण्डिता, निसर्गादित्यत्र हेतौ पञ्चमी । "स्वरूप च स्वभावश्च निसर्गः" इत्यमरः । सदसत् इति विवेकवती बुद्धिः पण्डा, सा सञ्जाता यस्याः इति पण्डिता, इतच्प्रत्ययः । मधुरालापेषु निसर्गपण्डिता मधुरालापनिसर्गपण्डिता, ता मधुरालापनिसर्गपण्डिता । रतिदूति-

पदेषु = रतेः दूती रतिदूती, तस्याः पदानि रतिदूतिपदानि, तेषु रतिदूतिपदेषु । ङीबन्तस्याऽपि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वः । "अपि माषं मषं कुर्याच्छन्दोभङ्गे त्यजेद्गिरम्" इति केचित् । अथवा "उणादयो बहुलम्" इति बहुलग्रहणात् ह्रस्वः इति वल्लभः ।

**भावार्थः**—हे स्मर ! भस्मरूपमिदं वपुरपहाय पूर्ववदतिरमणीयं शरीरं पुनरप्युपादाय कामिनीकामुकयोः परस्परं सङ्घटनरूपकार्येषु मनोहरालापस्वभावविदग्धान् कोकिलान् नियुङ्क्ष्वेति भावः ।

**भाषा**—हे काम ! भस्म रूप इस शरीर का त्यागकर पहिले के समान अत्यन्त सुन्दर शरीर को फिर से धारण कर कामिनी और कामुक के परस्पर सङ्घटनरूप कार्य में, स्वभावतः मधुर बोलने वालीं इन कोकिलाओं को हुकुम करो ।

अथ निजप्रलापमनर्थकमवधार्य पुनः पूर्वानुभूतान् कामानुभावानेव संस्मरति—

**शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।**
**सुरतानि च तानि ते रहः, स्मर ! संस्मृत्य न शान्तिरस्ति मे ॥१७॥**

**शिर से प्रणाम सकम्प फिर आश्लेष का वह मांगना ।**
**स्मृति-शान्ति देती है न वह एकान्त सुरत सुरस-सना ॥**

**अन्वयः**—हे स्मर ते शिरसा प्रणिपत्य याचितानि सवेपथूनि उपगूढानि च, तानि रहः सुरतानि च संस्मृत्य मे शान्तिः न अस्ति ।

**व्याख्या**—हे स्मर = हे काम ! ते = तव, त्वयेत्यर्थः । शिरसा = मूर्ध्ना, प्रणिपत्य = नमस्कृत्य, याचितानि = प्रार्थितानि, सवेपथूनि = सकम्पानि, उपगूढानि च = आलिङ्गनानि च, तानि=अनुभूतप्रकाराणि, रहः=एकान्ते, सुरतानि च = मैथुनानि च, संस्मृत्य=स्मृत्वा, मे=मम, शान्तिः = शमः, न अस्ति ।

**व्युत्पत्तिः**—सवेपथूनि = वेपथुना सहितानि सवेपथूनि, तानि, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । "टुवेपृ-कम्पने" इति धातोः "ट्वितोऽथुच्" इति अथुच्प्रत्ययः । "अथ वेपथुः । कम्पः" इत्यमरः । वेपथुना सात्विकान्तरोपलक्षणं भवति । सात्त्विकभावाश्च यथा—

"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विकाः स्मृताः ॥" इति

उपगूढानि=उपोपसर्गपूर्वकात् गुहधातोः क्तप्रत्ययः । संस्मृत्य=समुपसर्गपूर्वकात् स्मृधातोः क्त्वा, तस्य ल्यबादेशः । शान्तिः=“शमथस्तु शमः शान्तिः” इत्यमरः ।

अत्र प्रथमं कुपिता मामनुनेतु प्रणिपत्य याचनं, तदनन्तरं प्रसन्नाया मयि सरागमालिङ्गनं, ततश्च रागस्य समुद्बोधे सति बहुविधानि सुरतानीति स्मरणक्रमो विवक्षितः । अत्र शान्त्याः कृदभिहितत्वेन क्रियान्तराङ्गत्वात् स्मरणस्य भिन्नकर्तृकत्वभ्रमः । सस्मृत्य न शाम्यामीत्यर्थः । यदाह महिमभट्टः—

कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणिता वा ।

क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियावचश्च तयोः ॥" इति ।

**भावार्थः**—हे मदन ! रहसि प्रथमं कुपिता मामनुनेतु त्वया प्रणिपत्य कृतं याचनं, तदनन्तर प्रसन्नाया मयि तव सरागमालिङ्गन, ततश्च रागस्य समुद्बोधे सति त्वत्कृतानि बहुविधानि सुरतानि च सस्मृत्य मम शान्तिर्न भवतीति भावः ।

**भाषा**—हे स्मर ! एकान्त में प्रणय कोप से मान करने वाली मेरा अनुनय करने के लिये, शुरू में मेरे पैरों पकड़कर तुमने की गई प्रार्थना का बाद कुछ मेरे प्रसन्न होने पर प्रेम से किया गया तुम्हारे आलिङ्गन् का, अनन्तर मेरे अनुरक्त होने पर तुमने किया हुवा अनेक प्रकार के सुरतों का स्मरण करके मेरी आत्मा को शान्ति नहीं मिलती है ।

अथ स्वशरीरगतानि कुसुमाभरणान्यवलोक्य सविषादमाह—

**रचित रतिपण्डित ! त्वया, स्वयमङ्गेषु ममेदमार्तवम् ।**

**ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥**

**रति कुशल ! तुमसे रचित माधव-कुसुम का भूषण सुघर ।**

**तन पर अभी है किन्तु तुम हे प्राणनाथ ? गये किधर ॥**

**अन्वयः**—हे रतिपण्डित ! त्वया मम अङ्गेषु स्वय रचितं आर्तवं कुसुमप्रसाधनम् इदं ध्रियते, तव तत् चारु वपुः न दृश्यते ।

**व्याख्या**—हे रतिपण्डित = हे रतिकुशल, त्वया = भवता, मम = रतेः, अङ्गेषु = अवयवेषु, स्वयम् = आत्मना एव, रचित = विहितम् , आर्तवत्=ऋतुप्रभवं, वसन्तपुष्पाभरणमित्यर्थः । कुसुमप्रसाधनं = पुष्पाभरणम् , इद = पुरोवर्ति, ध्रियते = अवतिष्ठते । तव = भवतः, तत् = पूर्वोक्तं, प्रसाधकमित्यर्थः । चारु = सुन्दर, वपुः = शरीरे, न दृश्यते = न अवलोक्यते ।

**व्युत्पत्तिः**—हे रतिपण्डित=रतौ पण्डितः रतिपण्डितः, तत्सम्बुद्धौ हे रतिपण्डित !, रचितं="रच प्रतियत्ने" इति धातोः निष्ठाया क्तप्रत्ययः । प्रतियत्नो गुणाधानम् । आर्तवम्=ऋतुरस्य प्राप्त आर्तवम् , "ऋतोरण्" इत्यणप्रत्ययः,

"तद्धितेष्वचामादेः" इति आदिवृद्धिः । कुसुमप्रसाधनं = कुसुमाना प्रसाधनं कुसुमप्रसाधनम् । ध्रियते=धृञ् अवस्थाने" इति धातोः तौदादिकात् कर्तरि लट्, "तुदादिभ्यः शः" इति शप्रत्ययः । चारु = "सुन्दरं रुचिरं चारु सुषम साधु शोभनम्" इत्यमरः । दृश्यते="दृशिर् प्रेक्षणे" इति धातोः कर्मणि लट्, सार्वधातुके यक्" इति यक् ।

**भावार्थः**—हे रतिविदग्ध ! भवता ममाङ्गेषु स्वहस्तेनैव शिरोऽलङ्कारकर्णावतंसादिना प्रापितमभिनवमिदं बसन्तपुष्पाभरणमद्यावधि तथैवाऽवतिष्ठते, किन्तु प्रसाधनकर्तृत्वेन मयाद्यैवानुभूतं भवतस्तत् सुन्दरं शरीरं न दृश्यते, हा हतास्मीति भावः ।

**भाषा**—हे रतिकुशल ! मेरे शरीर पर तुमने अपने हाथ से किया हुवा यह ताजा वसन्त पुष्पों का अलङ्कार अभी तक ज्यों का त्यों विद्यमान है, किन्तु उन अलङ्कारों को करने वाला तुम्हारा शरीर दिखाई नहीं देता है ।

अथाऽर्धरचितस्य स्वचरणालक्तकरञ्जनपूरणस्यावश्यकत्वमाह—

**विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः ।**
**तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १६ ॥**

**दारुण विबुध के स्मरण से तज कर गये शोभा भरो ।**
**मम बाम-पद का फिर प्रसाधन राग से आकर करो ।**

**अन्वयः**—दारुणैः विबुधैः यस्य परिकर्मणि असमाप्ते स्मृतः असि; तम् इमं दक्षिणेतरं मे चरणं निर्मितरागं कुरु, एहि ।

**व्याख्या**—दारुणैः—क्रूरैः, प्राणान्तिकेऽसाध्ये कर्मणि नियोगादित्यर्थः । विबुधैः=देवैः, यस्य=मच्चरणस्य, परिकर्मणि=प्रसाधने, अलङ्करणे इत्यर्थः । असमाप्ते = अनवसिते सति, स्मृतः असि=ध्यातः असि; तम्, इम=पुरोवर्तिनं, दक्षिणेतरं=वामं, मे = मामकं, ममेत्यर्थः । चरण = पादं, निर्मितराग = रचितालक्तक, कुरु=विधेहि, एहि = आगच्छ ।

**व्युत्पत्तिः**—दारुणैः = "दारुणं भीषणं भीष्मं भीमं घोरं भयानकम्" इत्यमरः । विबुधैः="अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः । विशेषेण बुध्यन्ते इति विबुधाः, तैः विबुधैः, परिकर्मणि = "परिकर्म प्रसाधनम्" इत्यमरः । असमाप्ते=न समाप्तम् असमाप्तं, तस्मिन् असमाप्ते, दक्षिणेतरं= दक्षिणात् इतरः दक्षिणेतरः, तं दक्षिणेतरम् । "दक्षिणात्" इत्यत्र इतरशब्देन

योगे "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी। "पञ्चमी भयेन" इत्यत्र "पञ्चमी"ति योगविभागात् समासः। यद्वा "सह सुपा" इति समासः। चरण="पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः। निमितराग=निर्मितः रागः यस्मिन् स निर्मितरागः, तं निर्मितरागम्। रज्यते अनेन इति रागः। "रञ्ज रागे" इति धातोर्घञ्।

**भावार्थः**—स्नेहातिशयात् स्वहस्तेनैव मम चरणद्वयमलक्तकरसेन रञ्जयितुं प्रवृत्तस्त्वं दक्षिणचरणरञ्जनान्तरमेव दारुणात् देवकृतात् स्मरणात् यद्गतोऽसि, तस्मात् द्रुततरमागत्य मे वामचरणमलक्तकरसेन रञ्जयेति भावः।

**भाषा**—अत्यन्त स्नेह से अपने हाथों से ही मेरे दोनों चरणों में महावर लगाने के लिये प्रवृत्त भये तुम, मेरे केवल दहिने चरणको अलक्तक से रङ्गने पर ही क्रूर दैव के याद करने से चल बसे, इसलिये जल्दी आकर मेरे बांये चरण को भी अलक्तक रस से रङ्ग जाओ।

अथवा वृथाप्रलापैरलं, भर्तुरनुमरणमेव युक्तमिति सपत्नीशङ्कापूर्वकमाह—

**अहमेत्य पतङ्गवर्त्मना, पुनरङ्काश्रयणी भवामि ते।**
**चतुरैः सुरकामिनीजनैः, प्रिय! यावन्न विलोभ्यसे दिवि ॥२०॥**

पटु अप्सराओ से अभी वश में न जावोगे किये।
तब तक अनल के मार्ग से आ लिपट जाऊगी हिये॥

**अन्वयः**—अहं पतङ्गवर्त्मना एत्य पुनः ते अङ्काश्रयणी भवामि; हे प्रिय! दिवि चतुरैः सुरकामिनीजनैः यावत् न विलोभ्यसे।

**व्याख्या**—अहं = रतिः, पतङ्गवर्त्मना = शलभमार्गेण, अग्निप्रवेशेनेत्यर्थः। एत्य = आगत्य, पुनः = भूयः, ते = तव, अङ्काश्रयणी = उत्सङ्गवर्तिनी, भवामि= भविष्यामि, हे प्रिय=हे वल्लभ, दिवि=स्वर्गे, चतुरैः = निपुणैः, सुरकामिनी-जनैः = अप्सरोगणैः, यावत् = यत्कालपर्यन्त, न विलोभ्यसे=न विलोभयिष्यसे।

**व्युत्पत्तिः**—पतङ्गवर्त्मना = पतङ्गस्य वर्त्म पतङ्गवर्त्म, तेन पतङ्गवर्त्मना, "पतङ्गः शलभे चाऽग्नौ मार्जारेऽर्के शरे खगे" इति वैजयन्ती। "समौ पतङ्गशलभौ" इत्यमरः। अङ्काश्रयणी = अङ्कम् आश्रयतीति अङ्काश्रयणी, "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः। भवामि = "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्। दिवि = सुरलोको द्योदिवौ द्वे स्त्रियां क्लीवे त्रिविष्टपम्" इत्यमरः। सुरकामिनी-जनैः = कामः अस्ति आसां ताः कामिन्यः, कामशब्दात् प्राशस्त्याऽर्थे "अत-

इनिठनौ" इति इनिप्रत्ययः । तदन्तात् स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप्प्रत्ययः । सुराणां कामिन्यः सुरकामिन्यः, ताश्च ते जनाः सुरकामिनीजनाः, तैः सुरकामिनीजनैः । विलोभ्यसे=यावच्छब्देन योगे "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ।

**भावार्थः**—हे वल्लभ ! त्वं यावत् स्वर्गे पुंसां चित्ताकर्षणविचक्षणाभिरप्सरोभिरात्मवशं न नीयसे, तावदहमग्निप्रवेशेन त्वत्समीपं प्राप्य तासां वशीकरणात् प्रागेव तवोत्सङ्गाश्रयणी भवामीति भावः ।

**भाषा**—हे प्यारे ! स्वर्ग में पुरुषों के चित्त का आकर्षण करनेवालीं अप्सरायें जब तक तुमको अपने कब्जे में नहीं कर पाती है, तब तक मैं अग्नि-प्रवेश द्वारा सत्वर तुह्मारे पास पहुंच कर उनके पहिले तुह्मारे गोंद में बैठूंगी ।

किन्तु ममानुमरणेन भर्तृलोकप्राप्तौ सिद्धायामपि क्षणमात्रजीवननिमित्तो लोकापवाददोषः कदाचिदपि नापैतीति सलज्जमाह—

**मदनेन विनाकृता रतिः, क्षणमात्रं किल जीवितेति मे ।**
**वचनीयमिदं व्यवस्थितं रमण ! त्वामनुयामि यद्यपि ॥ २१ ॥**

**हे रमण ! यद्यपि शीघ्र तेरा अनुगमन करती सहि ।**
**पर स्मर रहित क्षण जो गई रति यह अमर निन्दा रही ॥**

**अन्वयः**—हे रमण ! त्वाम् अनुयामि यद्यपि, किन्तु रतिः मदनेन विनाकृता क्षणमात्रं जीविता किल इति इदं वचनीयं मे व्यवस्थितम् ।

**व्याख्या**—हे रमण ! = हे कान्त ! त्वा=भवन्तम्, अनुयामि = अनुगमिष्यामि, यद्यपि = एव, किन्तु रतिः = कामप्रिया, मदनेन = कामेन, विनाकृता= रहिता, वियोजिता सतीत्यर्थः । क्षणमात्रं=कञ्चित् कालं, जीविता=स्थिता, किल, इति=एतादृशम् , इदं, वचनीयं = निन्दा, लोकापवादमित्यर्थः । मे=मम, व्यवस्थितं=स्थिरम्, अभूत् ।

**व्युत्पत्तिः**—अनुयामि="वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् । इति पि="यद्यपीत्यवधारणे" इति केशवः । मदनेन="मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः" इत्यमरः । विनाकृता=विना कृता इति विनाकृता, "सुप्सुपा" यद्यसमासः । क्षणमात्रं = क्षण एव क्षणमात्रं, "मयूरव्यंसकादयश्च" इति समासः । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । जीविता = "जीव प्राणधारणे" इति धातोः निष्ठाया क्तप्रत्ययः, ततष्टाप् । वचनीयं=वक्तुं योग्यं

वचनीयम् ,अनीयर्प्रत्ययः। व्यवस्थितं=विशेषेण अवस्थितं व्यवस्थितं। "सुप्सुपा" इति समासः।

**भावार्थः**—हे रमण! यद्यपि मृतं त्वा सद्य एवाहमनुमरिष्यामि, तथापि लोके "कामदेवेन विरहिता रतिः कञ्चित्कालमपि जीवितेति" लोकापवादः शिलालिखित इव जात इति भावः।

**भाषा**—हे प्रियतम! यद्यपि यह निश्चित है कि मैं आपके पश्चात् मरूँगी, तथापि यह लोकापवाद शिलालेख सा अमिट ही हो गया कि कामदेवविरहित रति कुछ समय के लिये जीवित थी।

अनुम्रीयमाणापि पतिमात्मानञ्च मण्डयति। ततश्च यत् ते मण्डनं प्राप्तकालं, तदपि मे दुर्लभमित्याह—

**क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया।**
**सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च॥ २२॥**

**परलोक में हो अन्त्य-मण्डन कर सकूँ कैसे कहो।**
**तुमको अतर्कित गति मिली जीवित सहित तन से अहो॥**

**अन्वयः**—परलोकान्तरितस्य ते मया अन्त्यमण्डनं कथं क्रियताम्; अङ्गेन जीवितेन च समम् एव अतर्किता गति गतः असि।

**व्याख्या**—परलोकान्तरितस्य = लोकान्तरव्यवहितस्य, मृतस्येत्यर्थः। ते = तव,मया = रत्या, अन्त्यमण्डनम् = अन्तिमाऽलङ्करणं, प्रेतशरीरालङ्करणमित्यर्थः। कथ = केन प्रकारेण, क्रियता = विधीयताम् , यतः, अङ्गेन = शरीरेण, जीवितेन च = प्राणधारणेन च, समम् एव = सह एव, अतर्किताम् = अविचारिता, गतिं= दशा, गतः असि = प्राप्तः असि।

**व्युत्पत्तिः**—परलोकान्तरितस्य=परश्चाऽसौ लोकः परलोकः, अन्तरं सञ्जातम् अस्य अन्तरितः "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः। "अन्तरमवकाशाऽवधिपरिधानाऽन्तर्धिभेदतादर्थ्ये" इत्यमरः। अन्तरं व्यवधेरित्यर्थः। परलोकेन अन्तरितः, परलोकान्तरितः,तस्य परलोकान्तरितस्य,अन्त्यमण्डनं = अन्ते भवम् अन्त्य, "दिगादिभ्यो यत्" इति यत्प्रत्ययः। अन्त्यं च तत् मण्डनम् अन्त्यमण्डन, कर्मधारयसमासः क्रियताम् = "डुकृञ् करणे" इति धातोः कर्मणि कामचारे लोट्। अतर्किता=न तर्किता अतर्किता, ताम् अतर्किताम्।

**भावार्थः**—इह लोकं परित्यज्य त्वरितमेव परलोक प्रस्थितस्य तव प्रेतशरी-

शलङ्करणमपि मया कथं कार्यम् ? सर्वेषा हि मृताना जन्तूना विनिर्गतेऽपि प्राणे शरीरमात्रं तत्रैव तिष्ठति, त्व तु शरीरप्राणाभ्या सहैव विनष्टोऽसि,ततः कथमन्यमण्डनावकाश इति भावः ।

**भाषा**—शोक, इस लोक को त्यजकर शीघ्र ही परलोक को सिधारे हुए तुम्हारे मृतक शरीर को भी मैं क्योंकर सजा सकूंगी ? सब प्राणिओं के प्राण निकलने के बाद भी शरीर शेष रह जाता है, परन्तु तुम तो शरीर तथा प्राण दोनों से विरहित हो गये ।

इत्थमनुमरणे कल्पितेऽपि पूर्वानुभूतानतिमनोहरान् भावविशेषान् वचनविशेषानपि संस्मृत्य प्रलपन्तीं त्वरितमनुमरणमेव द्रढयति—

**ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।**
**मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥२३॥**

ले अङ्क में धनुशर सरल कर समुद मधु से बोलना ।
करती स्मरण हँसना तथा तिरछे मधुर अवलोकना ॥

**अन्वयः**—शरम् ऋजुता नयतः उत्सङ्गनिषण्णन्धवनः ते मधुना सह सस्मिता कथा, यत् नयनोपान्तविलोकितं च, तच्च स्मरामि ।

**व्याख्या**—शरं=बाणम्, ऋजुताम्=आर्जवं, नयतः = प्रापयतः, उत्सङ्गनिषण्णधन्वनः = अङ्कगतकार्मुकस्य, ते=तव, मधुना=वसन्तेन, सह = सार्द्धं, सस्मिताम् =ईषद्धास्ययुता, कथाम्=आलापं, यत, नयनोपान्तविलोकितं च=अपाङ्गवीक्षणं च, तच्च स्मरामि=चिन्तयामि ।

**व्युत्पत्तिः**—ऋजुताम्=ऋजोर्भावः ऋजुता, ताम् ऋजुता, नयतः=नयतीति नयन्, तस्य नयतः, "णीञ् प्रापणे" इति धातोः शतृप्रत्ययः । उत्सङ्गनिषण्णधन्वनः = उत्सङ्गे निषण्णम् उत्सङ्गनिषण्णं, तत् धनुर्यस्य स उत्सङ्गनिषण्णधन्वा, तस्य उत्सङ्गनिषण्णधन्वनः, "धनुषश्च" इत्यनङादेशः । मधुना="सह" इत्यनेन योगे "सहयुक्तेऽप्रधाने" इति सूत्रेण तृतीया । "मधुर्दैत्ये वसन्ते च चैत्रे-च" इति विश्वः । सह = "सार्धं तु साकं सत्रा समं सह" इत्यमरः । सस्मिता= स्मितेन सहिता सस्मिता, ता सस्मिता, बहुव्रीहिः । "स्मिङ् ईषद्धसने" इति धातोः क्तप्रत्ययेन स्मितपदसिद्धिः । नयनोपान्तविलोकितं=नयनयोः उपान्तौ नयनोपान्तौ, ताभ्या विलोकितं नयनोपान्तविलोकितं तत्, नेत्रकोणेनेति यावत् ।

**भावार्थः**—शरस्य वक्रतामपनेतुमङ्के चापं निधायात्यन्तसावधानत्वयोग्ये

तस्मिन्नपि काले मूर्तिमता वसन्तेन सम्भाषणं कुर्वतस्तन्मध्ये च सस्नेहं नेत्रोपान्तेन मामवलोकयतश्च तव तादृशान् भावान् कथमहं विस्मरामि । अविस्मृता च कथं न त्वरितमेवानुमरिष्यामीति भावः ।

**भाषा**—शरों की वक्रता दूर करने के हेतु अपनी गोद में कुसुम धनुष को रखकर वसन्त से बात करते हुए और उस सावधान होने के समय पर भी तुम स्नेहपूर्ण दृष्टि से मुझको देख लेते थे । इस बात को मैं कैसे भूल सकती हूँ ।

अथ "मधुना सह सस्मिता कथाम्" इति प्रसङ्गागत प्रियतमबन्धुभूतं मधुमुद्दिश्यापि प्रलपति—

**क्व नु ते हृदयङ्गमः सखा, कुसुमायोजितकार्मुको मधुः ।**
**न खलूग्ररुषा पिनाकिना, गमितः सोऽपि सुहृद्गतां गतिम्॥२४॥**

तुमसे रचयिता धनुष के तेरे सखा मधु हैं कहाँ ।
या तीव्र हर-क्रोधाग्नि से वे भी गये तुम हो जहाँ ॥

**अन्वयः**—हृदयङ्गमः ते सखा कुसुमायोजितकार्मुकः मधुः क्व नु । अथवा सः अपि उग्ररुषा पिनाकिना सुहृद्गता गतिं न गमितः खलु ।

**व्याख्या**—हृदयङ्गमः=हृद्यः, प्रिय इत्यर्थः । ते=तव, सखा=सुहृत्, कुसुमायोजितकार्मुकः=पुष्पारचितचापः, मधुः=वसन्तः, क्व नु=क्व वा, गते इति शेषः । अथवा सः अपि=वसन्तः अपि, उग्ररुषा=तीव्रकोपेन, पिनाकिना=हरेण, सुहृद्गता=मित्रप्राप्ता, मदनप्राप्तामित्यर्थः । गतिं=स्थितिं, भस्मतामित्यर्थः । न गमितः खलु=न प्रापितः किम् ? ।

**व्युत्पत्तिः**—हृदयङ्गमः=हृदयं गच्छतीति हृदयङ्गमः "गमेः सुप्युपसंख्यानम्" इति खच्प्रत्ययः, "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः । कुसुमायोजितकार्मुकः=कुसुमैः आयोजित, कुसुमायोजितं, कर्मणे प्रभवतीति कार्मुकम् । "कर्मण उकञ्" इति उकञ्प्रत्ययः । कुसुमायोजितं कार्मुकं येन सः कुसुमायोजितकार्मुकः । उग्ररुषा=उग्रा रुट् यस्य स उग्ररुट्, तेन उग्ररुषा, "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । पिनाकिना=पिनाकः अस्याऽस्तीति पिनाकी, तेन पिनाकिना, "पिनाकोऽजगव धनुः" इति मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाऽधिपः" इत्यप्यमरः । पिनाकशब्दात् "अत इनिठनौ" इति इनिप्रत्ययः । सुहृद्गता=शोभनं हृदयं यस्य स सुहृत् , "अथ मित्रं सखा सुहृत्" इत्यमरः । सुहृदा गता इति सुहृद्गता ता सुहृद्गता । खलु=अव्ययमेतत् जिज्ञासार्थम् "जिज्ञासाऽनुनये खलु" इत्यमरः ।

**भावार्थः**—पुष्पैः सम्पादितं तव चापं येन, तादृशस्तवोपकर्ताऽत्यन्तप्रियश्च सुहृत् वसन्तोऽपीदानीं, कुत्र वा गतः । प्रियतमविरहिताहं यदि तमपि द्रक्ष्यामि, तर्हि मे दुःखं किञ्चिदपि शाम्येत् । सोऽपि त्वत्प्रियतमो वसन्तोऽत्युग्रकोपेन पिनाकपाणिना शिवेन त्वद्गता पदवीं न प्रापितः ? खलु । यदि स्यादुपलभ्येतेति भावः ।

**भाषा**— कुसुम धनुष को उत्पन्न कर महान् उपकार करने वाला तुम्हारा प्रिय सुहृत् वसन्त भी नहीं दिखाई देता । प्रियविरहिता मैं यदि इस समय उसको भी देख पाती, तो भी मेरा दुख कुछ कम हो जाता । या कहीं तुह्मारा प्रियमित्र बसन्त भी शङ्कर के अत्यन्त कोप से तुह्मारी ही गति को तो न पाया होगा ? ।

इत्थं कृतप्रस्तावस्य मधोः प्रवृत्तिमाह—

**अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।**
**रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥**

विष-लिप्त-शर सम रति रुदन से विकल जब तन मन बने ।
निज रूप तब मधु ने दिखाया विकल रति के सामने ॥

**अन्वयः**—अथ तैः परिदेविताऽक्षरैः हृदये दिग्धशरैः इव आहतः मधुः आतुरा रतिम् अभ्युपपत्तुम् आत्मानं पुरः अदर्शयत् ।

**व्याख्या**—अथ = अनन्तरं, तैः=पूर्वोक्तैः, परिदेविताऽक्षरैः = विलापवचनैः; हृदये=हृदि, दिग्धशरैः इव=विषलिप्तमुखबाणैः इव, आहतः=ताडितः सन् , मधुः=वसन्तः, आतुराम्=आपन्नाम् , आपद्ग्रस्तामित्यर्थः । रतिं=कामप्रियाम् , अभ्युपपत्तुम् = अनुग्रहीतुम् , आश्वासयितुमित्यर्थः । आत्मानं = स्वं, पुरः = अग्रे, अदर्शयत = दर्शयति स्म, आविरभूदित्यर्थः ।

**व्युत्पत्तिः**—परिदेविताक्षरैः=परिदेवितस्य अक्षराणि, परिदेविताक्षराणि, तैः परिदेविताक्षरैः, "विलापः परिदेवनम्" इत्यमरः । दिग्धशरैः=दिग्धाश्च ते शराः दग्धशराः, तैः दिग्धशरैः, " विषाक्ते दिग्धलिप्तकौ" इत्यमरः । अभ्युपपत्तुम्= "अभ्युपपत्तिरनुग्रहः" इत्यमरः । अदर्शयत्="दृशिर् प्रेक्षणे" इति धातोः णिजन्तात् लङि रूपम् ।

अत्र परिदेविताक्षराणां दिग्धशरत्वेनोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ।

**भावार्थः**—एवम्भूतरतिविलापानन्तरं तथाभूतैर्विषलिप्तैः शरमुखैरिवात्यन्तदुस्सहैरतिविलापाक्षरैः हृदये आहतो वसन्तो भर्तृवियोगेन दुःखिता कामवधूमाश्वासयितुं सशरीरमात्मानं तदग्रे दर्शयामासेति भावः ।

**भाषा**—इस प्रकार विलाप करती हुई प्रियविरहित रतिको सान्त्वना देने के लिये वसन्त आविर्भूत हुआ। वह भी इतना दुःखी मालूम होता था, मानों रति विलापरूपी शरों ने उसके हृदय को वेध लिया हो।

वसन्तदर्शनानन्तर रतेर्दुःखाधिक्यमाह—

**तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरो जघान च।**
**स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥**

**स्तन-जघन-छाती पीट रोई देख कर मधु को खड़ा।**
**दुःख स्वजन के आगे खुले सम द्वार के होता बड़ा ॥**

**अन्वयः**—सा तम् अवेक्ष्य भृशं रुरोद, स्तनसम्बाधम् उरो जघान च; हि स्वजनस्य अग्रतः दुःखं विवृतद्वारम् इव उपजायते।

**व्याख्या**—सा = रतिः, तं=वसन्तम्, अवेक्ष्य=दृष्ट्वा, भृशम् = अत्यर्थं, रुरोद=रुदितवती, अश्रूणि मोचयामासेत्यर्थः। स्तनसम्बाधं=कुचसम्बाधम्, उरः = वक्षः, जघान च = ताडितवती च; हि = यतः, स्वजनस्य = आत्मीयस्य, अग्रतः = पुरः, दुःख = व्यथा, विवृतद्वारम् इव = उद्घाटितकपाटम् इव, उपजायते = आविर्भवति।

**व्युत्पत्तिः**—अवेक्ष्य = अवोपसर्गपूर्वकात् ईक्षधातोः क्त्वा, तस्य ल्यबादेशः। भृशम् = "अतिवेलभृशाऽत्यर्थाऽतिमात्रोद्गाढनिर्भरम्" इत्यमरः। क्रियाविशेषणमेतत्। रुरोद = "रुदिर् अश्रुविमोचने" इति धातोः लिट्। स्तनसम्बाधं= स्तनौ सम्बाध्य इति स्तनसम्बाधम्, "परिक्लिश्यमाने च" इति णमुल्। तदन्तस्य "कृन्मेजन्तः" इति अव्ययत्वम्। इदमपि क्रि० वि०। स्वजनस्य = स्वश्चाऽसौ जनः स्वजनः तस्य स्वजनस्य, अग्रतः = अग्रे इति अग्रतः, अग्रशब्दात् सप्तम्यर्थे तसिः। दुःखम् = "पीडा बाधा व्यथा दुःखम्" इत्यमरः। विवृतद्वारं= विवृतं द्वारं यस्य तत् विवृतद्वारं, "स्त्रीद्वार्द्वारं प्रतीहारः" इत्यमरः।

अत्र पूर्वार्धस्योत्तरार्द्धेन समर्थनादर्थान्तरन्यासालङ्कारः।

**भावार्थः**—रतिर्वसन्त दृष्ट्वा पूर्वस्मादधिकं रोदन चकार, स्तनयोर्बाधा यथा भवति तथा वक्षप्रदेशं कराभ्यामाहतवती च। अन्तर्भागे निरुद्धं हि वस्तु यथा द्वारे विघटिते सति निरन्तरं निर्गच्छति, तथा मनःस्थितं दुःखमपि बन्धुजनस्याग्रे प्रलापाश्रुसन्तानादिरूपेण बहिः प्रसरत्येवेति भावः।

**भाषा**—रति वसन्तको देख छाती पीटती हुई अधिक जोर से रोने लगी।

चारों ओर से रोका हुआ पदार्थ जिस प्रकार निकलने का रास्ता पाने पर बहुत जोर से निकलने लगता है, उसी तरह मनुष्य के हृदयस्थित दुःख भी अकस्मात् प्रियजन के देखने से प्रलाप व अश्रु आदि रूप से अत्यन्त प्रकाशित होने लगता है।

उज्जृम्भितदुःखाया रतेः प्रवृत्तिमाह—

**इति चैनमुवाच दुःखिता, सुहृदः पश्य वसन्त ! किं स्थितम् ।**
**तदिदं कणशो विकीर्यते, पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥**

रति कह उठी मधु से मधो लख हाल स्मर का क्या हुआ ।
कण कण पवन से हो कबूतर चूर्ण सा बिखरा हुआ ॥

**अन्वयः**—दुःखिता सा एनम् इति उवाच । हे वसन्त ! पश्य, सुहृदः किं स्थितम् ? तत् इदं कपोतकर्बुरं भस्म पवनैः कणशः विकीर्यते ।

**व्याख्या**—दुःखिता=व्यथिता, सञ्जातदुःखेत्यर्थः । सा=रतिः एनं=वसन्तम्, इति=वक्ष्यमाणम्, उवाच च=अब्रवीत् च, हे वसन्त=हे मधो ! पश्य=विलोकय, सुहृदः=मित्रस्य, कामस्येत्यर्थः । किं स्थित=किम् उपस्थितम्, तत् इदं, कपोतकर्बुरं=पारावतशबलं, भस्म=भसितं, पवनैः=वातैः, कणशः=लवशः, विकीर्यते=विक्षिप्यते ।

**व्युत्पत्तिः**—दुःखिता=दुखं सञ्जातं यस्याः सा दुःखिता, इतच्प्रत्ययः । च=चकारः पूर्वोक्तसमुच्चयाऽर्थः । सुहृदः=शोभनं हृदय यस्य स सुहृत्, तस्य सुहृदः । कपोतकर्बुरं=कपोत इव कुर्बुरं कपोतकर्बुरं, तत्, "पारावतः कलरवः कपोतः" इति, "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यप्यमरः । पवनैः="नभस्वद्वातपवनपवमानप्रभञ्जनाः" इत्यमरः । कणशः="बह्वल्पाऽर्थाच्छस्कारकादन्यतरस्याम्" इति अल्पार्थे शस्प्रत्ययः । विकीर्यते=व्युपसर्गपूर्वकात् "कॄ विक्षेपे" इति" धातोः कर्मणि लट् ।

**भावार्थः**—रतिर्दुःखोन्मादवशात् वसन्तमित्थं जगाद । हे वसन्त ! अवलोकय, त्वत्प्रियमित्रस्य कामस्य किञ्जातम्, तव सखा भस्मभावमुपगतः, तदिदं दृश्यमानं कपोतवन्नानावर्णं कामशरीरभस्म वायुभिः परमाणुता नीत्वा लवशः इतस्ततः प्रक्षिप्यते इति भावः ।

**भाषा**—रति दुख से उन्मत्त सी हो गई, और वसन्त से बोलने लगी । "देखो वसन्त ! तुम्हारे प्रियमित्र काम की क्या दशा हो गई । तुम्हारा सखा भस्मीभूत हो गया । देखो कबूतरो के पंख के रंग के समान उसके भस्मको

हवा इधर उधर उड़ा रही है ।"

अस्तु ते मत्प्रलापेऽनादरः, वसन्ताय तु दर्शनं देयमेवेत्यौत्सुक्यदैन्याभ्यां सह कामं प्रत्याह—

**अयि सम्प्रति देहि दर्शनं स्मर ! पर्युत्सुक एष माधवः ।**
**दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥**

हे मदन ! दर्शन दो अभी, उत्सुक बना माधव सजल ।
नर प्रेम स्त्री में चपल होता, पर सखा जन में अचल ॥

**अन्वयः**—अयि स्मर ! सम्प्रति दर्शनं देहि, एष माधवः पर्युत्सुकः; अस्ति, नृणां दयितासु प्रेम अनवस्थितं, सुहृज्जने प्रेम तु न चलं खलु ।

**व्याख्या**—अयि स्मर = भोः काम, सम्प्रति = साम्प्रत दर्शन = विलोकनं, देहि = वितर, एषः = अयं, माधवः=वसन्तः, पर्युत्सुकः=उत्कण्ठित., अस्ति, त्वद्दर्शने इति शेषः । नृणा=पुरुषाणा, दयितासु=प्रियासु, प्रेम=स्नेहः, अनवस्थितम्=अस्थिरं, सुहृज्जने = मित्रजने, प्रेम तु=स्नेहस्तु, न चलं खलु=न अस्थि ' खलु ।

**व्युत्पत्तिः**—अयि = इदं कोमलामन्त्रणे, दर्शन = दृशधातोर्ल्युट्, "युवोरनाकौ" इत्यनादेशः । नृणा = "स्युः पुमासः पञ्चजनाः पुरुषा पूरुषा नरः" इत्यमरः । प्रेम="प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः । अनवस्थितं = न अवस्थित, अनवस्थितं, चलमित्यर्थः । सुहृज्जने = सुहृच्चाऽसौ जनः सुहृज्जनः, तस्मिन् सुहृज्जने । चलं = "चलनं कम्पनं कम्प्र चलं लोलं चलाचलम्" इत्यमरः ।

**भावार्थः**—हे काम ! एष त्वत्सखा वसन्तस्त्वद्दर्शनार्थमत्यन्तमुत्कण्ठितोऽस्ति । सपदि त्वरितमागच्छ । यस्मात् पुरुषैः स्त्रीषु कृता प्रीतिश्शृङ्खला, भवति, बन्धुजनेषु कृता मैत्री तु स्थिरैव, तस्मान्मय्युपेक्षा सम्भवेदपि, नत्वस्मिन्सुहृदीति भाव. ।

**भाषा**—हे काम ! तुम्हारा प्रिय सखा वसन्त तुमको देखने के लिये उत्कण्ठित है । शीघ्र आवो । तुम मेरी उपेक्षा कर सकते हो, क्योंकि स्त्री के प्रति पुरुष का प्रेम चञ्चल है । परन्तु तुम इसकी उपेक्षा नहीं कर सकते, यह तुम्हारा सार्वकालिक प्रिय बन्धु है ।

नन्वन्येऽपि चन्द्रादयः सुहृदो मम सन्त्येव, अस्मिन् वसन्ते को विशेष इत्याशङ्क्याह—

**अमुना ननु पार्श्ववर्तिना, जगदाज्ञां ससुरासुरं तव ।**

**बिसतन्तुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥**

**मधु ने बनाया जगत को तव धनुष का आदेश कर ।**
**बिस तन्तु जिसका गुण बना केवल मनोहर पुष्प शर ॥**

**अन्वयः**—पार्श्ववर्तिना अमुना ससुराऽसुरं जगत् बिसतन्तुगुणस्य पेलवपुष्पपत्रिणः तव धनुषः आज्ञा कारितं ननु ।

**व्याख्या**—हे मदन !, पार्श्ववर्तिना = समीपवर्तिना, सहचरेणेत्यर्थः । अमुना = वसन्तेन, ससुराऽसुरं = सुराऽसुरसहितं, जगत्=लोकं, बिसतन्तुगुणस्य = मृणालसूत्रमौर्वीकस्य, पेलवपुष्पपत्रिणः=कोमलकुसुमबाणस्य, तव=भवतः, धनुषः = कार्मुकस्य, आज्ञाम्—अनुज्ञा, कारितं, ननु = निश्चयेन ।

**व्युत्पत्तिः**—पार्श्ववर्तिना = पार्श्वे वर्तते तच्छीलः पार्श्ववर्ती, तेन पार्श्ववर्तिना, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः । ससुराऽसुरं = सुराश्च असुराश्च सुराऽसुराः, "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इति "असुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः" इति चाऽमरः । सुराऽसुरैः सहितं ससुराऽसुरं, तत् । जगत् = "कारितम्" इत्यनेन योगे सति "ह्रक्रोरन्यतरस्याम्" इति कर्मत्वम् । बिसतन्तुगुणस्य = बिसस्य तन्तवः बिसतन्तवः, ते एव गुणाः यस्य तत् बिसतन्तुगुणं, तस्य बिसतन्तुगुणस्य । पेलवपुष्पपत्रिणः = पेलवानि पुष्पाणि एव पत्रिणः यस्य तत् पेलवपुष्पपत्रि, तस्य पेलवपुष्पपत्रिणः । कारितम् = "डुकृञ् करणे" इति धातोः णिजन्तात् क्तप्रत्ययः, ननु="प्रश्नाऽवधारणाऽनुज्ञाऽनुनया, मन्त्रणे ननु" इत्यमरः ।

**भावार्थः**—त्वत्सहायभूतेनानेन वसन्तेनैव सदेवदानवः सकलोऽपि लोकः पुष्पमयत्वात् बिसतन्तुगुणत्वाच्चातिदुर्बलस्यापि तव चापस्य वशं नीतः, तस्मादुपकारिणेऽस्मै मित्राय वसन्ताय स्वदर्शनमवश्यमेव दातव्यमिति भावः ।

**भाषा**—सहायक वसन्त के कारण ही देवदानव प्रभृति सब लोक तुम्हारे मृदु कुसुम चापके वश हुए हैं । अत एव अपने उपकार वाले मित्र को दर्शन देना सर्वथा उचित है ।

अथादर्शननिर्वेदाद्वसन्तं प्रत्याह—

**गत एव न ते निवर्तते, स सखा दीप इवाऽनिलाहतः ।**
**अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम् ॥ ३० ॥**

**हा वायु-ताडित दीप सम वे बुझ गये नित के लिये ।**

ञ्चता=वर्जयता, अमारयतेत्यर्थः। विधिना = दैवेन, अर्धवैशसम् = अर्धवधः, कृतं = विहितम्। "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः। पत्युः स्वस्य च आश्रयाश्रयिभूतयोरेकपदार्थत्वाऽभिप्रायेण अर्धोक्तिः। तथा च एकदेशवधे देशान्तरस्याऽपि वधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्यम्। एतदेव उपपादयति—अनपायिनि=अविनाशिनि, अविनाशित्वेन विश्वस्ते इत्यर्थः। संश्रयद्रुमे = आश्रयवृक्षे, गजभग्ने = हस्तिभग्ने सति, बल्लरी = लता, पतनाय = नाशाय, भवतीति शेषः।

**व्युत्पत्तिः**—कामवधे=कामस्य बधः कामवधः, तस्मिन् कामवधे, "आलम्भपिञ्जविशरघातोन्माथवधा अपि" इत्यमरः। विमुञ्चता=विमुञ्चतीति विमुञ्चन्, तेन विमुञ्चता, शतृप्रत्ययः। विधिना="दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। अर्धवैशसम्=विशसति = हिनस्तीति विशसः, घातुक इत्यर्थः, पचाद्यच्। विशसस्य कर्म वैशसम्, युवादित्वात् अण् प्रत्ययः। अर्धं च तत् वैशसम् अर्धवैशसम्। अनपायिनि = न अपायः अनपायः, सः अस्य अस्तीति अनपायी, तस्मिन् अनपायिनि, इनिप्रत्ययः, संश्रयद्रुम=संश्रयस्य द्रुमः संश्रयद्रुमः, तस्मिन् संश्रयद्रुमे। उपघ्नतरावित्यर्थः। गजभग्ने=गजेन भग्नः गजभग्नः, तस्मिन् गजभग्ने, "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः। पतनाय="तुमर्थाच्च भाववचनात्" इति चतुर्थी। "पत्लृ पतने" इति धातोः ल्युटि प्रत्यये पतनशब्दसिद्धिः।

**भावार्थः**—कामदेवस्य दहने क्रियमाणे सति मा वधात् विसृजता दैवेनार्धहिंसा कृता, पुरुषस्यार्धशरीरं हि पत्नीति शास्त्रप्रसिद्धेः। स्थिरोपघ्नतरौ करिणा नाशिते सति तदाश्रयिणी लता चावश्यं पतत्येवेति भावः।

**भाषा**—मुझे छोड़ मेरे अर्द्धाङ्ग पति की हत्या कर दैवकी प्रतिहिंसा केवल आधी सफल हुई। किन्तु हाथीने जब आश्रय भूत पेड़ को ही नष्ट कर दिया तब उसके आश्रित लता भी अवश्य ही नाश को प्राप्त होगी।

अथानुमरणमेव निश्चित्य तदुपकरणसम्पादनार्थं वसन्तं प्रत्याह—

**तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम्।**
**विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम्॥ ३२॥**

अब बन्धु कार्य करें हरे दुख पास मेरे आइये।
मुझ विरहिणी को अग्नि से पति के निकट पहुँचाइये॥

**अन्वयः**—तत् अनन्तरं भवता इदं बन्धुजनप्रयोजनं क्रियता । ननु विधुरा मा ज्वलनाऽतिसर्जनात् पत्युः अन्तिकं प्रापय ।

**व्याख्या**—तत् = तस्मात् कारणात् , अनन्तरम् = अथ, भवता = त्वया, इदं = वक्ष्यमाणं बन्धुजनप्रयोजनं = बन्धुकृत्यं , क्रियता = विधीयताम्, प्रार्थनाया लोट् । तदेव कृत्यमुपदिशति—ननु = हे वसन्त !, विधुरा = विवशा, मा=रतिं, ज्वलनाऽतिसर्जनात् = अग्निदानात् , पत्युः=स्वामिनः, कामस्येत्यर्थः । अन्तिकं = निकटं, प्रापय=नय ।

**व्युत्पत्तिः**—भवता=भातीति भवान्, तेन भवता । "भातेर्डवतुः" । बन्धुजनप्रयोजन = बन्धुश्चाऽसौ जनः बन्धुजनः, तस्य प्रयोजनं बन्धुजनप्रयोजनं । क्रियता=कर्मणि प्रार्थनार्थे लोट् । ज्वलनाऽतिसर्जनात्=ज्वलयतीति ज्वलनः, तस्मै अतिसर्जनं ज्वलनाऽतिसर्जन, तस्मात् ज्वलनातिसर्जनात् । अन्तिकम् = "उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः ।

**भावार्थः**—विधिवैपरीत्यात् सहगमनाभावेऽप्यग्निप्रवेशोपकरणं सम्पाद्य पश्चादपि मा भर्तुरन्तिकं प्रापय । प्रियवियोगविधुराणां सुहृद्वधूनां प्रियतमसकाशप्रापणमेव हि सुहृदामुचितमिति भावः ।

**भाषा**—दैव के अनुकूल न होने से मेरा सह मरण न होने पर भी तुम मेरे लिये अग्नि प्रज्ज्वालित करो, और मुझे पति के पास भेज दो । क्यों कि मित्र के स्त्री को अपने पति के निकट पहुंचाना ही सुहृदों का कर्त्तव्य होता है ।

कर्तव्यश्चाऽयमर्थः स्त्रीणामित्याह—

**शशिना सह याति कौमुदी, सह मेघेन तडित्प्रलीयते ।**
**प्रमदाः पतिवर्त्मगा इति, प्रतिपन्नं हि विचेतनैरपि ॥३३॥**

**शशि-साथ जाती कौमुदी, बिजली जलद के साथ हो ।**
**पति साथ स्त्री करती गमन, यह जानता जड भी अहो ॥**

**अन्वयः**—कौमुदी शशिना सह याति, तडित् मेघेन सह प्रलीयते; प्रमदाः पतिवर्त्मगाः इति विचेतनैः अपि प्रतिपन्नम् ।

**व्याख्या**—कौमुदी = चन्द्रिका, शशिना = चन्द्रेण, सह=सार्धं, याति=गच्छति, चन्द्रेऽस्तमिते स्वय नश्यतीत्यर्थः । तडित्=सौदामनी, मेघेन=अभ्रेण, सह=सार्धं, प्रलीयते=प्रणश्यति, कर्तरि लट्; मेघे विनष्टे तडिदपि विनश्यत्येवेत्यर्थः । प्रमदाः = स्त्रियः, पतिवर्त्मगाः=पतिमार्गाऽनुगामिन्यः, इति = एतत्,

विचेतनैः अपि=अचेतनैः अपि, अविवेकिभिरपीत्यर्थः । प्रतिपन्नं=ज्ञातम् ।

**व्युत्पत्तिः**—कौमुदी=कुमुदानाम् इयं कौमुदी, "तस्येदम्" इत्यण्, "टिड्ढाणञ्०" इति ङीप् । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । शशिना=शशः अस्याऽस्तीति शशी, तेन शशिना, इनिप्रत्ययः, "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्यमरः । "सहयुक्तेऽप्रधाने" इति तृतीया । तडित्="तडित्सौदामनी विद्युच्चञ्चला चपला अपि" इत्यमरः । मेघेन=मेहति सिञ्चतीति मेघः, तेन मेघेन, "मिह सेचने" इति धातोः अच्प्रत्ययः । न्यङ्कादित्वात्कुत्वम् । "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । पतिवर्त्मगाः=पत्युः वर्त्म पतिवर्त्म, तत् गच्छन्तीति पतिवर्त्मगाः । विचेतनैः=विगता चेतना येषा ते विचेतनाः, तैः विचेतनैः । प्रतिपन्नं=प्रत्युपसर्गपूर्वकात् "पद गतौ" इति धातोः क्तप्रत्ययः, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्युभयत्र नत्वम् । "बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसिताऽवगते" इत्यमरः ।

"अलवणा यवागूः" "अनुदरा कन्या" इति वदल्पत्वाऽभिप्रायेण विचेतनैरपीति निर्देशः । पतिवर्त्मगा इत्यत्र स्मृतौ प्रमाणमाह—

"आर्ताऽऽर्त्ते मुदिते हृष्टा, प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ, सा स्त्री ज्ञेया पतिव्रता ॥" इति ।

**भावार्थः**—चन्द्रिका चन्द्रेण सहैव गच्छति, नहि चन्द्रे गते चन्द्रिका क्षणमात्रमपि तत्र तिष्ठति । एवं मेघे विनष्टे सति विद्युदपि तत्रैव सह विनश्यति । इत्थमचेतनैश्चन्द्रिकादिभिरपि प्रतिपन्नं भर्तृलोकगमनं कथं सचेतनाहं न करिष्यामीति भावः ।

**भाषा**—चन्द्रमा के अस्तमित होने पर चादनी भी अस्तमित होती है । बादल के हट जाने के उपरान्त बिजली भी नहीं चमकती । जब अचेतन वस्तुओं का भी अपने अपने पति का अनुगमन करना ही धर्म है, तो मैं सचेतन होकर क्यों न वैसा करूं ।

इदानीमेवानुमरणे ममान्त्यमण्डनमपि नान्वेषणीयमित्याह—

**अमुनैव कषायितस्तनी, सुभगेन प्रियगात्रभस्मना ।**
**नवपल्लवसंस्तरे यथा, रचयिष्यामि तनुं विभावसौ ॥३४॥**

**प्रिय-भस्म से ही कुच रँगा कर मोदमय शृङ्गार से ।**
**तन से मिलूगी पत्र-संस्तर सम अनल अङ्गार से ॥**

**अन्वयः**—अमुना सुभगेन प्रियगात्रभस्मना एव कषायितस्तनी नवपल्लव-

संस्तरे यथा विभावसौ तनुं रचयिष्यामि ।

**व्याख्या**—अमुना = पुरोवर्तिना, सुभगेन = शोभनेन, प्रियगात्रभस्मना एव = दयितशरीरभस्मितेन एव, एवकारो मण्डनान्तरनिवृत्त्यर्थः । कषायितस्तनी = रञ्जितस्तनी, नवपल्लवसंस्तरे यथा = नूतनकिसलयतल्पे इव, विभावसौ = अग्नौ, तनुं = शरीरं; रचयिष्यामि = निधास्यामि ।

**व्युत्पत्तिः**—प्रियगात्रभस्मना = प्रियस्य गात्रं प्रियगात्रं, "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । प्रियगात्रस्य भस्म प्रियगात्रभस्म, तेन प्रियगात्रभस्मना । कषायितस्तनी = कषायः सञ्जातः ययोस्तौ कषायितौ, इतच्प्रत्ययः । कषायितौ स्तनौ यस्याः सा कषायितस्तनी, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" इत्यमरः । नवपल्लवसंस्तरे = नवाश्च ते पल्लवाः नवपल्लवाः, "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इति, "पल्लवोऽस्त्री किसलयम्" इति चाऽमरः । नवपल्लवानां संस्तरः नवपल्लवसंस्तरः, तस्मिन् नवपल्लवसंस्तरे । विभावसौ = "सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः" इत्यमरः । तनु = "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः ॥

**भावार्थः**—अनेनैव पुरोवर्तिना मनोहरेण कामशरीरभस्मनाऽनुलिप्तकुचा सती नूतनकिसलयरचितशय्यायामिव चिताग्नौ शरीरं निधास्यामीति भावः ।

**भाषा**—मेरे सन्मुख पड़े हुए इस काम के शरीर-भस्म से ही अपना शृङ्गार कर मैं अब नवीन किसलय निर्मित शय्या की भाति चिताग्नि में सो जाऊंगी ।

कथमहमेतादृशं नृशंसं कर्म कुर्यामिति वसन्तस्य शङ्का परिहरति—

**कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।**
**कुरु सम्प्रति तावदाशु मे, प्रणिपाताञ्जलियाचितश्चिताम् ॥३५॥**

**बहु बार तुम सुम-तल्प में थे मददगार हुये सुजन ।**
**मेरी चिता जल्दी बनावें आप को शत शत नमन ॥**

**अन्वयः**—हे सौम्य त्वम् आवयोः बहुशः कुसुमास्तरणे सहायतां गतः असि, सम्प्रति प्रणिपाताञ्जलियाचितः सन् आशु मे चितां कुरु ॥

**व्याख्या**—हे सौम्य = हे साधो, त्वं = भवान् , आवयोः = रतिपञ्चबाणयोः कुसुमास्तरणे = पुष्पशयने, बहुशः = बहुवारं, सहायतां = साहाय्यं, गतः = प्राप्तः, असीति शेषः । सम्प्रति = अधुना, प्रणिपाताञ्जलियाचितः = नमस्काराञ्जलिप्रार्थितः

सन् , आशु = शीघ्रं, मे=मम, चिता = काष्ठचयं, कुरु=कुरुष्व ।

**व्युत्पत्तिः**—बहुशः=बहुधा इति बहुशः, शस्प्रत्ययः । कुसुमास्तरणे = कुसुमानाम् आस्तरणं कुसुमास्तरण, तस्मिन् कुसुमास्तरणे । सहायता = "गजसहायाभ्या चेति वक्तव्यम्" इति तल्प्रत्ययः । प्रणिपाताऽञ्जलियाचितः-प्रणिपातस्य अञ्जलिः प्रणिपाताञ्जलिः, तेन याचितः प्रणिपाताञ्जलियाचितः । आशु="सत्वरं चपलं तूर्णमविलम्बितमाशु च" इत्यमरः । क्रियाविशेषणमेतत् ।

**भावार्थः**—हे वसन्त ! यस्त्वमावयोः सुरतावसरे तदुपकरणभूतपुष्पशय्यादिविधानेन सहायतामुपगतोऽभूः । तस्मात् नमस्काराञ्जलिप्रार्थितेन त्वया मरणावसरेऽपि तदुपकरणभूतचितादिविधानेन सहायतया भवितव्यमेव । यतः सम्पन्माअसहायत्व खलस्वभाव इति ।

**भाषा**—हे वसन्त ! जब तुम हम दोनों के सुरत-समय में भी पुष्पशय्यादि प्रस्तुत कर सहायता करते थे, तब तुम को इस समय मृत्यु के उपकरण को भी तय्यार करना चाहिये । मैं तुमको हाथ जोड़ कर प्रार्थना करती हूँ ।

अन्यदपि किञ्चित् कर्तव्यमस्तीत्याह—

**तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।**
**विदितं खलु ते यथा स्मरः, क्षणमप्युत्सहते न मां विना ॥ ३६ ॥**

दक्षिण पवन झलकर अनल को आप शीघ्र जलाइये ।
मेरे विना स्मर रह सकेगा ! आप ही बतलाइये ॥

**अन्वयः**—तदनु मदर्पितं ज्वलन दक्षिणवातवीजनैः त्वरयेः । ते विदितं खलु, यथा स्मरः मा विना क्षणम् अपि न उत्सहते ।

**व्याख्या**—तदनु = तदनन्तरं, चिताकरणाऽनन्तरमित्यर्थः । मदर्पित=मया अर्पितं, ज्वलनम् = अग्निं, दक्षिणवातबीजनैः = अवाचीवायुसञ्चारणैः, मलयपवनसञ्चारणैरित्यर्थः । त्वरयेः = त्वरा कुर्याः, त्वरित प्रज्वलयेत्यर्थः । त्वराकारणमाहते = तव, विदितं खलु=ज्ञातं खलु, यथा = येन प्रकारेण, स्मरः = कामः; मा विना = मत् ऋते, क्षणम् अपि = कञ्चित् कालमपि, न उत्सहते = न उत्साहं करोति, न हृष्यतीत्यर्थः ।

**व्युत्पत्तिः**—तदनु=तस्मात् अनु तदनु । मदर्पितं—मयि अर्पितः मदर्पितः, तं मदर्पित । ज्वलनं="कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः । दक्षिणवातबीजनैः=दक्षिणस्य वातः दक्षिणवातः, तेन बीजनानि दक्षिणवातबीजनानि,

तैः दक्षिणवातवीजनैः, त्वरयेः="ञित्वरा सम्भ्रमे" इति धातोः लिङि रूपम् । विदितं="विद ज्ञाने" इति धातोः "मतिबुद्धिपूजाऽर्थेभ्यश्च" इति वर्तमाने क्तप्रत्ययः । तद्योगात् "ते" इत्यत्र "क्तस्य च वर्तमाने इति कर्तरि षष्ठी । मा='विना' शब्देन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति पक्षे द्वितीया । क्षणं="कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः ।

**भावार्थः**—हे वसन्त ! चिताविधानानन्तरं मय्यर्पितमग्निं मलयाचलोद्भूतपवनसञ्चारणैः शीघ्रं प्रज्वलितं विधेहि । मदनो मया विना क्षणमात्रमपि शयनाऽसनपानादिक्रियासु न व्याप्रियत इति त्वं जानास्येवेति भावः ।

**भाषा**—हे वसन्त ! चिता सज्जित कर मुझे दी हुई अग्नि को दक्षिण पवन से शीघ्र सुलगाओ । यह तुम जानते ही हो कि मदन मेरे विना क्षणमात्र भी नहीं रह सकता है ।

तवावश्यकर्तव्य जलाञ्जलिदानमपि मदुक्तमेतत् सर्वं कृत्वैव कर्तव्यमित्याह—

**इति चाऽपि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।**
**अविभज्य परत्र तं मया, सहितः पास्यति ते स बान्धवः ॥३७॥**

**फिर दें जलाञ्जलि एक ही हम दार स्वामी के लिये ।**
**परलोक में जिससे विमल जल साथ ही दोनो पियें ॥**

**अन्वयः**—अपि च, इति विधाय नौ एक एव सलिलस्य अञ्जलिः दीयताम्; तं स ते बान्धवः परत्र मया सहितः अविभज्य पास्यति ।

**व्याख्या**—अपि च = पुनश्च, इति = एवं, विधाय = कृत्वा, नौ—आवाभ्याम् , एकः, एव=एकक एव, सलिलस्य = जलस्य, अञ्जलिः=हस्तसम्पुटः, प्रेततर्पणाञ्जलिरित्यर्थः । दीयता = वितीर्यताम् , तम्=अञ्जलि, सः=पूर्वोक्तः, ते = तव, बान्धवः = बन्धुः, काम इत्यर्थः । परत्र = परलोके, मया = त्वया, सहितः = युक्तः सन् , अविभज्य=विभागमकृत्वा, पास्यति = पान करिष्यति ।

**व्युत्पत्तिः**—नौ = अस्मच्छब्दस्य चतुर्थीद्विवचने "आवाभ्याम्" इत्यस्य स्थाने "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" इति नावादेशः । सलिलस्य="आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः । अञ्जलिः= "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी । बान्धवः = बन्धुरेव बान्धवः, स्वार्थे अण् प्रत्ययः । परत्र = परस्मिन्निति परत्र, "सप्तम्यास्त्रल्"

इति त्रल् । अविभज्य = न विभज्य अविभज्य । पास्यति = "पा पाने" इति धातोः "लृट् शेषे च" इति भविष्यदर्थे लृट् ।

**भावार्थः**—पूर्वोक्तप्रकारेण सकलं कर्म कृत्वा प्रेततर्पणजलाञ्जलिरण्यावाभ्या-मेक एव प्रदातव्या, नान्येषामिव पृथग् प्रदातव्या । यतो हि परलोकगतः स ते-सुहृन्मदनस्तत्र मया सहैवाभिमतमविभज्यमानं पानं करिष्यतीति भावः ।

**भाषा**—पूर्वोक्त प्रकार के सब कार्य सम्पादित कर हम दोनों के लिये एक ही जलाञ्जलि से प्रेततर्पण भी करना। जिससे कि परलोक गत तुम्हारा बन्धु कामदेव मेरे साथ अभीष्ट जलका पान कर सके ।

और्ध्वदेहिककर्मणि विशेषान्तरमप्याह—

**परलोकविधौ च माधव ! स्मरमुद्दिश्य विलोलपल्लवाः ।**
**निवपेः सहकारमञ्जरीः, प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥**

**सहकार पल्लव-सहित माधव ! श्राद्ध तर्पण कीजिये ।**
**तव मित्र को प्रिय आमकी ही मञ्जरी है दीजिये ॥**

**अन्वयः**—हे माधव ! परलोकविधौ स्मरम् उद्दिश्य विलोलपल्लवाः सहकारमञ्जरीः निवपेः; हि ते सखा प्रियचूतप्रसवः अस्ति ।

**व्याख्या**—हे माधव = हे वसन्त !, परलोकविधौ = लोकान्तरावधाने, और्ध्वदेहिककर्मणीत्यर्थः । स्मर = कामम्-उद्दिश्य = अनूद्य, विलोलपल्लवाः=चञ्चलकिसलयाः, सहकारमञ्जरीः = चूतवल्लरीः, निवपेः = देहि, हि = यतः, ते=तव सखा = सुहृत् , स्मर इत्यर्थः । प्रियचूतप्रसवः=अभीष्टाम्रप्रसवः, अस्तीति शेषः ।

**व्युत्पत्तिः**—परलोकविधौ = परश्चाऽसौ लोकः परलोकः, तस्य विधिः परलोकविधिः, तस्मिन् परलोकविधौ, "विधिर्विधाने दैवे च" इत्यमरः । उद्दिश्य= उदुपसर्गपूर्वकात् "दिश अतिसर्जने" इति धातोः क्त्वाप्रत्ययः, तस्य स्थाने ल्यबादेशः । विलोलपल्लवाः = विशेषेण लोलाः विलोलाः, "सुप्सुपा" इति समासः । "चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्" इत्यमरः । विलोलाः पल्लवाः यासु ताः विलोलपल्लवाः, ताः । "पल्लवोऽस्त्री किसलयम्" इत्यमरः । सहकारमञ्जरीः=सहकारस्य मञ्जर्यः सहकारमञ्जर्यः, ताः, "आम्रश्चूतो रसालोऽसौ, सहकारोऽतिसौरभः" इति, "वल्लरिर्मञ्जरिः स्त्रियौ" इति चाऽमरः । निवपेः = पितृदानं निवापः स्यात्" इत्यमरः । प्रियचूतप्रसवः = चूतस्य प्रसवाः चूतप्रसवाः, प्रियाः चूतप्रसवाः यस्य सः प्रियचूतप्रसवः ।

**भावार्थः**—हे माधव ! और्ध्वदेहिकप्रेतकृत्ये कामदेवोद्देशेन चञ्चलकिसलयान् चूतकुसुमस्तबकान् निवापाञ्जलौ कुसुमस्थाने दद्याः । तव सुहृन्मदनो हि सहकार-कुसुमरसिक आसीत् । जीवितकाले यस्य यद्वस्तु प्रियं तदेव हि परत्र तस्मै प्रदेयमिति भावः ।

**भाषा**—हे माधव ! कामदेव का और्द्धदेहिक कार्य करते समय श्राद्ध में चञ्चल किसलय युक्त आम्र मञ्जरी को अवश्य देना, क्योंकि तुम्हारा सुहृत् मदन सहकार मञ्जरी को बहुत चाहता था ।

इत्थं विलप्य निश्चितमरणाध्यवसायाया रत्या तदध्यवसायनिराकरणहेतुभूतं किमप्यद्भुतमुद्भूतमित्याह—

**इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।**
**शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥**

तन-मुक्ति को निश्चित दुखी रति को गगन वाणी हुई ।
सर शुष्क मछली के लिये वह प्रथम वर्षा सी हुई ॥

**अन्वयः**—इति देहविमुक्तये स्थिता रतिम् आकाशभवा सरस्वती ह्रदशोष-विक्लवा शफरीं प्रथमा वृष्टिः इव अन्वकम्पयत् ।

**व्याख्या**—इति=एवम्, देहविमुक्तये=शरीरत्यागाय, स्थिताम् =उद्यता कृतनिश्चयामिति यावत्, रतिं=कामप्रियाम्, आकाशभवा=व्योमोत्पन्ना, सर-स्वती=वाणी, अशरीरेति शेषः, ह्रदशोषविक्लवा=कासारशोषविह्वला, शफरीं= प्रोष्ठीं, मत्सीविशेषामित्यर्थः । प्रथमा=आद्या, ग्रीष्मावसानसमुद्भवेत्यर्थः । वृष्टिः इव=वर्षम् इव, अन्वकम्पयत्=अनुकम्पितवती, सदयमुवाचेत्यर्थः ।

**व्युत्पत्तिः**—देहविमुक्तये=देहस्य विमुक्तिः देहविमुक्तः, तस्यै देहविमुक्तये । "कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः । आकाशभवा = आकाशात् भवा आकाशभवा, "वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्य मरः । सरस्वती = "ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती" इत्यमरः । ह्रदशोषविक्लवां=ह्रदस्य शोषः, ह्रदशोषः, "तत्रागाधजलो ह्रदः" इत्यमरः । ह्रदशोषेण विक्लवा ह्रदशोषविक्लवा, तां ह्रदशोषविक्लवां, "विक्लवो विह्वलः" इत्यमरः । शफरी="प्रोष्ठी तु शफरी द्वयोः" इत्यमरः । वृष्टिः="वृष्टिर्वर्षम्" इत्यमरः । अन्वकम्पयत्="कृपा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः ।

**भावार्थः**—यथा प्रथमा वृष्टिराकाशदेशादतर्कितापाता सती ह्रदविनाशविधु-

रा शफरीमनुगृह्णाति, तथैव भर्तृविनाशविधुरा शरीरपरित्यागाय कृतनिश्चया रतीं गगनादतर्कितोद्भवा वाणी वक्ष्यमाणप्रकारेणानुगृहीतवतीति भावः ।

**भाषा**—जिस प्रकार अकस्मात् होने वाली प्रथम वर्षा की पहली बूंद सूखे हुए तालाब की अर्द्धमृत मछली में प्राण संचारित कर देती हैं, उसी तरह अचानक प्रकटित आकाश वाणीने रति के ऊपर भी कृपा की ।

आकाशवाण्याः स्वरूपमाह—

**कुसुमायुधपत्नि ! दुर्लभस्तव भर्ता न चिराद्भविष्यति ।**
**शृणु येन स कर्मणा गतः, शलभत्वं हरलोचनार्चिषि ॥ ४० ॥**

**रति! पति न तव दुष्प्राप्य है इसको न तुम मन में गुनो ।**
**हर-नेत्र ज्वाला में शलभ सम जो मिटा उसको सुनो ॥**

**अन्वयः**—हे कुसुमायुधपत्नि ! तव भर्ता चिरात् दुर्लभः न भविष्यति । शृणु, येन कर्मणा सः हरलोचनाऽर्चिषि, शलभत्वं गतः ।

**व्याख्या**—हे कुसुमायुधपत्नि ! हे पुष्पेषुभार्ये ! हे रते ! इत्यर्थः । तव=भवत्याः, भर्ता=पतिः, काम इत्यर्थः । चिरात्=चिरं, बहुकालपर्यन्तमित्यर्थः । दुर्लभः= दुष्प्राप्यः, न भविष्यति=न भविता, किन्तु अचिरमेव सुलभो भविष्यतीत्यर्थः । शृणु=आकर्णय, तत्कर्मेति शेषः । येन कर्मणा = यया क्रियया, सः=ते भर्त्ता, काम इत्यर्थः । हरलोचनाऽर्चिषि = ईशनयनज्वालाया, शलभत्वं=पतङ्गत्व, गतः=प्राप्तः ।

**व्युत्पत्तिः**—हे कुसुमायुधपत्नि = कुसुमानि आयुधं यस्य सः कुसुमायुधः, तस्य पत्नी कुसुमायुधपत्नी, तत्सम्बुद्धौ हे कुसुमायुधपत्नि ! "पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी" इत्यमरः । भर्त्ता=बिभर्तीति भर्ता, "डुभृञ् धारणपोषणयोः" इति धातोः "ण्वुल्तृचौ" इति तृच्प्रत्ययः । दुर्लभः=दुःखेन लब्धुं शक्यः दुर्लभः, "ईषदुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् प्रत्ययः । हरलोचनार्चिषी=हरतीति हरः, हरस्य लोचनं हरलोचनं, तस्य अर्चिः हरलोचनार्चिः, तस्मिन् हरलोचनार्चिषि, "ज्वालाभासो न पुंस्यर्चिः" इत्यमरः । शलभत्वं=शलभस्य भावः शलभत्वं तत् । "समौ पतङ्गशलभौ" इत्यमरः ।

**भावार्थः**—हे कामपत्नि ! तव पतिः कामः केषुचित्कालेष्वतीतेषु सुलभो- भविष्यति । यस्य कर्मणः परिपाकवशात् स मदनः शिवनेत्राग्नौ भस्मसाद् भूतस्तत् कर्माकर्णयेति भावः ।

**भाषा**—हे रति ! कुछ समय के उपरान्त तुह्मारा पति तुमको पुनः

प्राप्त होगा । जिस कर्मफल के वशीभूत हो कर काम हरकोपानल में भस्मीभूत हुआ है, उसको सुनो ।

तदेव कर्मोपाचष्टे—

**अभिलाषमुदीरितेन्द्रियः,स्वसुतायामकरोत्प्रजापतिः ।**
**अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥**

**विधि शारदा लख चल हुये, फिर रोक काम विकार को ।**
**विधि ने दिया था शाप, इससे है मिला फल मार को ॥**

**अन्वयः**—उदीरितेन्द्रियः प्रजापतिः स्वसुतायाम् अभिलाषम् अकरोत् । अथ तेन विक्रिया निगृह्य अभिशप्तः सन् एतत् फलम् अन्वभूत् ।

**व्याख्या**—उदीरितेन्द्रियः=संक्षोभितेन्द्रियः, स्मरेणेति शेषः । प्रजापतिः= ब्रह्मा, स्वसुतायाम्=आत्मपुत्र्या, सरस्वत्यामित्यर्थः । अभिलाषम्=उपभोगेच्छाम्= अकरोत्=कृतवान् । अथ=अनन्तरं, तेन–प्रजापतिना, ब्रह्मणेत्यर्थः । विक्रिया = विकारम्, इन्द्रियस्येति शेषः । निगृह्य = निरुध्य, अभिशप्तः = दत्तशापः सन्, एतत् = हरकोपानलदाहरूपं, फलं = परिणामम्, अन्वभूत् = अनुभूतवान् ।

**व्युत्पत्तिः**—उदीरितेन्द्रियः = उदीरितम् इन्द्रिय यस्य स उदीरितेन्द्रियः, प्रजापतिः = प्रजायन्ते इति प्रजाः, "उपसर्गे च सज्ञायाम्" इति डप्रत्ययः । "प्रजा स्यात्सन्ततौ जने" इत्यमरः । प्रजाना पतिः प्रजापतिः । स्वसुताया=स्वस्य सुता स्वसुता, तस्या स्वसुतायाम् । अभिलाषं="कमोऽभिलाषस्तर्षश्च" इत्यमरः । अन्वभूत्=अनूपसर्गपूर्वकात् "भू सत्तायाम्" इति धातोः लुङ् । "गातिस्थाघुपा-भूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक् ।

**भावार्थः**—पुरा खलु ब्रह्मा सृष्टिसमये सरस्वतीं निर्माय तद्रूपलावण्यदर्शन-मोहितःकामेन कृतेन्द्रियक्षोभस्तदुपभोगाकाङ्क्षां व्यधात् । अथ क्षणेन ब्रह्मणा स्वेन्द्रि-यविकारं परिहृत्य "हरकोपाग्निस्त्वा दहत्वि"ति शप्तः कामदेवः एतत् हरकोपान-लदाहरूपमिदं फलमनुभूतवान् इति भावः ।

**भाषा**—प्राचीन काल में सृष्टि के समय ब्रह्मा जी सरस्वती को उत्पन्न कर उसके रूप में मोहित हो गये थे, और काम के द्वारा उनके मन में उपभोग की आकाङ्क्षा उत्पन्न हुई थी । अनन्तर ब्रह्माजी ने अपने इन्द्रियविकार को रोक कर काम को शाप दिया कि तुम शिवजी के तृतीय नयन के अग्नि से भस्मीभूत हो जाओगे ।

शापाऽवधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

**परिणेष्यति पार्वतीं यदा, तपसा तत्प्रवणीकृतो हरः ।**
**उपलब्धसुखस्तदा स्मरं, वपुषा स्वेन नियोजयिष्यति ॥४२॥**

सानन्द गिरिजा से गिरिश उद्वाह कर लेंगे जभी ।
निज देह से रचना करेंगे काम की सुख से तभी ॥

**इति चाह स धर्मयाचितः, स्मरशापाऽवधिदां सरस्वतीम् ।**
**अशनेरमृतस्य चोभयोर्वशिनश्चाऽम्बुधराश्च योनयः ॥ ४३ ॥**

फिर अवधि स्मर के शाप की विधिने बताई इस तरह ।
नीरद-जितेन्द्रिय पवि-अमृत के हेतु होते जिस तरह ॥

**अन्वयः**—धर्मयाचितः सः "तपसा तत्प्रवणीकृतः हरः यदा पार्वतीं परिणेष्यति, तदा उपलब्धसुखः सन् स्मरं स्वेन वपुषा नियोजयिष्यति" इति स्मरशापाऽवधिदां सरस्वतीं च आह । वशिनः अम्बुधराश्च अशनेः अमृतस्य च उभयो योनयः भवन्ति ।

**व्याख्या**—धर्मयाचितः = धर्मप्रार्थितः, सः=ब्रह्मदेवः, "तपसा = नियमे [ कारणेन ], तत्प्रवणीकृतः = पार्वत्यभिमुखीकृतः, हरः = शिवः, यदा = यस्मि काले, पार्वतीं = गौरीं, परिणेष्यति=उद्वक्ष्यति, तदा=तस्मिन्काले उपलब्धसुख =प्राप्तानन्दः सन्, स्मरं=कामं, स्वेन = आत्मीयेन, वपुषा=शरीरेण, नियोजयिष्यति=संयोजयिष्यति," इति = एवं, स्मरशापाऽवधिदा=कामशापाऽवसानदायिनीं, सरस्वतीं च = वाचं च, आह=उवाच, "ननु तथाक्रुद्धस्य कथमीदृशं शान्तिरत आह" वशिनः=जितेन्द्रियाः, अम्बुधराश्च=मेघाश्च, अशनेः=वज्रस्य, अमृतस्य च=पीयूषस्य च, उभयोः,=योनयः=प्रभवाः, भवन्ति

अत्र वशिपक्षे अशन्यमृतशब्दौ लक्षणया कोपप्रसादपरौ, अम्बुधरपक्षे वैद्युताऽम्न्युदकपरौ ज्ञेयौ

**व्युत्पत्तिः**—धर्मयाचितः=धर्मेण, धर्मनामकप्रजापतिना, याचितः=प्रार्थितः, धर्मयाचितः । तत्प्रवणीकृतः = अप्रवणः प्रवणः यथा सम्पद्यते तथा कृतः प्रवणीकृतः, च्विप्रत्ययः, तस्या प्रवणीकृतः तत्प्रवणीकृतः । परिणेष्यति = पर्युपसर्गपूर्वकात् "णञ् प्रापणे" इति धातोर्लृट् ।उपलब्धसुखः = उपलब्धं सुखं येन स उपलब्धसुखः । "स्यादानन्दथुरानन्दः शर्मसातसुखानि च" इत्यमरः । स्मरशापाऽवधिका=स्मरस्य शापः स्मरशापः, अवधिं ददातीति अवधिदा, "आतोऽ-

नुपसर्गे कः" इति कप्रत्ययः। स्मरशापस्य अवधिदा स्मरशापाऽवधिदा, तां स्मरशापावधिदा। सरस्वतीं="ब्राह्मी तु भारती भाषा गीर्वाग् वाणीसरस्वती" इत्यमरः वशिनः = वशः अस्ति येषा ते वशिनः। अम्बुधराः = धरन्तीति धराः, "धृञ् धारणे" इति धातोः पचाद्यच्। अम्बूना धराः अम्बुधराः, कर्मणः शेषत्वविवक्षा। "धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्" इत्यमरः। अशनेः = "शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः। अमृतस्य = "पीयूषममृतं सुधा" इति, "पयः कीलालममृत जीवन भुवन वनम्" इति चाऽमरः। योनयः= योनिशब्दो लक्षणया प्रभववाचकः। भवन्तीति शेषः।

अत्र वशिवृत्तान्तदृष्टान्तत्वेनाप्रकृतोऽम्बुधरवृत्तान्त उपात्त इति दीपकमलङ्कारः। तल्लक्षणं च यथा—

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥ इति

तेन चार्थान्तरन्यासस्य सङ्कर इति बोध्यम्। इदं युग्मकम्। तल्लक्षणं यथा साहित्यदर्पणे-"छन्दोबद्धपदं पद्य तेनैकेन च मुक्तकम्। द्वाभ्या तु युग्मकम्" इति।

**भावार्थः**—"यदा महेश्वरः पार्वतीकृतैस्तपोभिरुद्बुद्धाभिलाषस्ता परिणेष्यति तदा कामोऽयमस्माकमनुकूल एवेत्यवधार्य स स्वय प्राचीनेनैव शरीरेण मदनं योजयिष्यतीति" धर्मेण सृष्टिरक्षार्थं प्रार्थितः स ब्रह्मा स्मरशापावसानदायिनीं वाचमुवाच। मेघाः वैद्युताग्नेर्जलस्य चोभयोरपि यथोद्भवस्थानानि भवन्ति, तथैव जितेन्द्रिया अपि कोपप्रसादयोरुभयोरप्युत्पादका भवन्तीति भावः।

**भाषा**—सृष्टिरक्षा के लिये धर्मने जब प्रार्थना की तब ब्रह्माजीने कहा कि "जब महेश्वर पार्वती को तपस्या से सन्तुष्ट होकर उसके साथ विवाह कर लेंगे, तब काम को अपना अनुकूल समझ उसको पहलेके शरीर से युक्त कर देंगे" इस प्रकार काम हमारे अभिशाप से छुटकारा पायगा। जिस प्रकार मेघ में जल तथा विद्युत दोनों का वासस्थान है, उस प्रकार संयमी पुरुषों मे कोप व प्रसाद दोनों एकत्र रहते हैं।

इत्थं मदनस्य प्रत्यापत्तिमुपपाद्य रत्याः कर्तव्यमेवाह—

**तदिदं परिरक्ष शोभने! भवितव्यप्रियसङ्गमं वपुः।**
**रविपीतजला तपात्यये, पुनरोघेन हि युज्यते नदी॥ ४४॥**

रक्षा करो निज देह की प्रिय के लिये तुम सर्वदा।
सूखी नदी ग्रीष्मान्त में मिलती तरङ्गों से सदा॥

इस तरह रति को गगन वाणी ने बचाया तोष दे ।
ऋतु नाथ ने समझा दिया उसको अमित सन्तोष दे ॥

**अन्वयः**—इत्थम् अदृश्यरूपं किमपि भूतं रतेः मरणव्यवसायबुद्धिं मन्दीचकार । अथ कुसुमायुधबन्धुश्च तत्प्रत्ययात् एनां सुचरिताऽर्थपदैः वचोभिः आश्वासयत् ॥

**व्याख्या**—इत्थम् = अनेन प्रकारेण, अदृश्यरूपम् = अनवलोकनीयस्वरूपं, किमपि भूतं = कश्चित् प्राणी, रतेः=कामपत्न्याः, मरणव्यवसायबुद्धिं=मरणोद्योग-मतिं, मन्दीचकार=शिथिलीचकार, अल्पीचकारेत्यर्थः, न तु निश्शेषमपाचकार । निश्शेषापहरणं तु वसन्तवचनादासीदित्याह-अथ = अनन्तरम् कुसुमायुधबन्धुश्च= पुष्पायुधबन्धुश्च, वसन्तश्चेत्यर्थः । तत्प्रत्ययात् = भूतविश्वासात् , एनां=रतिं, सुच-रिताऽर्थपदैः=सुचरिताऽर्थशब्दैः, वचोभिः=वाक्यैः, आश्वासयत्=आश्वासितवान् ।

**व्युत्पत्तिः**—इत्थम् = "इदमस्थमुः" इति थमुप्रत्ययः । अदृश्यरूपं = द्रष्टुं शक्यं दृश्यं, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः । न दृश्यं अदृश्यं, तत् रूपं यस्य तत् अदृश्यरूपं, भूतं = "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः । मरणव्यवसायबुद्धिं = मरणस्य व्यवसायः मरणव्यवसायः, तस्मिन् बुद्धिः मरण-व्यवसायबुद्धिः, तां मरणव्यवसायबुद्धिं । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः । मन्दीचकार = अमन्दं मन्दं यथा सम्पद्यते तथा चकार मन्दी-चकार, च्विप्रत्ययः । "मूढाऽल्पाऽपटुनिर्भाग्या मन्दाः" इत्यमरः । कुसुमायुध-बन्धुः = कुसुमानि आयुधं यस्य स कुसुमायुधः, तस्य बन्धुः कुसुमायुधबन्धुः । तत्प्रत्ययात् = तस्मिन् = भूते, प्रत्ययः=विश्वासः तत्प्रत्ययः, तस्मात् तत्प्रत्ययात् , "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । एनां="द्वितीयाटौस्स्वेनः" इति इदंशब्दस्य एनादेशः । सुचरिताऽर्थपदैः=चरितः अर्थः येषु तानि चरिताऽर्थानि, सुष्ठु चरिताऽर्थानि सुचरिताऽर्थानि, तानि पदानि येषां तानि सुचरिताऽर्थपदानि, तैः सुचरितार्थपदैः । वचोभिः = "व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः । अत्र वसन्ततिलकावृत्तं, तल्लक्षणं यथा—

"उक्ता वसन्ततिलका तभजा जगौ गः" इति ॥

**भावार्थः**—अनेन प्रकारेणादृश्यरूपः कश्चिद्देवविशेषः कामदेवभार्याया देह-त्यागनिश्चयं निवारयामास । तद्विश्वासादेव कामसुहृद् वसन्तोऽपि सयुक्तिकैर्वचनै-स्तामाश्वासयामासेति भावः ।

**भाषा**—इस प्रकार कोई अदृश्य देव ने रतिको देहत्याग के संकल्प से निवृत्त

किया। और उसी दैववाणी के ऊपर विश्वास स्थापन कर कामसखा वसन्त भी युक्तिपूर्ण वचनों द्वारा अपनी बन्धुस्त्री रति को आश्वासन देने लगा।

अथ रतिप्रलापप्रकरणमुपसंहरति—

**अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयाम्बभूव।**
**शशिन इव दिवातनस्य लेखा, किरणपरिक्षयधूसरा प्रदोषम् ॥४६॥**

विपदवधि को दुख क्षीण रति लखने लगी वह इस तरह।
दिन की मलिन शशि किरण करती निशि–प्रतीक्षा जिस तरह ॥

**अन्वयः**—अथ व्यसनकृशा मदनवधूः उपप्लवान्तं किरणपरिक्षयधूसरा दिवातनस्य शशिनः लेखा प्रदोषम् इव परिपालयाम्बभूव।

**व्याख्या**—अथ=अनन्तरं, व्यसनकृशा=दुःखक्षामा, मदनवधूः=कामभार्या, रतिरित्यर्थः। उपप्लवाऽन्तं=विपत्त्यवधिं, कामशापावसानसमयमित्यर्थः। किरणपरिक्षयधूसरा=मयूखपरिक्षयमलिना, दिवातनस्य=दिनभवस्य, शशिनः=चन्द्रस्य, लेखा=रेखा, कलेत्यर्थः। प्रदोषम् इव=रात्रिम् इव, परिपालयाम्बभूव=प्रतीक्षाञ्चक्रे।

**व्युत्पत्तिः**—व्यसनकृशा=व्यसनेन कृशा व्यसनकृशा, मदनवधूः=मदनस्य वधूः मदनवधूः। उपप्लवाऽन्तम्=उपप्लवस्य अन्तः उपप्लवाऽन्तः, तम् उपप्लवान्त। किरणपरिक्षयधूसरा=किरणानां परिक्षयः किरणपरिक्षयः, तेन धूसरा किरणपरिक्षयधूसरा। दिवातनस्य=दिवा भवः दिवातनः, तस्य दिवातनस्य, "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इति ट्युप्रत्ययः। शशिनः= शशः अस्याऽस्तीति शशी, तस्य शशिनः। अत्र पुष्पिताग्रावृत्तम्, तल्लक्षणं यथा–

"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥

**भावार्थः**—अथाकाशवाणीवसन्ताश्वासनानन्तरं दुःखेन कृशशरीरा रतिः कामस्य शापावसानसमयं प्रतीक्षा चक्रे। यथा दिवावर्तमानस्य चन्द्रस्य रश्मिनाशधूसरवर्णा कला स्वतेजोवृद्धिकरं सायं कालं प्रतिपालयतीति भावः।

**भाषा**—इस प्रकार आकाशवाणी तथा वसन्त के आश्वासन को सुनकर शोक के कारण कृशशरीरा रति मदन के अभिशाप की अन्तिम तिथि की प्रतीक्षा करने लगीं। जैसे दिन में दृष्ट तेजोहीन चन्द्रमां की कला अपने प्रकाश-प्रद सन्ध्या समय की प्रतीक्षा कर रही हो।

इति भारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्ययासमेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः समाप्तः।

# अथ पञ्चमः सर्गः ।

इत्थं कामदहनप्रसङ्गागतं रतिप्रलापवृत्तमुपसंहृत्याधिकारिकं वृत्तं स्वावसरेऽवतारयति—

**तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।**
**निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥**

कामारि से हो खिन्न आँखो में सलिल भरने लगी ।
प्रिय मधुर निज सौन्दर्य की निन्दा उमा करने लगी ॥

**अन्वयः**—पार्वती तथा समक्षं मनोभवं दहता पिनाकिना भग्नमनोरथा सती हृदयेन रूपं निनिन्द; चारुता प्रियेषु सौभाग्यफला भवति ।

**व्याख्या**—पार्वती-उमा, तथा = तेन प्रकारेण, समक्षम् = पुरतः, मनोभवं = कामदेवं, दहता = भस्मीकुर्वता, पिनाकिना = महेश्वरेण, भग्नमनोरथा = खण्डिताऽभिलाषा, सती = भवन्ती, हृदयेन = मनसा, रूपं = सौन्दर्यम् , निनिन्द=निन्दितवती, धिक् मे रूपं यद्धरमनोहरणाय न समर्थमिति गर्हितवतीत्यर्थः । युक्तं चैतत् इत्याह—चारुता = सौन्दर्यं, प्रियेषु = वल्लभेषु, सौभाग्यफला=प्रियवाल्लभ्यफला, भवतीति शेषः ।

**व्युत्पत्तिः**—पार्वती=पर्वतस्याऽपत्यं स्त्री पार्वती, "टिड्ढाणञ्०" इत्यादिना ङीप् । समक्षम् = अक्ष्णोः समीपम् समक्षम् , "अव्ययं विभक्तिसमीपसमृद्धि०" इत्यादिना अव्ययीभावः, "प्रतिपरसमनुभ्योऽक्ष्णः" इति गणसूत्रे सम्पूर्वस्य अक्षिशब्दस्य पाठात् "अव्ययीभावे शरत्प्रभृतिभ्यः" इति सूत्रेण समासान्तष्टच् । मनोभवं = मनसि भवतीति मनोभवः, तं मनोभवम् । दहता = दहतीति दहन् , तेन दहता, "दह भस्मीकरणे" इति धातोः शतृप्रत्ययः । पिनाकिना = पिनाकः अस्याऽस्तीति पिनाकी, तेन पिनाकिना । भग्नमनोरथा = भग्नः = नष्टः, मनोरथः = हरप्राप्तिरूपः, यस्याः सा भग्नमनोरथा, "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः । सती = अस्तीति सती, "अस भुवि" इति धातोः शतृप्रत्ययः, "श्नसोरल्लोपः" इति अल्लोपः; ततः स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप्प्रत्ययः । हृदयेन="चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः । चारुता =चारोर्भावश्चारुता, तल्प्रत्ययः । प्रियेषु = प्रीणन्तीति प्रियाः, तेषु प्रियेषु, वैषयिकी सप्तमीयम् । सौभाग्यफला = सौभाग्यं फलं यस्याः सा सौ-

भाग्यफला । अथाऽस्मिन् सर्गे वंशस्थं वृत्तं, "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ।

**भावार्थः**— पूर्वोक्तप्रकारेणात्मनः प्रत्यक्षं कामदेव भस्मावशेषतामेव प्रापयता हरेण भविहरजायात्वलक्षणमनोरथस्य भङ्ग प्रापितत्वात् , पार्वती स्वकीय स्वाभाविकं सौन्दर्यं मनसा निन्दितवती । प्रियविषयकं सौभाग्यमित्येकमेव हि सुन्दरतायाः फलं, तदभावे किं रूपसम्पदेति भावः ।

**भाषा**—हर के कोपानल से कामदेव को अपनी आखो के सामने जल कर खाक होते हुए देख कर, पार्वती की शिवजी की स्त्री होने की आशा भङ्ग हुई। तब वह अपनी स्वाभाविक सुन्दरता को कोसने लगी। यदि अपने प्रियतम को हि रिझा न सकी तो व्यर्थ सौन्दर्य से फल ही क्या ।

अथाऽलौकिकयोर्नायिकयोस्तथाविधमेव प्रयोज्योपावर्तनविधिमवतारयति—

**इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।**
**अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥२॥**

**तप से सुछवि को सफल करने के लिये की कामना ।**
**पर-मार्ग से कैसे मिलेगा प्रेम-पति मृदुता सना ॥**

**अन्वयः**— सा समाधिम् आस्थाय तपोभिः आत्मनः अवन्ध्यरूपता कर्तुम् इयेष । अन्यथा तथाविध प्रेम तादृशः पतिश्च तद् द्वयं कथं वा अवाप्यते ।

**व्याख्या**—सा = पार्वती, समाधिम् = एकाग्रताम् , आस्थाय = अवलम्ब्य, तपोभिः = व्रतविशेषैः, वक्ष्यमाणैरिति शेषः । आत्मनः = स्वस्य, अवन्ध्यरूपतां= सफलसौन्दर्य, कर्तुं=विधातुम् , इयेष = इष्टवती, इच्छति स्मेत्यर्थः । अन्यथा = अन्यप्रकारेण "लौकिकोपावर्तनमात्रेणेत्यर्थः । तथाविधं = तादृशं, प्रेम = स्नेहः, येन अर्धाऽङ्गहरा शिवस्य भवेदिति यावत् । तादृशः=तथाविधः, पतिश्च=स्वामी च, यो मृत्युञ्जय इति यावत् । तत् द्वयं = तत् उभयं, कथ वा=केन प्रकारेण वा, अवाप्यते = प्राप्यते ।

**व्युत्पत्तिः**—आस्थाय = आङुपसर्गपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः क्त्वा, तस्य ल्यबादेशः । अवन्ध्यरूपताम् = न वन्ध्यम् अवन्ध्यम् । अवन्ध्यं च तद्रूपम् , अवन्ध्यरूपम् , तस्य भावः अवन्ध्यरूपता, ताम् अवन्ध्यरूपता । यद्वा अवन्ध्यं रूपं यस्याः सा अवन्ध्यरूपा, तस्याः भावः अवन्ध्यरूपता, ताम् अवन्ध्यरूपता । "त्वतलोर्गुणवचनस्य" इति पुवद्भावः । तथाविधं=तथा विधा

यस्य तत् तथाविधम् । प्रेम="प्रेमा ना प्रियता हार्दं प्रेमस्नेहः" इत्यमरः । द्वयम्=द्वौ अवयवौ यस्य तद् द्वयं, "सख्याया अवयवे तयप्" इति तयप्, तस्य "द्वित्रिभ्यां तयस्याऽयज्वा" इति अयजादेशो विकल्पात्, पक्षे द्वितयमित्यपि ।
अत्राह मनुः—

"यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम् ।
तत् सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥" इति । (११।२३८)

**भावार्थः**—सा पर्वती चित्तैकाग्र्यमवलम्ब्य तपश्चर्याभिः हरप्राप्तिरूपस्वमनोरथस्य साफल्यं प्रापयितुमिच्छितवती । तदभावे स्वशरीरार्धप्रदः पत्युः स्नेहः, अनन्यनारीभाक् पतिश्चेत्येतद् द्वयं कथं लभ्यते, न कथञ्चिदपीति भावः ।

**भाषा**—तब पार्वतीने एकाग्रचित्त से तपश्चर्या करके अपनी वासना को सफल करने की इच्छा की । तपस्या के विना पति का तादृश उत्कृष्ट प्रेम, तथा शिव जैसे पति, यह दोनों कैसे मिल सकता है ?

अथ पार्वत्याः कार्यसाधनक्षमं स्थिरव्यवसायत्वं वर्णयितुमुपक्रमते—

**निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।**
**उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥३॥**

**तप के लिये व्याकुल तथा हर-प्रेम में अतिशय पगी ।**
**मेना मना करती उमा को यों वचन कहने लगी ॥**

**अन्वयः**—मेना गिरीशप्रतिसक्तमानसां तपसे कृतोद्यमां सुतां निशम्य एनां वक्षसा परिरभ्य महतः मुनिव्रतात् निवारयन्ती सती उवाच ।

**व्याख्या**—मेना=मेनका, हिमालयपत्नीत्यर्थः । गिरीशप्रतिसक्तमानसां=हरासक्तचित्तां, तपसे=तपश्चरणाय, कृतोद्यमां=विहितोद्योगां, सुतां=पुत्रीं, गौरीमित्यर्थः । निशम्य=श्रुत्वा, एनां=पार्वतीं, वक्षसा=उरसा, परिरभ्य=आलिङ्ग्य, महतः=वृहतः, मुनिव्रतात्=तपसः, निवारयन्ती=निषेधयन्ती, सती उवाच=अब्रवीत् ।

**व्युत्पत्तिः**—गिरीशप्रतिसक्तमानसां=गिरेः ईशः गिरीशः, "भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः" इत्यमरः । गिरीशे प्रतिसक्तं गिरीशप्रतिसक्तं, मन एव मानसं, मनश्शब्दात् स्वार्थे अण् । गिरीशप्रतिसक्तं मानसं यस्याः सा गिरीशप्रतिसक्तमानसा, तां गिरीशप्रतिसक्तमानसां । कृतोद्यमां—कृतः उद्यमः यया सा कृतोद्यमा, तां कृतोद्यमां । मुनिव्रतात्=मुनेः व्रतम् मुनिव्रतं, तस्मात् मुनिव्र-

तात् । निवारयन्ती=निवारयतीति निवारयन्ती, शतृप्रत्ययः ।

मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् "वारणार्थानामीप्सितः" इति नाऽपादानत्वं, तथाऽपि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् "ध्रुवमपायेऽपादानम्" इत्यपादानत्वमेव स्यात् । यथाऽऽह भाष्यकारः-"यच्च मिथ्यासंप्राप्य निवर्तते तच्च ध्रुवमपायेऽपादानमिति प्रसिद्धम् ।" इति मल्लिनाथः ।

वस्तुतस्तु भाष्यादौ वारणार्थानामिति सूत्रे कर्तुरित्यनुवृत्तेरप्रदर्शितत्वात् प्रकृते मेनायास्तदनीप्सितत्वेऽपि पार्वत्या मुनिव्रतस्याभीप्सितत्वाद् वारणार्थानामित्यनेनैवापादानत्वे न काप्यनुपपत्तिरिति बोध्यम् ।

**भावार्थः**—अथ माता मेना सुता पार्वतीं तपश्चरणकृतनिश्चया हरासक्तचित्ता च तत्सखीमुखादवगम्योरसा गाढमालिङ्ग्यात्यन्तदुश्चरात्तपसः प्रतिषेधं कुर्वती सती वक्ष्यमाणं जगादेति भावः ।

**भाषा**—जब पार्वती की सखी मेना को यह बात मालूम हुई कि पार्वती का चित्त हर में आसक्त हो गया है, और पार्वती तपस्या करने के लिये कृतसङ्कल्पा है, तब वह अपनी पुत्री को गले से लगाकर तपस्या से निवृत्त करने के लिये इस प्रकार बोलने लगी ।

क्लेशेन विनापि मनीषितसिद्धिप्रद कर्मान्तरमुपदर्शयति—

**मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से ! क्व च तावकं वपुः ।**
**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥**

अभिलषित सुर हैं भवन में, तप है कहां तन है कहां ।
करता शिरीष सहन भ्रमर पद, भार खग–पद का कहां ॥

**अन्वयः**—हे वत्से ! मनीषिताः देवताः गृहेषु सन्ति । तपः क्व ? तावकं वपुश्च क्व ? पेलवं शिरीषपुष्पं भ्रमरस्य पदं सहेत, पतत्रिणः, पदं न सहेत ।

**व्याख्या**—हे वत्से = हे पुत्रि ! मनीषिताः=अभीष्टाः, देवताः=देवाः, गृहेषु = भवनेषु, सन्ति=विद्यन्ते । त्वं ता आराधय, इति शेषः । तपः=नियमव्रतं, क्व=कुत्र, तावकं=त्वदीयं, वपुश्च = शरीरं च, क्व=कुत्र, पेलवं=कोमलं, शिरीषपुष्पं = शिरीषकुसुमं, भ्रमरस्य=भृङ्गस्य पदं=चरणस्थितिं, सहेत=मर्षयेत्, पतत्रिणः पुनः = पक्षिणस्तु, पदं=चरणस्थितिं, न सहेत = न मर्षयेत् ।

**व्युत्पत्तिः**—मनीषिताः=मनस ईषा मनीषा, "अचोऽन्त्यादि टि" इति असुभागस्य टिसंज्ञा, ततः "शकन्ध्वादिषु पररूपं वाच्यम्" इति पररूपत्वम् । देवताः=देवा एव देवताः, स्वाऽर्थे तल । "वृन्दारका दैवतानि पुंसि वा देवताः

स्त्रियाम्'' इत्यमरः । गृहेषु="गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः'' इत्यमरः । तावकं=तव इदं तावकं, "युष्मदस्मदोरन्यतरस्यां खञ्च" इत्यण् प्रत्ययः, "तवकममकावेकवचने" इति तवकादेशः, "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च । पेलवं="पेलवं कोमलम्" इति त्रिकाण्डशेषः । शिरीषपुष्पं=शिरीषस्य पुष्पं शिरीषपुष्पं, भ्रमरस्य=भ्रम अनवस्थाने" इति धातोः "अतिकमिभ्रमिचमि" इत्युणादिसूत्रेणाऽरच् प्रत्ययः । सहेत="षह मर्षणे" इति धातोर्विधिलिङ् । पतत्रिणः=पतत्रम् अस्ति अस्य इति पतत्री, तस्य पतत्रिणः, इनिप्रत्ययः । "पतत्रिपत्रिपतगपतत्पत्ररथाऽण्डजाः" इत्यमरः । अत्र पूर्वार्द्धे विषमालङ्कारः ।

तल्लक्षणं यथा—

"क्वचिद् यदतिवैषम्यान्न श्लेषो घटनामियाद्" इति ।

उत्तरार्धे तु सादृश्यनिमित्तोऽर्थान्तरन्यासोऽलङ्कारः । तयोश्च संसृष्टिः ॥

**भावार्थः**—हे पुत्रि ! इष्टार्थप्रदाः प्रतिमारूपेण वर्तमाना इन्द्राण्याद्याः देवताः स्वगृहेष्वेव विद्यमानाः सन्ति, ता एव यथेष्टं पूजय । कठिनशरीरैर्मुनिभिरेव कर्तुं शक्यमिदं तपः क्व ?, अत्यन्तकोमलं तव शरीरञ्च क्व ? यथा भ्रमरावस्थानक्षमं शिरीषकुसुमं विकाद्यवस्थानं न सहते, तथा कोमलतरं तव शरीरं कठिनशरीरसाध्यं तपश्चरितुमक्षममेवेति भावः ।

**भाषा**—हे पुत्रि ! तुम घर में रहकर ही इन्द्राणी आदि देवताओं की प्रतिमाओं की पूजा करो । कहा यह शारिरिक कष्ट साध्य मुनिजनोचित तपस्या रूप कार्य, और कहा तुम्हारा यह फूल के समान अत्यन्त मृदु शरीर । शिरीष पुष्प के ऊपर केवल भ्रमर ही बैठ सकता है, दूसरे पक्षिगण यदि उस पर बैठना चाहे तो वह सहन नहीं कर सकता ।

इत्थं प्रवृत्तस्य जननीवचनस्य स्थिरव्यवसायाया पार्वत्या वैफल्यमाह—

**इति ध्रुवेच्छामनुशासती सुतां, शशाक मेना न नियन्तुमुद्यमात् ।**
**क ईप्सितार्थस्थिरनिश्चयं मनः, पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५॥**

मेना न रोक सकी उमा को कठिन तप उद्योग से ।
रुकता अधोमुख जल न हटता मन न इप्सित भोग से ॥

**अन्वयः**—इति अनुशासती मेना ध्रुवेच्छां सुताम् उद्यमात् नियन्तुं न शशाक । ईप्सितार्थस्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत् ।

**व्याख्या**—इति = एवम् , अनुशासती = उपदिशन्ती, मेना = हिमवत्पत्नी,

ध्रुवेच्छा = स्थिरव्यवसायां, सुता = पुत्रीं, पार्वतीमित्यर्थः । उद्यमात् = उद्योगात् मुनिव्रतोद्योगादित्यर्थः । नियन्तुं = निवारयितुं, न शशाक=न समर्था अभूत् ; ईप्सिताऽर्थस्थिरनिश्चयम् = इष्टाऽर्थदृढनिश्चय, मनः = चित्तं, निम्नाभिमुखं=निम्नप्रयणं, पयश्च=जलं च, कः, प्रतीपयेत् = प्रतिकूलयेत्, न कोऽपीत्यर्थः ।

**व्युत्पत्तिः**—अनुशासती = अनुशास्तीति अनुशासती, अनूपसर्गपूर्वकात् "शासु अनुशिष्टौ" इति धातोः शतृप्रत्ययः, "जक्षित्यादयः षट्" इत्यभ्यस्तसंज्ञा; ततः "नाभ्यस्ताच्छतुः" इति नुम्निषेधः । अनन्तरं स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप् । ध्रुवेच्छा=ध्रुवा इच्छा यस्याः सा ध्रुवेच्छा, तां ध्रुवेच्छाम् "इच्छा-काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः । ईप्सिताऽर्थस्थिरनिश्चयम् = ईप्सितश्चाऽसौ अर्थः ईप्सिताऽर्थः, स्थिरः निश्चयः यस्य तत् स्थिरनिश्चयम्, ईप्सितार्थे स्थिरनिश्चयम् ईप्सितार्थस्थिरनिश्चयं, तत् । निम्नाऽभिमुख=निम्ने अभिमुखं, निम्नाभिमुख, तत् । निम्नप्रदेशं प्रत्यभिमुखं कृतप्रवाहमित्यर्थः । पयः = "पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः ।

अत्र दीपकाऽनुप्राणितोऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—पूर्वोक्तप्रकारेणोपदिशन्ती मेना स्वपुत्रीं पार्वतीं मुनिव्रतोद्योगात् निवर्तयितुं न शक्ताऽभूत् । अभीष्टवस्तुनि दृढनिश्चयं मानसमधःप्रदेशाभिमुखं कृतप्रवाहं जलञ्च कः प्रतिनिवर्तयेत् । न कोऽपीति भावः ।

**भाषा**—इस प्रकार उपदेश करने पर भी मेना स्वकीय कन्या पार्वतीको मुनिव्रत अर्थात् तपस्या करने के सङ्कल्प से निवृत्त नहीं कर सकी । मन के स्थिर संकल्प को, तथा नीचे की ओर जाने वाले जल के प्रवाह को कौन रोक सकता है ।

एवमङ्कुरितस्य पार्वत्या उत्साहस्य वृद्धिं वर्णयति—

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।**
**अयाचताऽरण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥६॥**

हिम-गिरि-सुताने आलि द्वारा जनक से अभिलाष की ।
अपनी तपस्या के लिये की याचना वनवास की ॥

**अन्वयः**—कदाचित् मनस्विनी सा मनोरथज्ञं पितरम् आसन्नसखीमुखेन फलोदयान्ताय तपःसमाधये आत्मनः अरण्यनिवासम् अयाचत ।

**व्याख्या**—कदाचित्=कस्मिंश्चित्समये, मनस्विनी=स्थिरचित्ता, सा पार्वती,

मनोरथज्ञम्=अभिलाषाऽभिज्ञं, पितरं=तातं, हिमालयमित्यर्थः । आसन्नसखी-मुखेन=आप्तसख्युपायेन, फलोदयान्ताय=फलोत्पत्त्यवधये, तपःसमाधये=तपोनि-यमाऽर्थम्, आत्मनः=स्वस्य, अरण्यनिवासं=वनवासम्, अयाचत=याचितवती ।

**व्युत्पत्तिः**—मनस्विनी=प्रशस्तं मनः अस्या अस्तीति मनस्विनी, मनः शब्दात् "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः, तदन्तात् "ऋन्नेभ्यो ङीप्" इति ङीप्। मनोरथज्ञ=मनोरथं जानातीति मनोरथज्ञः, तं मनोरथज्ञम् । "आतोऽनुपसर्गे कः" इति कप्रत्ययः । आसन्नसखीमुखेन=आसन्ना चाऽसौ सखी आसन्नसखी, "समीपे निकटाऽऽसन्नसनिकृष्टसनीडवत्" इति "आलिः सखी वय-स्या च" इति चाऽमरः । आसन्नसखी एव मुखम् आसन्नसखीमुखं, तेन आस-न्नसखीमुखेन "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति विश्वः । फलोद-याऽन्ताय=फलस्य उदयः=फलोदय, स अन्तः=अवधिः, यस्य स फलोदयाऽन्तः, तस्मै फलोदयान्ताय । तपःसमाधये=तपसः समाधिः, तस्मै तपःसमाधये । अर-ण्यनिवासम्=अरण्ये निवासः अरण्यनिवासः, तम् अरण्यनिवासम् । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः । अयाचत=याचधातोर्लङि रूपम् । "दुह्याच्॰" इत्यादिना द्विकर्मकत्वम् । मनस्विनो लक्षणं यथा—

"महाकार्ये कृतोद्योगो विघ्नैराहतमानसः ।
प्रारब्धं न त्यजति यः स मनस्वीति कथ्यते" ॥ इति ।

**भावार्थः**—अथ दृढनिश्चया पार्वती प्रश्नावसरे लब्धे सति स्वाभिलाषाभिज्ञं पितरं हिमालयं निरन्तरसमीपवर्तिन्याः सख्या मुखेनाफलोदयं तपः कर्तुं स्वस्य वनवासं याचितवतीति भावः ।

**भाषा**—तब अवसर पाकर पार्वतीने सखी के द्वारा पिता हिमालय से अपनी इच्छा की पूर्ति होने तक तपस्या करने के लिये वनवास की आज्ञा मागी ।

अथ पार्वत्याः पितृनियोगपुरस्सरं तपोऽनुरूपदेशप्राप्तिमाह—

**अथाऽनुरूपाऽभिनिवेशतोषिणा, कृताभ्यनुज्ञा गुरुणा गरीयसा ।**
**प्रजासु पश्चात्प्रथितं तदाख्यया, जगाम गौरी शिखरं शिखण्डिमत् ॥७॥**

सुन योग्य आग्रह अचल ने आदेश गिरिजा को दिया ।
प्रस्थान गौरी-शिखर पर गिरिराज-कन्या ने किया ॥

**अन्वयः**—अथ गौरी अनुरूपाऽभिनिवेशतोषिणा गरीयसा गुरुणा कृता-ऽभ्यनुज्ञा सती, पश्चात् प्रजासु तदाख्यया प्रथितं शिखण्डिमत् शिखरं जगाम ।

**व्याख्या**—अथ = अनन्तरं, गौरी = पार्वती, अनुरूपाऽभिनिवेशतोषिणा= योग्याग्रहसन्तुष्टेन, गरीयसा=पूज्यतमेन, गुरुणा=पित्रा, हिमालयेनेत्यर्थः । कृताऽभ्यनुज्ञा = कृताऽनुमतिः सती, तपः कुरु इत्युक्त्या इत्यर्थः । पश्चात् = अनन्तरं तपःसिद्ध्युत्तरकालमित्यर्थः। प्रजासु = जनेषु, तदाख्यया = तन्नाम्ना, गौरीनाम्नेत्यर्थः । प्रथित = प्रख्यातं, गौरीशिखरमिति प्रसिद्धमित्यर्थः । शिखण्डिमत्=मयूरयुक्तं, शिखरं = शृङ्गं, जगाम = ययौ ।

**व्युत्पत्तिः**—गौरी="उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः । अनुरूपाऽभिनिवेशतोषिणा = अनुरूपश्चाऽसौ अभिनिवेशः अनुरूपाऽभिनिवेशः, तेन तुष्यतीति अनरूपाऽभिनिवेशतोषी, तेन अनुरूपाभिनिवेशतोषिणा, विनिप्रत्ययः । गरीयसा=अतिशयेन गुरुः गरीयान् , तेन गरीयसा, ईयसुन् प्रत्ययः। कृताऽभ्यनुज्ञा = कृता अभ्यनुज्ञा यस्यै सा कृताभ्यनुज्ञा । तदाख्यया = तस्या आख्या तदाख्या, तया तदाख्यया । प्रथितं = "प्रतीते प्रथितख्यातवित्तविज्ञान विश्रुताः" इत्यमरः । शिखण्डिमत् = प्रशस्ताः शिखण्डिनः सन्ति यस्मिंस्तत शिखण्डिमत् , तपःसौकर्यार्थं दुष्टसत्वानामभावोऽप्यनेन ध्वन्यते । न हि शार्दूला द्यधिष्ठिते देशे शिखण्डिनस्तद्भयान्निवसन्ति ।

**भावार्थः**—गौरीप्रार्थना श्रुत्वा योग्यवराभिलाषोत्कर्षेण सन्तुष्यता पूज्ये पित्रा हिमालयेन तथास्त्विति प्राप्तानुमति सा गौरी तपःसिद्ध्युत्तरकालं गौरीचिर निवासेनैव हेतुना जनेषु गौरीशिखरमिति नाम्ना प्रसिद्धत बहुबर्हियुक्तं हिमालयशिखर प्रययाविति भावः ।

**भाषा**—गौरी की प्रार्थना सुनकर हिमालय को जब मालूम हुआ कि पार्वती की अभिलाषा महादेव ऐसे योग्य वर पाने की है, तब उन्होंने सन्तुष्ट होकर अपनी पुत्रीको इच्छानुसार अनुमति दी । पार्वती भी आज्ञा पाकर सिद्धि प्राप्त होने तक तपस्या करने के लिये उस चोटी के ऊपर गई, जो बाद में उसी के नाम पर गौरीशिखर के नाम से प्रसिद्ध हुई ।

अथ षड्भिः श्लोकैः तपस उपक्रमो वर्ण्यते । तत्रादौ तपश्चरणाङ्गभूत वल्कलबन्धनमाह—

**विमुच्य सा हारमहार्यनिश्चया, विलोलयष्टिप्रविलुप्तचन्दनम् ।**
**बबन्ध बालारुणबभ्रु वल्कलं, पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥**

अति लोल यष्टि प्रमृष्ट चन्दन हार उसने तज दिया ।
शिशु सूर्य कपिश विशद उरसे भग्न त्वक धारण किया ॥

**अन्वयः**—अहार्यनिश्चया सा विलोलयष्टिप्रविलुप्तचन्दनं हार विमुच्य बालाऽरुणबभ्रु पयोधरोत्सेधविशीर्णसंहति वल्कलं बबन्ध ।

**व्याख्या**—अहार्यनिश्चया = अनिवार्यनिर्णया, सा = गौरी, विलोलयष्टिप्रविलुप्तचन्दन = चञ्चलप्रतिसरप्रमृष्टचन्दनं, हारं=मुक्ताऽऽवलीं, विमुच्य=विहाय, बालाऽरुणबभ्रु=बालाऽर्कपिङ्गल, पयोधरोत्सेधविशीर्णसंहति=स्तनोच्छ्रायविघटिताऽवयवसंश्लेषं, वल्कलं=वल्कं, स्तनावरणार्थमिति यावत् । बबन्ध=धारयामास !

**व्युत्पत्तिः**—अहार्यनिश्चया=हर्तुं शक्यः हार्यः, "हृञ् हरणे" इति धातोः "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः, "अचो ञ्णिति" इति वृद्धिश्च । न हार्यः अहार्यः, स निश्चयः यस्याः सा अहार्यनिश्चया, "समौ निर्णयनिश्चयौ" इत्यमरः । विलोलयष्टिप्रविलुप्तचन्दन=विलोलाश्च ता यष्टयः विलोलयष्टयः । प्रकर्षेण विलुप्तं प्रविलुप्तं, "सुप्सुपा" इति समासः । प्रविलुप्त चन्दनं=स्तनाऽन्तर्गतमित्यर्थः, येन स प्रविलुप्तचन्दनः । विलोलयष्टिभिः प्रविलुप्तचन्दनः विलोलयष्टिप्रविलुप्तचन्दनः, त विलोलयष्टिप्रविलुप्तचन्दनं । बालाऽरुणबभ्रु = बालश्चासौ अरुणः बालाऽरुणः, "सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाऽग्रजः" इत्यमरः । बालाऽरुण इव बभ्रु बालाऽरुणबभ्रु तत् । पयोधरोत्सेधविशीर्णसंहति = धरतस्तौ धर, "धृञ् धारणे" पचाद्यच् । पयसा धरौ पयोधरौ, "स्त्रीस्तनाऽब्दौ पयोधरौ" इत्यमरः । पयोधरयोः उत्सेधः पयोधरोत्सेधः, तेन विशीर्णा पयोधरोत्सेधविशीर्णा, सा संहतिः = अवयवसंश्लेषः, यस्य तत् पयोधरोत्सेधविशीर्णसंहति, तत् । वल्कलं = कण्ठलम्बिस्तनोत्तरीयभूतमित्यर्थः । अत्र परिवृत्तिरलङ्कारः ।

तल्लक्षणं यथा—

"परिवृत्तिर्विनिमयो योऽर्थाना स्यात् समासमैः" इति ।

**भावार्थः**—अनिवार्याऽध्यवसाया सा पार्वती कुचतटहरिचन्दनाङ्कितां मुक्तावलीं विहाय बालार्कवद् पिङ्गलवर्णं स्तनोच्छ्रायविघटितावयवं वल्कलं स्तनाभोगे गाढं धारयामासेति भावः ।

**भाषा**—दृढनिश्चया पार्वती ने अपने हरिचन्दनाङ्कित मुक्ताहार को त्यागकर प्रभात काल के सूर्य के वर्ण के समान लाल वृक्ष की छाल पहिन लिया ।

तपोऽनुरूपं जटाधारणमपि भङ्ग्यन्तरेणाह—

**यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।**
**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥**

भूषित कचों से रम्य मुख शोभित जटा से भी रहा ।
अरविन्द अलि से ही नहीं सेवार से भी प्रिय महा ॥

**अन्वयः**—तदाननं प्रसिद्धैः शिरोरुहैः यथा मधुरम् अभूत् । जटाभिरपि एवं मधुरम् अभूत् । पङ्कजं षट्पदश्रेणिभिः एव न, किन्तु सशैवलासङ्ग सदपि प्रकाशते ।

**व्याख्या**—तदाननं = पार्वतीमुखं, प्रसिद्धैः = भूषितैः, शिरोरुहैः = केशैः, यथा = येन प्रकारेण, मधुरं = प्रियम्, अभूत् = अभवत् । जटाभिरपि = सटाभिरपि, एव = तथा, मधुरं = प्रियम्, अभूत् = अभवत् । पङ्कजं = कमलं, षट्पदश्रेणिभिः = भ्रमरपङ्क्तिभिः, एव, न = नो, किन्तु, सशैवलासङ्गम् = शैवालसम्पर्कसहितम्, सदपि, प्रकाशते = प्रकाशित भवति ।

**व्युत्पत्तिः**—तदाननं = तस्या आननं तदाननं । प्रसिद्धैः = भूषितैः, "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः । शिरोरुहैः = रोहन्तीति रुहाः, "रुह बीजप्रादुर्भावे" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । शिरसि रुहाः शिरोरुहाः, तैः शिरोरुहैः, "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । मधुरं = "स्वादुप्रियौ तु मधुरौ" इत्यमरः । षट्पदश्रेणिभिः = षट् पदानि येषा ते षट्पदाः, तेषा श्रेणयः षट्पदश्रेणयः, ताभिः षट्पदश्रेणिभिः । सशैवलासङ्गम् = शैवालानाम् आसङ्गः शैवलासङ्गः, तेन सह वर्तते, तत् सशैवलासङ्गम् । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । अत्र प्रतिवस्तूपमालङ्कारः ।

**भावार्थः**—यथा तपःकालात् पूर्वं पार्वतीमुखं चूर्णकुसुमाद्यलङ्कृतैः केशैर्मनोहरमासीत्, तथैव तपःकालेऽपि जाटाभिर्मनोहरमासीत् । कमलं भ्रमरपङ्क्तिभिरेव केवलं न शोभते, अपि तु शैवालसम्पर्कसहितमपि तथैव शोभत इति भावः ।

**भाषा**—तपस्या करने के पहिले कोमल केश सदा फूलों से सुसज्जित होने पर पार्वती का मुख जैसा सुन्दर मालूम होता था, उसी प्रकार तपस्या करते समय जटाओंसे भी मनोहर प्रतीत होता था । कमल का पुष्प भ्रमर से जितना सुन्दर मालूम होता है, उतना ही सुन्दर सिंवार से युक्त होने पर भी मालूम होता है ।

व्रतेष्वावश्यकं मौञ्जीबन्धनमप्याह—

**प्रतिक्षणं सा कृतरोमविक्रियां, व्रताय मौञ्जीं त्रिगुणां बभारयाम् ।**

**अकारि तत्पूर्वनिबद्धया तया, सरागमस्या रसनागुणास्पदम् ॥१०॥**

**तप के लिये धारण किया नव त्रिगुण मौंजी को सुघर ।**
**क्षण क्षण अमित रोमांच होता जघन द्वय थे अरुण तर ॥**

**अन्वयः**—सा प्रतिक्षणं कृतरोमविक्रिया त्रिगुणां या मौञ्जीं व्रताय बभार, तत्पूर्वनिबद्धया तया अस्याः रसनागुणास्पदं सरागम् अकारि ।

**व्याख्या**—सा = पार्वती, प्रतिक्षणं = क्षणे क्षणे, कृतरोमविक्रिया = कृतरोमाञ्चा, पारुष्यादिति हेतोः । त्रिगुणां = त्रिरावृतां, यां, मौञ्जीं=मुञ्जमयीं मेखलां, व्रताय = तपसे, बभार=दधौ, तत्पूर्वनिबद्धया=तत्प्रथमबद्धया, तया = मौञ्ज्या, अस्याः = पार्वत्याः, रसनागुणास्पदं=मेखलासूत्रस्थानं, जघनमित्यर्थः । सरागं = सलोहितम्, अकारि = कृतम्, सौकुमार्याऽतिशयादित्यर्थः ।

**व्युत्पत्तिः**—प्रतिक्षणं = क्षणे क्षणे इति प्रतिक्षणं, वीप्सायामव्ययीभावः । कृतरोमविक्रिया=रोम्णां विक्रिया रोमविक्रिया, कृता रोमविक्रिया यया सा कृतरोमविक्रिया, तां कृतरोमविक्रियां । त्रिगुणां=त्रयः गुणाः यस्याः सा त्रिगुणा, तां त्रिगुणां । मौञ्जीं=मुञ्जस्य विकारः मौञ्जी, तां मौञ्जीं, "तस्य विकारः" इत्यण्, "टिड्ढाणञ्०" इत्यादिना ङीप् । तत्पूर्वनिबद्धया=तदेव पूर्वं यस्य तत् तत्पूर्वं, तत्पूर्वं यथा स्यात्तथा निबद्धा तत्पूर्वनिबद्धा, तया तत्पूर्वनिबद्धया । रसनागुणास्पदं = रसनायाः गुणः रसनागुणः, तस्य आस्पदं रसनागुणास्पदं, सरागं = रागेण सहितं सरागम्, बहुव्रीहिः । अत्र रशनागुणास्पदशब्देन रशनां परित्यज्य तत्स्थाने मौञ्जीबन्धनं द्योत्यत इति परिवृत्तिरलङ्कारो ध्वन्यते ।

**भावार्थः**—सा चिरपरिचितां रशनां परित्यज्य सम्प्रति तपः कर्तुं तत्स्थाने त्रिरावृत्तां दुस्सहत्वेन क्षणे क्षणे विहितरोमाञ्चां मौञ्जीमबध्नात् । इदम्पूर्वनिबद्धया तया मौञ्ज्या पार्वत्या जघनमारुण्यगुणयुक्तमकृत ।

अत्र सरागशब्दशक्त्यार्थान्तरपि व्यज्यते—यथा कश्चित् कामी कयाचिन्नायिकया प्रथमं चिरसङ्गतः सन्, अनन्तरं त्रिगुणितसौन्दर्ययान्यया नायिकया सङ्गतस्तस्यां सुतरां रक्तो भवति, तत्संयोगे प्रतिक्षणमुद्भूतरोमाञ्चोऽपि भवति, तथास्याः कटिप्रदेशो रशनया चिरसङ्गतः सन् त्रिगुणया तत्पूर्वनिबद्धया विहितरोमाञ्चया मौञ्ज्या नितरां सरागो विहित इति भावः ।

**भाषा**—पार्वती ने करधन के बदले में त्रिरावृत्त मूज की मेखला तपस्या

करने के लिये पहिन ली। जिसके कड़ेपन से उसके शरीर मे रोमाञ्च होता था, तथा उसके जघन=प्रदेश लाल हो उठा था।

व्रताङ्गभूतं कुशादानमक्षमालाधारणं चाह—

**विसृष्टरागादधरान्निवर्तितः, स्तनाङ्गरागारुणिताच्च कन्दुकात् ।**
**कुशाङ्कुरादानपरिक्षताङ्गुलिः, कृतोऽक्षसूत्रप्रणयी तया करः ॥११॥**

गत राग अधर कुचाङ्ग अरुणित कलित कन्दुक से रहित ।
कुश व्रणित कर में अक्ष माला ली उमा ने जप सहित ॥

**अन्वयः**—तया विसृष्टरागात् अधरात् निवर्तितः, स्तनाऽङ्गरागाऽरुणितात् कन्दुकाच्च निवर्तितः, कुशाऽङ्कुरादानपरिक्षताऽङ्गुलिः करः अक्षसूत्रप्रणयी कृतः।

**व्याख्या**—तया=पार्वत्या, विसृष्टरागात्=त्यक्तलाक्षारसरञ्जनात्, अधरात्=ओष्ठात् अधरोष्ठादित्यर्थः। निवर्तितः=निवारितः, स्तनाऽङ्गरागाऽरुणितात्=कुचाऽङ्गरागरक्तात्, पतनसमये तस्य स्तनयोरुपरोधादित्यर्थ.। कन्दुकाच्च=गेन्दुकाच्च, निवर्तितः=निवारितः, कुशाऽङ्कुरादानपरिक्षताङ्गुलिः=दर्भाऽङ्कुरग्रहण-व्रणिताऽङ्गुलिः, करः=हस्तः, अक्षसूत्रप्रणयी=अक्षमालासहचरः, कृतः=विहितः।

**व्युत्पत्ति**—विसृष्टरागात्=विसृष्टः रागः यस्मात् स विसृष्टरागः, तस्मात् विसृष्टरागात्। अधरात्="ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः। स्तनाऽङ्गरागाऽरुणितात्=स्तनस्य अङ्गरागः स्तनाङ्गरागः। अरुणः सञ्जातः यस्य सः अरुणितः, "तदस्य संजातं तारकादिभ्य इतच्" इतीतच्। "अव्यक्तरागस्त्वरुणः" इत्यमरः। स्तनाऽङ्गरागेण अरुणितः स्तनाऽङ्गरागाऽरुणितः, तस्मात् स्तनाऽङ्गरागाऽरुणितात्। कन्दुकात्="गेन्दुकः कन्दुकः"इत्यमरः, भाषाया"गेंद" इति नाम्ना ख्यातात्। कुशाऽङ्कुराऽऽदानपरिक्षताऽङ्गुलिः=कुशानाम् अङ्कुराः कुशाऽङ्कुराः, "अस्त्री कुश कुथो दर्भः पवित्रम्" इत्यमरः। कुशाङ्कुराणाम् आदानं कुशाङ्कुरादानं, तेन परिक्षताः कुशाऽङ्कुराऽऽदानपरिक्षताः, ताः अङ्गुलयः यस्य स कुशाऽङ्कुराऽऽदानपरिक्षताऽङ्गुलिः। अक्षसूत्रप्रणयी=अक्षाणा सूत्रम् अक्षसूत्र, प्रणयः अस्याऽस्तीति प्रणयी, इनिप्रत्ययः। अक्षसूत्रे प्रणयी अक्षसूत्रप्रणयी।

अत्रैकस्यैव करस्याधरादौ दर्भाङ्कुरादौ च क्रमेण वर्तनात् पर्यायोऽलङ्कारः। तल्लक्षणं यथा—

"एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः" इति।

**भावार्थः**—पार्वती तपस्समये निजकरमधररञ्जनकन्दुकाघातरूपात् कार्यद्वयात्

निवार्य कुशाङ्कुरादानात्तमालापरिवर्तनरूपकार्यद्वयपरमकरोदिति भावः ।

**भाषा**—जिन हाथों से पार्वती पहिले अपने अधरोष्ठ को रञ्जित करती थी, और गेंद खेलती थी, उन्हीं हाथों को उसने तपस्या के समय कुशाहरण तथा अक्षमालाओं के जपने में लगाया ।

अथ व्रताङ्गभूतं भूमिशयनमप्याह—

**महार्हशय्यापरिवर्तनच्युतैः, स्वकेशपुष्पैरपि या स्म दूयते ।**
**अशेत सा बाहुलतोपधायिनी, निषेदुषी स्थण्डिल एव केवले ॥१२॥**

शुचि तल्प पर टूटे शिरोरुह-कुसुम से व्याकुल सती ।
वह बाहु की तकिया बना सोती मही पर बैठती ॥

**अन्वयः**—महाऽर्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैः अपि या दूयते स्म । सा बाहुलतोपधायिनी सती केवले स्थण्डिले एव निषेदुषी सती अशेत ।

**व्याख्या**—महाऽर्हशय्यापरिवर्तनच्युतैः=बहुमूल्यशयनीयलुण्ठनपतितैः, स्वकेशपुष्पैः अपि=आत्मकुन्तलकुसुमैः अपि, या = पार्वती, दूयते स्म = क्लिश्यते स्म, पुष्पाऽधिकसुकुमारत्वादित्यर्थः । सा = पार्वती, बाहुलतोपधायिनी=भुजलतोपबर्हकारिणी सती, केवले = संस्तरणरहिते, स्थण्डिले एव = भूमौ एव, दिवा निषेदुषी सती = उपविष्टा सती, रात्रौ अशेत=शयितवती ।

**व्युत्पत्तिः**—महाऽर्हशय्यापरिवर्तनच्युतैः=महान् अर्हः = मूल्यं, यस्याः सा महाऽर्हा, शय्यते अत्र शय्या, शीङ् "स्वप्ने" इति धातोः "संज्ञायां समजनी" त्यादिना क्यप्, "अयङ् यि क्ङिति" इत्ययङ् । "शय्यायां शयनीयवत् । शयनम्" इत्यमरः । महार्हा चाऽसौ शय्या महार्हशय्या, तस्या परिवर्तनं महार्हशय्यापरिवर्तनं, तेन च्युतानि महार्हशय्यापरिवर्तनच्युतानि, तैः महार्हशय्यापरिवर्तनच्युतैः । स्वकेशपुष्पैः = स्वे च ते केशाः स्वकेशाः, "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । स्वकेशानां पुष्पाणि स्वकेशपुष्पाणि, तैः स्वकेशपुष्पैः । दूयते स्म = "दूङ् परितापे" इति धातोर्लट् । दिवादौ पठितत्वात् "दिवादिभ्यः श्यन्" इति श्यन् । स्मयोगे "लट् स्मे" इति लटो लिङ्विषयता । बाहुलतोपधायिनी = बाहुरेव लता इति बाहुलता, ताम् उपधत्ते = उपधानी करोति, तच्छीला इति बाहुलतोपधायिनी, "व्रते" इति सूत्रेण णिनिप्रत्ययः । "आतो युक् चिण्कृतोः" इति युक् च । "उपधानं तूपबर्हः" इत्यमरः । निषेदुषी = "षद्लृ विशरणगत्यवसादनेषु" इति धातोः निपूर्वात् "क्वसुश्च" इति लिटः क्वसुः ।

स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप् ॥ अशेत="शीङ् स्वप्ने" इति धातोर्लङि रूपम् । दिवसेषु स्थण्डिल एवाऽवस्थिता सती निशाया तत्रैवाशेतेत्यर्थः ।

तथा चोक्तं महर्षिणा याज्ञवल्क्येन—

"स्वप्याद् भूमौ शुची रात्रौ दिवसं नियमैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥" इति ।

**भावार्थः**—या पार्वती पूर्वं हंसतूलगर्भशयने शयाना सती, तत्र विवलनपतितैः स्वकेशकुसुमैरपि सुकुमारशरीरत्वात् परितापं प्रापत् । सा सम्प्रति प्रच्छदपटमात्रेणाऽपि रहिते केवले भूतले बाहुलतामुपधानीकृत्योपविष्टैवाशेतेति भावः ।

**भाषा**—जो पार्वती इतनी सुकुमार थी कि मोटी रुई की गद्दी के विस्तर पर सोते समय करवट लेने से केशों से गिरे हुए फूल भी यदि शरीर के नीचे दब जाते तो भी उसका शरीर दुःखता था, वह आज विना आच्छादन के केवल बाहुमात्र को तकिया किये भूतल में बैठे बैठे ही सो जाती है ।

पार्वत्याः साहजिकविलासादीना तपश्चरणकाले विराममाह—

**पुनर्ग्रहीतुं नियमस्थया तया, द्वयेऽपि निक्षेप इवाऽर्पितं द्वयम् ।**
**लतासु तन्वीषु विलासचेष्टितं, विलोलदृष्टं हरिणाऽङ्गनासु च ॥१३॥**

**तन्वी लता में निज विलास कटाक्ष मृगियों में चपल ।**
**ग्रहणार्थ फिर करने लगी व्रत रख धरोहर यह विमल ॥**

**अन्वयः**—नियमस्थया तया तन्वीषु लतासु विलासचेष्टितं, हरिणाऽङ्गनासु विलोलदृष्टं च, द्वये अपि द्वयं पुनः ग्रहीतुं निक्षेपः अर्पितम् इव ॥

**व्याख्या**—नियमस्थया = व्रतस्थया, तया = पार्वत्या, तन्वीषु = कृशाऽवयवासु, लतासु=वल्लीषु, विलासचेष्टितं = विभ्रमचेष्टितं, हरिणाऽङ्गनासु = मृगीषु, विलोलदृष्टं च=चञ्चलावलोकितं च, द्वये अपि=उभयत्र अपि, द्वयं=द्वितयं, पुनः= भूयः, ग्रहीतुम्=स्वीकर्तुं, निक्षेपः=न्यासः, अर्पितम् इव=न्यस्तम् इव । न्यासत्वेन समर्पितं किमु इत्यर्थः ।

**व्युत्पत्तिः**—नियमस्थया=नियमे तिष्ठतीति नियमस्था, तया नियमस्थया । लतासु = "वल्ली तु व्रततिर्लता" इत्यमरः । विलासचेष्टितं = विलास एव चेष्टितम् इति विलासचेष्टितं, "मयूरव्यंसकादयश्च" इति रूपकसमासः । हरिणाऽङ्गनासु= हरिणानाम् अङ्गनाः हरिणाऽङ्गनाः, तासु हरिणाङ्गनासु । विलोलदृष्ट=विलोलं च तत् दृष्टं विलोलदृष्टं । द्वये = द्वौ अवयवौ यस्य तत् द्वयं, तस्मिन्द्वये । तयप्,

-तस्य स्थाने अयजादेशः । निक्षेपः = "अभष्टीकाले समादातुं सत्यवादिनि प्रमादि-रहिते विश्वसनीये जने धनस्य न्यासो निक्षेप" इत्युच्यते । निक्षिप्यतेऽसाविति व्युत्पत्त्या तद्धनं च निक्षेपशब्दार्थः । अत्र तु निक्षेपशब्दो द्रव्यपरः, निक्षेपक्रि-यायाः अर्पणक्रियान्वयानुपपत्तेः ।

अत्रोत्प्रेक्षालङ्कार.। तपस्समये निश्चलशरीराया नासाप्रदत्तलोचनाया च पार्व-त्या विलासविलोलविलोचनयोरदर्शनं लतासु मृगीषु च तद्दर्शनं चात्रोत्प्रेक्षाहेतुः ।

**भावार्थः**—गृहीतव्रतया पार्वत्या प्रियसङ्गमसमये पुनःस्वीकर्तुं निक्षेपधनमिव सुकुमारासु मालत्यादिलतासु विलासचेष्टा, मृगीषु चञ्चलदृष्टिश्चेत्येतद्द्रव्यं न्यासीकृतं किमु । तपस्समये निश्चलशरीराया नासाप्रदत्तलोचनाया च पार्वत्या विलासविलो-लविलोचनयोरदर्शनात् , तदानीं लतासु मृगीषु च तद्दर्शनाच्चेति भावः ।

**भाषा**—जिस प्रकार कोई मनुष्य अपने धन को कुछ समय के लिये दूसरे के पास अमानत रख दें, और समय पड़ने पर फिर वापस ले लें, उसी प्रकार प्रिय सङ्गम के समय वापस लेने के लिये ही मानो तपस्विनी पार्वती ने सुकुमार लता के पास अपनी विलास—चेष्टा और हिरिणी को अपनी चञ्चल-दृष्टि सौंप दी थी ।

इत्थमुपक्रान्ततपसः पार्वत्याः समाधेरुपरमे तत्कालोचिता मुनिवृत्तिमुपवर्णयति—

**अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।**
**गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥१४॥**

घट उरज पय से सींच पौधों की बढ़ाई तन-छटा ।
सुत प्रेम षड्मुख जन्म लेकर भी न तनिक सके हटा ॥

**अन्वयः**—सा स्वयम् एव अतन्द्रिता सती वृक्षकान् घटस्तनप्रस्रवणैः व्यव-र्धयत् । गुहः अपि प्रथमाप्तजन्मना येषां पुत्रवात्सल्यं न अपाकरिष्यति ।

**व्याख्या**—सा = पार्वती, स्वयम् एव = आत्मना एव, अतन्द्रिता = अनलसा सती, वृक्षकान् = स्वल्पवृक्षान् , घटस्तनप्रस्रवणैः = कलशकुचप्रसृतपयोभिः, व्यवर्धयत् = वर्धयामास । गुहः अपि = कुमारः अपि, प्रथमाप्तजन्मना = पूर्वल-ब्धजनुषाम् , अग्रजातानामित्यर्थः । येषां = वृक्षकाणां, पुत्रवात्सल्यं = सुतस्नेहं, न अपाकरिष्यति = न दूरीकरिष्यति ।

**व्युत्पत्तिः**—अतन्द्रिता = तन्द्रा सञ्जाता अस्याः सा तन्द्रिता, तारकादित्वात् इतच्प्रत्ययः । न तन्द्रिता अतन्द्रिता । वृक्षकान् = अल्पा वृक्षा वृक्षकाः, तान् वृक्ष-कान् । "अल्पे" इति कप्रत्ययः । घटस्तनप्रस्रवणैः = घटौ एव स्तनौ घटस्तनौ,

रूपकसमासः। घटस्तनयोः प्रस्रवणाः घटस्तनप्रस्रवणाः, तैः घटस्तनप्रस्रवणैः। प्रथमाऽऽप्तजन्मनां=प्रथमे आप्तं प्रथमाप्तं, तत् जन्म यैस्ते इति प्रथमाऽऽप्तजन्मानः, तेषा प्रथमाप्तजन्मना, पुत्रवात्सल्यं=वत्सलस्य भावः कर्म वा वात्सल्य, ष्यञ्प्रत्ययः। पुत्रस्य वात्सल्यं पुत्रवात्सल्यं, तत्।

अत्र वात्सल्याऽपाकरणाभावो गुहं प्रति विरुद्ध इति विरोधो नामालङ्कारः।

**भावार्थः**—पार्वती परिश्रमखेदं परित्यज्य स्वयमेव बीजावापपुरस्सरमुत्तमवृक्षानुत्पाद्य घटोदकेन सिञ्चती तान् पुत्रकल्पानतितरामवर्धयत्। प्रथमलब्धजन्मना येषा वृक्षकाणा सम्बन्धि सुतप्रेम, पश्चाज्जायमानः स्कन्दोऽपि स्वोद्भवानन्तरं न निराकरिष्यतीति भावः।

**भाषा**—पार्वती ने आलस छोड़कर अपने हाथों से बीजारोपण कर घड़े के पानी से सींच कर उत्तम वृक्ष उत्पन्न किये, और उन वृक्षों को अपने पुत्रो के समान बढ़ाया। जिन वृक्षों पर उत्पन्न हुये अपत्यस्नेह में अपने गर्भजात पुत्र स्कन्द के पैदा होने पर भी कोई कमी नहीं हुई।

सर्वभूतदयापराया वनमात्रवासिन्या पार्वत्या मृगाणामपि विश्वासातिशयमाह—

**अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।**
**यथा तदीयैर्नयनैः कुतूहलात् पुरः सखीनाममिमीत लोचने॥ १५॥**

वन बीज लालित मृग उमा से इस तरह विश्वस्त थे।
निज नेत्र उनसे नापती पर वे न होते त्रस्त थे॥

**अन्वयः**—अरण्यबीजाऽञ्जलिदानलालिताः हरिणाश्च तस्या तथा विशश्वसुः, यथा कुतूहलात् तदीयैः नयनैः लोचने सखीना पुरः अमिमीत।

**व्याख्या**—अरण्यबीजाऽञ्जलिदानलालिताः=वनबीजाञ्जलिवितरणपोषिताः, नीवाराद्यञ्जलिदानपालिता इत्यर्थः। हरिणाश्च=मृगाश्च, तस्या=पार्वत्या, तथा=तेन प्रकारेण, विशश्वसुः=विश्वासं जुग्मुः, यथा=येन प्रकारेण, कुतूहलात्=औत्सुक्यात्, तदीयैः=हरिणसम्बन्धिभिः नयनैः=नेत्रैः करणैः, लोचने=नयने, स्वकीये इति शेषः, सखीना=वयस्यानां, पुरः=पुरतः, अमिमीत=मान चकार, नेत्रपरिमाणतारतम्यज्ञानायेत्यर्थः।

**व्युत्पत्तिः**—अरण्यबीजाऽञ्जलिदानलालिताः=अरण्यस्य बीजानि अरण्यबीजानि, "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः। अरण्यबीजानाम् अञ्जलयः अरण्यबीजाऽञ्जलयः, तेषां दानम् अरण्यबीजाऽञ्जलिदानं, तेन

लालिता अरण्यव्रीजाञ्जलिदानलालिताः । विशश्वसुः="समौ विस्रम्भविश्वासौ" इत्यमरः । तदीयैः=तेषाम् इमानि तदीयानि, तैः तदीयैः । छप्रत्ययः । सखीनाम्= "आलिः सखी वयस्या च" इत्यमरः । अमिमीत="माङ् माने" इति धातोर्लङ् ।

केचित्तु सा=पार्वती तदीयैर्नेत्रैः कुतूहलात्पुरोऽग्रे वर्तमानाना सखीना लोचने अमिमीत, व्रतस्थत्वान्नात्मन इत्याहुः ।

इयमेव खलु विश्वासस्य पराकाष्ठा, यदक्षिपीडनेऽपि मृगाः न क्षुभ्यन्तीति तात्पर्यम्।

**भावार्थः**—अञ्जलिपरिमितानामारण्यकनीवारादीना प्रदानेन परिचिता मृगास्तस्या पार्वत्यां तथा विश्वासं जग्मुः, यथा मद्विलोचनमृगलोचनयोः कियदन्तरमिति ज्ञातुं बालस्वभावमात्रसुलभादौत्सुक्यात् स्वसखीनामग्रे मृगाणां नयनैः स्वकीये नयनेऽमिमीत, तथापि मृगा न विचेलुरिति भावः ।

**भाषा**—अपने हाथोंसे घास खिलाने के कारण वह पार्वती उन हरिणों की इतनी अधिक परिचिता तथा विश्वास पात्री होगई थी, कि बालिका-सुलभ चपलता के कारण, वह जब कभी अपनी सखिओं के सामने हरिणों को पकड़कर यह परखती थी कि उसके तथा हिरणों की आखों में क्या अन्तर है, ऐसा करने पर भी वे हिरण भाग नहीं जाते थे ।

इत्थमनुष्ठिताया मुनिवृत्तेः प्रभावातिशयमाह—

**कृताऽभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।**
**दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥१६॥**

तप विज्ञ गिरिजा को तपस्वी देखने आते सभी ।
देखा न जाता धर्म से वूढे जनों में वय कभी ॥

**अन्वयः**—कृताऽभिषेका हुतजातवेदस त्वगुत्तरासङ्गवतीम् अधीतिनीं ता दिदृक्षवः ऋषयः अभ्युपागमन् । धर्मवृद्धेषु वयः न समीक्ष्यते ।

**व्याख्या**—कृताऽभिषेका=कृतस्नाना, हुतजातवेदसं=हुताऽग्निका, कृतहोमामित्यर्थः । त्वगुत्तरासङ्गवतीं=वल्कलोत्तरीयवतीम्, अधीतिनीं=स्तुतिपाठाऽऽदिकुर्वतीम्, ता=पार्वतीं, दिदृक्षवः=द्रष्टुमिच्छवः, ऋषयः=मुनयः, अभ्युपागमन्=समुपागताः । धर्मवृद्धेषु=तपोगरिष्ठेषु, वयः=बाल्यादिकं, न समीक्ष्यते=न प्रमाणीक्रियते ।

**व्युत्पत्तिः**—कृताऽभिषेका=कृतः अभिषेकः यया सा कृताऽभिषेका, ता कृताऽभिषेकाम्, अनेन शरीरशुद्धिरुक्ता । हुतजातवेदसं=हुतः जातवेदाः यया सा

हुतजातवेदाः, तां हुतजातवेदसम् । अनेनान्तःकरणशुद्धिरुक्ता । "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः । त्वगुत्तरासङ्गवतीम् = उत्तरे=ऊर्ध्वभागे-आसज्यते इति उत्तरासङ्गः, "षञ्ज सङ्गे" इति धातोर्घञ्प्रत्ययः । "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं च" इत्यमरः । उत्तरासङ्गः अस्या अस्तीति उत्तरासङ्गवती, मतुप्प्रत्ययः । त्वचा=वल्कलेन, उत्तरासङ्गवती त्वगुत्तरासङ्गवती, ता त्वगुत्तरासङ्गवतीम् । अधीतिनीम्=अधीतम् अस्या अस्तीति अधीतिनी ताम् अधीतिनीम् । "इष्टादिभ्यश्च" इति इनिप्रत्ययः, ततः स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् । अनेनात्मशुद्धिरुक्ता । दिदृक्षवः=द्रष्टुम् इच्छवः दिदृक्षवः । सन्नन्तात् "दृशिर् प्रेक्षणे" इति धातोः "सनाशंसभिक्ष उः" इति उप्रत्ययः । धर्मवृद्धेषु=धर्मेण वृद्धाः धर्मवृद्धाः, तेषु धर्मवृद्धेषु, "स्याद्धर्ममस्त्रिया पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । वयः = "खगबाल्यादिनोर्वयः" इत्यमरः ।

चतुर्विधं हि वृद्धत्वम् । वैराग्यवृद्धत्वं, ज्ञानवृद्धत्व, धर्मवृद्धत्व, वयोवृद्धत्वं चेति । येषु त्रिविधं वृद्धत्वम्, एकैकं वा, ते वयोवृद्धत्वं न प्रयोजकम् । तस्याऽप्राधान्यादित्यर्थः । तथा चाह मनुः—

"न तेन वृद्धो भवति, येनाऽस्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः" इति ।

**भावार्थः**—बहुकालकृततपसोऽपि तावजिज्ञासवो महर्षयोऽघमर्षणस्नानेन शुद्धशरीरा वह्निहोमेन शुद्धान्तःकरणा वल्कलोत्तरीयवती कृतवेदाध्ययना पार्वतीं द्रष्टुमिच्छवः सन् तामभ्युपागमन् । वयोवृद्धेष्ववस्था न निरूप्यत इति भावः ।

**भाषा**—चिरकाल से तपश्चर्या करने वाले महर्षिगण अघमर्षणस्नान से शुद्धशरीरा, तथा वह्नि-होम से पवित्रान्तःकरणा पावती के दर्शन की आकाङ्क्षासे आते थे । क्योंकि केवल उम्र ही बड़प्पन का परिचायक नहीं है ।

तादृशपार्वतीनिवासभूतस्य तपोवनस्यापि प्रभावातिशयमाह—

**विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवाऽर्चिताऽतिथि ।**
**नवोटजाऽभ्यन्तरसम्भृतानलं तपोवनं तच्च बभूव पावनम् ॥१७॥**

वन-जन्तुओं ने वैर छोड़ा अतिथि-पूजक तरु फलद ।
ऐसा तपोवन था उमा का लोक पावन मोद प्रद ॥

**अन्वयः**—विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैः अभीष्टप्रसवाऽर्चिताऽतिथि नवोटजाऽभ्यन्तरसम्भृताऽनलं तच्च तपोवनं पावनं बभूव ।

**व्याख्या**—विरोधिसत्त्वोज्झितपूर्वमत्सरं = वैरिजन्तुत्यक्तपूर्ववैरं, हिंसारहितमित्यर्थः । द्रुमैः=वृक्षैः, अभीष्टप्रसवाऽर्चिताऽतिथि = इष्टफलपूजिताऽभ्यागतं, नवोटजाऽभ्यन्तरसम्भृताऽनलं = नूतनपर्णशालाऽन्तःसञ्चिताऽग्नि, तच्च=पार्वत्याः, तपोवनं = तपोऽरण्यं, पावनं = पवित्रकारकं, बभूव=अभवत्,

**व्युत्पत्तिः**—विरोधिसत्त्वोज्झितपूर्वमत्सरं = विरोधः अस्ति येषा ते विरोधिनः, इनिप्रत्ययः । "वैरं विरोधो विद्वेषः" इत्यमरः । विरोधिनश्च ते सत्वाः विरोधिसत्त्वाः, "द्रव्याऽसुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । उज्झितः पूर्वः मत्सरः यस्मिन् तत् उज्झितपूर्वमत्सरं, "मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु" इत्यमरः । विरोधिसत्त्वैः उज्झितपूर्वमत्सरं विरोधिसत्वोज्झितपूर्वमत्सरम् ॥ अभीष्टप्रसवाऽर्चिताऽतिथि=अभीष्टश्चासौ प्रसवः अभीष्टप्रसव, "अभीष्टेऽभीप्सितं हृद्य दयितं बल्लभं प्रियम्" इति "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इति चाऽमरः । अर्चिताः अतिथयः यस्मिन् तत् अर्चितातिथि, अभीष्टप्रसवेन अर्चिताऽतिथि अभीष्टप्रसवार्चितातिथि । नवोटजाऽभ्यन्तरसम्भृताऽनलं = नवाश्च ते उटजाः नवोटजाः, "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः । नवोटजानाम् अभ्यन्तराणि नवोटजाऽभ्यन्तराणि, "अभ्यन्तरं त्वन्तरालम्" इत्यमरः । सम्भृताः अनलाः यस्मिन् तत् सम्भृताऽनलम्, "आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः" इत्यमरः । नवोटजाऽभ्यन्तरेषु सम्भृताऽनलं नवोटजाऽभ्यन्तरसम्भृतानलं । तपोवनं = तपसः वन तपोवनम् । पावनं = पावयतीति पावनम् । अहिंसाऽतिथिसत्काराऽग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः ।

**भावार्थः**—गजसिंहादिजन्तुभिस्त्यक्ताऽनादिवैरं वृक्षमधुरफलपूजिताभ्यागतमभिनवपर्णशालान्तर्गतसरक्षिताग्नि तत् पार्वतीतपोवनं दर्शनमात्रेणापि शुद्धिकरमासीदिति भावः ।

**भाषा**—पार्वती के तपोवन में पशुओं ने भी अपना स्वाभाविक वैर छोड़ दिया था, उस तपोवन के वृक्षों के सुमधुर फलों से अतिथिसत्कार होता था, और उस तपोवन के अन्दर नवीन पर्ण शाला में सदा होमाग्नि प्रज्वलित रहती थी । ऐसे पार्वती के तपोवन के दर्शन से ही मनुष्य पवित्र हो जाता था ।

इत्थमुपवर्णितस्य पार्वत्यास्तपसः परा काष्ठा वर्णयितुमुपक्रमते—

**यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।**
**तदाऽनपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥**

जब पार्वती के इस कठिन तपने न कुछ शुभ फल दिया ।
सुकुमारता को छोड़ उसने तप कठोर शुरू किया ॥

**अन्वयः**—सा यदा तावता पूर्वतपःसमाधिना काङ्क्षितं फलं लभ्यं न अमंस्त, तदा स्वशरीरमार्दवम् अनपेक्ष्य महत् तपः चरितुं प्रचक्रमे ।

**व्याख्या**—सा = पार्वती, यदा = यस्मिन्काले, तावता=तावत्प्रमाणेन, पूर्वतपःसमाधिना = प्राक्तनेनियमेन, काङ्क्षितं = वाञ्छितं, फलं = हरवशीकरणरूपं प्रयोजनं, लभ्यं = प्राप्यं, लब्धुं शक्यमित्यर्थः । न अमंस्त = न अज्ञासीत्, अशक्यममस्तेत्यर्थः । तदा = तत्काले, स्वशरीरमार्दवम् = आत्मदेहसौकुमार्यम्, अनपेक्ष्य = अविगणय्य, महत् = दुश्चरं, तपः = नियमं, चरितुं = साधयितुं, प्रचक्रमे = आरेभे ।

**व्युत्पत्तिः**—तावता = तत् प्रमाणमस्य तावान्, तेन तावता । पूर्वतपःसमाधिना = तपसः समाधिः तपःसमाधिः, पूर्वश्चाऽसौ तपःसमाधिः पूर्वतपःसमाधिः, तेन पूर्वतपःसमाधिना, काङ्क्षित=काङ्क्षा सजाता अस्य तत् काङ्क्षितं तत्, इतच्प्रत्ययः । स्वशरीरमार्दवं=स्वस्य शरीरं स्वशरीर, मृदोर्भावः मार्दवं, स्वशरीरस्य मार्दवं स्वशरीरमार्दव तत् । अनपेक्ष्य = न अपेक्ष्य अनपेक्ष्य ।

**भावार्थः**—सा पार्वती यदा पूर्वोक्तपरिमाणेन तपसा वाञ्छितं हरवशीकरणरूपं फलं लब्धुं न शक्यमिति मन्यते स्म, तदा स्वशरीरस्य शिरीषपुष्पादप्यधिकं सौकुमार्यमविगणय्य कठिनशरीरैरप्यत्यन्तदुश्चरं तपः कर्तुमारेभे इति भावः ।

**भाषा**—जब पार्वती ने देखा कि पूर्वोक्त तपस्या से हर को पाने की आशा पूर्ण नहीं हुई, तब अपने शरीर की सुकुमारता का कुछ भी खयाल न कर और भी अधिक कठोर तपस्या करने लगी ।

न केवलं पार्वती दुश्चरे तपसि मनश्चकार, अपि तु तपस्समुद्रावगाहनमेव कृतवतीति सविस्मयमाह—

**क्लमं ययौ कन्दुकलीलयाऽपि या, तया मुनीनां चरितं व्यगाह्यत ।**
**ध्रुवं वपुः काञ्चनपद्मनिर्मितं, मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥**

थी गेंद क्रीड़ा से दुखी जो ऋषि चरित करती वही ।
तन स्वर्ण-कमल रचित प्रकृति से मृदुल भी था कठिन ही ॥

**अन्वयः**—या कन्दुकलीलया अपि क्लमं ययौ, तया मुनीनां चरितं व्यगाह्यत । ध्रुवम् अस्याःवपुः काञ्चनपद्मनिर्मितम्, अत एव प्रकृत्या मृदु च ससारम् एव च ।

**व्याख्या**—या=पार्वती, कन्दुकलीलया अपि=गेन्दुकक्रीडया अपि, क्लमं = ग्लानिं, ययौ = प्राप, तया = देव्या, मुनीनाम् = ऋषीणा, चरितं = चरित्रं, तीव्रं तप इत्यर्थः । व्यगाह्यत = प्रविष्टं, ध्रुवं = निश्चयेन, अस्याः = पार्वत्याः, वपुः = शरीरं, काञ्चनपद्मनिर्मितं=सुवर्णकमलरचितमासीत् , अत एव, प्रकृत्या = स्वभावेन, पद्मस्वभावेनेत्यर्थः । मृदु च = सुकुमारम् अपि, काञ्चनस्वभावेन, ससारम् एव च = कठिनम् एव च ।

**व्युत्पत्तिः**–कन्दुकलीलया=कन्दुकस्य लीला कन्दुकलीला, तया कन्दुकलीलया, व्यगाह्यत=व्युपसर्गपूर्वकात् "गाहू विलोडने" इति धातोः कर्मणि लङ् । काञ्चनपद्मनिर्मितं=काञ्चनस्य विकारः काञ्चनं, "चामीकार जातरूप महारजतकाञ्चने" इत्यमरः । काञ्चन च तत् पद्म काञ्चनपद्म, तेन निर्मित काञ्चनपद्मनिर्मितं । प्रकृत्या="ससिद्धिप्रकृती त्विमे । स्वरूप च स्वभावश्च निसर्गश्च" इत्यमरः । ससारं = सारेण सहितं ससारम् । अत्र श्लोके उत्प्रेक्षाऽलङ्कारः । सुवर्णोत्पादकत्वात्पर्वत्याः शरीरस्य सुकुमारस्याऽपि तीव्रतप.समर्थत्वमस्तीत्युत्प्रेक्षाऽर्थः ।

**भावार्थः**—या पार्वती पूर्वं कन्दुकक्रीडयाऽपि शरीरसादं प्राप, तया पार्वत्या कठिनशरीराणा महर्षिणामत्यन्तदुश्चरतपश्चरणरूपो व्यापारोऽवजागाहे । तेनेदमनुमीयते, यत् पार्वत्याः शरीरं सुवर्णकमलविरचितमासीत् । अत एव कमलस्वभावेन सुकुमारमपि सुवर्णस्वभावेन कठिनमेवाभूदिति भावः ।

**भाषा**—जिस पार्वती का शरीर गेंद खेलने से भी खिन्न होता था, वह आज कठोर शरीर वाले मुनिओं से भी दुःसाध्य तपस्या करती है, इससे यह प्रतीत होता है कि पार्वती का शरीर स्वर्ण-कमल से बना हुआ है। क्यों कि वह कमल के समान सुकुमार, तथा सोने की भाति कठोर भी है ।

अथ पार्वत्यास्तपःप्रकारा एव कथ्यन्ते । तत्रादौ ग्रीष्मकृत तपःप्रकारमाह—

**शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥**

ऋतु ग्रीष्म में बैठी धधकते चार पावक में अचल ।
रवि-तेज दृग-प्रतिघात कारक जीत, देखा रवि अटल ॥

**अन्वयः**—शुचौ शुचिस्मिता सुमध्यमा ज्वलता चतुर्णां हविर्भुजा मध्यगता सती नेत्रप्रतिघातिनी प्रभा विजित्य अनन्यदृष्टिः सती सवितारम् ऐक्षत ।

**व्याख्या**—शुचौ = ग्रीष्मे, शुचिस्मिता = विशदमन्दहासा, सुमध्यमा =

सुमध्या, सा पार्वतीत्यर्थः। ज्वलता = दीप्तिमता, चतुर्णां = चतुःसंख्याकाना, पुरतः पृष्ठे पार्श्वयोश्च स्थापितानामित्यर्थः। हविर्भुजाम्=अग्नीना, मध्यगता = मध्यस्थिता सती, नेत्रप्रतिघातिनीम्=दृक्प्रतिहतिकारिणीं, प्रभा = तेजः, सूर्यस्येत्यर्थः। विजित्य = अभिभूय, अनन्यदृष्टिः—अन्यत्राऽस्थितनेत्रा, सती, सवितार=सूर्यम्, ऐक्षत=ददर्श।

**व्युत्पत्तिः**—शुचौ="शुचिर्ग्रीष्माऽग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु॥" इति मेदिनी। शुचिस्मिता=शुचि स्मितं यस्याः सा शुचिस्मिता, "शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः" इत्यमरः। "ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताऽधरम्" इति साहित्यदर्पणम्। सुमध्यमा = शोभनं मध्यमं यस्याः सा सुमध्यमा। "मध्यमं चाऽवलग्नं च मध्योऽस्त्री" इत्यमरः। ज्वलता = ज्वलन्ति ते ज्वलन्तः तेषा ज्वलता, "ज्वल दीप्तौ" इति धातोः लटः शत्रादेशः। हविर्भुजा=हवींषि भुञ्जन्तीति हविर्भुजः, तेषा हविर्भुजाम्। मध्यगता = मध्यं गता मध्यगता, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नैः" इति द्वितीयातत्पुरुषः। नेत्रप्रतिघातिनीं = नेत्रे प्रतिहन्तीति तच्छीला नेत्रप्रतिघातिनी, ता नेत्रप्रतिघातिनीं, विनिप्रत्ययः, तदन्तान्ङीप्। अनन्यदृष्टिः = न विद्यते अन्यत्र दृष्टिर्यस्याः सा अनन्यदृष्टिः। सवितारं="भानुर्हंसः सहस्राऽशुस्तपनः सविता रविः" इत्यमरः। ऐक्षत = "ईक्ष दर्शने" इति धातोर्लङ्। "ग्रीष्मे पञ्चाऽग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" इति स्मरणात् पञ्चाऽग्निमध्ये तपश्चचारेत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः। "अग्निः सविता सवितैवाऽग्निः" इति श्रौतलिङ्गात्।

**भावार्थः**—कृशावलग्ना सा पार्वती ग्रीष्मे चतुर्णां पुरतः पृष्ठे पार्श्वयोश्च स्थापितानां प्रदीप्तानामग्नीनां मध्यभागस्थिता सती द्रष्टुर्नेत्रयोश्चाकचिक्यप्रदां सूर्यरश्मिं सतताभ्यासेन न्यग्भाव्योदयादारभ्यास्तमयपर्यन्तमन्यत् किमप्यनवलोकयन्ती सती केवलं सूर्यमेवावलोकयन्ती पञ्चाग्निसाधनं तपश्चचारेति भावः।

**भाषा**—कृश-शरीरा पार्वती ग्रीष्म ऋतु में सामने पीछे दाहिने बायें चारो ओर अग्नि प्रज्वालित कर, आंखों को चमकाने वाले सूर्य की ओर एक टक दृष्टि लगाये पञ्चाग्नि-साधन रूपी तपस्या करने लगी।

तादृशे तपसि वर्तमानायाः पार्वत्याः न केवलं पीडाऽभावो जातः, अपि तु

प्रसादहेतुकमौज्ज्वल्यमेवाभूदित्याह—

**तथाऽतितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।**
**अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥२१॥**

**रवि-किरण तप्त उमा वदन की कमल की सी थी छटा ।**
**मुख के अपांगो में मनोहर कालिमा की हुई घटा ॥**

**अन्वयः**—सवितुः गभस्तिभिः तथा अतितप्तं तदीयं मुख कमलश्रियं दधौ, अस्य दीर्घयोः अपाङ्गयो केवल शनैः शनैः श्यामिकया पद कृतम् ।

**व्याख्या**—सवितुः=सूर्यस्य, गभस्तिभिः=किरणैः, तथा=तेन प्रकारेण, पूर्वोक्तप्रकारेणेत्यर्थः । अतितप्तं=सन्तप्तं, तदीयं=पार्वत्याः, मुखम्=आनन, कमलश्रिय=पद्मशोभा, दधौ=प्राप,= किन्तु, अस्य=मुखस्य, दीर्घयोः=आयतयोः, अपाङ्गयोः=नेत्राऽन्तयोः, केवलम्=एव, शनैः शनैः=मन्दं मन्द, श्यामिकया=कालिम्ना, पद=स्थान, कृतं=विहितम् । नेत्राऽन्तयोः सौकुमार्यादित्यथः ।

**व्युत्पत्तिः**—गभस्तिभिः="किरणोस्रमयूखाऽशुगभस्तिघृणिधृष्णयः" इत्यमरः । अतितप्तम्-अत्यन्तं तप्तम् अतितप्तम्, "सुप्सुपा" इति समासः । तदीय=यस्या इद तदीय, छप्रत्ययः । कमलश्रियं=कमलस्य श्रीः कमलश्रीः, ता कमलश्रियम् । अपाङ्गयोः="अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः ।

**भावार्थः**—सूर्यकिरणैः सन्तप्तं पार्वतीमुखं सूर्यरश्मिसंयोगे सति कमलमिव शुशुभे, न तु मम्लौ । किन्तु प्रकृतिमृदुत्वात् आयतयोस्तदीयनेत्रप्रान्तभागयोः केवलं कालिम्ना मन्दमन्दमवस्थानं कृतमिति भावः ।

**भाषा**—कमल जिस प्रकार सूर्य की किरणों के सयोग से प्रकाशित होता है, उसी प्रकार पार्वती का मुख भी सूर्य किरण से म्लान न हो कर अधिक शोभित हुआ । किन्तु स्वभावतः सुकुमार आखों के चारों ओर काला दाग पड़ गया ।

तदवस्थायाः पार्वत्याः शरीरयात्रामाह—

**अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।**
**बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥ २२ ॥**

**केवल अयाचित जल तथा शशि किरण हो भोजन रहा ।**
**तरु से अधिक गिरिराज-कन्या का न कुछ भोजन रहा ॥**

**अन्वयः**—अयाचितोपस्थितं केवलम् अम्बु, रसात्मकस्य उडुपतेः रश्म-

यश्च, तस्याः पारणाविधिः बभूव किल । वृक्षवृत्तिव्यतिरिक्तसाधनः पारणाविधिः न बभूव ।

**व्याख्या**—अयाचितोपस्थितम् = अप्रार्थितोपनतं, केवलं = तन्मात्रम् , अम्बु = उदकं, रसात्मकस्य = अमृतमयस्य, उडुपतेः=तारापतेः, चन्द्रस्येत्यर्थः । रश्मयश्च = किरणाश्च, तस्याः=पार्वत्याः, पारणाविधिः=भक्षणकर्म, बभूव किल= अभवत् किल । तावन्मात्रसाधनकोऽभूदित्यर्थः । वृक्षवृत्तिव्यतिरिक्तसाधनः = तरुवर्तनाऽधिकोपायः, पारणाविधिः = भक्षणकर्म, न बभूव = न अभवत् ।

**व्युत्पत्तिः**—अयाचितोपस्थितं = न याचितम् अयाचितं, तच्च तत् उपस्थितम् अयाचितोपस्थितम् । अम्बु = "अम्भोर्णस्तोयपानीयनीरक्षीराऽम्बुशम्बरम्" इत्यमरः । रसात्मकस्य = रसः आत्मा यस्य स रसात्मकः, तस्य रसात्मकस्य, समासाऽन्तः कप् । उडुपतेः=उडूना पतिः उडुपतिः, तस्य उडुपतेः, "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः । पारणविधिः =पारणायाः विधिः पारणाविधिः । किल = इदं पद प्रसिद्ध्यर्थकम् । साध्यसाधनयोः अभेदेन व्यवहारः साधनान्तरव्यावृत्तिनिमित्तकः । वृक्षवृत्तिव्यतिरिक्तसाधनः = वृक्षाणा वृत्तिः वृक्षवृत्तिः, "आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने" इत्यमरः । विशेषेण अतिरिक्त व्यतिरिक्तं, "सुप्सुपा" इति समासः । "अतिरिक्तः समधिकः" इत्यमरः । वृक्षवृत्तेः व्यतिरिक्त वृक्षवृत्तिव्यतिरिक्तं, तत् साधनं यस्य सः वृक्षवृत्तिव्यतिरिक्तसाधनः, वृक्षोऽपि अयाचितोपस्थितेन मेघजलेन इन्दुकिरणैश्च जीवतीति प्रसिद्धम् । पार्वत्यपि तावन्मात्रमवालम्बतेत्यर्थः ।

**भावार्थः**—धर्मकालपर्यन्तमुपोषितायाः पार्वत्यास्तदवसानसुलभानि मेघजलानि, दिनसावसानपर्यन्तमुपोषितायास्तु निशाया चन्द्ररश्मयश्च व्रतसमाप्तिभोजनं बभूव । किं बहुना पूर्वोक्तवृक्षजीवनोपायातिरिक्तं कन्दमूलफलादिकमुपोषित भोजनं न बभूवेति भावः ।

**भाषा**—ग्रीष्म काल पर्यन्त पार्वती ने निराहार व्रत किया । गर्मी के अन्त में भी वर्षा का जल ही उसका पानीय हुआ । दिन में कुछ न खाने पर भी रात में भी केवल चादनी ही उस के खाने की वस्तु हुई । इस प्रकार वह वृक्षों की भाति अपना जीवन व्यतीत करती थी। कन्दमूल अथवा फलादि भी वह नही खाती थी ।

इत्थमुपवर्णितं ग्रीष्मकालकृतं तपो वर्षारम्भवृत्तान्तकथनेनोपसंहरति—

**निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन सा ।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३॥**

सूरज तथा काष्ठाग्नि से सन्तप्त गिरिजा ने सजल ।
ग्रीष्मान्त में सलिलार्द्र भू-सह वाष्प का छोड़ा विमल ॥

**अन्वयः**—विविधेन नभश्चरेण इन्धनसम्भृतेन वह्निना निकामतप्ता सा तपाऽत्यये नवैः वारिभिः उक्षिता सती, भुवा सह ऊर्ध्वगम् ऊष्माणम् अमुञ्चत् ।

**व्याख्या**—विविधेन = अनेकप्रकारेण, पञ्चविधेनेत्यर्थः । नभश्चरेण=खेचरेण, आदित्यरूपेणेत्यर्थः । इन्धनसम्भृतेन=काष्ठसमिद्धेन, वह्निना = अग्निना, निकामतप्ता = अत्यन्तसन्तप्ता, सा = पार्वती, तपाऽत्यये=ग्रीष्माऽन्ते, प्रावृषीत्यर्थः । नवैः = नूतनैः, वारिभिः = जलैः, उक्षिता=सिक्ता सती, भुवा = पृथिव्या, पञ्चाऽग्नितप्तयेति शेषः । सह = सार्धम्, ऊर्ध्वगम्=ऊर्ध्वस्थम् , ऊष्माणं = वाष्पम्, अमुञ्चत् = तत्याज ।

**व्युत्पत्तिः**—विविधेन = विविधाः विधाः प्रकाराः, यस्य स विविधः तेन विविधेन । नभश्चरेण = चरतीति चरः, "चरेष्टः" इति टप्रत्ययः । नभसः चरः नभश्चरः, तेन नभश्चरेण, "नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम्" इत्यमरः । इन्धनसम्भृतेन = इन्धनैः सम्भृतः इन्धनसम्भृतः, तेन इन्धनसम्भृतेन । "काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्" इत्यमरः । निकामतप्ता=निकामं तप्ता निकामतप्ता, "सुप्सुपा" इति समासः । तपाऽत्यये=तपस्य अत्ययः तपाऽत्ययः, तस्मिन् तपात्यये, "ग्रीष्म ऊष्मकः । निदाव उष्णोपगम उष्ण ऊष्मागमस्तपः" इत्यमरः । उर्ध्वगम्=ऊर्ध्वं गच्छतीति ऊर्ध्वगः, तम् ऊर्ध्वगम् । ऊष्माणम् = ग्रीष्मोष्मवाष्पमूष्माणम्" इति यादवः । अत्र सहोक्तिरलङ्कारः । तल्लक्षणं यथा—

"सा सहोक्तिः सहार्थस्य वलादेकं द्विवाचकम्" इति ।

**भावार्थः**—इत्थं गगनस्थेन सूर्याग्निना काष्ठप्रज्वलितेन च भूतलाग्निना पञ्चविधेन भृश सन्तप्ता सती, पुनश्च ग्रीष्मावसाने वर्षारम्भसम्भूतैः नूतनजलैःसिक्ता च सती सा पार्वती, ग्रीष्मकाले सन्तप्ता वर्षारम्भे जलैरुक्षिता भूमिरिवोर्ध्वगामि बाष्पं मुमोचेति भावः ।

**भाषा**—ऊपर आकाश की सूर्याग्नि, और चारों ओर लकड़ी की आग, इस प्रकार गर्मी के दिनों में सभी तरफ से तपी हुई पार्वती के शरीर से, वर्षाऋतु में

वृष्टिजल के पड़ने पर, ग्रीष्मऋतु में सन्तप्त तथा वर्षाऋतु में भींगी हुई पृथ्वी के साथ साथ धूमोद्गार निकलने लगा ।

इत्थं ग्रीष्मकालकृतं तप उपवर्ण्य सम्प्रति वार्षिकं तपो वर्णयितुमुपक्रमते ।

**स्थिताः क्षणं पक्ष्मसु ताडिताऽधराः, पयोधरोत्सेधनिपातचूर्णिताः ।**
**वलीषु तस्यास्स्खलिताः प्रपेदिरे, चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४ ॥**

क्रमशः पलक से अधर को ताड़ित किया कुच पर गये ।
चिर तक उदर से फिसल कर जलबिन्दु नाभी पर गये ॥

**अन्वयः**—प्रथमोदबिन्दवः तस्याः पक्ष्मसु क्षणं स्थिताः ताडिताऽधराः पयोधरोत्सेधनिपातचूर्णिताः वलीषु स्खलिताः चिरेण नाभिं प्रपेदिरे ।

**व्याख्या**—प्रथमोदबिन्दवः = पूर्वजलपृषताः, प्रथमविशेषणात् बिन्दुना विरलत्वं, बहुवचनान्नातिविरलत्वं च गम्यते । तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः । तस्याः = पार्वत्याः, पक्ष्मसु = नेत्रलोमसु, क्षणं=कश्चित्कालं, स्थिताः=स्थितिं गताः, 'स्थिता' इत्यनेन पक्ष्मणा सान्द्रत्वं, क्षणमित्यनेन स्निग्धत्वं च गम्यते । अनन्तरम्, ताडिताऽधराः = व्यथितोष्ठाः, एतेन अधरस्य मृदुत्वं गम्यते । ततः पयोधरोत्सेधनिपातचूर्णिताः = कुचोपरिभागपतनजर्जरिताः, कुचकाठिन्यादित्यर्थः । तदनु, वलीषु=उदररेखासु, स्खलिताः=पतिताः, निम्नोन्नतत्वादित्यर्थः । इत्थम्, चिरेण = बहुसमयेन, न तु शीघ्रं, प्रतिबन्धबाहुल्यादिति शेषः । नाभिं = तुन्दिं, प्रपेदिरे = प्रविष्टाः, न तु निर्जग्मुरित्यर्थः । एतेन नाभेर्गाम्भीर्यं गम्यते ।

**व्युत्पत्तिः**—प्रथमोदबिन्दवः = उदकस्य बिन्दवः उदबिन्दवः, "मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च" इति उदकशब्दस्य उदादेशः । "कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्" इति, "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यप्यमरः । प्रथमे च ते उदबिन्दवः प्रथमोदबिन्दवः । ताडिताऽधराः= ताडितः अधरः यैस्ते ताडिताऽधराः । पयोधरोत्सेधनिपातचूर्णिताः = धरतस्तौ धरौ, "धृञ् धारणे" पचाद्यच् । पयसा धरौ पयोधरौ, "स्त्रीस्तनाऽब्दौ पयोधरौ" इत्यमरः । पयोधरयोः उत्सेधः पयोधरोत्सेधः, तस्मिन्निपातः, तेन चूर्णिताः पयोधरोत्सेधनिपातचूर्णिताः । नाभिं="नाभिर्द्वयोस्तुन्दकूपी तुन्दिस्तुन्दीकरः पुमान्" इति त्रिकाण्डशेषः । अत्र श्लोके प्रतिपदमर्थवत्वात् परिकरालङ्कारः ।

काव्यप्रकाशे तल्लक्षणं यथा—

"विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः" इति ।

**भावार्थः**—वर्षारम्भसमयभाविप्रथमजलबिन्दवो नेत्ररोमसु क्षणकालमवस्थिताः, अत्युच्चस्थानादतिकठिनस्तनतटनिपातेन परमाणुता प्राप्ताः, पुनश्च सम्भूयाऽधोगमनारम्भे वलित्रये स्खलनं प्राप्ताः सन्तो, महता समयेन पार्वत्याः निम्ननाभि-प्रदेशं प्रविविशुरिति भावः ।

**भाषः**—वर्षाजल पार्वती के सिर पर गिरता था। उस जल की बूँदे उसके पलकों में कुछ समय तक ठहर कर, वहा से सीधे अत्युच्च कठिन स्तन पर टपकने से इधर उधर छिटक जातीं थी। फिर कुछ जमा हो कर नीचे की ओर आते आते रोमावली के रास्ते से त्रिवली में घूमती हुई, अन्तमें गभीर नाभि प्रदेशमें प्रविष्ट होती थी।

वार्षिकं तपः प्रकारमेवाह—

**शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।**
**व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥२५॥**

**चलती हवा थी वृष्टि होती उपल पर सोती सदा ।**
**तप-साक्षि रजनी देखती बिजली-नयन से सर्वदा ॥**

**अन्वयः**—निरन्तरासु अन्तरवातवृष्टिषु अनिकेतवासिनीं शिलाशया तां महातपः साक्ष्ये स्थिताः क्षपाः तडिन्मयैः उन्मिषितैः व्यलोकयन् इव ।

**व्याख्या**—निरन्तरासु=नीरन्ध्रासु, अविच्छिन्नासु इत्यर्थः। अन्तरवातवृष्टिषु=मध्यवायुवर्षेषु, अनिकेतवासिनीम्=अगृहवासिनीम्, अनावृत्तदेशवासिनीमि-त्यर्थः। शिलाशया=प्रस्तरशायिनीं, तां=पार्वतीं, महातपःसाक्ष्ये=दुष्करतपःसाक्षित्वे, स्थिताः=विद्यमानाः, क्षपाः=रात्रयः, तडिन्मयैः=विद्युद्रूपैः, उन्मिषितैः=अवलोकनैः, व्यलोकयन इव=ददृशुः इव ।

**व्युत्पत्तिः**—निरन्तरासु=निर्गतम् अन्तरं याभ्यास्ताः निरन्तराः, तासु निरन्तरासु । अन्तरवातवृष्टिषु=अन्तरे वातः यासा ताः अन्तरवाताः, "अन्तरमवकाशाऽवधिपरिधानाऽन्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥" इत्यमरः। अन्तरवाताश्च ता वृष्टयः अन्तरवातवृष्टयः, तासु अन्तर-वातवृष्टिषु । अनिकेतवासिनीं=निकेते=गृहे, वसतीति तच्छीला निकेतवासिनी, न निकेतवासिनी अनिकेतवासिनी, ताम् अनिकेतवासिनीं, शिलाशया=शिलायां शेते शिलाशया, ता शिलाशयाम्, "अधिकरणे शेतेः" इत्यच्प्रत्ययः। महातपः—साक्ष्ये=साक्षाद् द्रष्टा साक्षी, "साक्षाद् द्रष्टरि संज्ञायाम्" इति इनि प्रत्ययः । सा-

क्षिणः कर्म साक्ष्यं, ष्यञ्प्रत्ययः । महच्च तत् तपः महातपः, "आन्महतः समानाऽधिकरणजातीययोः" इति महत आत्वम् । महातपसः साक्ष्यं महातपःसाक्ष्यं, तस्मिन् महातपः साक्ष्ये । क्षपाः="निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः । तडिन्मयैः=तडितः एव तडिन्मयानि, तैः तडिन्मयैः, स्वार्थे मयट् । "प्रत्यये भाषाया नित्यम्" इत्यनुनासिकः ।

अत्र श्लोके उत्प्रेक्षालङ्कारः । इवेति चक्षुषा विलोकनमेव उत्प्रेक्ष्यते । साक्ष्य तु—

"आदित्यचन्द्रावनिलोऽनलश्च, द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये, धर्मश्च जानानि नरस्य वृत्तम् ॥"

इति महाभारतप्रमाणसिद्धत्वात् न उत्प्रेक्ष्यमिति चानुसन्धेयम् ।

**भावार्थः**—निबिडधारास्वनवरतप्रवृत्तमारुतासु वृष्टिष्वनावृतदेशवासिनीं शिलातलशायिनीं ता पार्वतीं महातपःकर्मसाक्षित्वे विद्यमाना रात्रयो विद्युद्रूपैरक्षिपक्ष्मोद्घाटनैरवलोकयामासुरिव ।

**भाषा**—जोरों से घनघोर वर्षा के साथ रात मे जब आंधी चलने लगती थी तब भी अनावृत स्थान में शिलातल पर शयन करने वाली पार्वती की महती तपस्या के साक्षी स्वरूप अनेक रात्रि अपनी बिजली रूप आंखों को खोल कर के मानों देखती थी ।

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरणप्रकारमाह—

**निनाय साऽत्यन्तहिमोत्किराऽनिलाः, सहस्यरात्रीरुदवासतत्परा ।**
**परस्पराक्रन्दिनि चक्रवाकयोः, पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥**

**हिम मय पवन मय पौष निशि में सलिल में रहती सदुख ।**
**चकवा तथा चकई-विरहिणी को निरखती थी अति सदुख ॥**

**अन्वयः**—सा अत्यन्तहिमोत्किराऽनिलाः, सहस्यरात्री, उदवासतत्परा, परस्पराक्रन्दिनि पुरः वियुक्ते चक्रवाकयोः मिथुने कृपावती सती निनाय ।

**व्याख्या**—सा=पार्वती, अत्यन्तहिमोत्किराऽनिलाः=अत्यर्थतुहिनक्षेपिवाताः, सहस्यरात्रीः = पौषरजनीः, उदवासतत्परा=जलनिवासासक्ता, परस्पराक्रन्दिनि = अन्योन्याक्रोशिनि, पुरः=अग्रे, वियुक्ते=विरहिणि, वियोगयुक्ते इत्यर्थः । चक्रवाकयोः ॥ चक्रवाक्याः चक्रवाकस्य च, मिथुने=द्वन्द्वे, कृपावती=दयावती सती, निनाय=यापयामास ।

**व्युत्पत्तिः**—अत्यन्तहिमोत्किराऽनिलाः=उत्करन्तीति उत्किराः "कॄ विक्षेपे"

इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । हिमानाम् उत्किराः हिमोत्किराः । अत्यन्तं हिमोत्किराः अतिहिमोत्किराः, ते अनिलाः यासु ताः अत्यन्त-हिमोत्किराऽनिलाः ताः । सहस्यरात्रीः=सहसि=बले, साधुः, सहस्यः, "तत्र साधुः" इति यत्प्रत्ययः । "पौषे तैषसहस्यौ द्वौ" इत्यमरः । सहस्यस्य रात्रयः, सहस्यरात्रयः, ताः सहस्यरात्रीः । उदवासतत्परा=उदके वासः उदवासः, "पेषं वासवाहनधिषु च" इत्युदकस्य उदादेशः । उदवासे तत्परा उदवासतत्पराः । परस्पराक्रन्दिनि=आक्रन्दतीति आक्रन्दि, परस्पर यथा स्यात्तथा, आक्रन्दि परस्पराक्रन्दि, तस्मिन् परस्पराक्रन्दिनि, वियुक्ते=युक्तं योगः, विगतं युक्तं यस्य तत् वियुक्त, तस्मिन् वियुक्ते । चक्रवाकयोः=चक्रवाकी च चक्रवाकश्च चक्रवाकौ, तयोः चक्रवाकयोः, "पुमान्स्त्रिया" इत्येकशेषः । मिथुने="स्त्रीपुंसोर्मिथुनं द्वन्द्वम्" इत्यमरः । कृपावती=कृपा अस्ति यस्याः सा कृपावती, मतुप्प्रत्ययः । निनाय="णीञ् प्रापणे" इति धातोर्लिट्, हेमन्ते जलाधिवास उक्तो मनुना यथा–

"अप्सु वासस्तु हेमन्ते क्रमशो वर्धयंस्तपः" इति ।

**भावार्थः**—सा पार्वती हैमपवनातिशीतलाः पौषरजनीः (हेमन्तकालरजनीः) जलाधिवासनियता सती पुरोभागेऽन्योन्याक्रोशिनि विरहिणि चक्रवाकीचक्रवाकयोर्द्वन्द्वे दयमाना सती यापयामासेति भावः ।

**भाषा**—पार्वती हिमालय की शीत पूर्ण पौष मास की रात में भी जल में रहती थी । उसके सामने ही एक दूसरे से बिछुरा हुआ चकवा और चकई का जोडा एक दूसरे को उद्देश कर चिल्लाता था । पार्वती का हृदय उस चक्रद्वन्द्व पर सहानुभूति से ओत प्रोत था ।

इत्थमुग्रे तपसि वर्तमानाया अपि पार्वत्या वदनमुज्ज्वलमेवाभूदिति भङ्ग्यन्तरेणाह—

**मुखेन सा पद्मसुगन्धिना निशि, प्रवेपमानाऽधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसम्पदां, सरोजसन्धानमिवाकरोदपाम् ॥ २७ ॥**

निशि में कमल सम गन्ध मय चल अधर दल शोभित वदन ।
हिम से सरोरुह नष्ट थे पर मुख बना था उनका सदन ॥

**अन्वयः**—सा निशि पद्मसुगन्धिना प्रवेपमानाऽधरपत्रशोभिना मुखेन तुषारवृष्टिक्षतपद्मसम्पदाम् अपां सरोजसन्धानम् अकरोत् इव ।

**व्याख्या**—सा=पार्वती, निशि=रात्रौ, पद्मसुगन्धिना=कमलसुरभिणा,

प्रवेपमानाऽधरपत्रशोभिना = प्रकम्पमानोष्ठदलशोभिना, मुखेन = आननेन, तुषारवृष्टिक्षतपद्मसम्पदा = तुहिनवर्षनाशितकमलसम्पत्तीनाम्, अपा = जलाना, सरोजसन्धानं = कमलसङ्घट्टनम्, अकरोत् इव = व्यधत्त इव ।

**व्युत्पत्तिः**—पद्मसुगन्धिना = शोभनः गन्धः यस्य सः सुगन्धिः, "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इति इत्वम् । पद्मम् इव सुगन्धिः पद्मसुगन्धिः, "उपमानानि सामान्यवचनैः" इति समासः । तेन पद्मसुगन्धिना । प्रवेपमानाऽधर पत्रशोभिना = प्रवेपते इति प्रवेपमानः, "टुवेपृ कम्पने" इति धातोः शानच्, "आने मुक्" इति मुगागमः । प्रवेपमानश्चाऽसौ अधरः प्रवेपमानाऽधरः । प्रवेपमानाऽधर एव पत्रं प्रवेपमानाऽधरपत्रं, "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इत्यमरः । प्रवेपमानाऽधरपत्रेण शोभते तच्छीलं प्रवेपमानाऽधरपत्रशोभि, तेन प्रवेपमानाधरपत्रशोभिना । तुषारवृष्टिक्षतपद्मसम्पदा = तुषाराणां वृष्टिः तुषारवृष्टिः, तया क्षताः तुषारवृष्टिक्षताः । पद्मानां सम्पदः तद्मसम्पदः । तुषारवृष्टिक्षताः पद्मसम्पदः यासां ताः, तुषारवृष्टिक्षतपद्मसम्पदः, तासां तुषारवृष्टिक्षतपद्मसम्पदा । सरोजसन्धानं = सरसि जातानि सरोजानि, तेषां सन्धानं सरोजसन्धानं, तत् ।

अत्र हेमन्ते तुषारवर्षणादितरेषु सरोजेषु, विनष्टेषु, पार्वत्याः वदनसरोजमेव जले तदानीं सरोजसन्ततिविच्छेदाभावमकरोदिवेत्यभिधानादुत्प्रेक्षाऽलङ्कारः । अधरस्य पत्ररूपणान्मुखस्य पद्मरूपणमर्थादायातमित्येकदेशविवर्ति रूपकं च । अन्यत् कमलं हिमेन उपहन्यते तन्मुखकमलं तु न तथा. इति व्यतिरेकाऽलङ्कारोऽपि व्यज्यत इत्येतेषां सङ्करः ।

**भावार्थः**—उदवासतत्परत्वादुदके मुखमात्रदृश्या सा पार्वती हेमन्तरात्रौ कमलवत्सुरभिणा शीतवशात् कम्पमानोष्ठदलसुन्दरेण मुखेन हिमनष्टपङ्कजसमृद्धीनां जलानामविच्छिन्नपङ्कजसम्बन्धमिव चकारेति भावः ।

**भाषा**—शीत की रात में पानी में रहते समय पार्वती का मुख मात्र दिखाई पड़ता था । शीत के कारण उस का ओष्ठ दल कांपता था, और निश्वास पवन से कमल के समान सुगन्धि दिशाओं को आमोदित करती थी । मानो हेमन्त ऋतुमें कमलों के नष्ट हो जाने पर भी उसके मुख कमल से ही सरोवर की कमल सम्पत्ति अटूट रह जाती थी ।

अथात्यन्तदुश्चरं तपोविशेषमाह—

**स्वयं विशीर्णद्रुमपर्णवृत्तिता, परा हि काष्ठा तपसस्तया पुनः ।**
**तदप्यपाकीर्णमतः प्रियंवदां, वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥**

तप की परा काष्ठा हुई पत्ते गिरे भोजन हुये ।
छोड़ा उसे भी बन 'अपर्णा' चकित सब ऋषि जन हुये ॥

**अन्वयः**—स्वयं विशीर्णद्रुमपर्णवृत्तिता तपसः परा काष्ठा हि । तया पुनः तत् अपि अपाकीर्णम्, अत प्रियवदा ता पुराविदः अपर्णा इति च वदन्ति ।

**व्याख्या**—स्वय विशीर्णद्रुमपर्णवृत्तिता = स्वतश्च्युतवृक्षपत्रवर्तनत्वं, तपसः = नियमस्य, परा काष्ठा हि = परम् उत्कर्षो हि, तया = पार्वत्या, पुनः, तत् अपि = पर्णवर्तनम् अपि, अपाकीर्णम् = अपाकृतम्, अतः = अस्मात् हेतोः, पर्णभक्षणत्यागाद् हेतोरित्यर्थः । प्रियंवदा = हृद्यभाषिणी, ता=पार्वतीं, पुराविदः= पुराणज्ञाः, अपर्णा इति च, वदन्ति = कथयन्ति ।

**व्युत्पत्तिः**—स्वयं विशीर्णद्रुमपर्णवृत्तिता = स्वयं विशीर्णानि स्वयंविशीर्णानि, द्रुमस्य पर्णानि द्रुमपर्णानि । स्वयंविशीर्णानि द्रुमपर्णानि एव वृत्तिर्यस्य स स्वयंविशीर्णद्रुमपर्णवृत्तिः, तस्य भावः स्वयंविशीर्णद्रुमपर्णवृत्तिता, "आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने" इत्यमरः । काष्ठा = "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः । प्रियवदा = प्रियं वदतीति प्रियंवदा, ता प्रियवदा, "प्रियवशे वदः खच्" इति खच्प्रत्ययः, "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमश्च । पुराविदः = पुरा = पुराणं, विदन्तीति पुराविदः, "पुरा पुराणे निकटे प्रबन्धाऽतीतभाविषु" इति मेदिनी । अपर्णा = अविद्यमानं भक्ष्यत्वेन पर्णम्, अपि यस्याः सा अपर्णा । "अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका" इत्यमरः ।

अत्र 'अपर्णाम्' इति अपपाठः । इतिशब्दाऽभिहितेन द्वितीयाया अनुपपत्तेः । यथाऽऽह वामनः = "निपातेनाऽप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्" इति मल्लिनाथ. ।

**भावार्थः**—कालपरिपाकवशात्स्वयमेव पतितैर्वृक्षाणां जीर्णपत्रैर्जीवनं हि तपश्चर्यायाश्चरमसीमा भवति । तया पार्वत्या पुनः स्वयं पतितजीर्णपर्णभक्षणमपि परित्यक्तम् । अत एव पूर्ववृत्तान्तवेदिनो मधुरभाषिणीं पार्वतीं नाम्नाऽपर्णेत्याजुहुवुरिति भावः ।

**भाषा**—पेड़ से गिरे हुए पत्तो से अपना जीवन निर्वाह करते हुए जब तपस्या की जाती है, वही तपस्या की चरम सीमा कहाती है । परन्तु पार्वती ने उन

पत्तों का खाना भी त्याग दिया था। इसी से उस का एक नाम अपर्णा हुआ।

अथैवं क्रियमाणस्य तपसः सिद्धिमाह—

**मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।**
**तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९ ॥**

कोमल मृणाल समान वपु को क्षीण व्रत से कर दिया ।
तापस उपार्जित कठिन तन से विमल तप मद हर लिया ॥

**अन्वयः**—मृणालिकापेलवं स्वम् अङ्गम् एवमादिभिः व्रतैः अहर्निशं ग्लपयन्ती सा कठिनैः शरीरैः उपार्जितं तपस्विनां तपः दूरम् अधश्चकार ।

**व्याख्या**—मृणालिकापेलवं=पद्मिनीकन्द कोमलं, स्वम्=स्वकीयम्, अङ्गं=शरीरम्, एवमादिभिः=पूर्वोक्तजलादिवासैः, व्रतैः=नियमैः, अहर्निशम्=अहोरात्रं, ग्लपयन्ती=कर्शयन्ती, सा=पार्वती' कठिनैः=कठोरैः, क्लेशसहैरित्यर्थः । शरीरैः=देहैः, उपार्जितं=सम्पादितं, तपस्विनां=तापसाना, तपः=नियमविशेषं, दूरम्=अत्यन्तम्, अधश्चकार=तिरश्चकार, अतिशिश्ये इत्यर्थः ।

**व्युत्पत्तिः**-मृणालिकापेलवं=मृणालिका इव पेलवम् इति मृणालिकापेलवं, तत्, एवमादिभिः=एवम्=उक्तप्रकारतोयाऽग्निमध्यवासव्रतम्, आदिः येषा तानि एवमादीनि, तैः एवमादिभिः । अहर्निशम्=अहश्च निशा च अहर्निशं, तत् । समाहारे द्वन्द्वैकवद्भावः । अत्यन्तसंयोगे द्वितीया । कठिनैः="कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्" इत्यमरः । तपस्विना=तपः अस्ति येषा ते तपस्विनः, तेषा तपस्विना, "तपः सहस्राभ्या विनीनी" इति विनिप्रत्ययः ।

अनेन तपः सिद्धिकथनेन तपोवर्णनमुपसंहृतमित्यवसेयम् ।

**भावार्थः**—पद्मिनीकन्दकोमलं स्वकीयं शरीरं पूर्वोक्तप्रकारैस्तोयाग्निवासोपवासादिभिर्नियमैः रात्रिन्दिवं शोषयन्ती सा पार्वती जन्मतः प्रभृति परिचयवशादातपादिसंसर्गसहैर्देहैः सम्पादितं महर्षीणा तपोऽत्यन्तं तिरश्चकारेति भावः ।

**भाषा**—कमल के समान कोमल शरीर को जलवास अग्निवास उपवासादि व्रत नियमादि से शोषित करती हुई पार्वती ने तपश्चर्या की। दृढ शरीर वाले ऋषिलोग तो जन्म से ही तपस्या की कठोरता से परिचित है। अतः पार्वती की तपस्या ने ऋषियो की सारी तपस्याओं का तिरस्कार किया।

अथैव विषतपःसमुद्बोधितदयासन्धुक्षितप्राक्तननैसर्गिकानुरागस्य भगवतो हरस्य ब्रह्मचारिव्याजेनाऽभियोगप्रकारं प्रपञ्चयति—

**अथाऽजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥३०॥**

पालाश धर ले अजिन जकते ब्रह्मचर्य छतेज से ।
मृदुवचन एक सु ब्रह्मचारी जटिल आश्रय में लसे ॥

**अन्वयः**—अथ अजिनाऽऽषाढधरः प्रगल्भवाक् ब्रह्ममयेन तेजसा ज्वलन् इव कश्चित् जटिलः शरीरबद्धः प्रथमाऽऽश्रमः यथा तपोवनं विवेश ।

**व्याख्या**—अथ=अनन्तरम्, अजिनाऽऽषाढधरः=मृगचर्मपलाशदण्डधरः, प्रगल्भवाक्=प्रौढवचनः, ब्रह्ममयेन=वेदाध्ययनमयेन, वेदाध्ययनप्रकर्षजनितेनेत्यर्थः । तेजसा=वर्चसा, ज्वलन् इव=देदीप्यमान इव, कश्चित्=कोऽपि, अनिर्दिष्ट इत्यर्थः । जटिलः=जटावान्, ब्रह्मचारीति शेषः । शरीरबद्धः=बद्धशरीरः, शरीरवानित्यर्थः । प्रथमाऽऽश्रमः यथा=ब्रह्मचर्याश्रमः इव, तपोवनं=तपःस्थलं, पार्वत्या इति शेषः । विवेश=प्रविष्टवान् ।

**व्युत्पत्तिः**—अजिनाऽऽषाढधरः=आषाढी=पूर्णिमा, प्रयोजनम् अस्य सः आषाढः=पालाशदण्डः, "विशाखाऽऽषाढादण् मन्थदण्डयोः" इत्यणप्रत्ययः । "पालाशो दण्ड आषाढोव्रते" इत्यमरः । अजिनं च आषाढश्च अजिनाषाढौ, "अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । धरतीति धरः, पचाद्यच् । अजिनाषाढयोः धरः अजिनाऽऽषाढधरः, अनेन ब्राह्मणत्वमपि विज्ञातं भवति । ब्राह्मणानामेव पालाशदण्डविधानात् । प्रगल्भवाक्=प्रगल्भा वाक् यस्य स प्रगल्भवाक्, "प्रगल्भः प्रतिभाऽन्विते" इत्यमरः । ज्वलन्=ज्वलतीति ज्वलन्, शतृप्रत्ययः । जटिलः=जटाः सन्ति यस्य स जटिलः, "लोमादिपामादिपिच्छादिभ्यः शनेलचः" इति पिच्छादित्वादिलच् । ब्रह्मचारिणामपि जटाधरत्वमुक्तं मनुना, यथा—

"मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाधरः" इति ।

शरीरबद्धः=शरीर बद्धं यस्य स शरीरबद्धः, "वाहिताग्न्यादिषु" इति पाठात्साधुत्वम् । प्रथमाऽऽश्रमः=प्रथमश्चासौ आश्रमः प्रथमाश्रमः । "ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुक" इति मनुस्मृतिवचनेन ब्रह्मचर्याश्रमस्यैवावलम्बनक्रमे प्राथम्यबोधनात् । तपोवनं=तपसः वनं तपोवनम् ।

अत्रोत्प्रेक्षालङ्कारः । शोभाधिक्यं लोकोत्तरप्रभावत्वञ्चोत्प्रेक्षाहेतुः । यथाशब्दोऽयमुत्प्रेक्षाद्योतकः ।

**भावार्थः**—अथ कृष्णाजिनपालाशदण्डधारी प्रौढवचनो ब्रह्मतेजसा देदीप्यमान इव जटावान् कश्चिदपरिचितो ब्रह्मचारी मूर्तिमान् ब्रह्मचर्याश्रम इव लक्ष्यमाणः पार्वत्यास्तपोवनं प्रविष्टोऽभूदिति भावः ।

**भाषा**—एक दिन कृष्णाजिन तथा पलाशदण्डधारी जटायुक्त कोई अपरिचित ब्रह्मचारी पार्वती के आश्रम मे उपस्थित हुआ । उस की आवाज गम्भीर थी, और ब्रह्मतेज से पूर्ण था । मालूम होता था कि ब्रह्मचर्याश्रम ही मूर्त्तिमान होकर तपोवन में मानों आविर्भूत हुआ है ।

अथ पार्वत्यास्तद्विषया प्रतिपत्तिमाह—

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।**
**भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥३१॥**

**गिरिराज कन्या ने किया अर्चन अतिथि का ध्यान से ।**
**निज सदृश से भी खास जन सम विज्ञ मिलते मान से ॥**

**अन्वयः**—आतिथेयी पार्वती तं बहुमानपूर्वया सपर्यया प्रत्युदियाय । साम्ये अभिनिविष्टचेतसा वपुर्विशेषेषु अतिगौरवाः क्रियाः भवन्ति ।

**व्याख्या**—आतिथेयी = आतिथिसत्कारिणी, पार्वती = उमा, त = ब्रह्मचारिणं, बहुमानपूर्वया = अतिसत्कारपूर्वया, गौरवपूर्वयेत्यर्थः, । सपर्यया = अर्चया, प्रत्युदियाय = प्रत्युजगाम । "ननु कथ पार्वत्यास्तुल्येऽपि तादृश उपचार इत्यत आह"—साम्ये = तुल्यत्वे, अभिनिविष्टचेतसा = स्थिरचित्ताना, रागद्वेषराहित्यात् समबुद्धीनामित्यर्थः । बपुर्विशेषेषु = व्यक्तिविशेषेषु, तेजोविशेषयुक्तेषु शरीरेष्वित्यर्थः । अतिगौरवाः=अतिगौरवसहिताः, क्रियाः=चेष्टाः, भवन्ति=प्रवर्तन्ते ।

**व्युत्पत्तिः**—आतिथेयी = अतिथिषु साध्वी आतिथेयी, "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्प्रत्ययः । "आयनेयीनीयियः फढखछघा प्रत्ययादीनाम्" इति ढस्य एय् । "टिड्ढाणञ्०" इत्यादिना ङीप् । पार्वती=पर्वतस्याऽपत्थ स्त्री पार्वती । बहुमानपूर्वया = बहुश्चाऽसौ मानः बहुमानः, स पूर्वः यस्याः सा बहुमानपूर्वा, तया बहुमानपूर्वया । सपर्यया = "पूजा नमस्याऽपचितिः सपर्याऽऽर्चार्हणाः समाः" इत्यमरः । साम्ये = समस्य भावः साम्य, तस्मिन् साम्ये, ष्यञ्प्रत्ययः । अभिनिविष्टचेतसाम्=अभिनिविष्टं चेतः येषा ते आभिनिविष्टचेतसः,

तेषाम् अभिनिविष्टचेतसा, वपुर्विशेषेषु – वपुषा विशेषाः वपुर्विशेषाः, तेषु वपुर्विशेषेषु । तात्पर्याऽनुपपत्तेः वपुःपदस्य वपुर्धारिषु लक्षणा । अतिगौरवाः = गुरोर्भावः गौरवम् , अत्यन्तं गौरवं यासा ता अतिगौरवाः । क्रियाः=क्रियन्ते यास्ताः क्रियाः । तेजोविशेषयुक्तेषु शरीरविशेषेषु भगवद्बुद्धिरुपपादिता गीतायां श्रीमद्भगवता श्रीकृष्णेन । यथा—

"यद्यद् विभूतिमत् सत्त्व श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्व मम तेजोंऽशसम्भवम् ॥" इति ।

**भावार्थः**—अभ्यागतवत्सला सा पार्वती श्रद्धापूर्वक पूजया तं ब्रह्मचारिणं प्रत्युज्जगाम । रागद्वेषराहित्यात् सर्वत्र समबुद्धीनामुदारचेतसा तेजोविशेषयुक्तेषु शरीरेष्वत्यन्तगौरवोपेताः पूजाविधय उपपद्यन्त इति भावः ।

**भाषा**—अभ्यागतवत्सला पार्वती ने श्रद्धा के साथ ब्रह्मचारीजी का स्वागत किया । रागद्वेष रहित होने से सर्वत्र समबुद्धि सम्पन्न उदार चित्तशाली महानुभावों का ब्रह्मतेज सम्पन्न पुरुष विशेष के प्रति अत्यन्त गौरव युक्त सत्कार प्रकार हुआ करता है ।

इत्थं पार्वतीसत्कृतस्य ब्रह्मचारिणो वृत्तमाह—

**विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।**
**उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥**

**स्वीकार कर पूजा उमा की निज थकावट दूर कर ।**
**बोला वचन क्रम से निरखता पार्वती को घूर कर ॥**

**अन्वयः**—सः विधिप्रयुक्तां सत्क्रियां परिगृह्य क्षणं परिश्रमं च विनीय नाम, अथ उमाम् ऋजुना एव चक्षुषा पश्यन् अनुज्झितक्रमः सन् वक्तुं प्रचक्रमे ।

**व्याख्या**—सः = ब्रह्मचारी, विधिप्रयुक्तां = विधिनाऽनुष्ठितां, सत्क्रियां = पूजां, परिगृह्य = स्वीकृत्य, क्षणं = कञ्चित्कालं, परिश्रमं च=खेदं च, विनीय= अपनीय, अथ = अनन्तरम् उमां = पार्वतीम् , ऋजुना एव = अजिह्मेन एव, विलासरहितेनैवेत्यर्थः । चक्षुषा=नेत्रेण, पश्यन्=अवलोकयन् , अनुज्झितक्रमः= अत्यक्तवचनक्रमः सन् , वक्तु = भाषितु, प्रचक्रमे = प्रारेभे ।

**व्युत्पत्तिः**—विधिप्रयुक्ता = विधिना प्रयुक्ता, विधिप्रयुक्ता, तां विधिप्रयुक्तां, विधिर्विधाने दैवे च" इत्यमरः । सत्क्रिया = सती चाऽसौ क्रिया सत्क्रिया, तां सत्क्रियां । क्षणं = "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । नाम = प्रसिद्धौ ।

ऋजुना="ऋजावजिह्मप्रगुणौ इत्यमरः । अनुज्झितक्रमः=न उज्झितः अनुज्झितः, स क्रमः येन सः अनुज्झितक्रमः । कुशलप्रश्नमारभ्य तपश्चरणकारणप्रश्नपर्यन्तो वक्ष्यमाणो वचनविन्यासक्रमोऽत्र क्रमशब्देन विवक्षितः ।

**भावार्थः**—स ब्रह्मचारी शास्त्रोक्तविधिपूर्वकं कृता ता पूजा स्वीकृत्य कञ्चित्कालमध्वपरिश्रमापनयनञ्चाऽभिनीय विलासशून्याभ्या नयनाभ्या पार्वतीमुखमवलोकयन् कुशलप्रश्नानन्तरं क्रमशस्तपश्चरणकारणप्रश्नपर्यन्तं वक्तुमारेभे इति भावः ।

**भाषा**—शास्त्रोक्त विधि से की गई पार्वती की पूजा का स्वीकार करते हुए ब्रह्मचारी जी ने कुछ विश्राम कर विलास चेष्टा हीन दृष्टि से पार्वती को देखा, और कुशलता सम्बन्धी प्रश्न करने के वाद तपस्या करने का कारण पूछा ।

तत्र तावन्मुनिजनेषूचितं कुशलं पृच्छति त्रिभिः श्लोकैः । तत्रादौ तपस्साधनसम्पत्तिं पृच्छति—

**अपि क्रियाऽर्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।**
**अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥३३॥**

कुश समिध सुलभ मनोज्ञ है क्या जल नहाने के लिये ।
तप में निरत रहती बचा तन धर्म-साधन के लिये ॥

**अन्वयः**—क्रियाऽर्थं समित्कुशं सुलभम् अपि ? जलानि ते स्नानविधिक्षमाणि अपि ? स्वशक्त्या तपसि प्रवर्तसे अपि ? खलु शरीरम् आद्यं धर्मसाधनम् अस्ति ।

**व्याख्या**—क्रियाऽर्थं=कर्माऽर्थं, होमाऽऽदिर्माऽनुष्ठानाऽर्थमित्यर्थः । समित्कुशं=काष्ठदर्भं, सुलभम् अपि=सुप्राप्यं कच्चित् । जलानि=अम्बूनि, ते=तव, स्नानविधिक्षमाणि अपि=मज्जनक्रियायोग्यानि कच्चित् । किञ्च स्वशक्त्या=आत्मसमर्थ्येन, स्वसामर्थ्याऽनुसारेणेत्यर्थः । तपसि=तपःक्रियाया, प्रवर्तसे अपि=प्रवृत्ता भवसि कच्चित् । शरीरमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः । युक्त चैतत्—खलु=यस्मात् हेतोः, शरीरं=देहम् , आद्य=प्रथमं, धर्मसाधनं=सुकृतोपकरणम् अस्ति ।

**व्युत्पत्तिः**—क्रियाऽर्थं=क्रियाभ्य इदं क्रियार्थं, समित्कुशं=समिधश्च कुशाश्च समित्कुशं, "जातिरप्राणिनाम्" इति समाहारद्वन्द्वः । "अस्त्री कुशं कुथो दर्भः पवित्रम्" इत्यमरः । सुलभं=सुखेन लब्धुं शक्यं सुलभं, खल्प्रत्ययः । अपि=कच्चिदर्थकः । स्नानविधिक्षमाणि=स्नानस्य विधिः स्नानविधिः, तस्मिन्क्षमाणि स्नानविधिक्षमाणि । स्वशक्त्या=स्वा चाऽसौ शक्तिः स्वशक्तिः, तया स्व-

शक्त्या । आद्यम्=आदौ भवम् आद्यम् । धर्मसाधनं-साध्यते अनेनेति साधनम् । धर्मस्य साधन धर्मसाधनम् । धर्मस्तु शरीरेण वाचा बुद्ध्या धनादिनाच बहुभिः साध्यते, तेषु च शरीरमेव मुख्यं साधनम् । सति शरीरे धर्माऽर्थकाममोक्षलक्षणाः चतुर्वर्गाः साध्यन्ते । अत एव "सर्वत आत्मनं गोपयेत्" इति श्रुतिः ।

**भावार्थः**—तव तपोवने होमाद्यङ्गभूतानि समित्कुशादीनि सुलभानि कच्चित् । तवाश्रमे वर्तमानानि जलानि स्नानविधियोग्यानि बहुनि निर्मलानि च कच्चित् । आत्मशक्त्यनुसारेण तपसि प्रवर्तसे कच्चित् । समिधादिधर्मसाधनेषु मध्ये प्रधानं धर्मसाधन शरीरमेवेति भावः ।

**भाषा**—तुम्हारे तपोवन में हवन द्रव्य सुलभ तो है ? तुम्हारे तपोवन का जल स्नान करने योग्य तो है ? अपने शरीर की शक्ति के अनुसार हो तपस्या करती तो हो ? क्यों कि धर्म के और और साधनों की अपेक्षा शरीर ही श्रेष्ठ साधन है ।

अथ पार्वतीसंवर्धितानामाश्रमलतानामपि कुशलं पृच्छति—

**अपि त्वदावर्जितवारिसम्भृतं प्रवालमासामनुबन्धि वीरुधाम् ।**
**चिरोज्झिताऽलक्तकपाटलेन ते, तुलां यदारोहति दन्तवाससा ॥३४॥**

तुझसे सुसिञ्चित मृदु लता के जो सुपल्लव हैं यहां ।
चिर काल से लाक्षा रहित तव अधर सम वे हैं जहां ॥

**अन्वयः**—त्वदावर्जितवारिसम्भृतम् आसा वीरुधा प्रवालम् अनुबन्धि अपि ? यत् चिरोज्झिताऽलक्तकपाटलेन ते दन्तवाससा तुलाम् आरोहति ।

**व्याख्या**—त्वदावर्जितवारिसम्भृतं=त्वरिसक्तजलोत्पन्नम्, आसा, = पुरोवर्तिनीना वीरुधा=लताना, प्रवालं=पल्लवम्, अनुबन्धि अपि= अनुस्यूतं किम् । यत् = प्रवाल, चिरोज्झिताऽलक्तकपाटलेन=चिरत्यक्तलाक्षारागश्वेतरक्तेन, ते=तव, दन्तवाससा=दशनवाससा, अधरेणेत्यर्थः । तुला=समताम्, आरोहति=गच्छतीत्यर्थः ।

**व्युत्पत्तिः**—त्वदावर्जितवारिसम्भृतं=त्वया आवर्जितं त्वदावर्जितं तच्च तत् वारि त्वदावर्जितवारि, तेन सम्भृतं त्वदावर्जितवारिसम्भृतम् । अनुबन्धि= अनुबध्नातीति अनुबन्धि, णिनिप्रत्यय. । चिरोज्झिताऽलक्तकपाटलेन=चिरं उज्झितः चिरोज्झितः, सः अलक्तकः येन तत् चिरोज्झिताऽलक्तकं, चिरोज्झिताऽलक्तकं च तत् पाटलं = स्वभावरक्तमित्यर्थः, चिरोज्झिताऽलक्तकपाटल तेन चिरो-

ज्झितालक्तकपाटलेन, "श्वेतरक्तस्तु पाटलः" इत्यमरः । दन्तवाससा=दन्तान् वास्ते=आच्छादयतीति, दन्तवासः, तेन दन्तवाससा, कर्मण्यण्, "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः ।

ननु "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इति सूत्रेण तुलाशब्दयोगे तृतीयाप्रतिषेधात् कथं दन्तवाससा तुलामिति चेदुच्यते । सदृशपदार्थवाची सादृश्यमात्रवाची चेति द्वौ तुलाशब्दौ । तयोः सदृशपदार्थवाचकतुलाशब्दयोगे एव तृतीयाप्रतिषेधः । अत एव कौमुद्यां कृष्णस्य तुला नास्तीत्युदाहृतम् । सादृश्यमात्रवाचकतुलाशब्दयोगे तु तृतीयापीष्यत एवेति न दोषः इति बोध्यम् ।

**भावार्थः**—एतासु लतासु त्वदाहृतजलसम्पादितं किसलयमविच्छेदेन सर्वदा जायते कच्चित्, यत् किसलयं चिरकालपरित्यक्तलाक्षारसेनापि रक्तवर्णेन तवाधरोष्ठेन शादृश्यं प्राप्नोतीति भावः ।

**भाषा**—इन आश्रम की लताओं में तुम्हारे जल प्रदान से नवीन पत्तों की उत्पत्ति तो निरन्तर हुआ करती है । जो नवीन पत्ते चिरकाल से लक्षारस के न लगाने पर भी स्वाभाविक रक्तवर्ण के तुम्हारे अधरोष्ठ की समानता को प्राप्त करते हैं ।

अथ तपस्विजनानामवश्यकर्तव्यमत्यन्तमसाध्यं सापराधेष्वपि कोपजयं पृच्छति—

**अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयाऽपहारिषु ।**
**य उत्पलाक्षि ! प्रचलैर्विलोचनैस्तवाऽक्षिसादृश्यमिव प्रयुञ्जते ॥३५॥**

**कर कुश हरण कारक मृगों में मन तुम्हारा तुष्ट है ।**
**चल नयन से दृग साम्य करते तू अमित सन्तुष्ट है ॥**

**अन्वयः**—करस्थदर्भप्रणयापहारिषु हरिणेषु ते मनः प्रसन्नम् अपि ? हे उत्पलाक्षि ! ये प्रचलैः विलोचनैः तव अक्षिसादृश्यं प्रयुञ्जते इव ।

**व्याख्या**—करस्थदर्भप्रणयाऽपहारिषु=हस्तस्थितकुशप्रेमाऽपहरणकर्तृषु, सापराधेष्वित्यर्थः । "करस्थदर्भप्रणयाऽपराधिषु" इति पाठे "हस्तस्थितकुशप्रार्थनासापराधेषु" इत्यर्थो बोध्यः । हरिणेषु=मृगेषु, ते तव, मनः = चित्तं, प्रसन्नम् अपि=न क्षुभितं किम् ? । हे उत्पलाऽक्षि ! = हे कुवलयाऽक्षि !, ये=हरिणाः, प्रचलैः=चञ्चलैः, विलोचनैः = नेत्रैः, तव=त्वदीयम्, अक्षिसादृश्यं=नेत्रतुल्यत्वं, प्रयुञ्जते एव=अभिनयन्ति इव । "उत्पलक्षेपचलैः" इति पाठान्तरे "कुवलय-

कम्पचञ्चलैः" इत्यर्थो बोध्यः । "भावानयने द्रव्यानयन" मिति न्यायेन क्षिप्य-माणोत्पलचलैरिति यावत् ।

**व्युत्पत्तिः**—करस्थदर्भप्रणयाऽपहारिषु = करे तिष्ठन्तीति करस्थाः, ते च ते दर्भाः करस्थदर्भाः, तान् प्रणयेन अपहरन्तीति करस्थदर्भप्रणयाऽपहारिणः, तेषु करस्थदर्भप्रणयापहारिषु । पाठान्तरे-"करस्थदर्भाणां प्रणयः करस्थदर्भप्रणयः तेन अपराधिनः, तेषु करस्थदर्भप्रणयाऽपराधिषु" एवं समासाः ज्ञेयाः । हरिणेषु = वैष यिकीय सप्तमी । अयमेव हि महामुनीनां स्वभावः, यत् सापराधेऽपि जने दया-वत्त्वमित्यर्थः । हे उत्पलाऽक्षि = उत्पले इव अक्षिणी यस्याः सा उत्पलाऽक्षी, तत्सम्बुद्धौ हे उत्पलाक्षि !, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्तः षच्, षित्वात् "षिद्गौरादिभ्यश्च" इति ङीष् । "स्यादुत्पलं कुवलयम्" इत्यमरः । प्रचलैः=चलन्तीति चलानि, पचाद्यच् । प्रकर्षेण चलानि प्रचलानि, तैः प्रचलैः । 'सुप्सुपा' इति समासः । विलोचनैः=विशिष्टानि लोचनानि विलोचनानि, तैः विलोचनैः, गतिसमासः । अक्षिसादृश्यम्=सदृशस्य भावः कर्म वा साद-श्यम्, अक्ष्णोः सादृश्यम् अक्षिसादृश्यं, तत् । "य उत्पलक्षेपचलैः" इति पाठा-न्तरे—उत्पलानां क्षेपा उत्पलक्षेपा, ते इव चलानि उत्पलक्षेपचलानि, तैः उत्प-लक्षेपचलै, एतादृशैः विलोचनैरित्यर्थो बोध्यः । अत्र श्लोके उत्प्रेक्षाऽलङ्कारः ।

**भावार्थः**—हस्तस्थितकुशादानशालिषु सापराधेष्वपि मृगेषु विषये तव मनः प्रसन्नं कच्चित् । हे कमलाक्षि ! ये मृगाः चञ्चलैः स्वनेत्रैः त्वन्नयनसादृश्यमभिन-यन्तीव ।

**भाषा**—तुम्हारे हाथ से जबरदस्ती छीनकर कुशों को खाने वाले इन हरिणों के विषय में तुम्हारा चित्त प्रसन्न तो रहता है ? जिनकी चञ्चल दृष्टि तुम्हारी ही दृष्टि का अनुकरण करती है ।

एवं सर्वत्र कुशलं पृष्ट्वा पुनरपि तदनुप्रवेशार्थं प्रियवचनानि प्रयुङ्क्ते—

**यदुच्यते पार्वति ! पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।**
**तथा हि ते शीलमुदारदर्शने ! तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥**

अघ के लिये सौन्दर्य होता है न यह वच सत्य है ।
शुचि दर्शने ! तव चरित ही सुन्दर प्रमाण सुतथ्य है ॥

**अन्वयः**—हे पार्वति ! "रूपं पापवृत्तये न" इति यत् उच्यते, तत् वचः अ-व्यभिचारि । तथाहि हे उदारदर्शने ! ते शील तपस्विनाम् अपि उपदेशतां गतम् ।

**व्याख्या**—हे पार्वति—हे गौरि, रूपं=सौम्याकृतिः, पापवृत्तये = कल्मषाऽऽचरणाय, न भवतीति शेषः । इति=एतादृक्, यत्=वचः, उच्यते=कथ्यते, लोकैरिति शेषः । तत् वचः=वचनम्, अव्यभिचारि=व्यभिचाररहितं सत्यमित्यर्थः । "यत्राऽऽकृतिस्तत्र गुणा वसन्ति" "न सुरूपाः पापसमाचारा भवन्ति" इत्यादयो लोकवादाः न विप्रलम्भमासादयन्तीत्यर्थः । तथा हि, हे उदारदर्शने=हे आयताक्षि ! हे सुरूपे इत्यर्थः । अथवा, हे उन्नतज्ञाने=विवेकवति ! इत्यर्थः। ते=तव, शीलं=सद्वृत्तं, तपस्विनाम् अपि=तापसानाम् अपि, उपदेशता=प्रवर्तकप्रमाणता, गतं=प्राप्तम् ।

**व्युत्पत्तिः**—पापवृत्तये=पापस्यः वृत्तिः पापवृत्तिः, तस्यै पापवृत्तये, 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्विषकल्मषम्" इत्यमरः । अव्यभिचारि=न व्यभिचरतीति अव्यभिचारि, ताच्छील्ये णिनिः । हे उदारदर्शने=दृश्यते आभ्यामिति दर्शने, "दृश प्रेक्षणे"इति धातोः "करणाऽधिकरणयोश्च"इति करणे ल्युट् । ततो दर्शनशब्दस्य नेत्राऽर्थकत्वम् । उदारे दर्शने यस्याः सा उदारदर्शना, तत्सम्बुद्धौ हे उदारदर्शने ! यद्वा भावल्युडन्तो दर्शनशब्दः । उदारं दर्शनं यस्याः सा उदार दर्शना, तत्सम्बुद्धौ हे उदारदर्शने । "शीलं=शील स्वभावे सद्वृत्ते" इत्यमरः । तपस्विना=तपः अस्ति येषां ते तपस्विनः, तेषा तपस्विनाः, विनिप्रत्ययः । उपदेशताम=उपदिश्यते अनेन इति उपदेशः, तस्य भावः उपदेशता, ताम् उपदेशता, गतं=गमधातोः क्तप्रत्ययेऽनुनासिकलोपः । "वेदो धर्ममूलं तद्विदा च स्मृतिशीले" इत्यादिस्मृतिषु सदाचारस्यापि वेदवदेव प्रामाण्यस्य प्रतिपादितत्वादित्यर्थः ।

**भावार्थः**—हे पार्वति ! सौन्दर्यं "पापाचाराय न भवतीति" सामुद्रिकसार, दर्शिभिर्यदुच्यते, तद्वचनं सत्यम् । तथाहि, हे रूपवति ! तव शीलं महर्षिणामप्येवं कर्तव्यमित्युपदेशरूपत्व प्राप्तम् । तस्मात् "रूपं शीलानुसारीति" वचन सत्यमेवेति भावः ।

**भाषा**—हे पार्वती ! ज्योतिषिओं ने जो कहा कि सुन्दर आकृति सदाचार से विच्छिन्न कभी नहीं होती है, यह बात बिलकुल ठीक है। हे रूपवति ! तुम्हारा सद्व्यवहार मुनिओं को भी शिक्षा देनेवाला है । अतः यह निश्चित है कि रूप शील के अनुसार ही होता है ।

अथ पार्वतीकृतस्य तपसः कुलशुद्धिकारकत्वमाह—

**विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।**
**यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष साऽन्वयः ॥३७॥**

जल गाङ्ग से सप्तर्षि बलि छम से न पूत हुआ तथा ।
तेरे अनाविल शुचि चरित से गिरि पवित्र हुआ यथा ॥

**अन्वयः**—एष महीधरः विकीर्णसप्तर्षिबलिप्रहासिभिः दिवः च्युतैः गाङ्गैः सलिलैः तथा न पावित', अनाविलैः त्वदीयैः चरितैः यथा साऽन्वयः पावितः ।

**व्याख्या**—एषः=अय, महीधरः=भूधरः हिमालय इत्यर्थः । विकीर्णसप्तर्षिबलिप्रहासिभिः=पर्यस्तसप्तर्षिपुष्पोपहारसहासैः, दिवः=अन्तरिक्षात्, च्युतैः=पतितैः, गाङ्गैः=गङ्गायाः, सलिलैः=जलैः, तथा=तेन प्रकारेण, न पावितः=न पवित्रीकृतः । अनाविलैः=अकलुषैः, शुचिभिरित्यर्थः । त्वदीयैः=त्वत्सम्बन्धिभिः, तवेत्यर्थः । चरितैः=चरित्रैः, यथा=येन प्रकारेण, पावितः=पवित्रीकृतः ।

**व्युत्पत्तिः**—महीधरः=धरतीति धरः, मह्या धरः महीधरः, विकीर्णसप्तर्षिबलिप्रहासिभिः=सप्त च ते ऋषयश्च सप्तर्षयः,"दिक्संख्ये संज्ञायाम्"इति समासः । "सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः" इत्यमरः । सप्तर्षीणां बलयः सप्तर्षिबलयः, "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः । विकीर्णाश्च ते सप्तर्षिबलयः विकीर्णसप्तर्षिबलयः, तैः प्रहसन्तीति विकीर्णसप्तर्षिबलिप्रहासीनि, तैः विकीर्णसप्तर्षिबलिप्रहासिभिः । गाङ्गैः=गङ्गाया इमानि गाङ्गानि, तैः गाङ्गैः, इदमर्थे अण् प्रत्ययः । अनाविलैः=न आविलानि अनाविलानि, तैः अनाविलैः, "कलुषोऽनच्छ आविलः"इत्यमरः । त्वदीयैः=तव इमानि त्वदीयानि तैः त्वदीयैः । साऽन्वयः=अन्वयेन सहितः सान्वयः पावितः=णिजन्तात् "पूञ्पवने" इति धातोः क्तप्रत्ययः ।

**भावार्थः**—अय हिमालयः सप्तर्षिकृतपूजनपुष्पोपलक्षितैः स्वर्गात् पतितैर्गङ्गाजलैस्तथा पवित्रो न भवति, यथा दुराचारलेशरहितैस्त्वदीयैः सदाचारैः पितृपितामहमातृमातामहादिवंशपरम्परासहितः पवित्रो भवति । तेन त्वच्चरितं गङ्गाजलादपि पवित्रमिति भावः ।

**भाषा**—यह हिमालय सप्तर्षिओं की पूजा के पुष्पों से, तथा स्वर्ग से पतित गङ्गाजल से भी उतना पवित्र नहीं होता है, जितना कि दुराचार लेश हीन तुम्हारे

शील से । तुम्हारे ही पवित्र चरित्र से हिमालय के मातृपितृ उभय कुल पवित्र हुआ है ।

अथ धर्मस्यैव त्रिवर्गसारत्वं श्रुतिस्मृतिप्रसिद्धमपि त्वत्सेवितत्वादद्य मादृशानामपि प्रतीतिगोचरत्वमापन्नमित्याह—

**अनेन धर्मः सविशेषमद्य मे, त्रिवर्गसारः प्रतिभाति भाविनि ।**
**त्वया मनोनिर्विषयाऽर्थकामया, यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥**

कामार्थ से वर धर्म है यह ठीक जँचता आज है ।
कामार्थ तज ले धर्म उर में तू बनी सिर ताज है ॥

**अन्वयः**—हे भाविनि ! अनेन धर्मः सविशेषम् अद्य मे त्रिवर्गसारः प्रतिभाति । यत् मनोनिर्विषयाऽर्थकामया त्वया एकः धर्म एव प्रतिगृह्य सेव्यते ।

**व्याख्या—**हे भाविनि=हे प्रशस्ताऽभिप्राये, अनेन = एतेन, कारणेनेत्यर्थः । धर्मः = पुण्यं, सविशेषं = साऽतिशयम् , अद्य = अस्मिन्दिने, मे = मम, त्रिवर्गसारः = वर्गत्रयश्रेष्ठः, प्रतिभाति = प्रतिस्फुरति । यत् = यस्मात्कारणात् , मनोनिर्विषयार्थकामया = चित्तनिराश्रयाऽर्थकामया, त्वया = भवत्या, एकः = एकाकी, धर्म एव = सुकृतम् एव, प्रतिगृह्य = स्वीकृत्य, सेव्यते = भज्यते ।

**व्युत्पत्तिः**—हे भाविनि = प्रशस्तः भावः यस्याः सा भाविनी, तत्सम्बुद्धौ हे भाविनि, इनिप्रत्ययः, तदन्तास्त्रीत्वविवक्षायाम् ङीप्प्रत्ययः । धर्मः = "स्याद्धर्ममस्त्रिया पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । सविशेषं = विशेषेण सहित यथा तथा सविशेषं, क्रि० वि०, त्रिवर्गसारः = त्रयाणा = धर्माऽर्थकामाना, वर्गः त्रिवर्गः, "त्रिवर्गो धर्मकामाऽर्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः । त्रिवर्गे सारः त्रिवर्गसारः । मनोनिर्विषयाऽर्थकामया=निर्गतः विषयः याभ्या तौ निर्विषयौ, मनसः निर्विषयौ मनोनिर्विषयौ । अर्थश्च कामश्च अर्थकामौ, मनोनिर्विषयौ अर्थकामौ यस्याः सा मनोविर्षिषयाऽर्थकामा, तया मनोनिर्विषयार्थकामया=अर्थकामपराङ्मुखचित्तयेत्यर्थः ।

**भावार्थः—**हे प्रशस्तहृदये ! यस्मात् अर्थकामपराङ्मुखचित्तया त्वया यौवनोचितान् कामान् पितृगृहसुलभान् अर्थानप्यनादृत्य केवलं धर्म एव साभिप्राय सेव्यते, तस्मात् धर्मार्थकामाना मध्ये धर्मस्यैव प्राधान्यमिति निश्चयो जात इति भावः ।

**भाषा—**हे उदारहृदये ! जब कि तुमने अपने पितृगृह में सुलभ अर्थव

काम को त्याग कर केवल धर्म में ही अपना चित्त स्थिर किया, तब यह बात तो सिद्ध हो गई कि धर्म अर्थ तथा काम इन तीनों मे धर्म ही श्रेष्ठ है ।

सम्प्रति मनोरथ जिज्ञासुः प्रस्तौति—

**प्रयुक्तसत्कारविशेषमात्मना न मां परं सम्प्रतिपत्तुमर्हसि ।**
**यतः सतां सन्नतगात्रि ! सङ्गतं मनीषिभिः साप्तपदीनमुच्यते ॥३९॥**

नत गात्रि यह समुचित न है मुझको विगाना जानना ।
है सुजन साप्तपदीन-मैत्री उचित है यह मानना ॥

**अन्वयः**—आत्मना प्रयुक्तसत्कारविशेष मा परं सम्प्रतिपत्तु न अर्हसि हे सन्नतगात्रि ! यतः मनीषिभि. सता सङ्गत साप्तपदीनम् उच्यते ।

**व्याख्या**—आत्मना=स्वेन, प्रकरणाऽनुरोधात् त्वयेत्यर्थः । प्रयुक्तसत्कार-विशेष=कृतपूजाऽतिशयं, मा परम्=अनात्मीयं, सम्प्रतिपत्तुम्=अवगन्तु, न अर्हसि=न योग्याऽसि । हे सन्नतगात्रि=हे सन्नताऽङ्गि ! यतः=यस्मात् कारणात्, मनीषिभिः=विद्वद्भिः, सता = सज्जनाना, सङ्गत=सख्यं, साप्तपदीनं = सप्तपदोच्चारणसाध्यम्, उच्यते=कथ्यते । तच्च सख्यभावयोः त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः ।

**व्युत्पत्तिः**—प्रयुक्तसत्कारविशेष = सत्कारस्य विशेषः सत्कारविशेषः, प्रयुक्तः सत्कारविशेषः यस्य सः प्रयुक्तसत्कारविशेष·, तं प्रयुक्तसत्कारविशेष । हे सन्नतगात्रि = सम्यक् नत सन्नतं, गतिसमासः । सन्नतं गात्रं यस्याः सा सन्नतगात्री, तत्सम्बुद्धौ हे सन्नतगात्रि ! "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप् । मनीषिभिः = मनस ईषिणः मनीषिणः, तैः मनीषिभिः । शकन्ध्वादित्वात्साधुत्वम् । "धीरो मनीषी ज्ञः प्रज्ञः सख्यावान्पण्डित कविः" इत्यमरः । साप्तपदीन=सप्तभिः पदैः अवाप्यते इति साप्तपदीनं, "साप्तपदीन सख्यम्" इति निपातनात्साधुत्वम् । "सख्य साप्तपदीनं स्यात्" इत्यमरः ।

**भावार्थः**—हे सुन्दरगात्रि ! यतः सज्जनाना परस्परं सख्यं सङ्गममात्रादेव भवतीति मनीषिभिरुच्यते, ततः त्वत्कृतसत्कारविशेषोऽहं त्वदीय एव सञ्जातः, तस्मान्न परत्वेन कल्पनीयः, अपि तु त्वत्परिवारजनत्वेनैवाहं त्वया परिकल्पनीय इति भावः।

**भाषा**—हे सुन्दरी ! मनीषियों का कहना है कि सज्जनो का प्रथम समागम से ही परस्पर के प्रति बन्धुत्व हो जाता है । अतः तुम्हारे सत्कार से ही मैं भी तुम्हारा बन्धु बन गया हूँ ।

कुशलप्रश्नादावसङ्गतस्यास्य सख्यप्रतिपादनस्य फलमाह—

**अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।**
**अयं जनः प्रष्टुमनास्तपोधने ! न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥**

द्विज भाव से कर धृष्टता कुछ पूछना हू चाहता ।
यदि गोपनीय न बात है तो हे उमे ! मुझको बता ॥

**अन्वयः**—हे तपोधने ! अतः अत्र बहु क्षमा भवतीं द्विजातिभावात् उपपन्नचापलः अयं जनः किञ्चित् प्रष्टुमनाः अस्ति, रहस्यं न चेत् प्रतिवक्तुम् अर्हसि ।

**व्याख्या**—हे तपोधने = हे नियमधने, अतः=अस्मात्, सख्याद्धेतोरित्यर्थः। अत्र=इह, बहुक्षमा=बहुलोक्तिसहा, यद्वा क्षमावतीं, भवतीं=त्वा, द्विजातिभावात्= ब्राह्मणत्वात्, उपपन्नचापलः = सुलभधार्ष्ट्यः, अयं जनः = एष मनुष्यः, अहमित्यर्थः । किञ्चित्=किमपि, प्रष्टुमनाः=प्रष्टुकामः, अस्तीति शेषः । रहस्यं=गोप्यं, न चेत्=न यदि, प्रतिवक्तुं =प्रत्युत्तरं दातुम्, अर्हसि = योग्याऽसि ।

**व्युत्पत्तिः**—हे तपोधने = तप एव धनं यस्याः सा तपोधना, तत्सम्बुद्धौ हे तपोधने । बहुक्षमा=बहून् क्षमते इति बहुक्षमा, ता बहुक्षमा, यद्वा बह्व्यः क्षमाः यस्याः सा बहुक्षमा ता बहुक्षमा । द्विजातिभावात्=द्वे जाती=जन्मनी, यस्य स द्विजातिः, तथा च भगवान्मनुराह—

"मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।" इति । २-१६९

द्विजातेर्भावः द्विजातिभावः, तस्मात् द्विजातिभावात् । उपपन्नचापलः = चपलस्य भावः चापलम्' उपपन्नं चापलं यस्य स उपपन्नचापलः । प्रष्टुमनाः = प्रष्टुं मनो यस्य स प्रष्टुमनाः, प्रष्टुमिति "प्रच्छ ज्ञीप्सायाम्" इति धातोस्तुमुन्, तस्य बहुव्रीहौ "तुं काममनसोरपि" इति मकारलोपः । रहस्यं = रहसि भवं रहस्यं, "तत्र भव" इति भवाऽर्थे यत् ।

**भावार्थः**—हे तपोधने ! सख्यात् सञ्जातविस्रम्भो ब्राह्मणत्वात् सुलभधार्ष्ट्योऽहं क्षमावतीं त्वा तपोविषये किमपि प्रष्टुकामोऽस्मि । मया प्रष्टुमिष्टं वक्ष्यमाण विषयमत्यन्तगोपनीयं न चेत् प्रतिबोधयितुं योग्यासीति भावः ।

**भाषा**—हे तपस्विनि ! उस बन्धुत्व के बलपर ही ब्राह्मण सुलभ धृष्टता के कारण तुम को तपस्या के सम्बन्ध में कुछ पूछना चाहता हूं । मेरा प्रश्न यदि अतिशय गोपनीय न हो तो प्रत्युत्तर दे सकती हो ।

पार्वत्या ऐहिकफलाकाङ्क्षानिराकरणपूर्वकं स्वजिज्ञासितस्यार्थस्य तर्कगोचरत्वमाह—

**कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।**

अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद ? ॥ ४१ ॥

नव वय मनोहर वपु प्रजापति वंश में जन्मी अहो ।
अब चाहिये क्या किस लिये यह तप तुम्हारा है कहो ॥

**अन्वयः**—प्रथमस्य वेधसः कुले प्रसूतिः, वपुः त्रिलोकसौन्दर्यम् इव उदितम्, ऐश्वर्यसुखम् अमृग्यम्, वयः नवम्, अतः पर किं तपः फलं स्यात् ? वद ।

**व्याख्या**—प्रथमस्य = पूर्वस्य, प्रधानस्य वा, वेधसः = प्रजापतेः, ब्रह्मण इत्यर्थः । कुले=वंशे, प्रसूतिः=उत्पत्तिः, "यज्ञाऽर्थं हि मया सृष्टो हिमवानचलेश्वरः" इति ब्रह्मपुराणवचनात् । वपुः = शरीरं, त्रिलोकसौन्दर्यम् इव = भुवनत्रयसुन्दरत्वम् इव, उदितं = समाहृतम् । ऐश्वर्यसुखं=सम्पत्सुखम् , अमृग्यम् = न अन्वेषणीयं, किन्तु सिद्धमेवेत्यर्थः । वयः = अवस्था, नवं = नूतन, तारुण्यमित्यर्थः । अतः परम् = अस्मादन्यत् , किं, तपःफलं = तपःपरिणामः, स्यात् = भवेत् , वद = ब्रूहि, अस्ति चेदिति शेषः ।

**व्युत्पत्तिः**—प्रथमस्य = "आदौ प्रधाने प्रथम" इत्यमरः । त्रिलोकसौन्दर्यम् = सुन्दरस्य भावः सौन्दर्यं, ष्यञ्प्रत्ययः । त्रयाणा लोकानां सौन्दर्यं त्रिलोकसौन्दर्यं, "तद्धिताऽर्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः । ऐश्वर्यसुखम् = ईश्वरस्य भावः कर्म वा ऐश्वर्यं, "विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा" इत्यमरः । ऐश्वर्यस्य सुखम् ऐश्वर्यसुखम् । अमृग्यं = न मृग्यम् अमृग्यं । नव = "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । तपःफलं=तपसः फल तपः फलम् ।

**भावार्थः**—आदिब्रह्मणो वंशे तवोद्भवः, पञ्चभूतरूपमुपादानमपहाय लोकत्रये विद्यमानं सौन्दर्यसारमात्रमुपादाय, तेनैव निर्मितमिव प्रतीयमानं तव शरीरमस्ति, दानोपभोगादिलक्षण धनसुखमपि तव स्वतः सिद्धम् , प्रारब्धमात्रं यौवनञ्चास्ति, पूर्वोक्तादस्मदुपन्यस्तादन्यदस्य तपसः प्रयोजनं किं स्यादिति मे विचारमार्गं नारोहति, अस्ति चेत् वदेति भावः ।

**भाषा**—आदि ब्रह्मा के वंश में तुम्हारा जन्म है । तुम्हारा शरीर इतना सुन्दर है कि मालूम होता है यह पञ्च मूलों से निर्मित न कर तीनों लोक की सुन्दरता की समष्टि से ही निर्मित किया गया है । दान एव उपभोगादि लक्षण युक्त धन सुख तो तुम्हारा स्वतः सिद्ध है । यौवन तो केवल तुम्हारा आरम्भ मात्र हुआ है । यह सब होते हुए भी पुनः तपस्या करने का क्या प्रयोजन है, सो कहो ।

नन्वनिष्टाऽवाप्त्या बाल्येऽपि तपश्चरणं सम्भवत्येव, यथा ध्रुवादीनामित्याशङ्क्य परिहरति—

**भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।**
**विचारमार्गप्रहितेन चेतसा, न दृश्यते तच्च कृशोदरि ! त्वयि ॥४२॥**

पति कृत महान अनिष्ट से भी मानिनी तप से नता ।
वह भी अपार विचार करने से न तुझ में दीखता ॥

**अन्वयः**—दुःसहात् अनिष्टात् अपि मनस्विनीनाम् ईदृशी प्रतिपत्तिः भवति नाम । हे कृशोदरि ! विचारमार्गप्रहितेन चेतसा तत् च त्वयि न दृश्यते ।

**व्याख्या**—दुःसहात् = सोढुमशक्यात्, अनिष्टात् अपि = अप्रियात् अपि, भर्त्रादिकृतादित्यर्थः । मनस्विनीनां = मानिनीनाम्, ईदृशी = एतादृशी, प्रतिपत्तिः = प्रवृत्तिः भवति नाम । हे कृशोदरि=हे तनूदरि ! विचारमार्गप्रहितेन = विचारवर्त्मप्रेषितेन, चेतसा=चित्तेन, तत् च=पूर्वोक्तमनिष्टं च, त्वयि=भवत्या, न दृश्यते = न प्रतीयते ।

**व्युत्पत्तिः**—दुःसहात्=दुःखेन सोढुं शक्यं दुःसहं, तस्मात् दुःसहात् । खल्प्रत्ययः । अनिष्टात्=न इष्टम् अनिष्टं, तस्मात् अनिष्टात् । मनस्विनीनां=प्रशस्तं मनः अस्ति आसां ता मनस्विन्यः, तासां मनस्विनीनां । मनःशब्दात् प्राशस्त्येऽर्थे "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः तदन्तात्स्त्रीत्वविवक्षायां ङीप्प्रत्ययः । प्रतिपत्तिः = प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये" इति केशवः । नामपदमिदं सम्भावनायां वर्तते । हे कृशोदरि=कृशम् उदरं यस्याः सा कृशोदरी, तत्सम्बुद्धौ हे कृशोदरि, "अम्बाऽर्थनद्योर्ह्रस्वः" इति ह्रस्वत्वम् । विचारमार्गप्रहितेन = विचारस्य मार्गः विचारमार्गः, तस्मिन् प्रहितं विचारमार्गप्रहितं, तेन विचारमार्गप्रहितेन । चेतसा="चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः ।

**भावार्थः**—हे कृशोदरि ! परैः सम्पादितादनिष्टादपि मानिनीनामत्यन्तदुश्चरतपश्चरणसम्भावना भवति, किन्तु तदनिष्टमपि त्वयि स्यादिति मे मनोविचारगोचरं नाधिगच्छति, अस्ति चेत् वदेति भावः ।

**भाषा**—हे कृशोदरि ! दूसरों के अनिष्ट साधन करने पर मानिनी स्त्रियां भी कभी कभी दुस्तर तपस्या करती हैं । परन्तु मेरे विचार से तुम पर वैसे अनिष्ट होने की सम्भावना भी तो नहीं प्रतीत होती है ।

अनिष्टप्राप्त्यनुपपत्तिमेव हेतुत्रयेण प्रतिपादयति—

**अलभ्यशोकाऽभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे ?**
**पराऽभिमर्शो न तवाऽस्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥**

दुख शोक योग्य न तन पिता-घर में अवज्ञा भी नहीं !
अन्याक्रमण भी है न मणि हित हाथ अहि-शिर पर कहीं ॥

**अन्वयः**—हे सुभ्रु ! इयम् आकृतिः अलभ्यशोकाऽभिभवा। पितुः गृहे विमानना कुतः ? पराऽभिमर्शः तव न अस्ति । पन्नगरत्नसूचये करं कः प्रसारयेत् ।

**व्याख्या**—हे सुभ्रु=हे शोभनभ्रूयुक्ते, पार्वतीत्यर्थः । इयम् = तवेत्यर्थः । आकृतिः=आकारः, मूर्तिरित्यर्थः । अलभ्यशोकाऽभिभवा=अप्राप्यमन्युतिरस्कारा, दृश्यते इति शेषः । पितुः=जनकस्य, गृहे=गेहे, विमानना = अपमानः, कुतः = कस्मात्, भवतीति शेषः । न सम्भाव्यते एवेत्यर्थः । पराऽभिमर्शः=परधर्षणं, तव = ते, न अस्ति=न वर्तते, पन्नगरत्नसूचये = सर्पमणिप्राप्त्यै, करं=हस्तं, कः, प्रसारयेत्=प्रसारितं कुर्यात्, न कोऽपीत्यर्थः ।

**व्युत्पत्तिः**—हे सुभ्रु = शोभना भ्रूर्यस्याः सा सुभ्रूः, तत्सम्बुद्धौ हे सुभ्रु, अत्र भ्रूशब्दस्य उवङ्स्थानीयत्वात् "नेयङुवङ्स्थानावस्त्री" इति नदीसंज्ञाप्रतिषेधात् "अम्बाऽर्थनद्योर्ह्रस्वः" इति ह्रस्वत्वं न प्राप्नोति। तेन ह्रस्वः प्रामादिक इति केचित् ।

अन्ये तु "अप्राणिजातेश्चारज्वादीनाम्" इत्यत्र "अलावूः" "कर्कन्धूः" इत्युकाराऽन्तादपि ऊङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मादेव ज्ञापकात् क्वचित् ऊकारान्तस्याऽपि ऊङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अत एवाऽऽह वामनः— "ऊकारादप्यूङ्प्रकृतेः" इति ।

कतिपये सामान्ये नपुंसकत्वमाश्रित्य कथञ्चित् समादधुः ।

अलभ्यशोकाऽभिभवा=लब्धु योग्य लभ्यः, "डुलभष् प्राप्तौ" इति धातोः "पोरदुपधात्" इति यत् । न लभ्यः अलभ्यः। शोकेन=भर्त्राऽवमानजेन दुःखेन, अभिभवः, शोकाऽभिभवः । अलभ्यः शोकाऽभिभवः यस्या सा अलभ्यशोकाभिभवा । पराऽभिमर्शः=परस्य अभिमर्शः पराभिमर्शः, पन्नगरत्नसूचये=पन्नं=पतितं, गच्छतीति पन्नगः, "सर्वत्रपन्नयोरुपसंख्यानम्" इति डप्रत्ययः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् । "उरगः पन्नगो भोगी जिह्मगः पवनाऽशनः" इत्यमरः । पन्नगस्य रत्नं पन्नगरत्नं, तस्य सूचिः पन्नगरत्नसूचिः, तस्यै पन्नगरत्न-

सूचये "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ।

अत्र पार्वत्या महाभाग्ययोग्यवत्त्वं, बन्धुजनमध्यवर्तित्वं, पितृगौरवात् परानभिभवनीयत्वं चेति त्रयो हेतवोऽनिष्टप्राप्त्यभावे प्रतिपादिताः । तस्मान्न तवेदं तपश्चरणमनिष्टप्राप्तिहेतुकमिति सिध्यति ।

**भावार्थः**—हे सुन्दरी ! इयं तवाकृतिः सम्भावनीयदुःखपरिभवा न प्रतिभाति । भर्तृगृहवर्तिनीना मानिनीना सपत्न्यादिसकाशाद्दुःखं सम्भाव्येत, किन्तु सकलबन्धुजनपरिपूर्णपितृगृहवर्तिन्याः स्निग्धायास्तव दुःखं परस्मात् कथं सम्भाव्यते । किञ्च तथाविधप्रतापयुक्तस्य पर्वतचक्रवर्तिनो हिमालयस्य कन्यायास्ते परकृतबलात्कारस्पर्शोऽपि नैव सम्भाव्यते । जिजीविषुः कः पुमान् सर्पफणामणिसमाहरणाय हस्तमपि प्रसारयेत् , न कोऽपीति भावः ।

**भाषा**—हे सुन्दरि ! तुम को देखने से ऐसा मालूम तो नहीं होता है कि उस प्रकार की कोई आपत्ति तुम पर है । पति के गृह में मानिनी स्त्री का सपत्नीओं के कुछ दुःख पाना सम्भव है। परन्तु तुम तो अपने पिता की प्यारी कुमारी पुत्री हो । फिर भी तुम पर किसी ने बलात्कार किया, ऐसी भी आशङ्का नहीं कि जा सकती, क्यों कि तुम्हारा पिता पर्वतराज चक्रवर्ती प्रबल प्रतापी हिमालय हैं । किसे इतनी हिम्मत है कि विषैले सर्प के फणरत्न को हाथ से पकड़े ।

यस्मादिदं तपश्चरणमिष्टावाप्त्यर्थं न भवति, नाप्यनिष्टपरिहारार्थं, तस्मात् निरभिसन्धिकतपश्चरणमेवात्रावशिष्यते । तत्तु पूर्वमेव किञ्चिदाशङ्क्य परिहृतमपीदानीमुपपत्तिकथनद्वारा स्वावसरे निराकरोति—

**किमित्यपास्याऽऽभरणानि यौवने, धृतं त्वया वार्धकशोभि वल्कलम् ।**
**वद प्रदोषे स्फुटचन्द्रतारका, विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥**

**यौवन विभूषण त्याग से त्वक ग्रहण से हो इस तरह ।**
**रजनी अरुण को चाहती आरम्भ निशि में जिस तरह ॥**

**अन्वयः**—हे गौरी ! किमिति यौवने त्वया आभरणानि अपास्य वार्धकशोभि वल्कलं धृतं, प्रदोषे स्फुटचन्द्रतारका विभावरी अरुणाय कल्पते यदि वद ? ।

**व्याख्या**—हे गौरि = हे पार्वति, किमिति = केन हेतुना, यौवने=तारुण्ये, त्वया = भवत्या, आभरणानि = भूषणानि, अपास्य = त्यक्त्वा, वार्धकशोभि = वृद्धत्वशोभि, वल्कलं = वल्कं, धृतं=धारितं, प्रदोषे = रात्रिमुखे, स्फुटचन्द्रतारका= व्यक्तेन्दुनक्षत्रा, विभावरी=रात्रिः, अरुणाय=सूर्याय, कल्पते यदि = कल्पिता

भवति किम् । अरुण गन्तु कल्पते किमित्यर्थः । वद=ब्रूहि ।

व्युत्पत्तिः—वार्धकशोभि=वृद्धस्य भावो वार्धक, मनोज्ञादित्वाद् वुञ्प्रत्ययः, तस्य "युवोरनाकौ" इत्यकादेश । वार्धके शोभते इति वार्धकशोभि । प्रदोषे = "प्रदोषो रजनीमुखम्" इत्यमरः । स्फुटचन्द्रतारका = चन्द्रश्च तारकाश्च चन्द्रतारकाः, स्फुटाः चन्द्रतारकाः यस्या सा स्फुटचन्द्रतारका, अरुणाय = "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ।

**भावार्थः**—तारुण्योचितानि मुक्ताकलापादीनि भूषणानि परित्यज्य स्थविरभावोचितमिद तरुवल्कलं त्वया किमिति परिगृहीतमस्ति । यदि दीप्यमानशशाङ्क नक्षत्रा रात्रिः सायंसन्ध्यायामेवारुण गन्तुमर्हति, तर्हि वदेति भावः ।

**भाषा**—तुम तरूणी हो, तरूणोचित मुक्ताकलापादि आभूषण ही तुम्हें पहिनना चाहिये । किन्तु उन सब को छोड़ कर बुढ़ापे में पहिनने योग्य तरुवल्कल का तुमने क्यों स्वीकार किया, प्रारम्भिक रात्री की शोभा चन्द्र और नक्षत्र से ही बढती है, प्रभात समय के बालारुण से नहीं ।

अथान्यत् किमपि तप प्रयोजन निराकर्तुमाह—

**दिवं यदि प्रार्थयसे वृथा श्रमः, पितुः प्रदेशास्तव देवभूमयः ।**
**अथोपयन्तारमलं समाधिना, न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥**

वर चाहती तो श्रम वृथा सुर भूमि जनक प्रदेश है ।
जन ढूंढते मणि को न जन को ढूंढ़ता रत्नेश है ॥

**अन्वयः**—दिवं प्रार्थयसे यदि, तर्हि श्रमः वृथा, तव पितुः प्रदेशाः देवभूमयः । अथ उपयन्तारं प्रार्थयसे, (तर्हि) समाधिना अलं, रत्नं न अन्विष्यति, हि तत् मृग्यते ।

**व्याख्या**—दिवं = स्वर्गं, प्रार्थयसे यदि = कामयसे चेत्, तर्हि श्रमः = परिश्रमः, तपश्चरणप्रयास इत्यर्थः । वृथा = निष्फलः, तव = त्वदीयस्य, पितुः= जनकस्य, हिमवत इत्यर्थः । प्रदेशाः = स्थानानि, देवभूमयः = स्वर्गपदाऽर्थाः । अथ = पक्षान्तरे, उपयन्तारं = वर, प्रार्थयसे=अपेक्षसे, तर्हि, समाधिना=तपसा, अलं । न कर्तव्यमित्यर्थः, हि=यस्माद्धेतोः, रत्न=मणिः, न अन्विष्यति = न मृगयते, ग्रहीतारमिति शेषः । अपि तु, तत् = रत्नं, मृग्यते = अन्विष्यते, ग्रहीतृभिरिति शेषः ।

**व्युत्पत्तिः**—दिवं = "सुरलोको द्योदिवौ द्वे स्त्रिया क्लीबे त्रिविष्टपम्"

इत्यमरः । देवभूमयः—देवाना भूमयः देवभूमयः उपयन्तारम् = उपयच्छतीति उपयन्ता, तम् उपयन्तारं, तृच्प्रत्ययः । समाधिना अल = "निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया ।

अत्र सर्वप्रार्थनीयरत्नकर्तृकान्वेषणप्रतिषेधेन तत्सदृशः पार्वतीकर्तृकवरप्रार्थनाप्रतिषेधः प्रतीयत इति सादृश्यादप्रस्तुतप्रशंसेयम् । रत्नस्य स्वजातिश्रेष्ठत्वे पुनरर्थान्तरन्यासः ।

**भावार्थः**—अनेन तपसा त्व यदि स्वर्गमपेक्षसे, तर्हि तवायं प्रयासो व्यर्थ एव । तव जनकस्य हिमालयस्य प्रदेशाः स्वर्गाः सन्ति । एवञ्च स्वर्गस्थिताना स्वर्गप्राप्त्यपेक्षा न सम्भवति । किञ्च पतिप्राप्त्यर्थे तपश्चरण क्रियते चेत् , तपो न कर्तव्यम् , तथाहि–सर्वप्रार्थनीयं हीरकादिरत्नमात्मधारणयोग्यं पुरुषं नान्वेषयति, किन्तु सर्वैरात्मलाभार्थं तद्रत्नमेव सर्वदाऽन्विष्यते इति भावः ।

**भाषा**—यदि तुम स्वर्ग प्राप्ति के हेतु तपस्या करती हो, तो तुम्हारा यह प्रयत्न व्यर्थ है । क्यों कि स्वर्ग प्रदेश तुम्हारे पिता हिमालय का ही अन्तर्भूत है । यदि योग्य पति के प्राप्ति के हेतु तपस्या करती हो, तो भी तपस्या व्यर्थ ही है । क्यों कि रत्नादि पदार्थ ग्राहकों की खोज में नही रहते । बल्की सब लोग ही रत्नादि पदार्थ को खोजते हैं ।

इत्थं निजहृदयवर्तिनः परमार्थतो वस्तुनः प्रसङ्गेन सञ्जातदीर्घनिश्वासादिविक्रिया पार्वतीमुपलभ्य तमेव परमार्थं किमपि प्रकाशयति—

**निवेदितं निश्वसितेन सोष्मणा, मनस्तु मे संशयमेव गाहते ।**
**न दृश्यते प्रार्थयितव्य एव ते, भविष्यति प्रार्थितदुर्लभः कथम् ॥४६॥**

सन्देह है तो भी गरम विश्वास सूचित कर रहा ।
तब है न प्रार्थयितव्य कैसे कठिन प्रार्थित है महा ॥

**अन्वयः**—सोष्मणा निश्वसितेन निवेदितं, मनस्तु मे संशयम् एव गाहते, ते प्रार्थयितव्यः एव न दृश्यते, प्रार्थितदुर्लभः कथं भविष्यति ।

**व्याख्या**—सोष्मणा = उष्णेन, निश्वसितेन = निश्वाससवायुना, निवेदित= सूचितं । तथाऽपि, मनस्तु=चित्तं तु, मे = मम, संशयम् एव = सन्देहम् एव, गाहते = प्राप्नोति । कुतः—ते = तव, प्रार्थयितव्यः एव=प्रार्थयितुम् अर्हः एव, न दृश्यते = न अवलोक्यते । प्रार्थितदुर्लभः = याचितदुष्प्राप्यः, कथं=केन प्रकारेण भविष्यति = भविता, नाऽस्त्येवेत्यर्थः ।

**व्युत्पत्तिः**—सोष्मणा=ऊष्मणा सहितं सोष्म, तेन सोष्मणा=इष्टानवाप्ति-सन्तापोष्णेनेत्यर्थः । संशयम्="विचिकित्सा तु सशयः ।सन्देहद्वापरौ च" इत्यमरः । ते="कृत्यानां कर्तरि वा" इति षष्ठी । प्रार्थयितव्यः=प्रार्थयितुं योग्यः प्रार्थयितव्यः । प्रार्थितदुर्लभः=दु.खेन लब्धुं शक्यः दुर्लभः, खल्प्रत्ययः । प्रार्थितश्चाऽसौ दुर्लभः प्रार्थितदुर्लभः ।

**भावार्थः**—यद्यपि तव सन्तापोष्णदीर्घनिश्वासानुमानेन वरप्रार्थनमेव तपःकारणमिति मया सम्यगवगतम् । तथापि तत्रोपपत्तिलेशस्याप्यभावाद् मनो मे निश्चय नोपलभते । यतः सर्वप्रार्थनीयया त्वया प्रार्थयितव्यः कश्चित्पुरुषो लोकत्रयेऽपि नोपलभ्यते । अपि च यदि कदाचित् कश्चित् त्वया प्रार्थितो भवेत् , तर्हि तस्य भाग्यातिशय एव तत्र हेतुरिति कुतस्तस्य प्रार्थितदुर्लभत्वम् । ततो न तदर्थं तव तपश्च रणोपपत्तिरिति भावः ।

**भाषा**—तुमने जो लम्बी सास ली, इससे अनुमान करता हूँ कि योग्य वर प्राप्ति की अभिलाषा ही इस तपस्या का कारण है । परन्तु वह भी मुझे युक्ति युक्त प्रतीत नहीं होता है । क्यों कि तुम ही सब की प्रार्थना की वस्तु हो, फिर तुम्हारा प्रार्थित कोई पुरुष दुर्लभ होना यह तीनों लोक में असम्भव है ।

अथ प्रतिप्रार्थनमेव तपश्चरणफलमवधार्य तया प्रार्थ्यमानं वरमुपालभते—

**अहो ! स्थिरः कोऽपि तवेप्सितो युवा, चिराय कर्णोत्पलशून्यतां गते ।**
**उपेक्षते यः श्लथलम्बिनीर्जटाः, कपोलदेशे कलमाऽग्रपिङ्गलाः ॥४७॥**

**अभिलषित वह नर कठिन है तव चाह जो करता नहीं ।**
**पीली जटाओं की अहो परवाह है रखता नहीं ॥**

**अन्वयः**—अहो ! तव ईप्सितः युवा कः अपि स्थिरः । यः चिराय कर्णोत्पलशून्यता गते कपोलदेशे श्लथलम्बिनी कमलाऽग्रपिङ्गला. जटाः उपेक्षते ।

**व्याख्या**—अहो=आश्चर्यं, तव=भवत्याः, ईप्सित.=प्राप्तुम् इष्टः, युवा=तरुणः, कोऽपि=कश्चिदपि, स्थिरः=कठिनः, वर्तते इति शेषः । यः=युवा, चिराय=चिरात्प्रभृति, कर्णोत्पलशून्यता गते=श्रुतिकुवलयराहित्य प्राप्ते, कपोलदेशे=गण्डस्थले, श्लथलम्बिनीः=शिथिलाऽवस्रंसिनीः, कलमाऽग्रपिङ्गलाः=शालिविशेषाऽग्रकपिलाः, जटाः=सटाः, उपेक्षते=उपेक्षा करोति ।

**व्युत्पत्तिः**—युवा="वयस्थस्तरुणो युवा" इत्यमरः । चिराय="चिराय चिररात्राय चिरस्याद्याश्चिराऽर्थकाः" इत्यमरः । कर्णोत्पलशून्यता=कर्णयोः उत्पले

कर्णोत्पले, ताभ्या शून्यः कर्णोत्पलशून्यः, तस्य भावः कर्णोत्पलशून्यता, ता कर्णोत्पलशून्यता । कपोलदेशे=कपोलस्य देशः कपोलदेशः, तस्मिन् कपोलदेशे । श्लथलम्बिनीः=लम्बन्ते इति लम्बिन्यः, श्लथाश्च ता लम्बिन्यः श्लथलम्बिन्यः, ताः श्लथलम्बिनीः । कलमाऽग्रपिङ्गलाः=कलमानाम् अग्राणि कलमाऽग्राणि, तानि इव पिङ्गलाः कलमाऽग्रपिङ्गलाः, ताः ।

**भावार्थः**—आश्चर्यं, त्वयाभिलष्यमाणो युवत्वाभिमानवञ्चितः कश्चन पुरुषोऽतीव कठोरः प्रतिभाति। यश्चिरात्प्रभृति कर्णाभरणरहिते तव गण्डप्रदेशे बन्धनशैथिल्येन लम्बमानाः शालिशूकरक्तवर्णाः प्रत्यक्षेणैव लक्ष्यमाणास्तव जटाः समुपेक्षते, सरभसमागत्य स्वकराभ्यामेव न बध्नातीति भावः ।

**भाषा**—आश्चर्य की बात है कि तुम जिस युवक को चाहती हो, वह दाम्भिक युवक बहुत ही निर्दय मालूम होता है । जो कि बहुत दिनों से कर्णभूषणरहित तुम्हारे कपोल पर लम्बमान इन जटाओं की उपेक्षा करता है ।

पाषाणादिवदचेतन एवायं त्वदीप्सितो वर इति यदुक्तं तदेवोपपादयति—

**मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।**
**शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥४८॥**

रवि तेज से व्रत से बनी दिन-चन्द्र रेखा सी अहो ।
लखकर तुझे किसका न चित्त होगा महा व्याकुल अहो ॥

**अन्वयः**—मुनिव्रतैः अतिमात्रकर्शिता दिवाकराप्लुष्टविभूषणास्पदा दिवा शशाऽङ्कलेखाम् इव त्वा पश्यतः सचेतसः कस्य मनः न दूयते ।

**व्याख्या**—मुनिव्रतैः=ऋषिनियमैः, चान्द्रायणादिभिरित्यर्थः । अतिमात्रकर्शिताम्=अत्यन्तकृशीकृता, दिवाकराप्लुष्टविभूषणास्पदा=सूर्यदग्धाऽलङ्कारस्थाना, दिवा=दिवसे, शशाऽङ्कलेखाम् इव=चन्द्ररेखाम् इव, त्वा=भवतीं, पश्यतः=अवलोकयतः, सचेतसः=सहृदयस्य, कस्य=पुंसः, मनः=चित्तं, न दूयते=न परितप्यते । अपि तु सर्वस्यैव चित्तं परितप्यते इत्यर्थः ।

**व्युत्पत्तिः**—मुनिव्रतैः=मुनीना व्रतानि मुनिव्रतानि, तैः मुनिव्रतैः, अतिमात्रकर्शिताम्=अतिमात्रं यथा तया, कर्शिता अतिमात्रकर्शिता, ताम् अतिमात्रकर्शिता । दिवःकराप्लुष्टविभूषणास्पदां=दिवा करोति इति दिवाकरः, टप्रत्ययः । "भास्कराऽहस्करब्रध्नप्रभाकरदिवाकराः" इत्यमरः । विभूषणानाम् आस्पदानि विभूषणास्पदानि, दिवाकरेण=सूर्येण, आप्लुष्टानि=श्यामिकृतानि, विभूषणास्प-

दानि यस्याः सा दिवाकराप्लुष्टविभूषणास्पदा, ता दिवाकराऽऽप्लुष्टविभूषणास्पदा शशाऽङ्कलेखाम्=शशः अङ्कः यस्य स शशाऽङ्कः, तस्य लेखा शशाऽङ्कलेखा, ता शशाऽङ्कलेखां । पश्यतः=पश्यतीति पश्यन्, तस्य पश्यतः । शतृप्रत्ययः सचेतसः=चेतसा सहितः सचेताः, तस्य सचेतसः । दूयते="दूङ् परितापे" इति धातोर्लट् ।

**भावार्थः**—तपोभिरत्यन्तकृशीकृता सूर्यदग्धाभरणस्थानामहनि परिधूसरा चन्द्रलेखामिव भवतीमवलोकयतः कस्य सचेतनस्य हृदयं न परितप्यते, अपि तु सर्वस्यापि परितप्यत एवेति भावः ।

**भाषा**—ऐसा कौन सचेतन जीव इस पृथ्वी पर होगा, जो दिन में तेजहीन चन्द्रमा की भाति, तपस्या के कष्ट से दुबले तुम्हारे इस शरीर को देख कर परिताप नहीं करेगा ?

अथ तमेव वर प्रकारान्तरेणोपालभते—

**अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुराऽवलोकिनः ।**
**करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४६ ॥**

प्रिय को तुम्हारे कान्ति मद से अमित वञ्चित जानता ।
होता मुखातिव तव न उसको दीन मैं हूं मानता ॥

**अन्वयः**—तव प्रिय सौभाग्यमदेन वञ्चितम् अवैमि । यः चतुराऽवलोकिनः अरालपक्ष्मणः अस्य चक्षुषः आत्मीय वक्त्रं चिर लक्ष्यं न करोति ।

**व्याख्या**—तव=भवत्याः, प्रिय=वल्लभ, सौभाग्यमदेन=सौन्दर्यगर्वेण, वञ्चितं=विप्रलब्धम्, अवैमि=वेद्मि, यः=प्रियः, चतुराऽवलोकिनः=मधुरदर्शिनः, अरालपक्ष्मणः=कुटिलरोम्णः, अस्य=त्वदीयस्य, चक्षुषः=नेत्रस्य, आत्मीय=स्वीयं, वक्त्र=मुख, चिरं=बहुकालपर्यन्तं, लक्ष्य=विषयं, न करोति=न विदधाति, दृष्टिपथ न करोतीत्यर्थः ।

**व्युत्पत्तिः**—प्रिय=प्रीणातीति प्रिय त प्रिय । सौभाग्यमदेन=सुभगस्य भावः कर्म वा सौभाग्यं, ष्यञ्प्रत्ययः । सौभाग्यस्य मदः सौभाग्यमदः, तेन सौभाग्यमदेन । चतुराऽवलोकिनः=चतुर यथा तथा, अवलोकते इति चतुराऽवलोकि, तस्य चतुरावलोकिनः । अरालपक्ष्मणः=अरालानि पक्ष्माणि यस्य तत् अरालपक्ष्म, तस्य अरालपक्ष्मणः । "अरालं वृजिनं जिह्मम्" इत्यमरः । आत्मीयम्=आत्मन इदम् आत्मीयं, तत्, लक्ष्य=लक्षितुं योग्य लक्ष्यं, तत् ।

**भावार्थः**—त्वया प्रियत्वेन सङ्कल्पितं पुरुषं स्वकीयसौन्दर्यगर्वेण विप्रलब्धं

कल्पयामि । यः पुरुषः सुन्दरदर्शनस्य कुटिलरोम्णोऽस्य त्वदीयस्य नेत्रस्य स्वं मुखं चिरं दृष्टिपथं न करोति । यद्यसौ सौन्दर्यमदगर्वितो नाभविष्यत्, तर्हि लोकोत्तर-गुणमेतत् भवदीयं नेत्रमनवरतं तन्मुखावलोकनपरमेवाभविष्यदिति भावः ।

**भाषा**—जिस पुरुष को तुम अपना पति समझती हो, मालूम होता है कि वह अपने सौन्दर्य के व्यर्थ घमण्ड में है। नहीं तो इस कुटिल भौं युक्त तुम्हारे सुन्दर नयन के सामने वह सदा के लिये अपने को विसर्जित कर देता।

अथ तमेव वरं पृच्छति—

**कियच्चिरं श्राम्यसि गौरि ! विद्यते ममाऽपि पूर्वाश्रमसञ्चितं तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितम् ॥५०॥**

कब तक करोगी तप उमे ! मम अर्ध तप ले लो अहो ।
अभिलषित वर लो प्राप्त कर पर कौन वह वर है कहो ॥

**अन्वयः**—हे गौरि ! कियत् चिरं श्राम्यसि ? मम अपि पूर्वाश्रमसञ्चितं तपः विद्यते । तदर्धभागेन काङ्क्षितं वरं लभस्व । तं साधु वेदितुम् इच्छामि ।

**व्याख्या**—हे गौरि = हे पार्वति ।, कियत् = किं प्रमाणकं, किमवधिकमि-त्यर्थः । चिरं = बहुकालपर्यन्तं, श्राम्यसि = श्रमं करोषि, तपस्यसीत्यर्थः । मम अपि = मामकम् अपि, पूर्वाश्रमसञ्चितं = प्रथमाश्रमसम्पादितं, तपः, विद्यते = वर्तते, तदर्धभागेन=तदर्धांशेन, काङ्क्षितम् = इष्टं, वरम्=उपयन्तारं, लभस्व = प्राप्नुहि । तं=वरं, साधु=सम्यक् क्रि० वि०, वेदितु=ज्ञातुम् इच्छामि=वाञ्छामि ।

**व्युत्पत्तिः**—कियत् = किं परिमाणम् अस्य कियत् तत्, "किमिदम्भ्या वो घः" इति वतुप्, वस्य च घः । कियत् चिरं = "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । पूर्वाऽऽश्रमसञ्चितं=पूर्वश्चाऽसौ आश्रमः पूर्वाश्रमः, ब्रह्मचर्याऽऽश्रम इत्यर्थः । तस्मिन् सञ्चितं पूर्वाश्रमसञ्चितं, तदर्धभागेन=अर्धश्चासौ भागः अर्धभागः, तस्य अर्धभागः, तदर्धभागः तेन तदर्धभागेन, काङ्क्षितं=काङ्क्षा सञ्जाता यस्य स काङ्क्षितः, तं काङ्क्षितम्, इतच्प्रत्ययः । "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः । यद्वा निष्ठाया क्तप्रत्ययः ।

**भावार्थः**—हे गौरि ! त्वं किमवधिकं तपस्यसि । अलमनेन श्रमेण, ममापि ब्रह्मचर्याश्रमार्जितं बहु तपो वर्तते, तस्य तपसः समप्रविभागरूपेणांशेनाभिलषितं भर्तारं प्राप्नुहि । किन्तु त्वया मनसा सञ्चिन्त्यमानं तं भर्तारं सम्यग् ज्ञातुमभिल-षामीति तस्य कुलनामनी कथयेति भावः ।

**भाषा**—हे गौरि ! तुम अधिक तपस्या न करो। ऐसा व्यर्थ श्रम करने की कोई आवश्यकता नहीं है। मैंने भी ब्रह्मचर्याश्रम में बहुत तपस्या की है। उस तपस्या का अर्द्धभाग मैं तुमको प्रदान करता हू। उसके बल से तुम अपनी अभीष्ट पति को पा जाओ। किन्तु मै तुम्हारे उस पति के नाम को जानना चाहता हू।

इत्थ तेन ब्रह्मचारिणा वञ्चितायाः पार्वत्यास्तदनुगुणा प्रवृत्तिमाह—

**इति प्रविश्याऽभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम्।**
**अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तिताऽनञ्जननेत्रमैक्षत ॥ ५१ ॥**

द्विज से न बोल सकी सखी से वर जताने के लिये।
कज्जल रहित दृग से कहा हर को बताने के लिये ॥

**अन्वयः**—इति द्विजन्मना प्रविश्य अभिहिता सा मनोगतं शंसितु न शशाक। अथो परिपार्श्ववर्तिनीं वयस्या विवर्तिताऽनञ्जननेत्रम् ऐक्षत।

**व्याख्या**—इति = इत्थं, द्विजन्मना = द्विजेन, ब्रह्मचारिणेत्यर्थः। प्रविश्य= अन्तर्गत्वा, आप्तवत् रहस्यमुद्घाट्येत्यर्थः। अभिहिता = उक्ता, सा = पार्वती, मनोगत = हृदयस्थ, वरमित्यर्थः, शंसितु=सूचयितु, वक्तुमित्यर्थः। न शशाक= समर्था न अभूत्, लज्जयेति शेषः। अथो = अनन्तरं, परिपार्श्ववर्त्तिनीं=समीप-विद्यमाना, वयस्या = सखीं, विवर्तिताऽनञ्जननेत्र = विचालिताऽकज्जलनयनम्, यथा तथा, ऐक्षत = अद्राक्षीत्।

**व्युत्पत्तिः**—द्विजन्मना = द्वे जन्मनी यस्य स द्विजन्मा, तेन द्विजन्मना। मनोगतं = मनसि गतः, मनोगतः, त मनोगतम्। अथो = "मङ्गलाऽनन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। परिपार्श्ववर्तिनीं=परिपार्श्वे वर्तते तच्छीला इति परिपार्श्ववर्तिनी, ता परिपार्श्ववर्तिनीं, णिनिप्रत्ययः। तदन्तात् स्त्रीत्वविवक्षाया ङीप्। वयस्या = वयसा तुल्या वयस्या, ता वयस्यां, यत्प्रत्ययः। "आलिः सखी वयस्या च" इत्यमरः। विवर्तिताऽनञ्जननेत्रम् = अविद्यमानम् अञ्जनं यस्मिन् तत् अनञ्जन, व्रतवशात् वर्जितकज्जलमित्यर्थः। विवर्तितम् अनञ्जनं नेत्र यस्मिन् कर्मणि यथा तथा तत् विवर्तितानञ्जननेत्रम्।

**भावार्थः**—इत्थ ब्राह्मणेनान्तः प्रविश्योक्ता लज्जया मनःसङ्कल्पितं पतिं कथयितुमशक्नुवाना सा पार्वती ब्रह्मचारिमुखान्नेत्रमाकृष्य सर्वदासमीपवर्तिसखीमुखावलोकनमात्रेण ता निजमनोरथशंसनाय प्रेरितवतीति भावः।

**भाषा**—इस प्रकार ब्राह्मण ने जब उस के हृदय का थाह लगाने के लिये

प्रश्न किया, तब पार्वती ने लज्जा के कारण प्रत्युत्तर देने में स्वयं असमर्थ होकर, अपने सङ्कल्पित पति के सम्बन्ध में कहने के लिये सखी की ओर आखों से इशारा किया।

अथ वयस्यायाः प्रवृत्तिं-दर्शयति—

**सखी तदीया तमुवाच वर्णिनं निबोध साधो ! तव चेत्कुतूहलम् ।**
**यदर्थमम्भोजमिवोष्णवारणं कृतं तपः साधनमेतया वपुः ॥ ५२ ॥**

बोली सखी हे विप्र ! सुनिये चाहते यदि जानना ।
जिसके लिये तन को तपाया कमल छत्र स्ववपु बना ॥

**अन्वयः**—तदीया सखी तं वर्णिनम् उवाच । हे साधो ! तव कुतूहलं चेत् निबोध । यदर्थम् एतया अम्भोजम् उष्णवारणम् इव वपुः तपः साधनं कृतम् ।

**व्याख्या**—तदीया = पार्वत्याः, सखी = वयस्या, तं = पूर्वोक्तं, वर्णिनं = ब्रह्मचारिणम्, उवाच = अवोचत् । हे साधो = हे विद्वन्, तव = ते, कुतूहलं = कुतुकं, चेत् = यदि, श्रोतुमस्तीति शेषः । तर्हि, निबोध = अवगच्छ, आकर्णयेत्यर्थः । यदर्थे = यत्प्रयोजनम्, एतया = पार्वत्या, अम्भोजं = कमलम्, उष्णवारणम् इव = आतपवारणम् इव, आतपत्रमिवेत्यर्थः । वपुः = शरीरं, तपः साधन = नियमोपकरण, कृतं = विहितम् ।

**व्युत्पत्तिः**—तदीया = तस्या इयं तदीया, छप्रत्ययः । वर्णिन = प्रशस्तः वर्णः अस्याऽस्तीति वर्णी, तं वर्णिनं, "वर्णाद् ब्रह्मचारिणि" इति इनिप्रत्ययः । कुतूहलं = "कौतूहलं कौतुकं च कुतुकं च कुतूहलम्" इत्यमरः । निबोध="बुध अवगमने" इति भौवादिकाद्धातोर्लोट् । यदर्थं = यस्मै इदं यदर्थं, तत्, यादृशवाञ्छितसिध्यर्थमित्यर्थः । "अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति समासः । अम्भोजम् = अम्भसि जातम् अम्भोजम्, "सप्तम्यां जनेर्डः" इति डप्रत्ययः । उष्णवारणम् = उष्णं वार्यते अनेन इति उष्णवारणं, करणे ल्युट् । तपः साधनं = तपसः साधनं तपः साधनम् ।

**भावार्थः**—पार्वतीसम्बन्धिनी वयस्या तमपरमार्थब्रह्मचारिणमुक्तवती । हे सत्पुरुष ! अस्मिन् विषये तव श्रवणकौतुकञ्चेच्छृणु । अहं तत्सर्वमपि ते कथयामि । यादृशवाञ्छितसिध्यर्थं "दर्शनावघ्राणादिभिरुपभोक्तव्यमत्यन्तसुकुमारकमलं केनापि यथातपत्रत्वेन विधीयते" तद्वदनयापि मृदुतरमात्मशरीरमत्यन्तकठिनशरीरसाध्यस्य तपसः साधनत्वेन परिकल्पितमस्तीति भावः ।

**भाषा**—तब पार्वती की सखी ने ब्रह्मचारी के भेष में शङ्कर से कहा। हे साधो! इस विषय में आपको यदि सुनने की अतीव इच्छा हो तो सुनिये। यह पार्वती कमल से भी सुकुमार शरीर को उग्र तपस्या में क्यों नियोजित कर रही है, उस का कारण मैं आपको बताती हू।

अथ पार्वतीहृदयगत वरमेवोद्दिशति—

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी।**
**अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति॥ ५३॥**

अभिमानिनी यह पार्वती दिग्पाल गण अपमान कर।
निज पति बनाना चाहती सुख से वशी कामारि हर॥

**अन्वयः**—मानिनी इयम् अधिश्रियः महेन्द्रप्रभृतीन् चतुर्दिगीशान् अवमत्य, मदनस्य निग्रहात् अरूपहार्यं पिनाकपाणिं पतिम् आप्तुम् इच्छति।

**व्याख्या**—मानिनी = अभिमानवती, इयं = पार्वती, अधिश्रियः = अधिकैश्वर्यान्, महेन्द्रप्रभृतीन् = इन्द्रादीन्, चतुर्दिगीशान्=दिक्चतुष्टयपतीन्, इन्द्रयमवरुणकुवेरानित्यर्थः। अवमत्य = अवधूय, मदनस्य = कामस्य, निग्रहात् = निवर्हणात् हेतोः, अकामुकत्वादित्यर्थः। अरूपहार्यम् = असौन्दर्यवश्यं, पिनाकपाणिम् = अजगवकरं, हरमित्यर्थः। पतिं=भर्तारम्, आप्तुम् = लब्धुम्, इच्छति = कामयते।

**व्युत्पत्तिः**—मानिनी = प्रशस्त. मानः अस्या अस्तीति मानिनी, अधिश्रियः = अधिका श्रीर्येषा ते अधिश्रियः, तान्। महेन्द्रप्रभृतीन् = महांश्चाऽसौ इन्द्रः महेन्द्रः, महेन्द्रः प्रभृतिः येषा ते महेन्द्रप्रभृतयः, तान् महेन्द्रप्रभृतीन्। चतुर्दिगीशान्=चतसृणा दिशाम् ईशाः चतुर्दिगीशाः, तान् चतुर्दिगीशान्, "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः। अरूपहार्यं = हर्तुं शक्यः हार्यः, "हृञ्हरणे" इति धातोः "ऋहलोर्ण्यत्" इति ण्यत्। रूपेण हार्यः रूपहार्यः, न रूपहार्यः अरूपहार्यः, तम् अरूपहार्यं। पिनाकपाणिं = पिनाकः पाणौ यस्य स पिनाकपाणिस्त पिनाकपाणिं, "प्रहरणाऽर्थेभ्यः परे निष्ठासप्तम्यौ" इति पिनाकपदस्य पूर्वप्रयोगः। "पिनाकोऽजगवं धनुः" इत्यमरः। पतिं = पाति इति पतिः, तं पतिम्। इच्छति = "इषु इच्छायाम्" इति धातोर्लट्।

**भावार्थः**—इन्द्राणीप्रभृतीरतिसय्य वर्तितव्यमित्यभिमानवतीयं पार्वती प्राप्तैश्वर्यान् इन्द्रयमवरुणकुवेरान् क्रमशः पूर्वदक्षिणपश्चिमोत्तरदिक्पतीन् तिर

स्कृत्य शिवं भर्तारमभिलषन्ती कामदहनदर्शनानन्तरं तस्य रूपहार्यत्वाभावमवधार्य, तत्प्राप्तावुपायान्तरमपश्यन्ती तपश्चरणमेव तत्प्राप्त्युपायत्वेन निश्चितवतीति भावः ।

**भाषा**—यह पार्वती इन्द्राणी प्रभृतिओं से भी बढ़ कर अपना सौभाग्य समझती हुई इन्द्रयमादि दिग्पालों से श्रेष्ठ शिव को ही अपना पति वरण करना चाहती है । काम के दग्ध होने पर शिव प्राप्ति का उपायान्तर न देख कर इस ने तपस्या को ही शरण लिया ।

अथ वक्ष्यमाणानामतिमहतीनां मदनवेदनानां मदने दग्धेऽप्युपपत्तिं दर्शयति—

**असह्यहुङ्कारनिवर्तितः पुरा पुराऽरिमप्राप्तमुखः शिलीमुखः ।**
**इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥**

**हुङ्कार से पहले फिर भव विजय में असफल रहे ।**
**वे नष्ट मूर्ति मनोज शर गिरिजा हृदय को हैं महे ॥**

**अन्वयः**—पुरा असह्यहुङ्कारनिवर्तितः पुरारिम् अप्राप्तमुखः विशीर्णमूर्तेः अपि पुष्पधन्वनः शिलीमुखः इमां हृदि व्यायतपातम् अक्षिणोत् ।

**व्याख्या**—पुरा = पूर्वम् , असह्यहुङ्कारनिवर्तितः = दुःसहहुङ्कारपरावर्तितः, अत एव, पुरारिं = हरम् , अप्राप्तमुखः=अप्राप्तफलः, विशीर्णमूर्तेः अपि=नष्टशरीरस्य अपि, पुष्पधन्वनः=कुसुमचापस्य, कामस्येत्यर्थः । शिलीमुखः=बाणः, इमां = पार्वतीं, हृदि=वक्षसि, व्यायतपातं=सुदीर्घप्रहारम् , अक्षिणोत्=अकर्शत् ।

**व्युत्पत्तिः**—असह्यहुङ्कारनिवर्तितः=सोढुं शक्यः सह्यः, न सह्यः असह्यः, स चाऽसौ हुङ्कारः, रुद्रस्येत्यर्थः । असह्यहुङ्कारः, तेन निवर्तितः असह्यहुङ्कारनिवर्तितः । पुराऽरिम्=पुरस्य अरिः पुराऽरिः, तं पुरारिम् । अप्राप्तमुखः = न प्राप्तम् अप्राप्तं, तत् मुखं यस्य सः अप्राप्तमुखः । विशीर्णमूर्तेः=विशीर्णा मूर्तिर्यस्य स विशीर्णमूर्तिः, तस्य विशीर्णमूर्तेः । "मूर्तिः काठिन्यकाययोः" इत्यमरः । पुष्पधन्वनः = पुष्पाणि धनुर्यस्य सः पुष्पधन्वा, तस्य पुष्पधन्वनः, "धनुषश्चे"त्यनङ् । शिलीमुखः = "अलिबाणौ शिलीमुखौ" इत्यमरः । व्यायतपात = विशेषेण आयतः व्यायतः, "सुप्सुपा" इति समासः । व्यायतः पातः = प्रहारः, यस्मिन् कर्मणि तद्यथा तथा क्रि० वि० व्यायतपातम् । अक्षिणोत् = "क्षिणु हिंसायाम्" इति धातोर्लङ् ।

**भावार्थः**—शरमोक्षानन्तरं हरकोपकृशानुना मदने दग्धे हरमेव लक्षीकृत्य

सरभसमभिपतन् मदनबाणो हरेण हुङ्कारमात्रेण निवर्तितः सन् , हरसेवार्थं तत्पार्श्ववर्तिनीं दुर्बलामनाथामिमां पार्वतीमत्यन्तमबाधतेति भावः ।

**भाषा**—मदन ने हर को जो बाण मारा था, वह तो हर के हुङ्कार मात्र से ही निवृत्त हुआ, और मदन भी जल कर खाक हुआ, परन्तु वह बाण हर की पार्श्ववर्त्तिनी सेवापरायणा अनाथा पार्वती के वक्षस्थल पर ही आ लगा ।

अथ चतुर्भिः श्लोकैः पूर्वानुरागचेष्टाः प्रतिपाद्यन्ते । तत्रादौ शरपतनानन्तरभवं मदनव्याधिमेवाह—

**तदा प्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसराऽलका ।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसङ्घातशिलातलेष्वपि ॥५५॥**

तब से पिता गृह में बरफ पर चैन से सोई नहीं ।
चन्दन तिलक धूसर अलक मय कामिनी गिरिजा रही ॥

**अन्वयः**—तदा प्रभृति पितुः गृहे उन्मदना ललाटिकाचन्दनधूसराऽलका बाला जातु तुषारसङ्घातशिलातलेषु अपि निर्वृतिं न लभते स्म ।

**व्याख्या**—तदा प्रभृति = तत आरभ्य, शरपतनानन्तरकालादारभ्येत्यर्थः । पितुः = जनकस्य, हिमाऽऽलयस्येत्यर्थः, गृहे = गेहे, उन्मदना = उत्कटकामा, ललाटिकाचन्दनधूसराऽलका = तिलकचन्दनधूसरचूर्णकुन्तला, बाला = पार्वती, जातु = कदाचिदपि, तुषारसङ्घातशिलातलेषु अपि = हिमघनपाषाणतलेषु अपि, निर्वृतिं = सुखं, न लभते स्म = न प्राप्नोति स्म ।

**व्युत्पत्तिः**—तदा प्रभृति = पदद्वयम् । 'सप्तम्यर्थस्याऽपि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा । प्रभृतियोगे पञ्चमीनियमात् । उन्मदना = उत्कटः मदनः यस्याः सा उन्मदना, ललाटिकाचन्दनधूसराऽलका = ललाटे भवः अलङ्कारः ललाटिका, "कर्णललाटात्कनलङ्कारे" इति कन्प्रत्ययः । स्त्रीत्वं लोकात् । "अजाद्यतष्टाप्" इति टाप्प्रत्ययः । "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" इति इत्वम् । "ललाटमलिकं गोधिः" इति, "पत्रपाश्या ललाटिका" इति चाऽमरः । ललाटिकायाः चन्दनं ललाटिकाचन्दनं, तेन धूसराः ललाटिकाचन्दनधूसराः, ते अलकाः यस्याः सा ललाटिकाचन्दनधूसरालका । तुषारसङ्घातशिलातलेषु = तुषाराणां सङ्घाताः तुषारसङ्घाताः, ते एव शिलाः तुषारसङ्घातशिलाः, तासां तलानि तुषारसङ्घातशिलातलानि, तेषु तुषारसङ्घातशिलातलेषु ।

**भावार्थः**—कामशरपातानन्तरकालादारभ्य हिमवत्प्रदेशे समुद्भूतमदनवि-

कारा शीतोपचारेण कामज्वरशान्तये पुनः पुनः भालप्रदेशनिक्षिप्तचन्दनरूक्षकेशा पार्वती हिमसमूहप्रस्तरप्रदेशेष्वपि कदाचिदपि कामज्वरदाहशान्ति नोपजगामेति भावः ।

**भाषा**—उस कामशर से विद्ध होने पर मदन बाण जर्जरिता पार्वती के कामज्वर की शान्ति इस हिमालय के शीत उपचार से, तथा ललाट देश पर अनवरत चन्दन के लेपन करने पर भी नहीं हुई ।

अथ विलापमाह—

**उपात्तवर्णे चरिते पिनाकिनः, सवाष्पकण्ठस्खलितैः पदैरियम् ।**
**अनेकशः किन्नरराजकन्यका, वनाऽन्तसङ्गीतसखीररोदयत् ॥ ५६ ॥**

शिव के चरित का गान करती सदुख रो उठती सदा ।
किन्नर सुताओं को अमित रोकर रुलाती सर्वदा ॥

**अन्वयः**—इय पिनाकिनः चरिते उपात्तवर्णे सवाष्पकण्ठस्खलितैः पदैः वनाऽन्तसङ्गीतसखीः किन्नरराजकन्यकाः अनेकशः अरोदयत् ।

**व्याख्या**—इयं=पार्वती, पिनाकिनः = शम्भोः, चरिते = चरित्रे, त्रिपुरविजयाऽऽदिचेष्टिते इत्यर्थः । उपात्तवर्णे=प्रारब्धगीतक्रमे, सवाष्पकण्ठस्खलितैः= गद्गदगलविशीर्णैः, पदैः=शब्दैः, वनाऽन्तसङ्गीतसखीः=अरण्यमध्यगानवयस्याः, किन्नरराजकन्यकाः=किंपुरुषराजकुमारीः, अनेकशः = बहुशः, अरोदयत् = अश्रुमोक्तुम् अकारयत् ।

**व्युत्पत्तिः**—पिनाकिनः=पिनाकः अस्याऽस्तीति पिनाकी, तस्य पिनाकिनः उपात्तवर्णे = उपात्तः वर्णः=गीतक्रमः, यस्य तत् उपात्तवर्णं, तस्मिन् उपात्तवर्णे, "गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते" इति हलायुधः । सवाष्पकण्ठस्खलितैः= वाष्पैः सहितः सवाष्पः, स चाऽसौ कण्ठः सवाष्पकण्ठः, तस्मिन् स्खलितानि स वाष्पकण्ठस्खलितानि, तैः सवाष्पकण्ठस्खलितैः । पदैः="साधकतम करणम्" इति करणसंज्ञा, ततः "कर्तृकरणयोस्तृतीया" इति तृतीया । वनाऽन्तसङ्गीतसखीः= वनस्य, अन्तः वनाऽन्तः । सम्यक् गीतं सङ्गीत, "गीत गानमिमे समे" इत्यमरः । वनाऽन्ते सङ्गीतं वनाऽन्तसङ्गीतं, तेन निमित्तेन सख्यः वनाऽन्तसङ्गीत सख्यः, ताः वनाऽन्तसङ्गीतसखीः । किन्नरराजकन्यकाः=कुत्सिता नराः किन्नराः, तुरङ्गमुखत्वात् तुरङ्गशरीरत्वाद्वेत्यर्थः । "किं क्षेपे" इति समासः । "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः । किन्नराणा राजानः किन्नरराजाः, समासाऽ-

न्तष्टच् । कन्या एव कन्यकाः । किन्नरराजानां कन्यकाः किन्नरराजकन्यकाः, ताः अनेकशः = अनेकवारम् इति अनेकशः, शस्प्रत्ययः । अरोदयत्=णिजन्तात् "रुदिर अश्रुविमोचने" इति धातोर्लङ् ।

**भावार्थः**—यदा तावदियमेकान्ते हरचरितश्रवणतृष्णया वनान्तमुपगम्य, सङ्गीताभ्यासव्याजेन काश्चन मनोहरस्वराः किन्नरराजकन्यकाः समानीय, प्रसङ्गार्थमादौ स्वयमेव त्रिपुरदहनादिरूपं हरचरितं किमपि गातुमारभते, तदैव तत्स्वरूपस्मरणोद्बुद्धया द्विगुणया विरहवेदनया बाष्पगद्गद रुदती निजशोकदर्शनसञ्जातशोकातिरेकास्ताः सर्वा एव मुहुर्मुहुररोदयदिति भावः ।

**भाषा**—एकान्त में हरचरित सुनने की तृष्णासे किन्नरिओं को गाने का अभ्यास कराने के छल से बुलाकर जब उन लोगों के साथ त्रिपुरदहनादि हर चरित्र को इसने गाना आरम्भ किया, तब इस की विरह वेदना दुगुनी हो गई, और गला भर जाने से गाने में असमर्थ होकर, स्वयं रोती, और उन सब को भी रुलाती थी ।

निद्रापरिक्षयमीषन्निद्रासमये स्वप्नसमागमं चाह—

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।**
**क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवागसत्यकण्ठाऽर्पितबाहुबन्धना ॥५७॥**

**हे नीलकण्ठ कहां चले निशि में उठी कह पार्वती ।**
**झूठे गले में बाहु बन्धन डाल देती थी सती ॥**

**अन्वयः**-त्रिभागशेषासु निशासु क्षणं नेत्रे निमील्य, सहसा "हे नीलकण्ठ ! क्व व्रजसि" ? इति अलक्ष्यवाक् असत्यकण्ठाऽर्पितबाहुबन्धना च सती व्यबुध्यत ।

**व्याख्या**—त्रिभागशेषासु = त्र्यंशाऽवशिष्टासु, यद्वा तृतीयाऽंशशेषासु, निशासु = रात्रिषु, क्षणं = क्षणमात्रं, नेत्रे = नयने, निमील्य = मीलयित्वा, सुप्त्वेत्यर्थः । सहसा = सद्यः, हे नीलकण्ठ = हे शितिकण्ठ, क्व = कुत्र, व्रजसि = गच्छसि, इति = एवम् , अलक्ष्यवाक् = निर्विषयवचना, असत्यकण्ठार्पितबाहुबन्धना=मिथ्याभूतगलनिक्षिप्तभुजबन्धना च सती, व्यबुध्यत=विबुद्धवती ।

**व्युत्पत्तिः**—त्रिभागशेषासु = शिष्यते इति शेषः, कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेषाः त्रिभागशेषाः, तासु त्रिभागशेषासु, "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः । यद्वा 'रात्रेः क्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागस्त्रिभाग., सङ्ख्याशब्दस्य वृत्तिविषये पूरणाऽर्थवमिष्यते । यथा "शताऽशः, सह-

स्याऽश:" इति । त्रिभागः शेषः यासां तास्त्रिभागशेषाः, तासु त्रिभागशेषासु । निशासु = "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः । क्षणं = "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । हे नीलकण्ठ=नीलः कण्ठः यस्य स नीलकण्ठः, तत्सम्बुद्धौ हे नीलकण्ठ, अलक्ष्यवाक्=लक्षितुं योग्या लक्ष्या, न लक्ष्या अलक्ष्या, सा वाक् यस्याः सा अलक्ष्यवाक्, असत्यकण्ठाऽर्पितबाहुबन्धना=न सत्यः असत्यः, स चाऽसौ कण्ठः असत्यकण्ठः । बाहुरेव बन्धनं बाहुबन्धनम् । असत्यकण्ठे अर्पितम् असत्यकण्ठाऽर्पितं, तत् बाहुबन्धनं यस्याः सा असत्यकण्ठार्पितबाहुबन्धना । "सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति" इत्यमरः ।

अत्र असत्ये = अपरमार्थे, सदसद्विलक्षणे कण्ठे इत्यर्थः । शुक्तिकारजतादिषु मिथ्याज्ञानेषु सदसद्विलक्षणं रजतादिकं विषय इत्यद्वैतवादिना मतं, तदनुसारेणेय मुक्तिः । अन्यथा पुनरलक्ष्यवागितिवदकण्ठार्पितबाहुबन्धनेत्येव प्रयोगः स्यात् । एवं निद्राया अतिमान्द्यात् स्वप्नजागरावस्थयोः परस्परसङ्करात् स्वप्ने प्रत्यक्षत्व भ्रमः । तेन च परमार्थसत एव वचसः प्रवृत्तिरित्यपि बोद्धव्यम् ।

**भावार्थः**—इयं विरहवेदनया रात्रिद्विभागपर्यन्तं निद्रामलब्ध्वा तृतीयभागमात्रावशिष्टासु रात्रिषु क्षणमात्रं स्वप्नावस्थया लोचने मीलयित्वा "हे प्रिय ! हे शङ्कर ! कुत्र यासी"ति निर्विषयवाग्व्यापरा मिथ्याकृतालिङ्गना च सती शीघ्रमेव प्रबुद्धाऽभूदिति भावः ।

**भाषा**—विरह वेदना से पीड़ित होकर पार्वती को रात में नींद नहीं आती थी । रात के अन्तिम पहर में यदि आंख लगती भी तो स्वप्नावस्था में 'हे प्रिय शङ्कर ! तुम कहां जाते हो, ऐसा कहकर चिल्ला उठती थी, और जाग जाती थी ।

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाऽऽख्याश्चत्वारो विरहिणां विनोदाः । तत्र स्वप्नसन्दर्शनमुक्त्वा साम्प्रतं प्रतिकृतिदर्शनमाह—

**यदा बुधैः सर्वगतस्त्वमुच्यसे, न वेत्सि भावस्थमिमं कथं जनम् ।**
**इति स्वहस्तोल्लिखितश्च मुग्धया, रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥**

जाते कहे सर्वज्ञ मुझ को क्यों न फिर तुम जानते ।
यों उलहना देती उमा थीं क्यों न मुझको मानते ॥

**अन्वयः**—यदा त्वं बुधैः सर्वगतः उच्यसे, ततः भावस्थम् इमं जनं कथं न वेत्सि ? इति मुग्धया स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि उपालभ्यत ।

**व्याख्या**—यदा = यतः, त्वं, बुधैः=मनीषिभिः, सर्वगतः = सर्वव्यापी,

इति, उच्यसे=अभिधीयसे, ततः भावस्थं=रतिस्थं, त्वयि अनुरागिणमित्यर्थः । इमं जनं=मद्रूपं जन, कथ=केन प्रकारेण, न वेत्सि=न जानासि, इति=इत्थं, मुग्धया=मूढया, चित्रस्थितेऽपि चन्द्रशेखरे सञ्जातपरमार्थचन्द्रशेखरबुद्ध्येत्यर्थः । स्वहस्तोल्लिखितः=आत्मकरचित्रलिखितः, चन्द्रशेखरः=शम्भुः, रहसि=एकान्ते, उपालभ्यत=उपालब्धः, साऽधिक्षेपमुक्तोऽभूदित्यर्थः । अस्माभिरपीयमवस्था निगूढतरमेव दृष्टेति तात्पर्यम् । अनेनोन्मादावस्था दर्शिता ।

**व्युत्पत्तिः**—सर्वगतः—सर्वं गतः सर्वगत, द्वितीयासमासः । भावस्थं=भावे=रत्याख्ये, तिष्ठतीति भावस्थः, त भावस्थं, कप्रत्ययः । स्वहस्तोल्लिखितः=स्वश्चाऽसौ हस्तः स्वहस्तः, तेन उल्लिखितः स्वहस्तोल्लिखितः । चन्द्रशेखरः=चन्द्र· शेखरः=शिरोभूषणं, यस्य सः चन्द्रशेखरः । "ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः" इत्यमरः ।

**भावार्थः**—हे हर ! यदा त्व देशकालानवच्छिन्नः सर्वव्यापीति मन्वादिभिः स्मर्यसे, तदा त्वय्यनुरागिणमिमं जन मा कथ न जानासीति मोहमुपगतयानया पार्वत्या चित्रस्थितेऽपि चन्द्रशेखरे सञ्जातपरमार्थचन्द्रशेखरबुद्धया स्वहस्तेनैव चित्रे लिखितः शङ्करो विजने साधिक्षेपमुपालब्धोऽभूदिति भाव· ।

**भाषा**—इस प्रकार जाग कर पार्वती अपने हाथ से ही लिखित शङ्कर के चित्र को सत्य शङ्कर समझ, उसी को यह कह कर उपालंभ्य देती थी कि हे हर ! जब तुम को मनु आदि महानुभावों ने सर्व व्यापी कहा, तब तुम अपने ऊपर प्रेम रखने वाले मेरे हृदय को क्यों नहीं जानते ?

अथैवं विषया निष्प्रतीकारया मदनवेदनया समुन्मथिताया अपि पार्वत्यास्तपसि प्रवृत्तिमाह—

**यदा च तस्याऽधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।**
**तदा सहाऽस्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५८ ॥**

शिव के लिये जब पार्वती को यत्न था कोई नहीं ।
तब जनक के आदेश से आई तपो वन में यहीं ॥

**अन्वयः**—जगत्पते· तस्य अधिगमे विचिन्वती अन्यं विधिं यदा न अपश्यत् । तदा इय गुरोः अनुज्ञया अस्माभिः सह तपसे तपोवनं प्रपन्ना ।

**व्याख्या**—जगत्पतेः=लोकेशस्य, तस्य=शम्भो·, अधिगमे=प्राप्तौ, विचिन्वती=मृगयमाणा, अन्यम्=अपरं, विधिम्=उपायं, यदा=यस्मिन्काले

न अपश्यत् = न अद्राक्षीत् , तदा = तस्मिन्काले, इयं = पार्वती, गुरोः=पितुः, हिमाऽऽलयस्येत्यर्थः । अनुज्ञया = आज्ञया, अस्माभिः = सखीभिः, सह = सार्धं, तपसे = तपश्चरितुं, तपोवनं = तपोभूमिं, प्रपन्ना = प्राप्ता ।

**व्युत्पत्तिः**—जगत्पतेः = गच्छतीति जगत् , जगता पतिः जगत्पतिः, तस्य जगत्पतेः, अधिगमे = "निमित्तात्कर्मयोगे" इति सप्तमी, विचिन्वती = विचिनोतीति विचिन्वती । अस्माभिः=सहयोगे "सहयुक्तेऽप्रधाने" इति तृतीया । तपोवनं=तपसः वनं तपोवनं तत्। "अटव्यरण्यं विपिन गहनं काननं वनम्" इत्यमरः ।

**भावार्थः**—इयं पार्वती यदा त्रैलोक्यनाथस्य शङ्करस्य पतित्वेन प्राप्तौ तपोव्यतिरिक्त विधानानन्तरं न दृष्टवती, तदा पितृनियोगपुरस्सरमस्माभिः प्रियसखीभिः सह तपश्चरितुमत्र तपोवने समागतास्तीति भावः ।

**भाषा**—इस पार्वती ने जब हर प्राप्ति का अन्य उपाय नहीं देखा, तब यह अपने पिता की आज्ञा लेकर हम सब सखिओं के साथ यहा तपश्चर्या करने आई ।

अथ तपसश्चिरप्रवृत्तत्वं फलादर्शनं च सनिर्वेदमाह—

**द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।**
**न च प्ररोहाऽभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः॥६०॥**

तप साक्षि रूप विटप उमा रोपित हुये सुन्दर सफल ।
शिव प्राप्ति का अङ्कुर अभी तक दीखता पर है विफल ॥

**अन्वयः**—सख्या स्वयं कृतजन्मसु तपःसाक्षिषु एषु द्रुमेषु फलम् अपि दृष्टम् , अस्याः शशिमौलिसंश्रयः मनोरथः च प्ररोहाऽभिमुखोऽपि न दृश्यते ।

**व्याख्या**—सख्या = वयस्यया, पार्वत्येत्यर्थः । स्वयम् = आत्मना, कृतजन्मसु = कृतजननेषु, स्वयं रोपितेष्वित्यर्थः । तपःसाक्षिषु = नियमसाक्षाद्द्रष्टृषु, एषु = पुरोनिर्दिष्टेषु, द्रुमेषु = वृक्षेषु, फलं = अपि, प्रसवः अपि = दृष्टं = लब्धम् , अवलोकितमित्यर्थः । अस्याः=पार्वत्याः, शशिमौलिसंश्रयः = चन्द्रशेखरविषयः, मनोरथः = अभिलाषः, च = तु, प्ररोहाभिमुखः अपि = अङ्कुरोन्मुखोऽपि, न दृश्यते = न अवलोक्यते ।

**व्युत्पत्तिः**—कृतजन्मसु=कृतं जन्म येषा ते कृतजन्मानः, तेषु कृतजन्मसु । शशिमौलिसंश्रयः = शशः अस्यऽस्तीति शशी शशी मौलौ यस्य स शशिमौलिः, सः संश्रयः यस्य स शशिमौलिसंश्रयः, मनोरथः = "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः । च = चकारस्तुशब्दार्थे, प्ररोहाऽभिमुखः=

प्ररोहस्य अभिमुखः प्ररोहाभिमुखः, "प्ररोहस्त्वङ्कुरोऽङ्कुरः" इति वैजयन्ती ।

**भावार्थः**—अस्माकं प्रियवयस्ययानया पार्वत्या स्वयमेव बीजावापजलाहरणादिपुरस्सर वनवासारम्भसमकालमेव रोपितेषु तपसः साक्षिभूतेषु परितो दृश्यमानेषु वृक्षेषु फलनिष्पत्तिरपि सञ्जाता, किन्तु सख्याश्चन्द्रशेखराश्रयो मनोरथस्त्वङ्कुरोन्मुखोऽपि न दृश्यत इति भावः ।

**भाषा**—हमारी प्रिय सखी पार्वती को तपस्या करते बहुत दिन व्यतीत हुए, तपस्या के आरम्भ समयमें ही इस ने अपने हाथों से बीज वपन कर उसे सींच कर वृक्ष में परिणत किया; तपस्या के साक्षी स्वरूप उन वृक्षों में आज फल आगये, परन्तु इस के हर-समागम रूपी वासना पूर्ण होने का अङ्कुर तक नहीं दिखाई देता ।

सखीनामस्माकमेवैषा चिन्ता । इयं पुनरनिधैर्यादथापि विषादैर्नाभिभूयते, इत्यभिप्रायेणातिदीना निजावस्थामाह—

**न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।**
**तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥**

**वासव अनुग्रह वृष्टि कर कृषि भूमि पर करते यथा ।**
**तप क्षीण गिरिजा पर दया शङ्कर करेंगे कब तथा ॥**

**अन्वयः**—प्रार्थितदुर्लभः स तपःकृशा सखीभिः अस्रोत्तरम् ईक्षिताम् इमां सखीं, वृषा तदवग्रहक्षतां सीताम् इव, कदा अभ्युपपत्स्यते इति न वेद्मि ।

**व्याख्या**—प्रार्थितदुर्लभः = अभ्यर्थितदुष्प्राप्यः, सः = महेश्वरः, तपःकृशा=नियमक्षीणाम् , अत एव–सखीभिः = वयस्याभिः, अस्मदादिभिरित्यर्थः । अस्रोत्तरम् = अश्रुप्रधानं यथा भवति तथा, ईक्षिताम् = अवलोकिताम् , इमां = पुरोवर्तिनीं, सखीं = वयस्यां, पार्वतीमित्यर्थः । वृषा = इन्द्रः, तदवग्रहक्षता = पुरुहूताऽवग्राहपीडिता, सीताम् इव = हलक्षता भूमिम् इव, कदा = कस्मिन्काले, अभ्युपपत्स्यते = अनुग्रहीष्यति, इति, न वेद्मि = न जानामि ।

**व्युत्पत्तिः**—प्रार्थितदुर्लभः = दुःखेन लब्धुं शक्यः दुर्लभः, प्रार्थितश्चाऽसौ दुर्लभः प्रार्थितदुर्लभः । तपःकृशा = तपसा "हेतुना" कृशा तपःकृशा, तां तपःकृशाम् । अस्रोत्तरम्=अस्राणि उत्तराणि यस्मिन्, तद् अस्रोत्तरं यथा तथा, वृषा= "वासवो वृत्रहा वृषा" इत्यमरः । सीता="सीता लाङ्गलपद्धतिः" इत्यमरः । तदवग्रहक्षता = तस्य = इन्द्रस्य, अवग्रहः=वर्षप्रतिबन्धः, तदवग्रहः, "वृष्टिवर्षे तद्वि-

घातोऽवमाहाऽवग्रहौ समौ" इत्यमरः । तदवग्रहेण क्षता तदवग्रहक्षता, ता तदव ग्रहक्षताम् ।

**भावार्थः**—प्रार्थितोऽपि दुर्लभः स हरोऽस्मदादिभिः सखीभिः साश्रुनेत्रं यथा स्यात्तथाऽवलोकितामिमां पार्वतीं "वृष्टिप्रतिबन्धेन शोषिता हलक्षता भूमिमिन्द्र इव" कस्मिन् कालेऽनुग्रहीष्यति, तन्न जानामीति भावः ।

**भाषा**—नहीं मालूम कब उस दुर्लभ हर की कृपा दृष्टि, तपश्चर्या से शोषित तथा हम सब सखिओं के अश्रुपूर्ण नेत्र से अवलोकित इस पार्वती पर, हलकर्षित और अनावृष्टि से शोभित भूभाग पर इन्द्र के वृष्टि बिन्दु की भांति, पड़ेगी ।

इत्थमत्यार्जवादतिविवृत्तरहस्यवृत्तान्तमतिकरुणं च सखीवचनमाकर्णयतोऽपि तमेव वृत्तान्तं पार्वतीमुखेनैव श्रोतुकामस्य ब्रह्मचारिवेषस्य हरस्य वृत्तमाह—

**अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।**
**अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥**

**द्वारा सखी अभिप्राय गिरिजा का समझ कर सत्य ही ।**
**वर्णी छिपा कर हर्ष बोले यह हँसी है या सही ॥**

**अन्वयः**—इङ्गितज्ञया तया इति अगूढसद्भावं निवेदितः नैष्ठिकसुन्दरः अव्यञ्जितहर्षलक्षणः सन्, अयि ! इदम् एवम्, परिहासः वा ? इति उमाम् अपृच्छत् ।

**व्याख्या**—इङ्गितज्ञया = हृद्भावाऽभिज्ञया, तया = पार्वतीसख्या, इति = एवम्, अगूढसद्भावम् = प्रकाशितसदभिप्रायं यथा तथा, निवेदितः = ज्ञापितः, नैष्ठिकसुन्दरः = वर्णिविलासी, अव्यञ्जितहर्षलक्षणः सन् = अप्रकटितप्रमोदचिह्नः सन्, अयि = हे गौरि ! इदम् = एतत्, त्वत्सखीभाषितमित्यर्थः, । एवम्=इत्थं, सत्यं किमित्यर्थः, परिहासः वा = केलिः वा, इति = एवम्, उमा = पार्वतीम्, अपृच्छत्=पृष्टवान् ।

**व्युत्पत्तिः**-इङ्गितज्ञया=इङ्गितं जानातीति इङ्गितज्ञा, तया इङ्गितज्ञया "आतोऽनुपसर्गे कः" इति कप्रत्ययः । "इङ्गितं हृद्गतो भावः" इति सज्जनः । अगूढसद्भावम्=न गूढः अगूढः, संश्चाऽसौ भावः सद्भावः । अगूढः सद्भावः यस्मिन् कर्मणि तत्, अगूढसद्भावं यथा तथा, नैष्ठिकसुन्दरः = यावज्जीवं ब्रह्मचर्याश्रमे एव स्थित इत्यर्थः । तथा चोक्तं याज्ञवल्क्यस्मृतौ—

"नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्या वैश्वानरेऽपि वा" इति । १-३-४६-

निष्ठा=मरणम्, अवधिर्यस्य स नैष्ठिकः, ठञ्प्रत्ययः । नैष्ठिकश्चाऽसौ सुन्दरः=कामुकः, नैष्ठिकसुन्दरः । "द्वयोरन्यतरस्य विशेषणत्वविवक्षाया विशेषणसमासः । किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोध । अथवा देवस्य अलौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः" । अव्यञ्जितहर्षलक्षणः=न व्यञ्जितम् अव्यञ्जित, हर्षस्य लक्षणं हर्षलक्षणम् । अव्यञ्जितं हर्षलक्षण=मुखरागादि, यस्य सः अव्यञ्जितहर्षलक्षणः, अयि=पदमिदं कोमलाऽऽमन्त्रणे । परिहासः="द्रवकेलिपरीहासाः" इत्यमरः । अपृच्छत्="प्रच्छज्ञीप्सायाम्" इति धातोर्लङि रूपम् ।

**भावार्थः**—पार्वतीहृदयगतमभिप्रायमवगच्छन्त्या तया सख्या प्रकाशितसदभिप्राय यथा स्यात्तथा ज्ञापितः स सुन्दरो नैष्ठिकब्रह्मचारी, गोपितहर्षचिह्नः सन् "अयि गौरि ! किमिदं सखीवचनमेवम्भूतार्थं सत्यमेव, आहोस्वित् परिहासमात्रपरमेतद्" इति पार्वतीं पृष्टवानिति भावः ।

**भाषा**—पार्वती के तपस्या करने का कारण जिस सदिच्छा से उद्भूत है, उस को जब सखी ने पकाशित कर दिया, तब ब्रह्मचारि-वेषी शङ्कर, अपने हृदय के आनन्दोद्गार को मुख पर प्रकाशित होने से रोक कर, बोले "हे गौरि !—तुम्हारे सखी का यह कथन सत्य है, या परिहास मात्र है" ।

अथ लज्जापरतन्त्राया अपि पार्वत्याः परिहासशङ्कानिरासार्थं कथञ्चिद् वचनोद्योगमाह—

**अथाऽग्रहस्ते मुकुलीकृताऽङ्गुलौ समर्पयन्ती स्फटिकाऽक्षमालिकाम् ।**
**कथञ्चिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥ ६३ ॥**

सुन्दर मुकुल करजाग्र से ले स्फटिक की माला प्रवर ।
चिरकाल के पश्चात् बोली पार्वती द्विज से सुधर ॥

**अन्वयः**—अथ मुकुलीकृताऽङ्गुलौ अग्रहस्ते स्फटिकाऽक्षमालिका समर्पयन्ती चिरव्यवस्थापितवाक् अद्रेः तनया मिताऽक्षरम् कथञ्चित् अभाषत ।

**व्याख्या**—अथ=अनन्तरं, वर्णिप्रश्नाऽनन्तरमित्यर्थः । मुकुलीकृताऽङ्गुलौ=सम्पुटीकृताऽङ्गुलौ, अग्रहस्ते=हस्ताऽग्रे, स्फटिकाऽक्षमालिका=भासुरजपस्रजं, समर्पयन्ती=आमुञ्चती, चिरव्यवस्थापितवाक्=अचिरेण स्वीकृतवाक्, "एतेन लज्जाया उपरोधो व्यज्यते" अद्रेः=पर्वतस्य, हिमाऽऽलयस्येत्यर्थः । तनया=पुत्री, पार्वतीत्यर्थः । मिताऽक्षरं=परिमितवर्णं यथा तथा, कथञ्चित्=कथमपि, अभाषत=बभाषे ।

**व्युत्पत्तिः**-मुकुलीकृताऽङ्गुलौ=अमुकुला मुकुला यथा सम्पद्यन्ते तथा कृताः मुकुलीकृताः, च्विप्रत्ययः। "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः। मुकुलीकृताः अङ्गुलयः यस्मिन् स मुकुलीकृताऽङ्गुलिः, तस्मिन् मुकुलीकृताङ्गुलौ। अग्रहस्ते= अग्रश्चाऽसौ हस्तः अग्रहस्त., तस्मिन् अग्रहस्ते, "हस्ताऽग्राऽग्रहस्तयोर्गुणगुणिनोर्भेदाऽभेदादिति वामनः"। स्फटिकाऽक्षमालिका=स्फटिकानाम् अक्षमालिका स्फटिकाऽक्षमालिका, ता स्फटिकाऽक्षमालिका "भासुरः स्फाटिकोपलः। शालिपिष्टं धौतशिलम्" इति त्रिकाण्डकोषः। समर्पयन्ती=समर्पयतीति समर्पयन्ती। चिरव्यवस्थापितवाक्=चिरेण व्यवस्थापिताः, चिरव्यवस्थापिताः, चिरव्यवस्थापिताः वाचः यया सा चिरव्यवस्थापितवाक्। मिताऽक्षर=मितानि अक्षराणि यस्मिन् कर्मणि तद् मिताक्षरं यथा तथा, अभाषत। मितभाषित्वमुत्तमनायिकाधर्मः। अत्र स्वभावोक्तिरलङ्कारः।

**भावार्थः**—ब्रह्मचारिवाक्यश्रवणानन्तरं चिरकालसंयतवचना सम्पुटीकृताङ्गुलौ हस्ताग्रे स्फटिकमयीं जपमाला स्थापयन्ती पार्वती महता कष्टेन परिमितशब्द यथा स्यात्तथोवाचेति भावः।

**भाषा**—ब्रह्मचारी की उक्ति सुन कर जन्म से ही परिमित भाषिणी पार्वती हस्त के अग्र भाग में जप-माला को धारण कर सङ्क्षेप में बोली।

वचनप्रकारमेवाह—

**यथा श्रुतं वेदविदां वर! त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते॥ ६४॥**

वेदज्ञ वर! जो है सुना वह ठीक है वह सत्य है।
शिव के लिये यह सुतप है शिव-मय मनोरथ तथ्य है।

**अन्वयः** हे वेदविदा वर! त्वया यथा श्रुतं, तथा अय जनः उच्चैःपदलङ्घनोत्सुकः, अस्ति। इदं तपः तदवाप्तिसाधनं किल; मनोरथानाम् अगतिः न विद्यते।

**व्याख्या**—हे वेदविदा वर=हे वेदज्ञातॄणा श्रेष्ठ! हे वैदिकश्रेष्ठेत्यर्थः। त्वया=भवता, यथा=येन प्रकारेण, श्रुतम्=आकर्णितं सखीमुखादित्यर्थः। तथा=तेन प्रकारेण, अय जनः=मल्लक्षणो जनः, अहमित्यर्थः। उच्चैःपदलङ्घनोत्सुकः=उन्नतस्थानाऽक्रमणोत्कः, अस्तीति शेषः। इद=क्रियमाणं तपः= अनुष्ठानं, तदवाप्तिसाधनं किल=तत्प्राप्त्युपकरण किल। मनोरथाना=कामाना, मनोराज्यानामित्यर्थः। अगतिः=अविषयः, न विद्यते=न वर्तते।

**व्युत्पत्तिः**—वेदविदा=वेद विदन्ति ते वेदविदः, तेषा वेदविदाम्। उच्चैःपदलङ्घनोत्सुकः = उच्चैश्च तत्पदम् उच्चैःपदम्, महेश्वरवधूपदस्थानमित्यर्थः। तस्य लङ्घनम्, उच्चैःपदलङ्घन, तस्मिन् उत्सुकः, उच्चैःपदलङ्घनोत्सुकः। तदवाप्तिसाधनं=तस्य=महेश्वरवधूपदस्य, अवाप्तिः तदवाप्तिः, तस्याः साधन तदवाप्तिसाधनं, किल = पदमिदमलीकाऽर्थकम्, अतितुच्छत्वात् असाधकमेवेत्यर्थः। मनोरथानाम् = "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः। अगतिः = न गतिः अगतिः।

**भावार्थः**—हे वैदिकश्रेष्ठ! भवता सखीमुखाद् यथा श्रुत, तथायं जनः शिवलाभरूपोन्नतस्थानप्राप्तावुद्युक्तोऽस्ति। इदं मया क्रियमाणं तपः तदुन्नतस्थानप्राप्तिसाधनमस्ति। लोके मनोराज्यानामविषयः कश्चिदप्यर्थो न वर्तत इति भावः।

**भाषा**—हे वेदज्ञ श्रेष्ठ! आपने जो सखी के मुख से सुना, वह सत्य है। यह अभागिनी शिवलाभ रूपी उच्च पद की प्राप्ति के लिये उत्सुक है। उस उच्च स्थान की प्राप्ति की आशा ही इस तपस्या का कारण है। क्यों कि मनोरथ का अविषय ऐसा कोई पदार्थ नहीं है।

इत्थ निजविषयमभिलाषं पार्वतीमुखादेव सम्यगवगतवतोऽपि कपटब्रह्मचारिणस्तस्याः पुनरपि भावपरीक्षार्थं प्रवृत्तिमाह—

**अथाऽऽह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे।**
**अमङ्गलाभ्यासरतिं विचिन्त्य तं तवाऽनुवृत्तिं न च कर्तुमुत्सहे ॥६५॥**

तब ब्रह्मचारी ने कहा मैं शम्भु को हूँ जानता।
तुम चाहती उस को अमङ्गल मय उसे हूँ मानता॥

**अन्वयः**-अथ वर्णी आह, महेश्वरः विदितः, पुनः त्व तदर्थिनी एव वर्तसे। अमङ्गलाऽभ्यासरतिं त विचिन्त्य तव अनुवृत्तिं कर्तुं न उत्सहे।

**व्याख्या**—अथ=पार्वतीकथनाऽनन्तर, वर्णी=ब्रह्मचारी, आह = उवाच। महेश्वरः=महादेवः, विदितः = ज्ञातः, मया ज्ञायते इत्यर्थः। पुनः = भूयः, त्व, तदर्थिनी एव=तत्कामा एव, वर्तसे=प्रवृत्ता भवसि, अमङ्गलाऽभ्यासरतिम्=अकल्याणाऽऽचारप्रीतिं, तं=शिवं, विचिन्त्य = विचार्य, तव = भवत्याः, अनुवृत्तिम्= अनुसरणं, कर्तुं=विधातुं, न उत्सहे=उत्साहं न करोमि, नाऽनुमन्तुं शक्नोमीत्यर्थः।

**व्युत्पत्तिः**—वर्णी = प्रशस्तः वर्णः अस्याऽस्तीति वर्णी, "वर्णाद् ब्रह्मचारिणि" इति इनिप्रत्ययः, "सौ च" इति दीर्घः। "वर्णिनो ब्रह्मचारिणः" इत्यमरः।

आह = "आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल." इत्याह वामन इति मल्लिनाथः। वस्तुतस्तु अथशब्दस्य तदादित्वात् "तदादौ चे"ति भोजसूत्रानुसारेणाऽर्थशब्दयोगाद् भूतार्थे लट् इत्यन्ये । विदितः = विदधातोः बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः, तद्योगात् "क्तस्य च वर्तमाने" इति षष्ठी च । तदर्थिनी=तम् अर्थयते तच्छीला तदर्थिनी । अमङ्गलाभ्यासरतिम्=न मङ्गलम् अमङ्गलं=चिताभस्मादिकं, तस्य अभ्यासः = निरन्तरानुलेपनादिकम् , अमङ्गलाऽभ्यासः, तस्मिन् रतिः = श्रद्धा, यस्य सः अमङ्गलाऽभ्यासरतिः, तम् अमङ्गलाभ्यासरतिम् ।

**भावार्थः**—पार्वतीवचनश्रवणान्तरं स ब्रह्मचारी जगाद । अहं महादेवं जानामि । येन त्वं प्राग् भग्नमनोरथा कृता, पुनस्तमेव त्वं प्रार्थयसे । अमङ्गलाचारानुरागिणं तमीश्वरं विचार्याहमस्मिन्नर्थे तव चित्तवृत्तिमनुसर्तुं न शक्नोमीति भावः।

**भाषा**—पार्वती का वचन सुन कर ब्रह्मचारी बोले—मैं महादेव को जानता हूं । जिसने तुमको प्रारम्भ में ही भग्न मनोरथ किया था। उसी को तुम फिर चाहती हो । अमङ्गलाचारी उस महेश्वर को सोच कर तुम्हारे चित्त का अनुसरण करने मे मैं असमर्थ हूं ।

परस्परसङ्घटनयोग्यताविरहादनुवृत्तेरयोग्यत्वमेव प्रपञ्चयति सप्तभिः श्लोकैः । तत्रादौ विवाहसमय एव तावदग्निसाक्षिकं पाणिग्रहणमेवातिदुःसहमित्याह—

**अवस्तुनिर्बन्धपरे ! कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शम्भोर्वलयीकृताऽहिना सहिष्यते तत्प्रथमाऽवलम्बनम् ॥६६॥**

कर में तुम्हारे सूत्र उसके हाथ में अहि बेतरह ।
प्रथमावलम्बन हो सकेगा शम्भु कर से किस तरह ॥

**अन्वयः**—हे अवस्तुनिर्बन्धपरे ! आमुक्तविवाहकौतुकः ते अयं करः वलयीकृताऽहिना शम्भोः करेण तत्प्रथमाऽवलम्बनं कथं नु सहिष्यते ?

**व्याख्या**—हे अवस्तुनिर्बन्धपरे = हे तुच्छवस्तुहठतत्परे पार्वति, आमुक्तविवाहकौतुकः = असज्जितपरिणयहस्तसूत्रः ते = तव, अयं = पुरोवर्ती, करः = हस्तः, वलयीकृताऽहिना=कटकीकृतसर्पेण, शम्भोः = महादेवस्य, करेण=हस्तेन, करणभूतेनेत्यर्थः । तत्प्रथमाऽवलम्बनं = तत्प्रथमग्रहणं, कथंनु = केन प्रकारेण सहिष्यते=मर्षिष्यति, न कथञ्चिदपि सहिष्यते इत्यर्थः ।

**व्युत्पत्तिः**—हे अवस्तुनिर्बन्धपरे = न वस्तु अवस्तु, तस्मिन् निर्बन्धः, सः परं = प्रधानं, यस्याः सा अवस्तुनिर्बन्धपरा, तत्सम्बुद्धौ हे अवस्तुनिर्बन्धपरे ।

आमुक्तविवाहकौतुकः=विवाहे कौतुकं विवाहकौतुकं,"कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वत. । आमुक्त विवाहकौतुक यस्य स आमुक्तविवाहकौतुकः । वलयीकृताऽहिना=अवलयः वलय. यथा सम्पद्यते तथा कृतः वलयीकृतः, च्विप्रत्ययः । वलयीकृतः अहिः यस्मिन्स वलयीकृताऽहिः, तेन वलयीकृताहिना, "आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्" इत्यमरः । तत्प्रथमाऽवलम्बनं=तदेव प्रथम तत्प्रथमं, तच्च तत् अवलम्बनं=ग्रहण, तत्प्रथमाऽवलम्बन, तत्, समन्त्रमाद्यपाणिग्रहणमित्यर्थः । सहिष्यते= "षह मर्षणे" इति धातोः लृट् ।

**भावार्थः**—हे निस्साराभिनिवेशवति पार्वति ! आबद्धविवाहमङ्गलसूत्रोऽयं तव हस्तो भूषणीकृतसर्पेण शिवस्य हस्तेन समन्त्रमाद्यं पाणिग्रहण कथ नु सहिष्यते, त्वत्करस्तत्करदर्शनमात्रेण स्वयमेव भीत्वा सहसा निवर्तिष्यत इति भावः ।

**भाषा**—हे असार वस्तु में प्रेम रखने वाली पार्वती ! विवाह के मङ्गल सूत्र से भूषित तुम्हारा यह हाथ, सर्पभूषणयुक्त शङ्कर के हस्त के स्पर्श को पाणिग्रहण के समय कैसे सहन करेगा ?

अथ वधूवरयोर्वसनपरिधानस्य परस्परविरुद्धतामाह—

**त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।**
**वधूदुकूलं कलहंसलक्षणं गजाऽजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥**

**सोचो स्वयं कलहंस चिन्ह वधू दुकूल कहाँ अहो ।**
**गिरता रुधिर गज चर्म का सम्बन्ध हो सकता कहो ॥**

**अन्वयः**—हे गौरि ! त्वमेव स्वय तावत् परिचिन्तय, कलहंसलक्षण वधूदुकूल, तथा शोणितबिन्दुवर्षि गजाऽजिन च, एते कदाचित् योगम् अर्हतः यदि ?

**व्याख्या**—हे गौरि=हे पार्वति ! त्वमेव, स्वयम्=आत्मना, तावत्=तावन्मात्र, परिचिन्तय=पर्यालोचय, कलहसलक्षणं=कलहसचिह्न, वधूदुकूलं=नवोढाक्षौमं, तथा शोणितबिन्दुवर्षि=रक्तपृषतवर्षि, गजाऽजिनं च=हस्तिकृत्तिश्च, एते=द्वे वस्तुनी, कदाचित्=जातु अपि, योग=सङ्गतिम् अर्हतः यदि=योग्यता प्राप्नुतः किम् ? अतिमहदनयोरन्तरमित्यर्थः ।

**व्युत्पत्तिः**—कलहसलक्षण=कलश्चाऽसौ हंसः कलहंसः, तस्य लक्षणमिव लक्षण यस्य तत् कलहंसलक्षणं=गोरोचनादिलिखितहंसमिथुनसनाथपर्यन्तभागमित्यर्थः । "चिह्न लक्ष्म च लक्षणम्" इत्यमरः । वधूदुकूलं=वध्वाः दुकूलं वधूदुकूल, "वधूः स्नुषा नवोढा स्त्री" इति विश्वः । "क्षौमं दुकूलम्" इत्यमरः ।

शोणितबिन्दुवर्षि = शोणितस्य बिन्दवः शोणितबिन्दवः, तान् वर्षतीति शोणितबिन्दुवर्षि = रक्तस्रावीत्यर्थः। गजाऽजिन=गजस्य अजिन गजाजिनं, हरस्येत्यर्थः। "अजिन चर्म कृत्तिः स्त्री" इत्यमरः। अत्र दुकालाजिनयोः परस्परसङ्घटनयोग्यताविरहाद् विषमालङ्कारः।

**भावार्थः**—गोरोचनादिलिखितहंसमिथुनसनाथपर्यन्तभाग नवोढावसन रुधिरबिन्दुस्रावि गजासुरचर्म वरवसनञ्चैतद् द्वयं कस्मिन्नपि समये परस्परसङ्घटनयोग्यता यदि प्राप्नोति चेत्, त्वमेव तावत् मनसा सम्यग् विचारयेति भावः।

**भाषा**—पल्लो पर हंस के जोडा की छाप वाला नवविवाहित तुम्हारा वसन, किस प्रकार से उस शङ्कर के रक्तस्रावि गजासुर के चर्म से सम्पर्कित होगा? इसका जरा तुम्हीं विचार करो।

विवाहानन्तरं पतिगृहप्राप्तावप्यनौचित्यमाह—

**चतुष्कपुष्पप्रकाराऽवकीर्णयोः परोऽपि को नाम तवाऽनुमन्यते।**
**अलक्तकाऽङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु॥ ६८॥**

तव अरुण चरण चतुष्क गृह के कुसुम चय में मृदुल तर।
सम्बन्ध उसका प्रेत भू से किस तरह होगा सुघर॥

**अन्वयः**—चतुष्कपुष्पप्रकाराऽवकीर्णयोः तव पादयोः अलक्तकाऽङ्कानि पदानि विकीर्णकेशासु परेतभूमिषु परोऽपि को नाम अनुमन्यते।

**व्याख्या**—चतुष्कपुष्पप्रकाराऽवकीर्णयोः = चतुष्ककुसुमसमूहन्यस्तयोः, कुसुमाऽऽस्तृतदिव्यभवनभूसञ्चारोचितयोरित्यर्थः। तव = भवत्याः, पादयोः=चरणयोः, अलक्तकाऽङ्कानि = लाक्षारसरञ्जितानि, पदानि=पादाऽऽकारपादन्यासचिह्नानि, विकीर्णकेशासु = विक्षिप्तशिरोरुहासु, परेतभूमिषु = प्रेतभूषु, श्मशानेष्वित्यर्थः। परोऽपि = शत्रुरपि, को नाम=को जनः, अनुमन्यते=अनुमतिं ददाति। न कोऽपीत्यर्थः।

**व्युत्पत्तिः**—चतुष्कपुष्पप्रकाराऽवकीर्णयोः = पुष्पाणा प्रकरः पुष्पप्रकरः, चतुष्के = चतुश्शालाख्यगृहभेदे, पुष्पप्रकरः, चतुष्कपुष्पप्रकरः, तस्मिन् अवकीर्णौ चतुष्कपुष्पप्रकाराऽवकीर्णौ, तयोः चतुष्कपुष्पप्रकरावकीर्णयोः। अलक्तकाऽङ्कानि= अलक्तकस्य अङ्कः येषु तानि अलक्तकाङ्कानि, "कलङ्काऽङ्कौ लाञ्छनं च चिह्न लक्ष्म च लक्षणम्" इत्यमरः। पदानि="पदं शब्दे च वाक्ये च व्यवसायाऽपदेशयोः। पादतच्चिह्नयोः" इति विश्वः। विकीर्णकेशासु=विकीर्णाः केशाः यासु त

विकीर्णकेशाः, तासु विकीर्णकेशासु । "अतरस्य तत्र दृष्टं च" इति वचनात् "स्वाऽङ्गाच्चोपसर्जनादसंयोगोपधात्" इति विकल्पान्न ङीप् । "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । परेतभूमिषु = परेताना भूमयः परेत- भूमयः, तासु परेतभुमिषु, नाम = पदमिदं कुत्सायाम् ।

**भावार्थः**—कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोस्तव सुकुमारयोश्चरणयोः लाक्षारसरञ्जितानि चरणविन्यासचिह्नानि, इतस्ततो विक्षिप्तप्रेतकेशासु श्मशान- भूमिषु कर्तुं, शत्रुजनोऽपि को नाम स्वीकृतिं दास्यति, न कोऽपीति भावः ।

**भाषा**—जन्म से तुम कुसुमाच्छादित भूभाग पर चलती आई हो; किन्तु अब तुम प्रेतों के इतस्ततः बिखरे बालों से आस्तीर्ण श्मशान भूमि पर अपने लाक्षारस रञ्जित चरणों को रखोगी, यह बात तुम्हारा घोर शत्रु भी स्वीकार नहीं कर सकता ।

पतिगृहप्रवेशानन्तरभावी तदङ्गसङ्गोऽपि तवाऽतिवीभत्स इत्याह—

**अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवाऽपि यत् ।**
**स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥६९॥**

**शिव साथ आलिङ्गन सुलभ यदि हो सका तो भी विफल ।**
**चन्दन खचित कुच में चिता का भस्म क्या होगा विमल ॥**

**अन्वयः**—त्रिनेत्रवक्षः तव सुलभम् अपि, अतः परम् अयुक्तरूपं किं? वद । यत् हरिचन्दनाऽऽस्पदे अस्मिन् स्तनद्वये चिताभस्मरजः पदं करिष्यति ।

**व्याख्या**—त्रिनेत्रवक्षः = शिवोरःस्थल, शिवाऽऽलिङ्गनमित्यर्थः । तव = भवत्याः, सुलभम् अपि=सुप्राप च, भवतीति शेष· । अतः परम्=अस्मात् अन्य- त् , अयुक्तरूपम् = अत्यन्ताऽयुक्त, किं वद=किं ब्रूहि । न किञ्चिदित्यर्थः । यत्= यस्मात् कारणात् , हरिचन्दनाऽऽस्पदे=हरिचन्दनस्थानभते, अस्मिन्=एतस्मिन् , स्तनद्वये = कुचद्वये, चिताभस्मरजः = श्मशानभसितरजः, पदं = स्थानं, करिष्य- ति = निधास्यति ।

**व्युत्पत्तिः**—त्रिनेत्रवक्षः=त्रिणि नेत्राणि यस्य स त्रिनेत्रः, तस्य वक्षः त्रिने- त्रवक्षः । सुलभं = सुखेन लब्धुं शक्यं सुलभं, खल्प्रत्ययः । तव = अत्र शेषे षष्ठी, "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति सूत्रेण कृद्योगलक्षणषष्ठ्या निषेधात् । अयुक्तरूपम्=न युक्तम् अयुक्तम् , अतिशयेन अयुक्तम् अयुक्तरूपं, "प्रशंसाया रूप- प्" इति रूपप्प्रत्ययः । हरिचन्दनाऽऽस्पदे=हरिचन्दनस्य आस्पदं हरिचन्दनाऽऽ-

स्पदं, तस्मिन् हरिचन्दनास्पदे, स्तनद्वये=द्वौ अवयवौ यस्य तत् द्वयं, स्तनयोर्द्वयं स्तनद्वयं, तस्मिन् स्तनद्वये । चिताभस्मरजः=चिताया भस्म चिताभस्म, "भूति-र्भसितभस्मनी" इत्यमरः । चिताभस्म एव रजः चिताभस्मरजः । इदं तु मल्लि-नाथव्याख्यानुसारेण व्याख्यातम् ।

गुरुवरास्तु "त्रिनेत्रवक्षःसुलभ" मित्येकं पदं कृत्वा वक्ष्यमाणप्रकारेण व्या-चख्युः । यथा—"यत् त्रिनेत्रवक्षःसुलभं चिताभस्मरजः तवाप्यस्मिन् हरिच-न्दनाङ्किते स्तनद्वये पदं करिष्यति, अतः परम् अयुक्तरूपं किं, वद" इति ।

**भावार्थः**—हरिचन्दनपङ्कसङ्गमयोग्ये तव स्तनद्वये हरालिङ्गनसङ्क्रान्त चिताभस्म पदं करिष्यतीति यत्, तस्मादन्यत् किमयुक्तम् । न किमपीति भावः ।

**भाषा**—हरिचन्दन लेपनयोग्य तुम्हारे इस स्तनद्वय पर शङ्कर के वक्षःस्थल का चिताभस्म सम्पर्क करेगा, इससे बढकर अशोभन कार्य क्या हो सकता है !

इत्थं दाम्पत्यनिर्वाहदशायामनौचित्यं दिङ्मात्रेण प्रदर्श्य, स्मरणं नाटयन् प्रागेव कथनीयं किञ्चिद् मया विस्मृतमित्याह—

**इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥**

**यह दूसरा परिहास है कैसे रहेगा तुष्ट मन।**
***गज वाह्य तुम को जरठ वृष पर लख हंसेगे शिष्ट जन॥***

**अन्वयः**—इयं च ते पुरतः अन्या विडम्बना अस्ति । ऊढया वारणराज-हार्यया त्वया अधिष्ठितं वृद्धोक्षं विलोक्य महाजनः स्मेरमुखः भविष्यति ।

**व्याख्या**—इयं च = एषा च, ते = तव, पुरतः=आदावेव, पतिगृहप्रस्था-नवेलायामेवेत्यर्थः । अनेन पूर्वमेव वक्तव्यमिदं मया विस्मृतमिति व्यज्यते अन्या = अपरा, पूर्वोक्तेभ्योऽपि विलक्षणेत्यर्थः । विडम्बना = परिहासः, अस्ति ऊढया = परिणीतया, कृतविवाहयेत्यर्थः । वारणराजहार्यया=हस्तिराजनेतव्यया त्वया = भवत्या, अधिष्ठितम् = आरूढं, वृद्धोक्षं = वृद्धवृषभं, विलोक्य=दृष्ट्वा महाजनः=साधुजनः, ओषधिप्रस्थवास्तव्यो लोक इत्यर्थः । स्मेरमुखः=स्मितमुखः भविष्यति = भविता ।

**व्युत्पत्तिः**—पुरतः=पुर एव पुरतः । ऊढया = "वह प्रापणे" इति धातो क्तप्रत्ययः, सम्प्रसारणं च । वारणराजहार्यया=वारणाना राजा वारणराजः, समा-साऽन्तष्टच् । "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । हारयि

योग्या हार्या, णिजन्तात् "हृञ् हरणे" इति धातोर्ण्यत्। वारणराजेन हार्या वारणराजहार्या, तया, वारणराजहार्यया। वृद्धोक्षं=वृद्धश्चाऽसौ उक्षा वृद्धोक्षस्तं वृद्धोक्षम्, "अचतुरे"त्यादिना निपातः । "उक्षा भद्रो बलीवर्दः" इत्यमरः। महाजनः=महांश्चाऽसौ जनः महाजनः, स्मेरमुखः=स्मेर मुखं यस्य सः स्मेरमुखः। स्मेरेत्यत्र "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति रप्रत्ययः। स्मेरमुखो भविष्यति = उपहसिष्यतीत्यर्थः।

**भावार्थः**—इयं च तवादौ पतिगृहस्थानवेलायामेव विलक्षणा विडम्बनास्ति। यत् करिणीवाहनोचितया परिणीतया त्वयारूढं वृद्धमुक्षाणं दृष्ट्वा श्रोषधिप्रस्थवास्तव्यो जन उपहसिष्यतीति भावः।

**भाषा**—हाथी पर चढ कर जाने के योग्य तुम पति गृह को जाते समय जब वृद्ध वृषभ के ऊपर आरोहण करोगी, तो तुम को देख कर नगर वासी सब लोग हसेंगे। तुम्हारे लिये इस से बढ़ कर क्या विडम्बना होगी।

किं बहुना, ईदृग्गुणापि त्व सम्प्रति शोचनीया संवृत्तेत्याह—

**द्वयं गतं सम्प्रति शोचनीयतां शमागमप्रार्थनया पिनाकिनः।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥**

**शिव प्राप्ति इच्छा से अहो है बात दो ही शोक की।**
**सुन्दर सुखद शशि की कला दृग कौमुदी तुम लोक की॥**

**अन्वयः**—पिनाकिनः समागमप्रार्थनया सम्प्रति द्वयं शोचनीयता गतं, सा कान्तिमती कलावतः कला, अस्य लोकस्य नेत्रकौमुदी त्वं च।

**व्याख्या**—पिनाकिनः=महेश्वरस्य, समागमप्रार्थनया=प्राप्तिकामनया, क्रियमाणयेति शेषः। सम्प्रति = साम्प्रत, द्वयं = द्वितय, शोचनीयता = शोच्यत्वं, गत = प्राप्तम्। सा=प्रसिद्धा, प्रागेव हरशिरोगतेत्यभिप्रायः। कान्तिमती = शोभाविशिष्टा, कलावतः = चन्द्रस्य, कला = षोडशो भागः, अस्य=एतस्य, लोकस्य= भुवनस्य, लोकत्रयवासिनो जनस्येत्यर्थः। नेत्रकौमुदी = नयनचन्द्रिका, दर्शनमात्रेण नेत्राऽऽनन्दिनीत्यर्थः। त्व च = भवती च।

**व्युत्पत्तिः**—पिनाकिनः=पिनाकः अस्यास्तीति पिनाकी, तस्य पिनाकिनः, इनिप्रत्ययः। समागमप्रार्थनया=समागमस्य प्रार्थना समागमप्रार्थना, तया समागमप्रार्थनया। द्वयं=द्वौ अवयवौ यस्य तद् द्वयम्। शोचनीयता = शोचनीयस्य भावः शोचनीयता, ता शोचनीयता, सा=अत्र सेति प्रसिद्धाऽर्थत्वान्न यच्छन्दाऽ-

पेक्षा । तदुक्तं काव्यप्रकाशे—"प्रक्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यदुपादानं नाऽपेक्षते" इति । कान्तिमती = प्रशस्ता कान्तिर्यस्या सा कान्तिमती, नित्ययोगे मतुप् । स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप् । "शोभा कान्ति र्द्युतिश्छविः" इत्यमरः । कलावतः = प्रशस्ताः कला यस्य स कलावान्, तस्य कलावतः, कला = "कला तु षोडशो भाग." इत्यमरः । नेत्रकौमुदी = नेत्रयोः कौमुदी नेत्रकौमुदी, "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ।

**भावार्थः**—हरस्य प्राप्तिकामनया वक्ष्यमाणं वस्तुद्वयमिदानीं शोच्यत्वं प्राप्तम् । प्रागेव हरशिरोगता मनोहरबहुतरकान्तियुक्ता चन्द्रस्य लोकप्रसिद्धा षोडशभागरूपा कला, इत्येका, द्वितीया—लोकत्रयवासिनो जनस्य नेत्रानन्दकारिणी त्वं चेति भावः ।

**भाषा**—शङ्कर की प्राप्ति कामना से आज दो वस्तु शोचनीय हो गईं । एक तो शङ्कर के मस्तक पर रहने वाली अति सुन्दर चन्द्रमा की कला, और दूसरी तीनों लोक के नेत्र को आनन्द देने वाली तुम पार्वती ।

शोचनीयत्वमेव हेतुभिरुपपादयति—

**वपुर्विरूपाऽक्षमलक्ष्यजन्मता, दिगम्बरत्वेन निवेदितं वसु ।**
**वरेषु यद् बालमृगाऽक्षि ! मृग्यते, तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥**

**तन है विरूप नयन तथा कुल जन्म भी उत्तम नहीं ।**
**करती प्रगट धन नग्नता इस तरह वर होता कहीं ॥**

**अन्वयः**—वपुः विरूपाऽक्षम्, अलक्ष्यजन्मता, वसु दिगम्बरत्वेन निवेदितम् । हे बालमृगाऽक्षि । वरेषु यत् मृग्यते तत् त्रिलोचने व्यस्तम् अपि अस्ति किम् ?

**व्याख्या**—वपुः=शरीर, विरूपाऽक्षं = विकृतरूपनेत्रम् त्रिनेत्रकृताधिकाङ्गविरूपमित्यर्थः । अलक्ष्यजन्मता = अज्ञातजननत्व, कुलमपि न ज्ञायत इत्यर्थः । "अलक्षिता जनिः" इति पाठे जनिरुत्पत्तिः अलक्षिता न ज्ञाता" इति । वसु=धन दिगम्बरत्वेन=नग्नत्वेन, निवेदितं=सूचितम्, नाऽस्तीति ज्ञापितमित्यर्थः । हे बालमृगाऽक्षि=हे बालहरिणाऽक्षि, हे पार्वतीत्यर्थः । वरेषु = बोढृषु, यत् = रूपवित्तादिकं, मृग्यते = अन्विष्यते, वधूभिस्तद्बन्धुभिश्चेति शेषः । तत्, त्रिलोचने = हरे, व्यस्तम् अपि=एवम् अपि, अस्ति किम् = विद्यते किम् ? नाऽस्त्येवेत्यर्थः ।

**व्युत्पत्तिः**—विरूपाऽक्षं = विकृतं रूपं येषा तानि विरूपाणि, तानि अक्षीणि यस्य तत् विरूपाक्षं, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्प्रत्ययः । वपुषो

विरूपाऽक्षत्वात् न सौन्दर्यवार्ताऽपीत्यर्थः । अलक्ष्यजन्मता = लक्षितुं योग्यं लक्ष्यं, न लक्ष्यम् अलक्ष्यं, तत् जन्म यस्य स अलक्ष्यजन्मा, तस्य भावः अलक्ष्यजन्मता । दिगम्बरत्वेन = दिगेव अम्बरं यस्य स दिगम्बरं तस्य भावः दिगम्बरत्वं, तेन दिगम्बरत्वेन । हे बलामृगाऽक्षि=बालश्चाऽसौ मृगः बालमृगः, तस्य अक्षिणी इव अक्षिणी यस्याः सा बालमृगाऽक्षी, तत्सम्बुद्धौ हे बालमृगाक्षि, षच्प्रत्ययः, षित्वात्स्त्रीत्वविवक्षाया ङीष् । "मृगे कुरङ्गवातायुहरिणाऽजिनयोनयः" इत्यमरः । वरेषु="वरो जामातृवोढारौ" इति विश्वः । मृग्यते="मृग अन्वेषणे" इति धातोः कर्मणि लट् । त्रिलोचने=त्रीणि लोचनानि यस्य स त्रिलोचनः, तस्मिन् त्रिलोचने । तथा चोक्तं विवाहप्रकरणे वरविचारे—

"कन्या कामयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥" इति ।

**भावार्थः**—शरीरं तावदस्य विकृतलोचनम्, अस्योत्पत्तिरप्यज्ञाता, दिगम्बरत्वमेवास्य वित्तं निवेदयतीति सौन्दर्याभिजात्यमहालक्षणलक्षितत्वादीनि यानि गुणजातानि वधूभिस्तद्बन्धुभिश्च विवाहसमयात् प्रागेवान्विष्यते, तेष्वेकमपि शङ्करे विद्यते किम् । नास्त्येवेति भावः ।

**भाषा**—यह शिव विकृत लोचन है । जन्म का भी कोई ठिकाना नहीं है । और दिगम्बर है; इसी से इस की सम्पत्ति का पता चलता है । रूप अथवा गुण जो कि वर के विषय में वधू के सम्बन्धी लोग खोजते हैं, उन में से कोई भी इस शङ्कर में नहीं है ।

अथ कर्तव्यमुपदिश्य वचनमुपसंहरति—

**निवर्तयाऽस्मादसदीप्सितान्मनः, क तद्विधस्त्वं क च पुण्यलक्षणा ।**
**अपेक्ष्यते साधुजनेन वैदिकी, श्मशानशूलस्य न यूपसत्क्रिया ॥ ७३ ॥**

उससे हटा लो मन कहाँ शिव पुण्य चिन्हा तुम कहाँ ।
बुध यूप का संस्कार मरघट शूल में करते कहाँ ॥

**अन्वयः**—अस्मात् असदीप्सितात् मनः निवर्तय । तद्विधः क ? पुण्यलक्षणा त्वं च क ? साधुजनेन श्मशानशूलस्य वैदिकी यूपसत्क्रिया न अपेक्ष्यते ।

**व्याख्या**—अस्मात्=एतस्मात्, असदीप्सितात्=अनिष्टमनोरथात्, मनः=चित्त, निवर्तय = निवारय । तद्विधः = तादृशो हरः, पूर्वोक्तसकलदोषाधिष्ठानभूतः इत्यर्थः, क=कुत्र, पुण्यलक्षणा=प्रशस्तभाग्यचिह्ना, सामुद्रिकोक्तसकलवधूल-

त्तणपरिपूर्णेत्यर्थः । त्वं च=भवती च, क्क=कुत्र । युवयोर्महानेव विशेष इत्यर्थः । साधुजनेन = सज्जनेन, श्मशानशूलस्य=पितृवनशङ्कोः, वधारोपणशूलस्येत्यर्थः । वैदिकी = वेदोक्ता, यूपसत्क्रिया = यूपसंस्कारः, न अपेक्ष्यते = न इष्यते ।

**व्युत्पत्तिः**—असदीप्सितात् = न सत् असत् = अकुशलोदर्क, तच्च तत् ईप्सितम् असदीप्सितं, तस्मात् असदीप्सितात् । तद्विधः=सा = पूर्वोक्ता, विधा प्रकारः, यस्य स तद्विधः । "विधा विधौ प्रकारे च" इत्यमरः । पुण्यलक्षणा = पुण्यानि लक्षणानि यस्याः सा पुण्यलक्षणा । "स्याद्धर्ममस्त्रिया पुण्यश्रेयसी सुकृत वृषः" इत्यमरः । साधुजनेन = साधुश्चासौ जनः साधुजनः, तेन साधुजनेन । "साधुर्वार्धुषिके चारौ सज्जने चाऽभिधेयवत्" इति विश्वः । श्मशानशूलस्य=श्मशानस्य शूलं श्मशानशूलं, तस्य श्मशानशूलस्य । "श्मशानं स्यात्पितृवनम्" इत्यमरः । वैदिकी = वेदे भवा वैदिकी, भवार्थे ठञ् । "श्रुतिः स्त्री वेद आम्नायस्त्रयी" इत्यमरः । यूपसत्क्रिया = सती चाऽसौ क्रिया सत्क्रिया, यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषः । तस्य सत्क्रिया = प्रोक्षणाऽभ्युक्षणादिसंस्कारः । अत्र सादृश्यनिमित्ताऽप्रस्तुतप्रशंसालङ्कारः ।

**भावार्थः**—अतस्त्वं हरप्राप्तिरूपादनिष्टमनोरथात् आत्मनो मनो निवारय । पूर्वोक्तसकलदोषाधिष्ठानभूतः स हरः क्क, सामुद्रिकोक्तसकलवधूलक्षणपरिपूर्णा त्वञ्च क्क, यथा वैदिकत्वादलौकिकी यूपसत्क्रिया विशिष्टयज्ञोपयोगयोग्ययूपयोग्या, न वध्यारोपणशूलयोग्या, तथा पुण्यलक्षणत्वान्महाभाग्यगुणयोगिनी त्वमपि स्वर्गादिभोगयोग्यतादृशगुणविशिष्टपुरुषयोग्यैव, न श्मशानाश्रयहरयोग्येति भावः ।

**भाषा**—अतः तुम हरप्राप्ति की इच्छा को छोड़ो । पूर्वोक्त दोषावली से युक्त हर कहा, और सर्वथा सुलक्षण युक्ता स्त्री तुम कहा ? जैसे वेदोक्त यज्ञीय यूप संस्कार श्मशान शूल का नहीं हो सकता । वैसा ही तुम जैसी सौभाग्य शालिनी स्त्री का संयोग श्मशानवासी शङ्कर से नहीं होना चाहिये ।

इत्थमपरमार्थब्रह्मचारिणा सपरिहासमभिहितायाः पार्वत्याः वृत्तान्तमाह—

**इति द्विजातौ प्रतिकूलवादिनि, प्रवेपमानाऽधरलक्ष्यकोपया ।**
**विकुञ्चितभ्रूलतमाहिते तया, विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥**

प्रति कूल द्विज-को लख अधर कँपने लगा दुखमय हिया ।
निज अरुण दृग को क्रोध से भ्रू भङ्ग मय तिरछा किया ॥

**अन्वयः**—इति द्विजातौ प्रतिकूलवादिनि सति प्रवेपमानाऽधरलक्ष्यकोपया

तया उपान्तलोहिते विलोचने विकुञ्चितभ्रूलतं यथा तथा तिर्यक् आहिते ।

**व्याख्या**—इति = इत्थं, द्विजातौ = द्विजे, ब्रह्मचारिणीत्यर्थः । प्रतिकूलवादिनि=अप्रियभाषिणि सति, प्रवेपमानाऽधरलक्ष्यकोपया=चञ्चलोष्ठाऽनुमेयक्रोधया, तया=पार्वत्या, उपान्तलोहिते=प्रान्तरक्ते, विलोचने = नेत्रे, विकुञ्चितभ्रूलतं = कुटिलितभ्रूलतं यथा तथा, सभ्रूभङ्गमित्यर्थः । तिर्यक्=साचि, आहिते=निहिते ।

**व्युत्पत्तिः**—द्विजातौ=द्वे जाती यस्य स द्विजाति, तस्मिन् द्विजातौ, "जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते" इति स्मरणात् । प्रतिकूलवादिनि = प्रतिकूलं वदतीति प्रतिकूलवादी, तस्मिन् प्रतिकूलवादिनि, णिनिप्रत्ययः । प्रवेपमानाऽधरलक्ष्यकोपया=प्रवेपते इति प्रवेपमानः, "टुवेपृ कम्पने" इति धातोः शानच् । "आने मुक्" इति मुगागमः । प्रवेपमानश्चाऽसौ अधरः प्रवेपमानाऽधरः, तेन लक्ष्यः प्रवेपमानाऽधरलक्ष्यः, स कोपः यस्याः सा प्रवेपमानाऽधरलक्ष्यकोपा, तया प्रवेपमानाधरलक्ष्यकोपया, "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । उपान्तलोहिते = उपान्तयोः लोहिते उपान्तलोहिते । विकुञ्चितभ्रूलतं=भ्रुवौ एव लते भ्रूलते, विशेषेण कुञ्चिते विकुञ्चिते, ते भ्रूलते यस्मिन् कर्मणि तद्यथा तथा, विकुञ्चितभ्रूलतम् ।

**भावार्थः**—इत्थं ब्राह्मणे स्वप्रतिकूलवचने सति कम्पमानाधरोष्ठलक्ष्यक्रोधया पार्वत्या कोपवशादपाङ्गरक्ते स्वस्य नयने तन्मुखादनादरेण निवर्त्य सभ्रूभङ्गं यथास्यात्तथा तिर्यक्प्रसारितकनीनिके अकारिषातामिति भावः ।

**भाषा**—इस प्रकार ब्राह्मण का प्रतिकूल वचन सुन कर पार्वती का क्रोध से अधरोष्ठ कापने लगा । और वह आखे लाल कर घृणा तथा क्रोध के कारण वक्र दृष्टि से उस को अनादर पूर्वक देखने लगी ।

अथ पार्वत्याः प्रतिवचनप्रस्तावमाह—

**उवाच चैनं परमाऽर्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।**
**अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ७५ ॥**

बोली उमा है जानते शिव को न ईर्ष्या से जरें ।
जड साधु के दुर्बोध हेतुक चरित की निन्दा करें ॥

**अन्वयः**—अथ एनम् उवाच च । त्वं परमाऽर्थतः हरं न वेत्सि नूनं । यतः माम् एवम् आत्थ । मन्दाः अलोकसामान्यम् अचिन्त्यहेतुक महात्मनां चरित द्विषन्ति ।

**व्याख्या**—अथ = अनन्तरम्, एनं=ब्रह्मचारिणम्, उवाच च=अब्रवीच्च । त्वं, परमाऽर्थतः = तत्त्वतः, हरं=शङ्कर, न वेत्सि=न जानासि, नूनं = निश्चयेन । यतः = यस्माद्धेतोः, मा = पार्वतीम्, एवम् = इत्थम्, आत्थ = ब्रवीषि । मन्दाः=मूढाः, अलोकसामान्यम् = अनितरजनसाधारणम्, अचिन्त्यहेतुकम् = दुर्बोधकारणकं, महात्मना = महाऽनुभावाना, चरितं = चरित्रं, द्विषन्ति = दूषयन्ति ।

**व्युत्पत्तिः**—परमाऽर्थतः = परमश्चाऽसौ अर्थः परमाऽर्थः, तस्मात् परमाऽर्थतः, पञ्चम्यर्थे सार्वविभक्तिकस्तसिः । "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" इत्यमरः । आत्थ="ब्रुवः पञ्चानामादित आहो ब्रुवः" इति "आहस्थः" इति च सूत्राभ्या रूपसिद्धिः । मन्दाः="मूढाऽल्पाऽपटुनिर्भाग्या मन्दाः" इत्यमरः । अलोकसामान्यं = लोकेषु सामान्य लोकसामान्यं, "लोकस्तु भुवने जने" इत्यमरः । न लोकसामान्यम् अलोकसामान्यं तत् । अचिन्त्यहेतुकं=चिन्तयितुं शक्यः चिन्त्यः, न चिन्त्यः अचिन्त्यः, स हेतुर्यस्य तत् अचिन्त्यहेतुक, तत, समासाऽन्तः कप् । "हेतुर्ना कारणं बीजम्" इत्यमरः । महात्मना=महान् आत्मा येषा ते महात्मानः, तेषा महात्मना, द्विषन्ति = "द्विष अप्रीतौ" इति धातोर्लट् ।

**भावार्थः**—एनं ब्रह्मचारिणं जगाद च, त्व महेश्वरं तत्वतो न जानासि नूनं, यतो मामुक्तरीत्या तत्स्वरूपं ब्रवीषि । परमार्थज्ञानहीना मूढा अवाङ्मनसगोचरं महानुभावाना चरित्रम् "अशक्तास्तत्पदं गन्तुं निन्दा चैव प्रकुर्वते" इति न्यायेन निन्दन्तीति भावः ।

**भाषा**—और उससे बोली, तुम महेश को भली भाति नहीं जानते हो । नहीं तो तुम उन के विषय में मुझ से वैसा न बोलते । परमार्थ ज्ञान हीन मूर्ख लोग ही अवाङ्मनस गोचर महानुभावों के चरित्र पर आक्षेप करते हैं ।

सम्प्रति "अमङ्गलाऽभ्यासरतिम् ५।६५" इत्याद्युक्तं दूषणसमूहं परिहर्तुमारभते

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहताऽऽत्मवृत्तिभिः॥७६॥**

करणार्थ दुख को दूर उत्सुक विभव के मङ्गल करें ।
पालन प्रवीण निरीह तृष्णा रहित क्यों मङ्गल करें ॥

**अन्वयः**—विपत्प्रतीकारपरेण भूतिसमुत्सुकेन वा मङ्गलं निषेव्यते । जगच्छरण्यस्य निराशिषः सतः आशोपहताऽऽत्मवृत्तिभिः एभिः किम् प्रयोजनम् ? ।

**व्याख्या**—विपत्प्रतीकारपरेण=आपत्परिहाराऽर्थिना, भूतिसमुत्सुकेन वा=ऐश्वर्यकामेन वा, मङ्गल=कल्याणजनकं वस्तु, निषेव्यते=सेव्यते। जगच्छरण्यस्य=लोकशरणसाधोः, निराशिषः=निरभिलाषस्य, सत.=सत्पुरुषस्य, हरस्येत्यर्थः। आशोपहतात्मवृत्तिभिः=तृष्णादूषिताऽन्तःकरणवृत्तिभिः, एभिः=मङ्गलैः, किं प्रयोजनम्?=न किमपीत्यर्थः।

**व्युत्पत्तिः**—विपत्प्रतीकारपरेण=प्रतीकरणं प्रतीकारः, "अकर्तरि च कारके संज्ञायाम्" इति घञ्प्रत्ययः। "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः। विपदः प्रतीकारः विपत्प्रतीकारः, तस्मिन् परः=तत्परः, इति विपत्प्रतीकारपरः, तेन विपत्प्रतीकारपरेण। "विपत्त्या विपदापदौ" इत्यमरः। भूतिसमुत्सुकेन=भूतौ समुत्सुकः भूतिसमुत्सुकः, तेन भूतिसमुत्सुकेन। जगच्छरण्यस्य=शरणे=रक्षणे, साधुः शरण्यः, "तत्र साधुः" इति यत्प्रत्ययः। "शरणं गृहरक्षित्रोः" इत्यमरः। जगतः शरण्यः जगच्छरण्यः तस्य जगच्छरण्यस्य। निराशिषः=निर्गतः आशीर्यस्मात्स निराशीः, तस्य निराशिषः। "आशीरुरगदंष्ट्रायां विप्रवाक्याऽभिलाषयोः" इति शाश्वतः। सतः=अस्तीति सन्, तस्य सतः, आशोपहतात्मवृत्तिभिः=आशया उपहता आशोपहता। आत्मनः वृत्तिः आत्मवृत्तिः। आशोपहता आत्मवृत्तिः येषां तानि आशोपहतात्मवृत्तीनि, तैः आशोपहतात्मवृत्तिभिः। पूर्वं "मङ्गलम्" इत्येकवचनस्य जात्यभिप्रायत्वात् "एभिः" इति बहुवचनेन परामर्शो न विरुध्यते।

**भावार्थः**—अनर्थपरिहारार्थिना, महदैश्वर्यकामेन वा जनेन गन्धमाल्यादिकं मङ्गलं निषेव्यते। लोकत्रयरक्षकस्य निरभिलाषस्य च तृष्णादूषितान्तःकरणवृत्तिभिरेभिर्मङ्गलैः किम्प्रयोजनम्। न किमपीति भावः।

**भाषा**—अमङ्गल दूर करने के हेतु, अथवा ऐश्वर्य की वासना से ही मनुष्य गन्धादि माङ्गलिक पदार्थों का सेवन करता है; परन्तु लोकत्रय रक्षक कामना वासना रहित शङ्कर के लिये उन सब वस्तुओं से क्या प्रयोजन है?

अथ ममेश्वरस्यापरिच्छेद्यत्वप्रतिपादनेनावस्तुनिर्बन्धपरत्वमात्मनः परिहरति—

**अकिञ्चनः सम्प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः।**
**स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥**

धन हीन शिव धन हेतु मरघट वास जग पति हैं वहीं।
याथार्थ्यविद् कोई न है वे भीम, शिव भी, है वहीं॥

**अन्वयः**—स अकिञ्चनः सन् सम्पदा प्रभवः, पितृसद्मगोचरः सन् त्रिलोकनाथः, भीमरूपः सन् शिवः, इति उदीर्यते । अतः पिनाकिनः याथार्थ्यविदः न सन्ति ।

**व्याख्या**—सः=हरः, अकिञ्चनः सन्=दरिद्रो भवन्, सम्पदा=सम्पत्तीना, प्रभवः=कारणं, पितृसद्मगोचरः सन्=श्मशानाऽऽश्रयो भवन्, त्रिलोकनाथः=लोकत्रयपतिः, भीमरूपः सन्=भयङ्कराकारो भवन्, शिवः=सौम्यरूपः, इति उदीर्यते=इत्युच्यते । अतः=अस्मात्कारणात्, पिनाकिनः=हरस्य, याथार्थ्यविदः=तत्ववेत्तारः, न सन्ति=न विद्यन्ते ।

**व्युत्पत्तिः**—अकिञ्चनः=नाऽस्ति किञ्चन यस्य सः अकिञ्चनः "मयूरव्यंसकादयश्च" इति समासः । सम्पदा="सम्पदादिभ्यश्च" इति क्विप् । "अथ सम्पदि । सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः । प्रभवः=प्रभवति अस्मादिति प्रभवः, "ऋदोरप्" इति अप्प्रत्ययः । पितृसद्मगोचरः=पितृणां सद्म पितृसद्म, तत् गोचरः=आश्रयः, यस्य स पितृसद्मगोचरः । त्रिलोकनाथः=त्रयाणां लोकाना नाथः त्रिलोकनाथः, "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः । भीमरूपः=भीमं रूपं यस्य स भीमरूपः, "दारुणं भीषणं भीष्मं भीमं घोरं भयानकम्" इत्यमरः । पिनाकिनः=पिनाकः अस्याऽस्तीति पिनाकी, तस्य पिनाकिनः । याथार्थ्यविदः=यथाभूतः अर्थः यथार्थः, "सुप्सुपा" इति समासः, यथार्थस्य भावः याथार्थ्यं, तत् विदन्तीन्ति याथार्थ्यविदः ।

**भावार्थः**—स हरः दरिद्रः सन्नपि महदैश्वर्याणामुद्भवस्थानमस्तीति, श्मशाननिलयः सन्नपि त्रयाणा लोकाना नाथःइति, भयङ्कराकारः सन्नपि शान्तस्वरूप इति च पुराणेषु गीयते । त्रैलोक्ये कः पुमान् महेश्वर वस्तुत्वावस्तुत्वाभ्या परिच्छेत्तु समर्थोऽस्ति । न कोऽपीति भावः ।

**भाषा**—हर दरिद्र होने पर भी महान् ऐश्वर्य के उत्पादक है। श्मशानवासी होते हुए भी त्रिलोकनाथ है । भयानक आकृति होने पर भी शान्त स्वरूप है । इस प्रकार पुराण उनके विषय में कहता है । शङ्कर के वास्तविक स्वरूप को जानने वाला तीनों लोक में कोई नही है ।

महादेवस्य लौकिकमलौकिकं च प्रसाधनं नाऽस्तीत्याशयेनाह—

**विभूषणोद्भासि पिनद्धभोगि वा गजाऽजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥ ७८ ॥**

भूषण भुजग, पट गज, अजिन धारी, कपाली हों तथा ।
हो शशि शिरो भूषण, न कोई जानता वे हैं यथा ॥

**अन्वयः**—विश्वमूर्तेः वपुः विभूषणोद्भासि पिनद्धभोगि वा, गजाऽजिनाऽऽलम्बि दुकूलधारि वा, कपालि वा अथवा इन्दुशेखरं स्यात्, इति न अवधार्यते ।

**व्याख्या**—विश्वमूर्तेः = त्रैलोक्यात्मकस्य, शिवस्येत्यर्थः । वपुः = शरीर, विभूषणोद्भासि = अलङ्कारद्योति, स्यादिति शेषः, एवं सर्वत्र बोध्यम् । पिनद्धभोगि वा=बद्धभुजङ्गमं वा, गजाऽजिनालम्बि=हस्तिचर्मालम्बि, दुकूलधारी वा=क्षौमधारक वा, कपालि वा=कपालयुक्तं वा, अथ वा=यद्वा, इन्दुशेखर स्यात्=चन्द्रमुकुटं भवेत्, इति, न अवधार्यते=न निर्धार्यते । ईदृक्तया निश्चेतुं न पार्यते इत्यर्थः ।

**व्युत्पत्तिः**—विश्वमूर्तेः = विश्वं मूर्तिर्यस्य स विश्वमूर्तिः, तस्य विश्वमूर्तेः । अनेन प्रपञ्चस्य परमेश्वरविवर्तत्वमुक्तम् । विभूषणोद्भासि = विशिष्टानि भूषणानि विभूषणानि, "कुगतिप्रादयः" इति गतिसमासः । विभूषणैः उद्भासते तच्छीलं विभूषणोद्भासि, "भासृ दीप्तौ" इति धातोः णिनिप्रत्ययः । पिनद्धभोगि = भोगः अस्याऽस्तीति भोगी, "अहेः शरीरं भोगः स्यात्" इति, "उरगः पन्नगो भोगी जिह्मगः पवनाऽशनः" इति चामरः । पिनद्धः भोगी यस्मिन् तत् पिनद्धभोगि, "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यकारलोपः । पिनद्धेति अपिपूर्वकात् "णह बन्धने" इति धातोः कर्मणि क्तप्रत्ययः । गजाजिनालम्बि=गजस्य अजिनं गजाजिनं, तत् आलम्बते तच्छील गजाजिनालम्बि । दुकूलधारि=दुकूलं धारयतीति दुकूलधारि । कपालि = कपालम् अस्याऽस्तीति कपालि, इनिप्रत्ययः । "स्यात्कर्परः कपालोऽस्त्री" इत्यमरः । इन्दुशेखरम्=इन्दुः शेखरः यस्य तत् इन्दुशेखरम् ।

**भावार्थः**—त्रैलोक्यात्मकस्याष्टमूर्तेः शरीरं कटकमुकुटादिभिरलङ्कारैरूपशोभितमथवा सर्पवेष्टितम्, अलौकिकेन गजचर्मणाऽलङ्कृतमहोस्वित् लौकिकेन दुकूलेनाऽलङ्कृत, ब्रह्मशिरःकपालधारि चन्द्रशेखरं वेति, केनापि निश्चेतुं न शक्यत इति भावः ।

**भाषा**—त्रैलोक्यात्मकअष्टमूर्त्ति शिव का शरीर सर्प से वेष्टित है, या अलङ्कारों से भूषित है, उनका परिधान, गजचर्म है, या दूकूल है, वह ब्रह्मशिरः कपालधारी है, या चन्द्रशेखर है, यह कोई नहीं जान सकता ।

"अयुक्तरूपं किमतः परं वद ५।६६" इति श्लोकोक्तं परिहरति—

**तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।**

**तथाहि नृत्याऽभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥**

पा सग शिव का चिता का पूत रज होता सदा ।
नृत्यान्त पतित सु-भस्म सुर शिर से लगाते सर्वदा ॥

**अन्वय.**—तदङ्गसंसर्गम् अवाप्य चिताभस्मरजः विशुद्धये कल्पते ध्रुवं, तथा हि—नृत्याऽभिनयक्रियाच्युतं तत् अम्बरौकसा मौलिभिः विलिप्यते ।

**व्याख्या**—तदङ्गसंसर्गम्=शिवशरीरसम्पर्कम् , अवाप्य=प्राप्य, चिताभस्म-रजः = चितिभसितधूलिः, विशुद्धये=विशुद्धयै, कल्पते=अलं पर्याप्नोति, ध्रुव = निश्चयेन । तथा हि=प्रसिद्धम् एव, नृत्याऽभिनयक्रियाच्युतं=ताण्डवाभिनयकर्म पतितं, तत् = चिताभस्मरज इति शेषः, अम्बरौकसा=दिवौकसा, देवानामित्यर्थः । मौलिभिः = शिरोभिः, विलिप्यते = ध्रियते ।

**व्युत्पत्तिः**—तदङ्गसंसर्गम्=तस्य=शिवस्य, अङ्ग = शरीरं, तदङ्गं, तस्य संसर्गः तदङ्गसंसर्गः, त तदङ्गसंसर्गम् । चिताभस्मरजः=चितायाा भस्म चिताभस्म, तदेव रजः चिताभस्मरजः । विशुद्धये=विशिष्टा शुद्धिः विशुद्धिः, तस्यै विशुद्धये, "कल्पते" इति अलमर्थयोगात् "नमः स्वस्तिस्वाहास्वधाऽलवषड्योगाच्च" इति चतुर्थी । नृत्याऽभिनयक्रियाच्युतं=नृत्ये = ताण्डवे, अभिनयः = अर्थव्यञ्जकचेष्टा-विशेषः, नृत्याऽभिनयः, "ताण्डवं नटनं नाट्य लास्य नृत्यं च नर्तने" इत्यमरः । नृत्याऽभिनय एव क्रिया नृत्याऽभिनयक्रिया, तया च्युत नृत्याभिनयक्रिया च्युतम् । अम्बरौकसाम् = अम्बरम् एव ओकः येषा ते अम्बरौकसः, तेषाम् अम्बरौकसाम् ।

**भावार्थः**—चिताभस्मकणोऽपि महेश्वरशरीरसम्बन्धं सम्प्राप्य निश्चयेन शुद्धिकरं भवति । यतो नर्तनाभिनयव्यापारपतित तत् चिताभस्मरजो देवाना शिरोभिर्धार्यते । यदि चिताभस्मरजः परमेश्वरशरीरस्पर्शलाभात् पावन नाऽभवि-ष्यत् , तर्हि तस्य नृत्तसमये पतितमेतदमराः शिरोभिर्नाऽहरिष्यन्निति भावः ।

**भाषा**—चिताभस्म भी महेश के शरीर स्पर्श से दूसरे को शुद्ध करने वाला हो जाता है । क्यों कि उनके ताण्डव नर्त्तन के समय शरीर से पतित उस चिता भस्म को श्रद्धा के साथ देवता लोग अपने मस्तकपर धारण करते हैं ।

यदुक्तं "दिगम्बरत्वेन निवेदितं वसु (५।७२)" इय च तेऽन्या पुरतो विड-म्बना (५।७०)" इत्यादि च, तत्रोत्तरमाह—

**असम्पदस्तस्य वृषेण गच्छतः, प्रभिन्नदिग्वारणवाहनो वृषा ।**

**करोति पादावुपगम्य मौलिना, विनिद्रमन्दाररजोऽरुणाऽङ्गुली ॥ ८० ॥**

ऐरावतारोही वृषारोही-चरण पर गिर सदा ।
विकसित कल्प तरु के कुसुम से लाल करते सर्वदा ॥

**अन्वयः**—प्रभिन्नदिग्वारणवाहनः वृषा असम्पद. वृषेण गच्छतः तस्य पादौ मौलिना उपगम्य विनिद्रमन्दाररजोऽरुणाऽङ्गुली करोति ।

**व्याख्या**—प्रभिन्नदिग्वारणवाहनः=मदस्राविदिग्गजयानः, ऐरावतेन गच्छन् इत्यर्थः, वृषा = देवेन्द्रः, असम्पदः = सम्पद्रहितस्य, दरिद्रस्येत्यर्थः । वृषेण=वृषभेण, गच्छतः = गमनकर्तुः, वृषभारूढस्येत्यर्थः । तस्य=महेश्वरस्य, पादौ=चरणौ [ कर्म ], मौलिना = मस्तकेन, उपगम्य = प्राप्य, प्रणम्येत्यर्थः । विनिद्रमन्दाररजोऽरुणाऽङ्गुली = विकसितकल्पवृक्षकुसुमपरागरक्ताऽङ्गुली, करोति = विदधाति ।

**व्युत्पत्तिः**—प्रभिन्नदिग्वारणवाहन'=प्रकर्षेण भिन्न' प्रभिन्नः दिशः वारणः दिग्वारणः । प्रभिन्नः = मदस्रावी, दिग्वारणः = ऐरावतः, वाहनं=यानं, यस्य स प्रभिन्नदिग्वारणवाहनः । त्रिपदबहुव्रीहिः । वृषा = "वासवो वृत्रहा वृषा" इत्यमरः । असम्पदः=अविद्यमाना सम्पत् यस्य सः असम्पत् , तस्य असम्पदः, "नञो ऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः । गच्छतः = गच्छतीति गच्छन् , तस्य गच्छतः, शतृप्रत्ययः । विनिद्रमन्दाररजोऽरुणाङ्गुली = मन्दारस्य कुसुमानि मन्दाराणि, विनिद्राणि च तानि मन्दाराणि विनिद्रमन्दाराणि, तेषा रजांसि विनिद्रमन्दाररजांसि, तैः अरुणाः विनिद्रमन्दाररजोऽरुणाः, ताः, अङ्गुलयः ययोस्तौ विनिद्रमन्दाररजोऽरुणाऽङ्गुली, तौ । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तान. कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥" इत्यमरः ।

**भावार्थः**—मदोन्मत्तैरावतवाहनोऽपि देवेन्द्रो दरिद्रस्य वृषभारूढस्य तस्य हरस्य चरणौ किरीटिना मस्तकेन प्रणम्य विकसितकल्पवृक्षकुसुमपरागरक्तवर्णाङ्गुली विदधाति । ततो न वृषवाहनत्व परिहासास्पदमिति भावः ।

**भाषा**—ऐरावतवाहन इन्द्र भी उस वृषभारूढ़ हर के चरण पर अपने सकिरीट मस्तक को अवनत करता है, तथा कल्पवृक्ष के पुष्परज से हरके चरणोको सर्वदा रञ्जित करता है ।

एवञ्च त्वदुक्तं सर्वमसमीचीनम्, किञ्चित्तु घूणाक्षरन्यायेन समीचीनमापतितमित्याह—

**विवक्षता दोषमपि च्युतात्मना, त्वयैकमीशं प्रति साधु भाषितम् ।**
**यमामनन्त्यात्मभुवोऽपि कारणं, कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥**

दूषण बताने में मुझे दी एक बात भली बता।
जो ब्रह्म का भी हेतु उसके जन्म कुल का क्या पता॥

**अन्वयः**—च्युतात्मना दोष विवक्षता अपि त्वया ईशं प्रति एकं साधु भाषितम्। यम् आत्मभुवः अपि कारणम् आमनन्ति, स कथं लक्ष्यप्रभवः भविष्यति।

**व्याख्या**—च्युतात्मना=नष्टस्वभावेन, अत एव, दोषं=दूषणं, विवक्षता अपि=वक्तुम् इच्छता अपि, त्वया=भवता, ईशं प्रति=हरंप्रति, एकम्=वस्तु, "अलक्ष्यजन्मता" इत्येतत् वचनमित्यर्थः। साधु=समीचीनं, भाषितम्=उक्तं, कुतः, यम्=महेश्वरम्, आत्मभुवः अपि=ब्रह्मणः अपि, कारणं=निदानम्, आमनन्ति=उदाहरन्ति। श्रुतयः इति शेषः। सः=ईश्वरः, कथं=केन प्रकारेण, लक्ष्यप्रभवः=लक्ष्यजन्मा, भविष्यति=भविता। न कथमपीत्यर्थः।

**व्युत्पत्तिः**—च्युतात्मना=च्युतः आत्मा यस्य स च्युतात्मा, तेन च्युतात्मना, "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः। विवक्षता=वक्तुम् इच्छन् विवक्षन्, तेन विवक्षता, आत्मभुवः=आत्मनैव भवतीति आत्मभूः, तस्य आत्मभुवः, "ब्रह्माऽऽत्मभूः सुरज्येष्ठः" इत्यमरः। कारणं= "हेतुर्ना कारणं बीजं निदानम्" इत्यमरः। लक्ष्यप्रभवः=लक्ष्यः प्रभवः यस्य सः लक्ष्यप्रभवः।

**भावार्थः**—केवलं दोषमेव वक्तुमिच्छताऽपि नष्टस्वभावेन त्वया परमेश्वरमुद्दिश्यैकं वस्तु सम्यगुक्तम्। वेदाः यं महेश्वरं ब्रह्मणोऽपि स्रष्टारं वदन्ति, स परमेश्वरः लक्ष्यजन्मा कथं भविष्यति। न कथमपीति भावः।

**भाषा**—केवल दोष दर्शन बुद्धि से प्रेरित होकर दुश्चरित्र तुमने जो कुछ हर के विषय मे कहा, उस में भी एक वाक्य तुमने ठीक ही कहा। वेद जिस महेश्वर को ब्रह्मा का भी सृष्टिकर्त्ता कह कर घोषणा करता है, उस महेश्वर की उत्पत्ति कैसे मालूम हो सकती है।

अथ पुनरपि ब्रह्मचारिणो वचनोद्योगमाशङ्क्य तद्वचनस्य द्वारमेवावृणोति—

**अलं विवादेन यथा श्रुतस्त्वया, तथाविधस्तावदशेषमस्तु सः**
**ममाऽत्र भावैकरसं मनः स्थितं, न कामवृत्तिर्वचनीयमीक्षते॥ ८२॥**

बस कीजिये जैसा सुना हो ठीक पर मम मन वहीं।
जो काम वृत्ति उन्हें तनिक परवाह निन्दा की नहीं॥

**अन्वयः**—अथ वा विवादेन अलं, स त्वया यथा श्रुतः, अशेष तथाविधः

अस्तु, मम मनः अत्र भावैकरसं स्थितं, कामवृत्तिः वचनीय न ईक्षते ।

**व्याख्या**—अथवा = यद्वा, विवादेन = कलहेन, अलं = पर्याप्तम्, सः = ईश्वरः, त्वया = भवता, यथा=येन प्रकारेण, श्रुतः = आकर्णितः, अशेषं = कार्त्स्न्येन, तथाविधः=तादृशः, अस्तु = भवतु । मम = मदीयं, मनः = चित्तम्, अत्र = महेश्वरे, भावैकरसम् = अभिलाषैकपक्षपाति, हरविषयाभिलाषमात्रतत्परमित्यर्थः । स्थित = वृत्त । तथा हि, कामवृत्तिः = स्वेच्छाव्यवहारः, वचनीयं=निन्दाम्, अस्थानप्रसङ्गाऽपवादमित्यर्थः । न ईक्षते = न विचारयति । न हि स्वेच्छासञ्चारिणो लोकाऽपवादाद् बिभ्यन्तीत्यर्थः ।

**व्युत्पत्तिः**—विवादेन=विरुद्धो वादः विवादः, "कुगतिप्रादयः" इति समासः । "विवादो व्यवहारः स्यात्" इत्यमरः । अशेषं=यथा तथा क्रियाविशेषणम् । "विश्वमशेष कृत्स्नं समस्तनिखिलाऽखिलानि निःशेषम्" इत्यमर. । तथाविधः= तथा विधा यस्य स तथाविधः । अत्र = अस्मिन्निति अत्र, त्रल्प्रत्ययः । भावैकरसं = भावः = अभिलाषः, तत्र एकः रसः = पक्षः, यस्य तत् भावैकरसं, कामवृत्तिः = कामस्य वृत्तिः कामवृत्तिः ।

**भावार्थः**—अथवा कलहेनालम् । स हरो भवता येन प्रकारेण श्रुतः, साकल्येन तथाप्रकार एवास्तु । अत्र हरे तद्विषयाभिलाषमात्रतत्पर मे हृदयं निश्चलमस्ति । स्वेच्छाव्यवहारी लोकापवादं न विचारयतीति भावः ।

**भाषा**—अथवा कलह का क्या प्रयोजन है । तुमने जिस प्रकार हर को प्रमाणित किया, यदि हर ऐसा भी हो तो भी मेरा हृदय उन्हीं पर निश्चल है । स्वैरिणी कभी लोकापवाद से नहीं डरती ।

एवं निरस्तस्याऽपि कपटब्रह्मचारिणः पुनरपि वचनोद्योग दृष्ट्वा सखीमाह—

**निवार्यतामालि ! किमप्ययं बटुः, पुनर्विवक्षुः स्फुरितोत्तराऽधरः ।**
**न केवलं यो महतोऽपभाषते, शृणोति तस्मादपि यः स पापभाक् ॥८३॥**

स्फुरितोष्ठ बटु को सखि ! हटा कुछ मत कहे उस से कहो ।
सुजनापवादी हीन श्रोता भी अधिक होता अहो ॥

**अन्वयः**—हे आलि ! स्फुरितोत्तराऽधरः पुनः किमपि विवक्षुः अयं बटुः निवार्यता, तथा हि यः महत अपभाषते न केवलं स एव पापभाक्, अपि तु तस्मात् यः शृणोति, सोऽपि पापभाक् भवति ।

**व्याख्या**—हे आलि = हे सखि !, स्फुरितोत्तराऽधरः = स्फुरणभूयिष्ठोष्ठः,

पुनः = भूयः, किमपि=किञ्चिदपि, विवक्षुः = वक्तुमिच्छुः, अयम्=एषः, बटुः = वाचाटः, तिरस्कारव्यञ्जक पदमेतत् । निवार्यताम्=अपसार्यताम् , आश्रमाद् बहिर्भागे निस्सार्यतामित्यर्थः । तथाहि, यः = पुरुषः, महतः=पूज्याम् , अपभाषते= अपवदति, न केवलं, सः = अपवादकर्त्ता, एव, पापभाक् = पापीयान् , अपि तु तस्मात्—अपभाषमाणात् पुरुषात् , यः = श्रोता, शृणोति=आकर्णयति, सोऽपि= श्रोताऽपि, पापभाक्=पापीयान् , भवतीति शेषः ।

**व्युत्पत्तिः**—आलिः = "आलिः सखी वयस्या च" इत्यमरः । स्फुरितोत्तराधरः=स्फुरितेन उत्तरः इति स्फुरितोत्तरः, सः अधरः = ओष्ठः, यस्य स स्फुरितोत्तराधरः । विवक्षुः=वक्तुमिच्छुः विवक्षुः, सन्नन्तात् "वच परिभाषणे" इति धातोः उप्रत्ययः । पापभाक्=पापं भजतीति पापभाक् , "भजेर्ण्विः" प्रत्ययः ।

मनुरप्येवमाह—

"गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥" इति (२-२००)

वस्तुतस्तु वक्त्रपेक्षया श्रोतुः पापाधिक्यं भवति । कुत इति चेत् , श्रूयताम् । श्रोतरि श्रवणोत्सुके सति वक्ता सविस्तरं वदतीति लोकस्वभावः । नेत्रवक्त्रविकारादिभिः श्रोतुः कोपावगमे सति ततोऽधिकं न वदतीति दुर्जनाना स्वभावः । तस्माच्छ्रोतुरपि पापवचनस्य कारयितृत्वमवश्यं भवत्येवेत्यर्थः ।

**भावार्थः**—हे सखि ! कम्पिताधरोष्ठोऽयं वाचालः किमप्यन्यद्वक्तुमिच्छति, अतो बहिर्निस्सार्यताम् । यो महाजनान् निन्दति न केवलं स एव पापीयान् भवति, अपि तु यस्तस्मात् महाजननिन्दकात् पुरुषात् महाजननिन्दावचनं शृणोति, सोऽपि पापीयान् भवतीति भावः ।

**भाषा**—हे सखि ! इसके ओष्ठपुट स्फुरित देख कर मालूम होता है, कि यह वाचाल फिर भी कुछ कहना चाहता हैं । अतः इसको बाहर निकाल दो । महाजनो का निन्दाकारी ही केवल पापी नहीं होता, अपि तु जो उस निन्दा को सुनता है उसे भी पाप लगता है ।

अथ "गन्तव्यं वा ततोऽन्यतः" इति मनुवचनानुसारिणीं पार्वत्याः परमार्थस्मरणपुरस्सरीं प्रवृत्तिमाह—

**इतो गमिष्याम्यथवेति वादिनी, चचाल बाला स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितः, समाललम्बे वृषराजकेतनः ॥ ८४ ॥**

मैं ही चलूँ कुच-भिन्नवल्कल पार्वती ने चल दिया ।
निज रूप धर वृषराज केतन ने उमा को धर लिया ॥

**अन्वयः**—"अथवा इतः गमिष्यामि" इति वादिनी स्तनभिन्नवल्कला बाला चचाल । वृषराजकेतनश्च स्वरूपम् आस्थाय कृतस्मितः सन् तां समाललम्बे।

**व्याख्या**—अथवा=पक्षान्तरे, इतः=अस्मात् प्रदेशात्, गमिष्यामि=गच्छामि, इति=एवं, वादिनी=वदन्ती, स्तनभिन्नवल्कला=कुचस्रस्तचीरा, स्तनगलितस्तनावरणवल्कलेत्यर्थः । बाला=युवतिः, पार्वतीत्यर्थः । चचाल=चलितवती, त्वरितं गन्तुमारेभे इत्यर्थः । वृषराजकेतनश्च=वृषभध्वजश्च, महेश्वरः इत्यर्थः । स्वरूप=स्वाकारम्, आस्थाय=आश्रित्य, ब्रह्मचारिवेशपरित्यागपूर्वकमात्मनः स्वरूपमवलम्ब्येत्यर्थः । कृतस्मितः=विहितेषद्धास्यः सन्, तां=पार्वतीं, समाललम्बे=जग्राह ।

**व्युत्पत्तिः**—वादिनी=वदतीति वादिनी । स्तनभिन्नवल्कला=भिन्नं वल्कलं यस्याः सा भिन्नवल्कला, स्तनाभ्यां भिन्नवल्कला स्तनभिन्नवल्कला । वृषराजकेतनः=वृषाणां राजा वृषराजः, "राजाऽहःसखिभ्यष्टच्" इति समासान्तष्टच् । वृषराजः केतनं यस्य स वृषराजकेतनः, स्वरूपं=स्वस्य रूपं स्वरूपं, तत्, कृतस्मितः=कृतं स्मितं येन स कृतस्मितः ।

अत्र च शब्देन क्रियायौगपद्यलक्षणः समुच्चयालङ्कारः प्रतिपाद्यते। तथा चोक्तम्—
"गुणौ क्रिये वा युगवत् स्यातां यद्वा गुणक्रिये" इति ।

**भावार्थः**—अथवा महेश्वरपरिवादपरस्याऽस्य बटोः सकाशादहमेव दूरतो गमिष्यामीति वदन्ती गमनसंरम्भवशात् स्तनगलितावरणवल्कला सा पार्वती त्वरितं गन्तुमारेभे । वृषभध्वजो ब्रह्मचारिवेषं परित्यज्यात्मनः स्वरूपमवलम्ब्य मन्दस्मितं कृत्वा तां पार्वतीं जग्राह चेति भावः ।

**भाषा**—अथवा मैं महेश्वर की निन्दा करने वाले इस वाचाल ब्राह्मण के सामने से दूर होजाती हूँ, ऐसा कह कर गमन के वेग से जिस का उत्तरीय वल्कल हट गया ऐसी पार्वती जब जाने लगी, उसी समय महेश्वर ने भी ब्रह्मचारी के वेष को तज कर, अपने स्वाभाविक शङ्कर स्वरूप से मुस्कुराते हुए पार्वती को रोककर पकड़ लिया ।

इत्थमचिन्तितोपनते साक्षादेव दृष्टे मनोरथप्रियतमे महेश्वरे पार्वत्याः वृत्तमाह—

**तं वीक्ष्य वेपथुमती सरसाऽङ्गयष्टि-**

निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराऽऽकुलितेव सिन्धुः
शैलाऽधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

लख शम्भु को कंपने लगी भिगने लगी सिहरी थकी ।
पथ अचल से व्याकुल नदी सम चल सकी न ठहर सकी ॥

**अन्वयः**—तं वीक्ष्य वेपथुमती सरसाऽङ्गयष्टिः निक्षेपणाय उद्धृत पदं तथैव उद्वहन्ती शैलाऽधिराजतनया, मार्गाऽचलव्यतिकराऽऽकुलिता सिन्धुः इव, न ययौ, न तस्थौ ।

**व्याख्या**—तं=महेश्वरं, वीक्ष्य=दृष्ट्वा, वेपथुमती=कम्पवती, सरसाऽङ्गयष्टिः=स्विन्नगात्री, "महादेवदर्शनेन पार्वत्याः सात्त्विकभावोदय उक्तः" । निक्षेपणाय=अन्यत्र विन्यासाय, उद्धृतम्=उत्क्षिप्तं, पद=चरणम् , तथैव=तेनैव प्रकारेण, उद्वहन्ती=धारयन्ती, शैलाऽधिराजतनया=हिमालयात्मजा, पार्वतीत्यर्थः । मार्गाऽचलव्यतिकराऽऽकुलिता=अध्वपर्वतसमाहतिसम्भ्रमिता, सिन्धुरिव=नदीव, न ययौ=न जगाम, प्रियतमावलोकनकौतुकहर्षवशादित्यर्थः । न तस्थौ=न स्थितवती, लज्जयेति शेषः ।

**व्युत्पत्तिः**—वेपथुमती="टुवेपृ कम्पने" इति धातोः "ट्वितोऽथुच्" इति अथुच्प्रत्ययः । वेपथुः अस्या अस्तीति वेपथुमती, मतुप्प्रत्ययः, तदन्तात्स्त्रीत्वविवक्षाया ङीप्प्रत्ययः । सरसाऽङ्गयष्टिः=रसेन सहिता सरसा, अङ्गमेव यष्टिः अङ्गयष्टिः । सरसा अङ्गयष्टिः यस्याः सा सरसाऽङ्गयष्टिः । पदं="पदं व्यवसितत्राणस्थानलक्ष्माऽङ्घ्रिवस्तुषु" इत्यमरः । उद्वहन्ती=उद्वहतीति उद्वहन्ती । शैलाऽधिराजतनया=अधिको राजा अधिराजः, गतिसमासः । शैलानाम् अधिराजः शैलाऽधिराजः, तस्य तनया शैलाऽधिराजतनया, मार्गाऽचलव्यतिकराऽऽकुलिता=मार्गे अचलः मार्गाऽचलः, तस्य व्यतिकरः, मार्गाऽचलव्यतिकरः, तेन आकुलिता मार्गाऽचलव्यतिकराकुलिता । सिन्धुः="देशे नदविशेषेऽब्धौ सिन्धुर्ना सरितिः स्त्रियाम्" इत्यमरः । ययौ="या प्रापणे" इति धातोर्लिट् । "आत औ णलः" इति णल औकारादेशः । तस्थौ="ष्ठा गतिनिवृत्तौ" इति धातोर्लिट् । वसन्ततिलकावृत्तमेतत्। तल्लक्षणं यथा—"उक्ता वसन्ततिलका तभजा जगौ गः ।" इति ।

अत्र प्रकरणे नायिकागताना "विवृण्वती शैलसुतापि भावम्" इत्यनेन दर्शितोदयाना व्रीडाहर्षादीना व्यभिचारिभावाना समुन्मीलनं स्वावसरे कृतम् । "हरस्तु

किञ्चित्परिवृत्तधैर्यः" इत्यादिना दर्शितोदयाना नायकगताना सात्त्विकाना व्यभिचारिणा च भावानाम् "अव्यञ्जितहर्षलक्षणः" इत्यादिना समुन्मीलनं च कृतमिति द्रष्टव्यम् । ततश्च परस्परानुरागनिश्चयोत्तम्भितः परस्परास्थानिबन्धनः सम्भोगशृङ्गारः क्रमादितः परं प्रकर्षपदवीमारोहतीत्यवसेयम् ।

**भावार्थः**—तं महेश्वरं साक्षादेवावलोक्य प्रियतमावलोकनजन्यकौतुकहर्षादिवशात् कम्पवती स्विन्नगात्री प्रदेशान्तरे निधानायोद्धृतमेकं चरणं तथैवोद्वहन्ती सा पर्वतराजपुत्री पार्वती "प्रवाहमार्गेऽनर्कितशैलसम्पर्केण परवशीकृता नदीव" न जगाम, नापि गमनोद्यमात् विरराममेति भावः ।

**भाषा**—पार्वती महेश्वर को साक्षात् देख कर, प्रियतम दर्शन जनित कम्प तथा प्रस्वेद से युक्त होती हुई, आगे रखने के लिये उठाये हुए चरण को उसीप्रकार धारण करती हुई, "प्रवाह मार्ग में यकायक पहाड़ आजाने से रुकी हुई नदी के समान" न तो आगे जा सकी, और न जाने के प्रयत्न को ही छोड़ सकी ।

अथ प्रकृतस्य प्रयोज्योपावर्तनविधेः फलयोगं प्रदर्शयति—

**अद्य प्रभृत्यवनताऽङ्गि ! तवाऽस्मि दासः**
**क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ॥**
**अह्नाय सा नियमजं क्लममुत्ससर्ज**
**क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥**

शिव ने कहा तब दास हूँ तप से खरीदा हूँ गया ।
क्लम तज दिया तप जन्य फल से क्लेश होता है नया ॥

**अन्वयः**—"हे अवनताऽङ्गि अद्य प्रभृति तव तपोभिः क्रीतः दासः अस्मि" इति चन्द्रमौलौ वादिनि सति, सा अह्नाय नियमजं क्लमम् उत्ससर्ज । हि क्लेशः फलेन पुनः नवता विधत्ते ।

**व्याख्या**—हे अवनताऽङ्गि=हे पार्वति !, अद्यप्रभृति=अस्माद्दिनात् आरभ्य, तव=ते, तपोभिः=नियमैः, क्रीतः=स्वायत्तीकृतः, दासः=सेवकः, अस्मि, इति=इत्थ, चन्द्रमौलौ=शिवे, वादिनि=वदति सति, सा=पार्वती, अह्नाय=सपदि, नियमज=तपोजन्यं, क्लमं=क्लेशम्, उत्ससर्ज=तत्याज । फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः । हि=यस्मात्कारणात्, क्लेशः=दुःखं, फलेन=फलसिद्ध्या, पुनः=भूयः, नवता=नूतनता, विधत्ते=धारयति । पूर्ववदेव अक्लिष्टतामापादयतीत्यर्थः ।

**व्युत्पत्तिः**—हे अवनताऽङ्गि=अवनतम् अङ्गं यस्याः सा अवनताऽङ्गी, तत्सम्बुद्धौ हे अवनताङ्गि । अद्य प्रभृति=प्रभृतियोगात् अद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते । दासः="दासृ दाने" । दासते=आत्मानं ददातीति, दासः । चन्द्रमौलौ=चन्द्रः मौलौ यस्य स चन्द्रमौलिः, तस्मिन् चन्द्रमौलौ । वादिनि=वदतीति वादी, तस्मिन्वादिनि, अह्नाय=सपदि, "स्रग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतम्" इत्यमरः । नियमजं=नियमाज्जातः नियमजः, तं नियमजम् । अत्राऽर्थान्तरन्यासालङ्कारः । इदमपि वसन्ततिलकावृत्तम् ।

**भावार्थः**—हे विनीते । पार्वति ! अद्यारभ्याहं तव तपोभिः क्रीतो दासोऽस्मीति शङ्करे वदति सति, सा पार्वती तत्क्षणे तपोजन्यं क्लेशं तत्याज । क्लेशः खलु फलसिद्ध्या पूर्ववदेवाक्लिष्टतामापादयतीति भावः ।

**भाषा**—हे विनीते पार्वती ! आज से मैं तुम्हारा तपसे क्रीत दास हूँ, इस प्रकार, शङ्कर का वचन सुनकर पार्वती उसी समय तपस्या के क्लेश से विरत हुई। काम सिद्ध हो जाने पर तकलीफ नहीं मालुम देती ।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुंसवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः समाप्तः ।

---

## अथ षष्ठः सर्गः ।

अथ महेश्वरे मनोरथानुरूप प्रसन्ने सति पार्वती किमकरोदित्याकाङ्क्षायामाह-

**अथ विश्वात्मने गौरी, सन्दिदेश मिथः सखीम् ।**
**दाता मे भूभृतां नाथः, प्रमाणीक्रियतामिति ॥ १ ॥**

बोली सखी द्वारा अपर्णा आप ऐसा कीजिये ।
मेरे पिता से प्रेम पूर्वक माँग मुझको लीजिये ॥

**अन्वयः**—अथ गौरी विश्वात्मने मिथः सखीं "भूभृता नाथः मे दाता प्रमाणीक्रियताम्" इति सन्दिदेश ।

**व्याख्या**—अथ=ईश्वराऽनुग्रहाऽनन्तरं, गौरी=पार्वती, विश्वात्मने=शिवाय, मिथः=रहसि, सखी=वयस्या, भूभृता=पर्वताना, नाथः=स्वामी, हिमवान् इत्यर्थः । मे=मम, दाता=दानकर्ता सन् , प्रमाणीक्रियता=प्रमाणत्वेन स्वीक्रियता, दातृत्वेन प्रमाणीक्रियतामित्यर्थः । इति=इत्थं, सन्दिदेश=अतिससर्ज ।

**व्युत्पत्तिः**—गौरी="उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः । विश्वाऽऽत्मने=विश्वम् आत्मा=स्वरूपं, यस्य स विश्वात्मा, तस्मै विश्वात्मने, विश्वस्य आत्मा विश्वात्मा, तस्मै विश्वात्मने इति वा । मिथः= "मिथोऽन्योन्य रहस्यपि" इत्यमरः । भूभृता=भुव बिभ्रतीति भूभृतः, तेषा भृता । मे=इति कर्मणि षष्ठी । प्रमाणीक्रियताम्=अप्रमाणं प्रमाण यथा सम्पद्यते तथा क्रियता प्रमाणीक्रियताम् । अत्राऽभूततद्भावे च्विः, प्रार्थनाया लोट् च । इति शब्दः प्रकारवाची । 'सन्दिदेश' इति क्रियामात्रयोगेऽपि "विश्वात्मने" इत्यत्र सम्प्रदानत्वाच्चतुर्थी ।

**भावार्थः**—अनन्तरं पार्वती रहसि त्रैलोक्यात्मकाय हराय "पिता हिमालयो मम दातृत्वेन निर्णीयतामिति" स्वकीयप्रियवयस्या सन्दिष्टवतीति भावः ।

**भाषा**—पश्चात् पार्वती ने एकान्त में शङ्कर के लिये 'मुझे देने वाले मेरे पिता हिमालय से कहिये, इस तरह सखी के द्वारा कहा ।

इत्थं पार्वत्या सन्दिष्टा सखी तत्सन्दिष्टमर्थं महेश्वराय व्यजिज्ञपदितीममर्थं प्रकारान्तरेणाह—

> **तया व्याहृतसन्देशा, सा बभौ निभृता प्रिये ।**
> **चूतयष्टिरिवाऽभ्याशे, मधौ परभृतोन्मुखी ॥ २ ॥**
> यों उक्त-वृत्ता शम्भु-निरता पार्वती शोभित हुई ।
> कोकिल मुखर मधु में लता सहकार ज्यों शोभित हुई ॥

**अन्वयः**—तया व्याहृतसन्देशा प्रिये निभृता सा, मधौ निभृता परभृतोन्मुखी चूतयष्टिः इव, अभ्याशे बभौ ।

**व्याख्या**—तया=सख्या, सखीमुखेनेत्यर्थः । व्याहृतसन्देशा=उक्तवाचिका, प्रिये=हरविषये, निभृता=निश्चला, परमासक्तेत्यर्थः । सा=पार्वती, मधौ=वसन्ते, निभृता=स्थिरा, परभृतोन्मुखी=कोकिलामुखरा, चूतयष्टिः इव= आम्रशाखा इव, अभ्याशे=समीपे, बभौ=शुशुभे ।

**व्युत्पत्तिः**—व्याहृतसन्देशा=व्याहृतः सन्देशः यया सा व्याहृतसन्देशा । परभृतोन्मुखी=परैः भृता परभृता, "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः । परभृतया उन्मुखी परभृतोन्मुखी । मुखशब्देन अभिभाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्तीत्यर्थः ।

अत्र मल्लिनाथः, "परभृतेति क्रियाशब्दविवक्षाया "जातेरस्त्री विषयाद-

योपधात्" इति ङीप्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वात् = असमस्तत्वात्, उपमानवाचिपरभृताशब्दस्य समासः सोढव्यः । अथ वा भृत् भरणम् । सम्पदादित्वात् क्विप् । परैः भृत् यस्याः सा परभृत्, तया परभृता, इति व्यासेन समासाऽभावेन व्याख्येयम् । पदमञ्जरीकारस्तु परैर्भ्रियते इति कर्मणि क्विपमाह ।" चूतयष्टिः = चूतस्य यष्टिः चूतयष्टिः, "आम्रश्चूतो रसालोऽसौ" इत्यमरः । अभ्याशे = "सदेशाऽभ्याशसविधसमर्यादसवेशवत् । उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ॥" इत्यमरः । बभौ="भादीसौ" इति धातोः लिट् ।

**भावार्थः**—यथा चूतलता चिरप्रार्थिते वसन्ते कान्ते समागते सति तद्विषय प्रियालापं कोकिलया कारयति, तथैव सख्या हरविषये सन्देश व्याहरन्ती परमासक्ता सा पार्वती शुशुभे इति भावः ।

**भाषा**—जिस तरह चूतलता चिर प्रार्थित प्रिय वसन्त के आने पर अपने विषय की प्रिय बातें कोयल से करवाती है, उसी तरह सखी द्वारा प्रिय शङ्कर को सन्देश देने वाली पार्वती शोभित हुई ।

पार्वतीसन्देशश्रवणानन्तरं महेश्वरस्य तदुचिता प्रवृत्तिमाह—

**स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।**
**ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः ॥ ३ ॥**

कह कर तथाऽस्तु मनोज शासन पार्वती को छोड़ कर ।
करने लगे सादर स्मरण शुचि सप्त-ऋषियों का प्रवर ॥

**अन्वयः**—सः स्मरशासनः तथा इति प्रतिज्ञाय, उमा कथमपि विसृज्य, ज्योतिर्मयान् सप्त ऋषीन् सस्मार ।

**व्याख्या**—सः = एवं सन्दिष्टः, स्मरशासनः = कामनाशकः, हर इत्यर्थः । तथा इति = तथा करिष्यामि इति, प्रतिज्ञाय = प्रतिज्ञा कृत्वा, उक्त्वेत्यर्थः । उमा=पार्वतीं, कथम् अपि = कथञ्चित्, विसृज्य = त्यक्त्वा, 'विरहासहत्वादित्यर्थः । ज्योतिर्मयान्=तेजोरूपान्, सप्त = सप्तसंख्याकान्, ऋषीन् = मुनिवर्यान्, कश्यपप्रभृतीनित्यर्थः । सस्मार = स्मृतवान् ।

**व्युत्पत्तिः**—स्मरशासनः=शास्तीति शासनः । "कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् कर्तरि ल्युट् । स्मरस्य शासनः स्मरशासनः । ज्योतिर्मयान्=अत्र स्वरूपाऽर्थे मयट् । सारुन्धतीकाः सप्तर्षयो यथा—

"कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।

जमदग्निर्वशिष्ठश्च साध्वी चैवाऽप्यरुन्धती" ॥ इति ।

**भावार्थः**—एव सख्या सन्दिष्टः स हरो हिमालयं प्रार्थयिष्यामीत्युक्त्वा पार्वतीं विरहासहत्वात् कथञ्चित् परित्यज्य, तेज स्वरूपान् मरीच्यादीन् सप्तर्षीन् मनसा स्मृतवानिति भावः ।

**भाषा**—इस तरह सखी से सन्देश पाकर शङ्कर ने "मैं हिमालय से इस के लिये प्रार्थना करूंगा" कह कर असहनीय विरह के कारण किसी तरह पार्वती के यहाँ से आकर मरीच्यादि सप्तर्षियों का मन से स्मरण किया ।

महेश्वरेण स्मृतानां तेषा तदुपस्थानप्रकारमाह—

**ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।**
**साऽरुन्धतीकाः सपदि प्रादुरासन्पुरः प्रभोः ॥ ४ ॥**

आकाश में निज देह की कान्ते प्रकाशित छवि विकट ।
सप्तर्षि अमल अरुन्धती के साथ आये प्रभु निकट ॥

**अन्वयः**—ते तपोधनाः प्रभामण्डलैः व्योम द्योतयन्तः साऽरुन्धतीकाः सन्तः सपदि प्रभोः पुरः प्रादुरासन् ।

**व्याख्या**—ते = कश्यपादय, तपोधनाः = सप्तर्षयः, प्रभामण्डलैः=तेजःपुञ्जैः, व्योम=आकाशं, द्योतयन्तः=प्रकाशयन्तः, सारुन्धतीकाः = अरुन्धतीसहिताः सन्तः, सपदि=सद्यः, प्रभोः=महेश्वरस्य, पुरः=पुरोभागे, प्रादुरासन् = प्रत्यक्षा बभूवुः ।

**व्युत्पत्तिः**—तपोधनाः=तप एव धन येषा ते तपोधनाः । प्रभामण्डलैः = प्रभाया मण्डलानि प्रभामण्डलानि, तैः प्रभामण्डलैः । "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । द्योतयन्तः = द्योतयन्तीति द्योतयन्तः । णिजन्तात् "द्युतदीप्तौ" इति धातोः शतृप्रत्ययः । साऽरुन्धतीकाः=अरुन्धत्या सहिताः सारुन्धतीकाः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "नद्दतश्च" इति समासाऽन्तः कप् ।

अत्र वशिष्ठपत्नीमात्रस्यागमनवर्णनं तत्पातिव्रत्यस्यान्यपत्नीपातिव्रत्येभ्यो व्यतिरेकं द्योतयितुम् । एव हि पुराणप्रसिद्धिः—

"सप्तर्षीणा पुरा पत्नीरकामयत पावकः ।
विज्ञातवृत्ता स्वाहाऽथ तासा रूपेण पावकम् ॥
रमयामास रुचिरं न शशाक मनागपि ।

यत्नैररुन्धतीरूपं ग्रहीतुं मुनयस्ततः ।
अन्ये तु तत्यजुः पत्नीः" ॥ इति ।

**भावार्थः**—मण्डलाकाराभिः प्रभाभिराकाशदेशं प्रकाशयन्तस्ते सप्तर्षयोऽरुन्धत्या सह हरस्मरणाऽव्यवहितोत्तरमेव तस्य पुरोभागे प्रत्यक्षा बभूवुरिति भावः ।

**भाषा**—मण्डलाकार प्रभा से आकाश देश को प्रकाशित करते हुए अरुन्धती के साथ वे सप्तर्षि शङ्कर के स्मरण करते ही उनके आगे प्रत्यक्ष हो गये ।

इतः पर षड्भिः श्लोकैः तानेव मुनीन्वर्णयति । तत्रादौ तेषा महेश्वरोपस्थानयोग्य पूतत्व प्रतिपादयितुं स्नानमाह—

**आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।**
**व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥**

तट कल्प वृक्ष कुसुम तरङ्गित हस्ति मद से सुरभि मय ।
आकाश गङ्गा के प्रवाहों में किये मज्जन अभय ॥

**अन्वयः**—तीरमन्दारकुसुमोत्किरवीचिषु दिङ्नागमदगन्धिषु व्योमगङ्गाप्रवाहेषु आप्लुताः ते प्रादुरासन् इति पूर्वेणान्वयः ।

**व्याख्या**—तीरमन्दारकुसुमोत्किरवीचिषु = तटकल्पवृक्षपुष्पोत्किरतरङ्गेषु, दिङ्नागमदगन्धिषु=दिग्गजदानवारिगन्धिषु, व्योमगङ्गाप्रवाहेषु = आकाशगङ्गास्रोतःसु, आप्लुताः=स्नाताः, ते सपदि पुरः प्रादुरासन्निति पूर्वेणाऽन्वयः ।

**व्युत्पत्तिः**—तीरमन्दारकुसुमोत्किरवीचिषु = तीरे मन्दाराः तीरमन्दाराः, तेषा कुसुमानि तीरमन्दारकुसुमानि, तेषाम् उत्किराः तीरमन्दारकुसुमोत्किराः, ता वीचयः येषा ते तीरमन्दारकुसुमोत्किरवीचयः, तेषु तीरमन्दारकुसुमोत्किरवीचिषु । दिङ्नागमदगन्धिषु=दिशा नागाः दिङ्नागाः, मदस्य गन्धः मदगन्धः । दिङ्नागाना मदगन्धः येषु ते दिङ्नागमदगन्धयः, तेषु दिङ्नागमदगन्धिषु । व्योमगङ्गाप्रवाहेषु=व्योम्नः गङ्गा व्योमगङ्गा, तस्याः प्रवाहाः व्योमगङ्गाप्रवाहाः, तेषु व्योमगङ्गाप्रवाहेषु ।

**भावार्थः**—तटप्रदेशप्ररूढाना कल्पवृक्षाणा पवनवशाज्जलेषु पतितानि पुष्पाणि तरङ्गैरूर्ध्वं विक्षिपत्सु दिग्गजमदजलसुगन्धयुक्तेषु मन्दाकिनीजलप्रवाहेषु कृतस्नानास्ते सप्तर्षयः प्रादुरासन्निति भावः ।

**भाषा**—तीर पर के कल्पवृक्षोंके गिरे हुए फूलों को लहरों द्वारा उछालने वाली तथा दिग्गजों के मद जल से सुगन्धित आकाश गङ्गा में वे ऋषि स्नान किये हुए थे।

अथ तदीयानां तपस्विजनोचितानां परिकाराणामपि तपसस्तत्फलोपभोगस्य च साधारणत्वमाह—

**मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः।**
**रत्नाऽक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः॥ ६॥**

मुक्तोपवीत धरे कनक त्वक अक्ष सूत्र रतन कलित।
तरु कल्प सम आश्रम किये शुचिवान प्रस्थाश्रम ललित॥

**अन्वयः**—मुक्तायज्ञोपवीतानि बिभ्रतः हैमवल्कलाः रत्नाऽक्षसूत्राः प्रव्रज्याम् आश्रिताः कल्पवृक्षाः इव स्थिताः ते प्रादुरासन् इति पूर्वेणान्वयः।

**व्याख्या**—मुक्तायज्ञोपवीतानि = मौक्तिकब्रह्मसूत्राणि, बिभ्रतः = दधानाः, हैमवल्कलाः=सौवर्णवल्काः, रत्नाऽक्षसूत्राः—रत्नमयजपमालाः, प्रव्रज्या = प्रव्रजनम्, आश्रिताः = आस्थिताः, कल्पवृक्षाः इव देवतरव इव, स्थिताः ते प्रादुरासन् इति पूर्वेणाऽन्वयः।

**व्युत्पत्तिः**—मुक्तायज्ञोपवीतानि=यज्ञस्य उपवीतानि "यज्ञोपवीतानि, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः। मुक्तानां यज्ञोपवीतानि मुक्तायज्ञोपवीतानि, तानि। मुक्तामयानीत्यर्थः। बिभ्रतः=बिभ्रतीति बिभ्रतः, शतृप्रत्यय.। हैमवल्कला.=हेम्नः विकारा हैमानि=सुवर्णमयानि, तानि वल्कलानि येषां ते हैमवल्कलाः। रत्नाऽक्षसूत्राः=अक्षाणां सूत्राणि अक्षसूत्राणि, रत्नमयानि अक्षसूत्राणि येषां ते रत्नाऽक्षसूत्राः। प्रव्रज्या = प्रव्रजनं प्रव्रज्या, तां प्रव्रज्यां "व्रजयजोर्भावे क्यप्" इति क्यप्।

"अत्र चतुर्थाऽऽश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाऽऽश्रमो लक्ष्यते। "जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ६।३४" इति सपत्नीकत्वाऽभिधानात्,

"सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्।
वानप्रस्थो ब्रह्मचारी साऽग्निः सोपासनो व्रजेत्॥ या०स्मृ०प्रा०४५श्लो०

इति वानप्रस्थस्योभयथापि स्मरणात्"

**भावार्थः**—मुक्तामयानि ब्रह्मसूत्राणि दधतः सुवर्णमयानि वल्कलानि बिभ्रतो रत्नमया रुद्राक्षमाला दधाना वानप्रस्थाश्रमं प्राप्ताः कल्पवृक्षा इव ते सप्तर्षयः प्रादुरासन्निति भावः।

**भाषा**—वे सप्तर्षि मोती के समान स्वच्छ यज्ञोपवीत धारण किये हुए, सुवर्ण सदृश पीत वल्कल पहने हुए, तथा रत्न मय अक्ष माला हाथ में लिये हुए,

सन्यास व्रत में स्थित कल्प वृक्ष के समान उपस्थित हुए।

अथ सप्तर्षिमार्गस्य सूर्यमार्गाद् दुरोन्नतत्वेऽपि हिमवत्प्रस्थावतरणवशादत्यासन्नेषु सप्तर्षिषु सूर्यस्य तत्कालोचिता प्रवृत्तिमाह—

**अधः प्रस्थापिताऽश्वेन समावर्जितकेतुना ।**
**सहस्ररश्मिना साक्षात्सप्रणाममुदीक्षिताः ॥ ७ ॥**

**नीचे चलाये अश्व लख कर विमल केतु झुका दिया ।**
**बन कर विनीत स्वयं दिनेश्वर ने प्रणाम प्रवर किया ।**

**अन्वयः**—अधः प्रस्थापिताऽश्वेन समावर्जितकेतुना सहस्ररश्मिना साक्षात् सप्रणामम् उदीक्षिताः ते प्रादुरासन् इति पूर्वेणान्वयः ।

**व्याख्या**—अधः प्रस्थापिताऽश्वेन=नीचैः प्रस्थापिततुरङ्गमेण, सप्तर्षिमण्डलस्य सूर्यमण्डलोपरिवर्तित्वादित्यर्थः । समावर्जितकेतुना=नामितध्वजेन, तन्मण्डलाऽऽघातशङ्कयेत्यर्थः । सहस्ररश्मिना = सूर्येण, साक्षात् = स्वयमेव, सप्रणामं = सनमस्कारम्, उदीक्षिताः = ऊर्ध्वमवलोकिताः, गमनाऽभ्यनुज्ञादानपर्यन्तमित्यर्थः । ते=सप्तर्षयः, प्रादुरासन् इति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—अधःप्रस्थापिताऽश्वेन = अधः प्रस्थापिताः अश्वाः येन सः अधःप्रस्थापिताश्वः, तेन अधःप्रस्थापिताश्वेन । समावर्जितकेतुना = समावर्जितः केतुः येन सः समावर्जितकेतुः, तेन समावर्जितकेतुना । सहस्ररश्मिना = सहस्रं रश्मयः यस्य सः सहस्ररश्मिः, तेन सहस्ररश्मिना, "किरणोस्रमयूखाऽंशुगभस्तिघृणिरश्मयः" इत्यमरः । सप्रणाम=प्रणामेन सहित सप्रणाम यथा स्यात्तथा, उदीक्षणक्रियाविशेषणं चैतत् ।

**भावार्थः**—सप्तर्षिमार्गात् किञ्चिदधो भागे प्रस्थापितनिजस्यन्दनवाजिना तन्मण्डलाहतिशङ्कया सम्यगानमितध्वजेन सूर्येण प्रत्यक्ष प्रणम्य सगौरवमीक्षितास्ते सप्तर्षयः प्रादुरासन्निति भावः ।

**भाषा**—सप्तर्षि मार्ग के नीचे जिस के घोड़े प्रस्थापित हैं, और सप्तर्षि मण्डलाघात की आशङ्का से जिस ने अपनी ध्वजा नीचे कर दी है, ऐसे सूर्य ने उनको स्वयं प्रणाम कर बड़े गौरव के साथ देखा ।

अथ सप्तर्षीणां नित्यत्वमप्याह—

**आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।**
**महावराहदंष्ट्राग्रां विश्रान्ताः प्रलयापदि ॥ ८ ॥**

प्रलयापदा में विष्णु की शुचि भुज लता में पगे ।
उद्धार में भू के महा वाराहदंष्ट्रा में लगे ॥

**अन्वयः**—प्रलयापदि आसक्तबाहुलतया उद्धृतया भुवा सार्धं महावराहदंष्ट्राया विश्रान्ताः ते प्रादुरासन् इति पूर्वेणान्वयः ।

**व्याख्या**—प्रलयापदि = कल्पाऽन्तसङ्कटे, आसक्तबाहुलतया = श्रितभुजलतया, दंष्ट्रायामिति शेषः । उद्धृतया=उत्क्षिप्तया, दंष्ट्रयेति शेषः । भुवा=पृथिव्या, सार्धं=सह, महावराहदंष्ट्रायाम्=बृहत्क्रोडदंष्ट्राया, विश्रान्ताः = कृतविश्रामाः, अविनाशिन इत्यर्थः । ते=सप्तर्षयः, प्रादुरासन् इति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—प्रलयापदि=प्रकृष्टः लयः यस्मिन् स प्रलयः, "संवर्तः प्रलयः कल्प क्षयः कल्पाऽन्त इत्यपि" इत्यमरः । प्रलय एव आपत् प्रलयापत्, तस्या प्रलयापदि । सर्वलोकक्षयकारित्वादित्यर्थः । आसक्तबाहुलतया = बाहुः एव लता बाहुलता, आसक्ता बाहुलता यया सा आसक्तबाहुलता, तया आसक्तबाहुलतया । भुवा सार्धं=सहाऽर्थकेन सार्धं पदेन योगात् "भुवा" इत्यत्र "सहयुक्तेऽप्रधाने" इति तृतीया । महावराहदंष्ट्राया=महाश्चाऽसौ वराहः महावराहः, "वराह· सूकरो घृष्टिः कोलः पोत्री किरिः किटिः" इत्यमरः । महावराहस्य दंष्ट्रा महावराहदंष्ट्रा, तस्या महावराहदंष्ट्रायाम् । वराहपुराणप्रसिद्धश्चायमर्थ ।

**भावार्थः**—सकललोकसंहारकारिणि कल्पान्ते समुपस्थिते जलमात्रावशिष्टेषु चतुर्विधेषु महाभूतद्रव्येषु विपन्नया स्त्रीजनसुलभेन भयेन हस्ताभ्या महावराहदंष्ट्राद्वयमवष्टभ्यावस्थितया स्त्रीरूपधारिण्या धरण्या सह महावरादंष्ट्राया सुखासीनास्ते सप्तर्षयः प्रादुरासन्निति भावः ।

**भाषा**—प्रलय की विपत्ति में भी वाराह के दातों को पकड़ी हुई सभय पृथ्वी के साथ उस पर आनन्द से बैठने वाले सप्तर्षि प्रगट हुए ।

अथ तेषा जगत्सर्गस्यापि कर्तृत्वमाह—

**सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।**
**पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ ६ ॥**

पश्चात् ब्रह्मा ने रची शुभ सृष्टिरचना की विमल ।
पावन-पुराण-प्रवीण सब प्राचीन विधि कहते अमल ॥

**अन्वयः**—विश्वयोनेः अनन्तरं सर्गशेषप्रणयनात् पुराविद्भिः पुरातनाः धातार इति कीर्तिताः ते प्रादुरासन् इति पूर्वेणान्वयः ।

**व्याख्या**—विश्वयोनेः=ब्रह्मणः, अनन्तरं=पश्चात्, सर्गशेषप्रणयनात्=सृष्टिशेषनिर्माणात्, ब्रह्मसृष्टाऽवशिष्टसृष्टेः करणाद्धेतोरित्यर्थः । पुराविद्भिःऽपुरातनवृत्तान्तवेदिभिः, व्यासादिभिरित्यर्थः । पुरातनाः=प्राचीनाः, धातारः=सृष्टिकर्तारः, इति=एवं, कीर्तिताः = अभिहिताः, ते महर्षयः प्रादुरासन् इति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—विश्वयोनेः = विश्वस्य योनिः विश्वयोनिः, तस्य विश्वयोनेः । सर्गशेषप्रणयनात् = सर्गस्य शेषः सर्गशेषः, तस्य प्रणयनं सर्गशेषप्रणयनं तस्मात् सर्गशेषप्रणयनात् । पुराविद्भिः = पुरातत्वं विदन्तीति पुराविदः, तैः पुराविद्भिः । पुरातनाः=पुरा भवाः पुरातनाः, ट्युप्रत्ययः । प्रपञ्चोत्पत्तेः प्रागपि सन्त इत्यर्थः । सप्तर्षीणां सर्गशेषविधायित्व पुराणप्रसिद्धम् ।

**भावार्थः**—ब्रह्मणो जगदेकशेषसर्गानन्तरमवशिष्टस्य सर्गस्य विधानात् व्यासादिभिः पुराणादिषु ब्रह्मशब्देनैव निर्दिष्टाः सृष्टेः प्रागपि विद्यमानास्ते सप्तर्षयः प्रादुरासन्निति भावः ।

**भाषा**—ब्रह्मा के बाद बची हुई सृष्टि की रचना के कारण व्यासादि ऋषियों ने पुराणों में जिनको विधाता के नाम से कहा है, वे सप्तर्षि उपस्थित हुए ।

अथ तेषा लोकतो व्यतिरेकमाह—

**प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।**
**तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १० ॥**

**पिछले जनम के शुद्ध तप से पक्क वे हैं हो गये ।**
**हैं भोगते तप-फल तथापि पवित्र करते तप नये ॥**

**अन्वयः**—प्राक्तनाना विशुद्धाना परिपाकम् उपेयुषा तपसा फलानि उपभुञ्जानाः अपि तपस्विनः ते प्रादुरासन् इति पूर्वेणान्वयः ।

**व्याख्या**—प्राक्तना=प्राचीनाना, जन्मान्तरभवानामित्यर्थः । विशुद्धाना=निर्मलाना, परिपाकं=परिणामम्, उपेयुषा=प्राप्तवतां, परिपक्कानामित्यर्थः । तपसा=नियमव्रताना, फलानि=भोगान्, उपभुञ्जानाः अपि=उपभोगं कुर्वाणा अपि, तपस्विनः = तपोनिष्ठाः, ते=सप्तर्षयः, प्रादुरासन् इति पूर्वेणान्वय· ।

**व्युत्पत्तिः**—प्राक्तनाना=प्राग्भवानि प्राक्तनानि, तेषा प्राक्तनाना, ट्युप्रत्ययः, विशुद्धाना = विशेषेण शुद्धानि विशुद्धानि, तेषा विशुद्धाना, "सुप्सुपा" इति समासः । उपभुञ्जानाः = उपभुञ्जते इति उपभुञ्जानाः, "भुजोऽनवने" इत्यात्म·

नेपदित्वात् शानच् प्रत्ययः । तपस्विनः=तपः अस्ति येषा ते तपस्विनः, "तपः-सहस्राभ्यां विनीनी" इति विनिप्रत्ययः ।

अत्र तपः फलानुभवतपश्चरणलक्षणयोः क्रिययोर्युगपद् विरोधाद् विरोधालङ्कारः । तल्लक्षणं यथा—

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद् वचः" । इति ।

सप्तर्षीणा लोकोत्तर महाप्रभाववत्त्वेन विरोधपरिहार इति बोध्यम् ।

इति सप्तभिः श्लोकैः कुलकम् ।

**भावार्थः**—जन्मान्तरकृताना निर्मलाना फलदानोन्मुखाना तपसां सप्तर्षि लोकप्राप्तितदुचितभोगानुभवादीनि फलान्यनुभवन्तोऽपि तपोनिष्ठास्ते सप्तर्षयः प्रादुरासन्निति भावः ।

**भाषा**—पूर्वजन्म की तपस्या के फल को भोगते हुए भी तपो-निरत सप्तर्षि समूह शङ्कर के सम्मुख उपस्थित हुए ।

इत्थ सामान्यतः सर्वानपि सप्तर्षीन् वर्णयित्वा पुनररुन्धतीं विशेषतो वर्णयति—

**तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।**
**साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥**

**पति-चरण में दृग को लगाये अति पवित्र अरुन्धती ।**
**प्रत्यक्ष तप की सिद्धि सम शोभित हुई पावन सती ॥**

**अन्वयः**—तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा अरुन्धती साक्षात् तपःसिद्धिः इव बहु बभासे ।

**व्याख्या**—तेषाम् = सप्तर्षीणा, मध्यगता = मध्यस्थिता, साध्वी = पतिव्रता, पत्युः = वशिष्ठस्य, पादाऽर्पितेक्षणा = चरणनिविष्टदृष्टिः, अरुन्धती=वशिष्ठपत्नी, साक्षात्=प्रत्यक्षा, तपःसिद्धिः इव=नियमसिद्धिः इव, बहु=भूयिष्ठं, सप्तर्षिभ्योऽप्यधिकतरमित्यर्थः । बभासे=भाति स्म ।

**व्युत्पत्तिः**—मध्यगता = मध्य गता मध्यगता, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राताऽऽपन्नैः" इति समासः । साध्वी = "सुचरित्रा तु, सती साध्वी पतिव्रता" इत्यमरः । पादाऽर्पितेक्षणा=अर्पिते ईक्षणे यया सा अर्पितेक्षणा, पादयोः अर्पितेक्षणा पादार्पितेक्षणा । तपःसिद्धिः=तपसः सिद्धिः तपःसिद्धिः । बभासे = "भासृ दीप्तौ" इति धातोर्लिट् । अत्रोत्प्रेक्षालङ्कारः ।

**भावार्थः**—तेषां सप्तर्षीणां मध्यप्रदेशे विद्यमाना भर्तृचरणनिविष्टदृष्टिः पतिव्रता वशिष्ठपत्नी "प्रत्यक्षभूता चिरकालार्जिततपसः सिद्धिरिव" सप्तर्षिभ्योऽप्यधिकतरं शुशुभे इति भावः ।

**भाषा**—बहुत दिनों से की हुइ तपस्या की साक्षात् सिद्धि-स्वरूपा, पति के चरणों को देखती हुई, पतिव्रता, अरुन्धती उन सप्तर्षियों के बीच और भी अधिक शोभित होती थी ।

अथ महेश्वरस्य तद्विषया प्रवृत्तिमाह—

**तामगौरवभेदेन मुनींश्चाऽपश्यदीश्वरः ।**
**स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२ ॥**

**सप्तर्षि और अरुन्धती को शम्भु ने देखा अमल ।**
**सम बुद्धि से स्त्री पुरुष को सज्जन चरित होता विमल ॥**

**अन्वयः**—ईश्वरः तां मुनीन् च अगौरवभेदेन अपश्यत् । हि यतः स्त्री पुमान् इति एषा अनास्था । किन्तु सतां वृत्तं महितं भवति ।

**व्याख्या**—ईश्वरः=महेश्वरः, ताम्=अरुन्धतीं, मुनींश्च=सप्तर्षींश्च, अगौरवभेदेन=तुल्यप्रतिपत्त्या, अपश्यत्=ददर्श । हि यतः=यस्मात्कारणात्, स्त्री=योषित्=पुरुषः, पुमान्, इत्येषा=इयं वृत्तिः, अनस्था=अनादरः । किन्तु=अपि तु, सतां=साधूनां, वृत्त=चरित्रं, महितं=पूजितं, भवति । गौरवविषये इति शेषः । तथा चोक्तम्-"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" । इति ।

**व्युत्पत्तिः**—ईश्वरः=ईष्टे असौ ईश्वरः, "ईश ऐश्वर्ये" इति धातोर्वरच्प्रत्ययः । "ईश्वरः, सर्व ईशानः शङ्करश्चन्द्रशेखरः" इत्यमरः । अगौरवभेदेन=गुरोर्भावः गौरवम्, अण्प्रत्ययः । गौरवस्य भेदः गौरवभेदः, न गौरवभेदः अगौरवभेदः, तेन अगौरवभेदेन । वृत्त="वृत्तं पद्ये चरित्रे च" इत्यमरः ।

अत्राऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—महेश्वरस्तामरुन्धतीं सप्तर्षींश्च स्त्रीत्वपुरुषत्वनिमित्तक गौरवभेदमनादृत्य समानप्रतिपत्त्या दृष्टवान् । सज्जनानां प्रतिपत्तिविशेषे "इयं स्त्री, अयं पुमान्" इति स्त्रीपुंसभेदो विवक्षितो न भवति । किन्तु महतां गौरवविषये केवलं चरित्रमेव पूजितं भवतीति भावः ।

**भाषा**-शंकर ने स्त्री पुरुष का भेद न मानकर, अरुन्धती के साथ सप्तर्षियों को समान दृष्टि से देखा, क्योंकि साधुओं का चरित्र ही पूजा के योग्य होता है ।

अरुन्धतीदर्शने महेश्वरस्य मनोवृत्तिमाह—

**तद्दर्शनादभूच्छम्भोर्भूयान्दारार्थमादरः ।**
**क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ॥ १३ ॥**

**शिव ने समोद अरुन्धती का प्रेम से आदर किया ।**
**होती सती-कर में मनोहर धर्म-मय पावन क्रिया ॥**

**अन्वयः**—तद्दर्शनात् शम्भोः दाराऽर्थम् आदरः भूयान् अभूत् । धर्म्याणां क्रियाणां सत्पत्न्यः मूलकारणं खलु ।

**व्याख्या**—तद्दर्शनात्=अरुन्धतीविलोकनात् , शम्भोः=शिवस्य, दारार्थं=विवाहार्थं, आदरः=बहुमानः, भूयान्=बहुतरः, अभूत्=अभवत् । धर्म्याणां=धर्मात् अनपेतानां, क्रियाणां=कर्मणाम् , इज्यादीनामित्यर्थः । सत्पत्न्यः=पतिव्रता भार्याः, मूलकारणं=खलु=मुख्यहेतुः किल ।

**व्युत्पत्तिः**—तद्दर्शनात्=तस्या दर्शनं तद्दर्शनं, तस्मात् तद्दर्शनात् , दाराऽर्थम्=दारेभ्य इदं दारार्थम् , "भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी" इत्यमरः । धर्म्याणां=धर्मात् अनपेताः धर्म्याः, तासां धर्म्याणां, "धर्मपथ्यर्थन्यायादनपेते" इति यत् प्रत्ययः । सत्पत्न्यः=सत्यश्च ताः पत्न्यः सत्पत्न्यः । "पत्युर्नो यज्ञसंयोगे" इति ङीप् , नकारश्च । मूलकारणम्=मूलञ्च तत् कारणं मूलकारणम् ।

**भावार्थः**—अरुन्धतीदर्शनान्महेश्वरस्य स्त्रीपरिग्रहार्थे भूयिष्ठमादरोऽभूत् अग्निहोत्रादिधार्मिककर्मसु सपत्नीकानामेवाधिकारात् पतिव्रताः पत्न्यस्तेषां मुख्य साधनमिति भावः ।

**भाषा**—अरुन्धती को देखने से शङ्कर के हृदय में स्त्री जाति के प्रति अत्यन्त आदर उत्पन्न हुआ, क्योंकि धार्मिक क्रियाओं में पतिव्रता स्त्री ही मुख्य साधन होती है ।

तस्मिन्नवसरे महेश्वरेण दग्धशरीरस्य कामदेवस्य मनोवृत्तिमाह—

**धर्मेणाऽपि पदं शर्वे कारिते पार्वतीं प्रति ।**
**पूर्वाऽपराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥**

**शिव में उमा प्रति धर्म ने शुचि स्थान पैदा कर दिया ।**
**अपराध-भीत मनोज-मन आशा सहित सुख मय किया ॥**

**अन्वयः**—धर्मेण अपि शर्वे पार्वतीं प्रति पदं कारिते सति, पूर्वाऽपराधभीतस्य कामस्य मनः उच्छ्वसितम् ।

**व्याख्या**—धर्मेण अपि = गृहस्थधर्मेण अपि, शर्वे=महेश्वरे, पार्वतीं प्रति= गौरीं प्रति, पार्वतीमुद्दिश्येत्यर्थः । पदं = व्यवसायं, कारिते=प्रयोजिते सति, पूर्वाऽपराधभीतस्य=प्रागपराधत्रस्तस्य, कामस्य = मदनस्य, मनः = चित्तम्, उच्छ्वसितम्=उच्छ्वासयुक्तं जातम् ।

**व्युत्पत्तिः**—शर्वे = "ईश्वरः शर्व ईशानः" इत्यमरः "कारिते" इति योगात् "हृक्रोरन्यतरस्याम्" इति शर्वस्य अणि कर्तुः कर्मत्वम् । पूर्वाऽपराधभीतस्य=पूर्वश्चाऽसौ अपराधः पूर्वापराधः, तस्माद् भीतः पूर्वाऽपराधभीतः, तस्य पूर्वापराधभीतस्य । गृहस्थधर्मश्चोक्तो मनुना—

"अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः ।" इति ।

**भावार्थः**—गृहस्थधर्मेणापि महेश्वरे पार्वतीमुद्दिश्य व्यवसायं कारिते सति पूर्वमात्मना कृतात् तपोविघातरूपादपराधाद्धेतोर्भीतस्य कामदेवस्य हृदय "नाथ· मितः परं मां प्रति कोपं करिष्यति, कदाचिन्मज्जीवनानुग्रहमप्यसौ करिष्यत्येवेति" सञ्चिन्त्य किञ्चिदाश्वस्तमभूदिति भावः ।

**भाषा**—पार्वती की प्राप्ति के लिये शंकर को जब गार्हस्थ्य धर्म में प्रवेश करने की इच्छा हुई, तब पहले के अपराध से डरे हुए कामदेव के मन को कुछ ढाढस हुआ ।

इत्थं प्रसङ्गागतमर्थमुक्त्वा साम्प्रतं प्रकृतमेवाह—

**अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।**
**इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥**

अति प्रीति पुलकित त्वक तथा वेदाङ्ग वेदों में पगे ।
सप्तर्षि सब कर शम्भु पूजा शुचि वचन कहने लगे ॥

**अन्वयः**—अथ अनूचानाः प्रीतिकण्टकितत्वचः ते सर्वे मुनयः जगद्गुरुं मानयित्वा इदम् ऊचुः ।

**व्याख्या**—अथ = अनन्तरम्, अनूचानाः=साऽङ्गवेदप्रवक्तारः, प्रीतिकण्टकितत्वचः = प्रेमपुलकितगात्राः, ते = पूर्वोक्ताः, सर्वे = सकलाः, मुनयः=सप्तर्षयः, जगद्गुरुं = शङ्करं, मानयित्वा=पूजयित्वा, इदं=वक्ष्यमाणम्, ऊचुः=अकथयन् ।

**व्युत्पत्तिः**—अनूचानाः = "उपेयिवाननाश्वाननूचानश्च" इति निपातः । "अनूचानः प्रवचने साङ्गेऽधीति गुरोस्तु यः" इत्यमरः । प्रीतिकण्टकितत्वचः=कण्टकं सञ्जातं यासां ताः कण्टकिताः, इतच्प्रत्ययः । कण्टकिताः त्वचः येषां ते

कण्टकितत्वचः, प्रीत्या कण्टकितत्वचः प्रीतिकण्टकितत्वचः। जगद्गुरुं = जगता गुरुः जगद्गुरुः, तं जगद्गुरुम्।

**भावार्थः**—हरसन्दर्शनानन्तरं साङ्गवेदप्रवक्तारः परमेश्वरस्वरूपदर्शनोद्भूतहर्षरोमाञ्चितशरीरास्ते सप्तर्षयो जगन्नियन्तारं हरं पूजयित्वा वक्ष्यमाणं जगदुरिति भावः।

**भाषा**—साङ्गवेद के वक्ता तथा प्रेम के कारण रोमाञ्चित शरीर वाले सप्तर्षियों ने शंकर की पूजा करके इस तरह उनसे कहा।

अथ नवभिः श्लोकैः पूर्वश्लोकप्रतिपादितेदं शब्दोक्तान् प्रकारानाह। तत्रादौ स्वानुष्ठिताश्रमत्रयधर्माणामिदानीं सफलत्वमाहुः—

**यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम्।**
**यच्च तप्तं तपस्तस्य विपक्व फलमद्य नः॥ १६॥**

हमने पढ़े जो वेद पावक में हवन विधि से किया।
परिपक्व उसका आज ही फल है हुआ जो तप किया॥

**अन्वयः**—ब्रह्म सम्यक् आम्नातं यत्, अग्नौ विधिना हुतं यत्, तपः तप्तं यत्, तस्य फलम् अद्य नः विपक्वम्।

**व्याख्या**—ब्रह्म = वेदः, "बृहत्त्वाद् बृंहणत्वाद् वा ब्रह्म वेदोऽभिधीयते" इति स्मृतेः। सम्यक्=समीचीनं यथा तथा, नियमपूर्वकमित्यर्थः। आम्नातम् = अधीतम्, इति यत्। अनेन ब्रह्मचर्याश्रमधर्मानुष्ठानमुक्तम्। अग्नौ=वह्नौ, विधिना= विधानेन, हुतं=हविः प्रक्षिप्तं, यत्। अनेन गृहस्थधर्मानुष्ठानमुक्तम्। तपः = चान्द्रायणादिकं, तप्तम् = आचरितं, यत्। अनेन वानप्रस्थधर्मानुष्ठानमुक्तम्। तस्य = अध्ययनेज्यातपोरूपस्य, आश्रमत्रयसाध्यस्य कृत्स्नस्याऽपि कर्मण इत्यर्थः। अत्र समुदायाऽभिप्रायमेकवचनम्, फलं=प्रयोजनम्, अद्य = अस्मिन्दिने, नः= अस्माकं, विपक्वम् = सुनिष्पन्नम्।

**व्युत्पत्तिः**—ब्रह्म = "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" इत्यमरः। हुतं = "हु दानादनयोः" इति धातोः क्तप्रत्ययः। विपक्व=विशेषेण पक्व विपक्व, कर्मणि क्तप्रत्ययः। "पचो वः" इति निष्ठातस्य वत्वम्।

**भावार्थः**—अस्माभिर्यद् गुरुशुश्रूषादिपुरस्सरं वेदोऽधीतः, यच्च पावके समन्त्रं होमः कृतः, यच्च चान्द्रायणादिकं तपोऽर्जितं, तस्याध्ययनेज्यातपोरूपस्य क्रमशो ब्रह्मचर्यगृहस्थवानप्रस्थाश्रमत्रयसाध्यस्य कृत्स्नस्याऽपि कर्मणः फलमस्माक-

मिदानीं सुनिष्पन्नमिति भावः ।

**भाषा**—आज तक हम लोगों ने जो अध्ययन किया, हवन किया और तप किया, उन सबका फल आज हम लोगों का पूरा हो गया ।

कथं विपक्वमित्याहुः—

**यदध्यक्षेण जगतां वयमारोपितास्त्वया ।**
**मनोरथस्याऽविषयं मनोऽविषयमात्मनः ॥ १७ ॥**

अध्यक्ष जग के आप के हम लोग पद-सम्मुख नये ।
इच्छा विषय निज मन-विषय में प्राप्त करवायें गये ॥

**अन्वयः**—यत् जगताम् अध्यक्षेण त्वया वयं मनोरथस्य अविषयम् आत्मनः मनोविषयम् आरोपिताः ।

**व्याख्या**—यत् = यस्मात्कारणात् , जगता=लोकानाम् , अध्यक्षेण=अधिपेन, त्वया = भवता, वयं = सप्तर्षयः, मनोरथस्य=अभिलाषस्य, अविषयम् = अगोचरम् , आत्मनः = स्वस्य, मनोविषयं=मनोदेशम् , आरोपिताः=प्रापिताः । तस्माद् विपक्वं फलमिति पूर्वेण सम्बन्धः ।

**व्युपत्तिः**—जगताम् = "अथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः। अविषयं = न विषयः अविषयः, तम् अविषयं, सर्वत्राप्यनिवारितगतेर्मनोरथस्याप्यगोचरमित्यर्थः । मनोविषयं = मनसः विषयः मनोषियस्तं मनोविषयम् ।

**भावार्थः**—यस्मात्कारणात् स्थावरजङ्गमात्मकसकलजगन्नियामकेन भवता वयं मनोऽभिलाषस्याप्यगोचर स्वस्य मनःप्रदेशं प्रापितास्तस्मादस्माकमाश्रमत्रयानुष्ठितधर्मफलं साम्प्रतमुपभोगक्षमं जातमिति भावः ।

**भाषा**—हे जगन्नियन्ता ! आप का मन मनोरथ का भी अविशय है, उस मन से आपने हम लोगों को स्मरण किया, इससे हम लोग बड़े ही भाग्यवान है ।

महेश्वरस्मरणमात्रेणैव स्वकीयं कृतार्थत्वमाहुः—

**यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः ।**
**किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥**

जिसके रहेंगे चित्त में वह पूज्य जन में मान्यवर ।
है ब्रह्म योनि अतः रहे हर-चित्त में जो वह प्रवर ॥

**अन्वयः**—यस्य चेतसि वर्तेथाः स तावत् कृतिना वरः अस्ति । ब्रह्मयोनेः तव चेतसि यः वर्तते स किं पुनः ।

**व्याख्या**—यस्य=जनस्य, चेतसि = चित्ते, वर्तेथाः—विद्येथाः, येन स्मर्यसे इत्यर्थः। स तावत्=स एव, कृतिना=कृतकृत्याना, वरः=श्रेष्ठः, अस्तीति शेषः। ब्रह्मयोनेः=वेदकारणस्य, वेधसः कारणस्य वा, अथवा वेदप्रमाणकस्य। तव=भवतः, चेतसि=चित्ते, यः=जनः, वर्तते=विद्यते, त्वया स्मर्यते इत्यर्थः। स किं पुनः=किं भूयः, स कृतिना वर इति किमु वक्तव्यमित्यर्थः।

**व्युत्पत्तिः**—चेतसि="चित्त तु चेतो हृदय स्वान्त हृन्मानसं मनः" इत्यमरः। वर्तेथाः="वृतु वर्तने" इति धातो. लिङि रूपम्। कृतिना=कृतमस्ति येषा ते कृतिनः, तेषा कृतिनाम्, इनिप्रत्ययः। ब्रह्मयोनेः=ब्रह्मणः योनिः ब्रह्मयोनिः, तस्य ब्रह्मयोनेः।

**भावार्थः**—त्वं यस्य जनस्य हृदये वर्तेथाः, स तावत् कृतकृत्याना श्रेष्ठो भवति। ब्रह्मनिदानस्य तव हृदये यो जनो वर्त्तते, स कृतकृत्याना श्रेष्ठ इति किमु वक्तव्यमिति भावः।

**भाषा**—जिसके चित्त में आप वसते हैं, वह कृतकृत्यों में श्रेष्ठ हैं, तब आप के चित्त में जो बसता है वह कृतकृत्यों में श्रेष्ठतर है यह कहना व्यर्थ है।

महेश्वरस्मरणेन स्वेषा पूर्वस्मादप्यधिकोन्नतपदप्राप्तिमाहुः—

**सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम्।**
**अद्य तूच्चैस्तरं ताभ्यां स्मरणाऽनुग्रहात्तव॥ १९॥**

रवि चन्द्र से ऊँची जगह पर हम सभी का वास है।
पर स्मृति कृपा से और ऊचे स्थान पर सुनिवास है॥

**अन्वयः**—अर्कात् सोमात् च परं पदम् अध्यास्महे सत्यम्। अद्य तु तव स्मरणाऽनुग्रहात् ताभ्याम् उच्चैस्तरं पदम् अध्यास्महे।

**व्याख्या**—अर्कात्=सूर्यात्। सोमात् च=चन्द्रात् च, परं पदम्=उच्चैः स्थानम्, अध्यास्महे=अधितिष्ठामः, वयमिति शेषः। सत्यं=तथ्यम्। अद्य तु=अस्मिन्दिने तु, तव=भवतः, स्मरणाऽनुग्रहात्=चिन्तनप्रसादात् हेतोः, ताभ्याम्=अर्कसोमाभ्याम्, उच्चैस्तरम्=अत्युच्चं, पद=स्थानम्, अध्यास्महे=अधितिष्ठामः।

**व्युत्पत्तिः**—अर्कात्="विकर्तनाऽर्कमार्तण्डमिहिराऽरुणपूषणः" इत्यमरः। पदम्="अध्यास्महे" इति योगात् 'अधिशीङ्स्थासा कर्म" इति कर्मत्वम्, ततः 'कर्मणि द्वितीया" इति द्वितीया। स्मरणाऽनुग्रहात्=स्मरणम् एव अनुग्रहः स्मरणाऽनुग्रहः, तस्मात् स्मरणानुग्रहात्। उच्चैस्तरम्=अतिशयेन उच्चैः उच्चैस्त-

रं, तत् । उच्चैस्तरमिति द्रव्यप्रकर्षत्वान्नामुप्रत्ययः ।

**भावार्थः**—यद्यपि वय सूर्याचन्द्राच्चोच्चस्थानमधिरुह्यास्महे सत्यम् , तथापीदानीं भवतः स्मरणरूपादनुग्रहात् ततोऽप्यधिकोन्नततरं स्थानं वर्तामहे इति भावः ।

**भाषा**—यद्यपि हम लोग सर्वदा सूर्यचन्द्र से भी उच्च स्थान में रहते हैं, लेकिन आज आप के स्मरण से और भी उच्चतर स्थान में चढ गये ।

स्मरणसम्भावनया स्वात्मसु बहुमानमप्याहुः—

**त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम् ।**
**प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥**

सत्कृत हुए जो आप से निज को अधिक हैं मानते !
होता स्वगुण विश्वास सज्जन मान से संसृति-पते ! ॥

**अन्वयः**—वयं त्वत्सम्भावितम् आत्मानं बहु मन्यामहे । उत्तमादरः स्वगुणेषु प्रायः प्रत्ययम् आधत्ते ।

**व्याख्या**—वयं = सप्तर्षयः, त्वत्सम्भावितम् = भवत्सत्कृतम् , आत्मानम् = आत्मस्वरूपं, बहु=अधिकं, मान्यामहे=जानीमः । उत्तमाऽऽदरः=सत्पुरुषसत्कारः, स्वगुणेषु=आत्मगुणेषु विषये, प्रायः=प्रायेण, प्रत्ययं=विश्वासम्, आधत्ते=जनयति ।

**व्युत्पत्तिः**—त्वत्सम्भावितं = त्वया सम्भावितः त्वत्सम्भावितः, तं त्वत्सम्भावितम् । उत्तमाऽऽदरः = उत्तमात् आदरः उत्तमादरः, स्वगुणेषु=स्वस्य गुणाः स्वगुणाः, तेषु स्वगुणेषु । प्रत्यय="प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । अत्राऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—वयं भवता स्मरणानुग्रहेण सत्कृतमात्मानं गुणभूयिष्ठं मन्यामहे । उत्तमजनानां बहुमानः स्वगुणेषु महान्तं विश्वासं जनयतीति भावः ।

**भाषा**—आप के आदर पाने से हम लोगों को अपने ऊपर बड़ी प्रसन्नता हो रही हैं, क्योंकि प्रायः बड़ों के सम्मान से अपने गुणों में विश्वास होता है ।

अथ भगवत्स्वरूपसाक्षात्कारसम्भवा प्रीति निवेदयन्ति—

**या नः प्रीतिर्विरूपाऽक्ष ! त्वदनुध्यानसम्भवा ।**
**सा किमावेद्यते तुभ्यमन्तरात्माऽसि देहिनाम् ॥ २१ ॥**

अनुध्यान-सम्भव प्रीति हमको हो गई जो है विभो ! ।
हैं प्राणियों के अन्तरात्मा हम कहें क्या हैं प्रभो ! ॥

**अन्वयः**—हे विरूपाऽक्ष ! नः त्वदनुध्यानसम्भवा या प्रीतिः, सा तुभ्यं किम्

आवेद्यते । त्व देहिनाम् अन्तरात्मा असि ।

**व्याख्या**—हे विरूपाक्ष=हे शम्भो !, नः=अस्माक, त्वदनुध्यानसम्भवा=भवत्स्मरणजन्या, या, प्रीतिः=प्रेम, सा=प्रीतिः, तुभ्यं=भवते, किं=किमर्थम्, आवेद्यते=निवेद्यते । त्व देहिना=प्राणिनाम्, अन्तरात्मा=अन्तर्यामी, असि=वर्तसे ।

**व्युत्पत्तिः**—हे विरूपाऽक्ष=विगतं रूपं याभ्या ते विरूपे, त्रिसंख्यत्वात्विङ्गत्वाच्चेत्यर्थः । ते अक्षिणी यस्य स विरूपाक्षः, तत्सम्बुद्धौ हे विरूपाक्ष ! त्वदनुध्यानसम्भवा=तव अनुध्यानं, त्वदनुध्यानं, तस्मात् सम्भवतीति त्वदनुध्यानसम्भवा । देहिनाम्=देहः अस्ति येषा ते देहिनः, तेषा देहिनाम्, इनिप्रत्ययः । "प्राणी तु चेतनो जन्मी जन्तु जन्युशरीरिणः" इत्यमरः । अन्तरात्मा=अन्तः स्थित आत्मा अन्तरात्मा ॥ अत्राह मनुः—

"योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्मा च सहजः सर्वदेहिनाम् ।
यत्र वेदयते सर्वं सुखं दुःखं च जन्मसु ॥" इति ।

**भावार्थः**—हे त्रिलोचन ! त्वत्कर्तृकस्मरणजन्याऽस्माकं या प्रीतिः,सा तुभ्यं किमर्थं निवेद्यते । सकलप्राणिना त्वमन्तर्याम्यसि । तथा च सर्वान्तर्यामिना त्वयाऽस्मत्प्रीतिरनावेदिताऽपि ज्ञायत एव, यतस्ततो न बुद्धबोधनं संभवतीति भावः ।

**भाषा**—हे त्रिलोचन ! आप के स्मरण करने से जो हृदय में प्रीति उत्पन्न हुई है । उसे किस तरह आप से कहें, आप तो अन्तर्यामी हैं, अतः सब जानते ही हैं ।

इत्थं भगवद्दर्शने जातेऽपि स्वरूपपरिज्ञानाऽभावाद् भगवत्स्वरूपमेव सम्यगवगन्तु प्रार्थयन्ते—

**साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वा वयमञ्जसा ।**
**प्रसीद कथयाऽऽत्मानं न धियां पथि वर्तसे ॥ २२ ॥**

हम देखते प्रत्यक्ष किन्तु न, तत्त्वतः हैं जानते ।
निज को कहें, हो मुदित, मति-पथ में न रहते धीपते ॥

**अन्वयः**—हे देव ! साक्षात् दृष्टः असि, अञ्जसा पुनः त्वा वयं न विद्मः, अतः प्रसीद; आत्मानं कथय, धिया पथि न वर्तसे ।

**व्याख्या**—हे देव=हे महेश्वर ! साक्षात्=प्रत्यक्षेण, दृष्टोऽसि=अवलोकि-

ताऽसि, अञ्जसा पुनः=तत्त्वतस्तु, त्वा=त्वा, वयं=सप्तर्षयः, न विद्मः = न जानीमः । अतः, प्रसीद=अनुगृहाण । आत्मानं = निजस्वरूपं, कथय = ब्रूहि । न चाऽकथितं तत्सुबोधमित्याह-धिया=बुद्धीना, पथि=मार्गे, न वर्तसे = न विद्यसे । अतस्त्वयैव त्वद्रूपं कथनीयमित्यर्थः ।

**व्युत्पत्तिः**—त्वा = "त्वामौ द्वितीयायाः" इति त्वाऽऽदेशः । विद्मः="विद ज्ञाने" इति धातोर्लट् । कथय = "कथ वाक्यप्रबन्धे" इति चौरादिकाद्धातोर्लोट् । धिया = "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः ।

**भावार्थः**—यद्यपि भवान् अद्य कृपयास्माकं साक्षात्कारपदवीमुपगतः, वयं तु तथापि त्वा परमार्थतो नावगच्छामः । अतस्त्वं प्रसादं विधेहि, आत्मनः परमार्थस्वरूपं निवेदय । त्वं ज्ञानविषयो नासि, ज्ञानविषयत्वे ज्ञेयत्वप्रसङ्गात् । दृश्यमानमिदं न भवतः परमार्थभूतं स्वरूपं, किन्तु मायाशबलमेवेति भावः ।

**भाषा**—आप को प्रत्यक्ष देख रहे हैं, लेकिन तत्त्वतः नहीं समझ पाते हैं । हे महेश्वर ! प्रसन्न होकर बतलाइये कि आप कौन हैं, क्योंकि आप बुद्धि से परे हैं।

तात्त्विकं रूपं तावदास्ता, न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह—

**किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।**
**अथ विश्वस्य संहर्ता भागः कतम एष ते ॥ २३ ॥**

**जिससे सृजन करते, तथा हैं पालते संहारते ।**
**वह कौन मूर्त्ति समक्ष है बतलाइये अवनी पते ! ॥**

**अन्वयः**—हे देव ! एष ते भागः, किं ? येन व्यक्तं सृजसि सः, उत येन तत् बिभर्षि सः, अथ यः विश्वस्य संहर्त्ता सः, कतमः ? ।

**व्याख्या**—हे देव = हे महेश्वर !, एषः=दृश्यमानः, ते – तव, भागः = मूर्त्तिः, किं ? येन = भागेन, व्यक्तं = प्रपञ्चं, सृजसि = उत्पादयसि, सः, यत्तदोर्नित्यसम्बन्धात् तच्छब्दः अध्याहार्यः । उत = अथवा, येन=भागेन, तत् = व्यक्तं, बिभर्षि = पालयसि, सः, अथ=यद्वा, यः = भागः, विश्वस्य=प्रपञ्चस्य, संहर्ता = संहारकः, सः, कतमः = कः ।

**व्युत्पत्तिः**—सृजसि = "सृज विसर्गे" इति धातोर्लट् । बिभर्षि = "डुभृञ् धारणपोषणयोः" इति धातोर्लट् । संहर्त्ता = संहरतीति संहर्ता, "हृञ् हरणे" इति धातोः "ण्वुल्तृचौ" इति तृच् । कतमः=किं शब्दात् "वा बहुना जातिपरिप्रश्ने डतमच्" इति डतमच्प्रत्ययः । "जातिपरिप्रश्ने" इति प्रत्याख्यातमाकरे ।

अत्र सर्वत्र भागपदप्रयोगाद् भागी परमार्थभूतः सत्त्वरजस्तमोभिरस्पृष्टः कश्चिदस्त्ये-वेति व्यज्यते। तादृशस्य परमार्थभूतस्याऽवगमविषयोऽयमस्माक प्रश्न इति च ध्वन्यते।

**भावार्थः**—हे परमात्मन् ! अस्माभिस्तव बहवो भागाः श्रूयन्ते, तेषु कतमोऽयं भागः । येन भागेन प्रपञ्चमुत्पादयसि, सोऽयं ब्रह्मरूपो भागः, अथवा येन भागेन प्रपञ्च पालयसि, स विष्णुरूपोऽयं भागः, अहोस्वित् येन भागेन प्रपञ्चं संहरसि, सोऽयं रुद्ररूपो भाग, तद् व्यक्तमुच्यतामिति भावः ।

**भाषा**—हे देव ! जिस मूर्त्ति को हम सामने प्रत्यक्ष देख रहे हैं, यह मूर्त्ति सजन करने वाली, पालन करने वाली, अथवा संहार करने वाली, तीनों मे से कोन सी है ।

अथ प्रसङ्गागता दुरवगमार्थप्रार्थना प्रतिषेधन्तो निदेशानुग्रहमेव प्रार्थयन्ते—

**अथ वा सुमहत्येषा प्रार्थना देव ! तिष्ठतु ।**
**चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ? ॥ २४ ॥**

**है प्रार्थना दुर्लभ अभी हम एक ओर उसे धरें ।**
**अब चिन्तितोपस्थित हमें आदेश दें हम क्या करें ॥**

**अन्वयः**—अथ वा हे देव ! सुमहती एषा प्रार्थना तिष्ठतु । चिन्तितोपस्थितान् नः तावत् शाधि, किं करवाम् ?

**व्याख्या**—अथवा = यद्वा, हे देव = हे महेश्वर !, सुमहती = अतिमहती, गुह्यतमत्वादतिदुर्लभेत्यर्थः । एषा = इयं, प्रार्थना=याचना, निजस्वरूपनिरूपणप्रार्थना इत्यर्थः । तिष्ठतु = आस्ताम् । चिन्तितोपस्थितान् = ध्यातोपागतान्, नः = अस्मान्, तावत्=प्रथम, शाधि = आज्ञापय । किं करवाम = किं कुर्याम ।

**व्युत्पत्तिः**—हे देव = दीव्यतीति देव., तत्सम्बुद्धौ हे देव, "अमरा निर्जरा देवाः" इत्यमरः । सुमहती = मह्यते=पूज्यते, इति महती, "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च" इति निपातः । ततः स्त्रीत्वविवक्षायाम् "उगितश्च इति ङीप्प्रत्ययः । सुतराम्=अतिशयेन, महती सुमहती । चिन्तितोपस्थिताम्=चिन्तिताश्च ते उपस्थिताः चिन्तितोपस्थिताः, तान् चिन्तितोपस्थितान् । करवाम = "डुकृञ् करणे" इति धातोः प्रार्थनाया लोट् ।

अत्र प्रकरणे मुनीना देवविषया रतिः प्रदर्शिता । सैव भाव इति व्यपदिश्यते । तथा चोक्तं काव्यप्रकाशे—

"रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ।

भाव: प्रोक्तः" इति । उल्ला० ४ श्लोकः ॥ ३५ ॥

तस्य च हरस्य कटाक्षमन्दस्मितादिभिः प्रसादावधारणमुद्दीपनम् । मुनीना हर्षधृतिमतिगर्वचपलतौत्सुक्यसम्भ्रमास्तु व्यभिचारिणः । वागारम्भादिरूपाश्चानुभावाः । एतैर्देवविषयो रत्याख्यो भावः सुतरामभिव्यज्यते इत्यन्यत्र विस्तर. ।

**भावार्थः**—अथवा हे महादेव ! गुह्यतमत्वाद् दुरवापाऽस्माभिरिदानीं कृतैषा निजस्वरूपनिरूपणप्रार्थना तिष्ठतु । नायमस्या अवसरः । त्वत्कृतस्मरणेन प्राप्तान् अस्मान् आज्ञापय, कीदृशोऽर्थविशेषोऽस्माभिः कर्तव्य इति भावः ।

**भाषा**—अथवा हे महादेव ! यह दुर्लभ प्रार्थना रहने दीजिये, इसका अवसर नहीं है, कृपया आप बतलाइये, हमलोगों को किस लिये बुलाया है, क्या आज्ञा है।

इत्थमुपरते मुनिवचसि महेश्वरस्य मुनिविषष प्रकृतोपयोगसुभगं नियोगमवतारयितुमुपक्रमते—

**अथ मौलिगतस्येन्दोर्विशदैर्दशनांऽशुभिः ।**
**उपचिन्वन्प्रभां तन्वीं प्रत्याह परमेश्वरः ॥ २५ ॥**

**शिर के शशी की लघु कला की दन्त कर से वृद्धि कर ।**
**कहने लगे सप्तर्षि से शङ्कर वचन सुस्मित सुवर ॥**

**अन्वयः**—अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीं प्रभा विशदैः दशनाऽशुभिः उपचिन्वन् प्रत्याह ।

**व्याख्या**—अथ = अनन्तरं, परमेश्वरः = शङ्करः, मौलिगतस्य = जटासंयतकेशस्थितस्य, इन्दोः = चन्द्रस्य, तन्वीम् = अल्पां, प्रभा = कान्ति, विशदैः = शुभ्रैः, दशनाऽशुभिः = दन्तकिरणैः, मन्दस्मितोद्भूतैरिति शेषः । उपचिन्वन् = वर्धयन्, प्रत्याह = प्रत्युवाच ।

**व्युत्पत्तिः**—परमेश्वरः = परमश्चाऽसौ ईश्वरः परमेश्वरः । मौलिगतस्य = मौलिं गतः मौलिगतः, तस्य मौलिगतस्य, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नैः" इति समासः । "चूडा किरीटं केशाश्च सयता मौलयस्त्रयः" इत्यमरः । इन्दोः = "हिमाऽशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धव" इत्यमरः । विशदैः = "शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः" इत्यमरः । दशनाऽशुभिः = दशनानाम् अंशवः दशनाऽशवः, तैः दशनांशुभिः । उपचिन्वन् = उपचिनोतीति उपचिन्वन्, "चिञ् चयने" इति धातोः शतृप्रत्ययः ।

**भावार्थः**—अथ महेश्वरो मन्दस्मितोद्भूतदन्तप्रभासन्तानैर्जटासंयतकेशपा-

शघटितस्य बालचन्द्रस्य प्रभा वर्धयन् तान् सप्तर्षीन् प्रत्युवाचेति भावः ।

**भाषा**—मन्द हास्य के कारण निकली हुई स्वच्छ दातो की प्रभा से शिर स्थित बालचन्द्रमा की दुर्बल प्रभा को बढाते हुए महेश्वर ने सप्तर्षियों से कहा ।

अथ क्रमेण निदेशप्रकारमेव दर्शयति विदितमित्यादिभिरष्टभिः श्लोकैः । तत्रादावात्मनो भार्यापरिग्रहस्य परोपकारार्थता प्रतिपादयिष्यन् सार्वासामपि निजप्रवृत्तीना परोपकारार्थता दर्शयति—

**विदितं वो यया स्वाऽर्था न मे काश्चित्प्रवृत्तयः ।**
**ननु मूर्तिभिरष्टाभिरित्थं भूतोऽस्मि सूचितः ॥ २६ ॥**

यह विदित है स्वार्थार्थ कोई कार्य मैं करता न हूँ ।
हूँ अष्ट मूर्त्ति अपार सूचित अधिक इससे क्या कहूँ ॥

**अन्वयः**—हे मुनयः ! काश्चित् मे प्रवृत्तयः यथा स्वाऽर्था न, तथा वः विदितम् । अष्टाभिः मूर्तिभिः इत्थम्भूतः सूचितः अस्मि ।

**व्याख्या**—हे मुनयः = हे ऋषयः, काश्चित् = का अपि, मे = मम, प्रवृत्तयः = व्यापाराः; यथा = येन प्रकारेण, स्वाऽर्थाः = आत्माऽर्थाः, न=न भवन्ति । तथा = तेन प्रकारेण, वः = युष्माकं, विदित = ज्ञातम् । प्रवृत्तिपारार्थ्ये प्रमाणमाह—अष्टाभिः = अष्टसंख्याकाभिः, मूर्तिभिः = कायैः, इत्थम्भूतः=इमं प्रकारं= पराऽर्थप्रवृत्तिरूपं, प्राप्तः, सूचितः = ज्ञापितः, अस्मि = वर्ते ।

**व्युत्पत्तिः**—स्वाऽर्थाः = स्वस्मै इमे स्वाऽर्थाः, "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति समासः । वः = "विदितम्" इति योगात् "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी । युष्मादिभिरित्यर्थः । विदित = बुद्ध्यर्थत्वात् "मतिबुद्धिपूजाऽर्थेभ्यश्च" इति वर्तमाने क्तप्रत्यय । मूर्तिभिः = "मूर्तिः काठिन्यकाययोः" इत्यमरः । इत्थम्भूतः = इत्थं भूतः इत्थम्भूतः, 'सुप्सुपा' इति समासः । "भू प्राप्तौ" इति धातोः कर्तरि क्तः । शिवमूर्तीनामष्टविधत्वमुक्त शैवागमतन्त्रे, तथाहि—

"भूमिरापोऽनलो वायुरात्मा व्योम रविः शशी ।
इतीमाः सर्वलोकाना प्रत्यक्षाः शिवमूर्तय. ॥" इति ।

**भावार्थः**—सर्वेषामपि मे व्यापाराणा यथा न स्वार्थत्वं, तथा तपःप्रभावावगतपरमार्थैर्युष्माभिरवगम्यत एव । प्रत्यक्षाणा पृथिव्यादीना ममाष्टाना रूपाणा परार्थत्वदर्शनादप्रत्यक्षमागमैकगम्य मम रूपमपि परार्थमात्रपरमिति सर्वैरप्यनुमा-

तुं शक्यमेवेति भावः ।

**भाषा**—आपलोग जानते ही हैं, हमारी कोई प्रवृत्ति स्वार्थमय नहीं है, यह बात हमारी आठों मूर्तियों से प्रकट है ।

अथ स्वप्रवृत्तीना परार्थैकपरत्वस्य प्रकृतोपयोगिता प्रदर्शयन् देवैः कृतपूर्वा प्रार्थनामाह—

**सोऽहं तृष्णाऽऽतुरैर्वृष्टिं विद्युत्वानिव चातकैः ।**
**अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥**

**चातक तृषित वर्षार्थ घन से प्रार्थना करते यथा ।**
**संतान को अरि दुखित सुर मुझसे विनय करते तथा ॥**

**अन्वयः**—सः अहं "तृष्णाऽऽतुरैः चातकैः वृष्टिं विद्युत्वान् इव" अरिविप्रकृतैः देवैः प्रसूतिं प्रति याचितः अस्मि ।

**व्याख्या**—सः = परार्थवृत्तिः, अहं = शङ्करः, तृष्णाऽऽतुरैः = पिपासाऽऽकुलैः, चातकैः = स्तोककैः, वृष्टिं = वर्षं, विद्युत्वान् इव—मेघ इव, अरिविप्रकृतैः = शत्रुपीडितैः, देवैः = अमरैः, प्रसूतिं प्रति = पुत्रोत्पादनं प्रति, याचितः = प्रार्थितः, अस्मि ।

**व्युत्पत्तिः**—तृष्णाऽऽतुरैः = तृष्णया आतुराः तृष्णाऽऽतुराः, तैः तृष्णाऽऽतुरैः, चातकैः="अथ सारङ्गः स्तोककश्चातकः समाः" इत्यमरः । विद्युत्वान् = विद्युत् अस्ति यस्य स विद्युत्वान्, "तडित्वान् वारिदोऽम्बुभृत्" इत्यमरः । अरिविप्रकृतैः = अरिभिः विप्रकृताः अरिविप्रकृताः, तैः अरिविप्रकृतैः । याचितः = "टु याचृयाञ्चायाम्" इति धातोः दुहादित्वात् अप्रधाने कर्मणि क्तः ।

अनेन कामदहनानन्तरं भग्नमनोरथैरवगतपरमार्थैर्देवैर्महेश्वरोऽभ्यर्थितोऽभूदित्येषा पौराणिकी कथा द्योत्यते ।

**भावार्थः**—यथा तृष्णातुराश्चातकाः मेघं वृष्टिं याचन्ते, तथा शत्रुपीडिता देवाः परार्थमात्रनिरतं मा प्रति पुत्रोत्पत्तिमभ्यर्थितवन्त इति भावः ।

**भाषा**—जिस तरह प्यासे चातक मेघ से वृष्टि की याचना करते हैं, उसी तरह शत्रु से पीडित देवता लोग मुझसे पुत्रोत्पत्ति की इच्छा करते हैं ।

तत् प्रयोजनञ्चाह—

**अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।**
**उत्पत्तये हविर्भोक्तुर्यजमान इवाऽरणिम् ॥ २८ ॥**

प्रकृतार्थ पावक अरणि है यजमान जसे चाहता ।
सुत के लिये मैं भी उमा को आज वैसे चाहता ॥

**अन्वयः**—अतः आत्मजन्मने पार्वतीं "यजमानः हविर्भोक्तुः उत्पत्तये अरणिम् इव आहर्तुम् इच्छामि ।

**व्याख्या**—अतः = अस्मात्, सुरप्रार्थितत्वात् हेतोः । आत्मजन्मने = पुत्राय, पुत्रमुत्पादयितुमित्यर्थः । पार्वतीं = गौरीं, यजमानः = यष्टा, हविर्भोक्तुः = अग्नेः, उत्पत्तये=निष्पत्तये अरणिम् इव=अग्निमन्थनदारुविशेषम् इव, आहर्तुं= परिणेतुम्, इच्छामि=वाञ्छामि ।

**व्युत्पत्तिः**—आत्मजन्मने=आत्मनः जन्म यस्य स आत्मजन्मा, तस्मै आत्मजन्मने, "आत्मजस्तनयः सुनुः सुतः पुत्रः" इत्यमरः । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । यजमानः = यजधातोः "पूङ्यजोः शानन्" इति शानन्प्रत्ययः । हविर्भोक्तुः=भुनक्तीति भोक्ता, हविः भोक्ता हविर्भोक्ता, तस्य हविर्भोक्तुः । अरणिम् = "निर्मन्थ्यदारुणित्वरणिर्द्वयोः" इत्यमरः ।

नन्वत्र महता प्रबन्धेन प्रतिपादित पार्वत्यास्तपश्चरणमुपेक्ष्य देवप्रार्थनमेव किमर्थं महेश्वरेण परिणयेच्छाकारणत्वेनोपन्यस्तम् । सप्तर्षीणाञ्च तद्दर्शित्वादिति चेदत्र ब्रूम· । ते हि शिवयोः स्वरूपं परमार्थतो जानन्ति । न हि तौ कदाचिदपि परस्परवियुक्तौ । ततो न पार्वत्याः समागमप्रार्थनया तपश्चरणम् । किन्तु महाकुलप्रसूताभिः कन्यकाभिरात्मानुरूपो वरः प्राप्तव्य इति स्त्रीधर्मशिक्षणार्थमेवेति युक्तं महेश्वरस्य मुनीन् प्रति पार्वतीतपश्चरणाऽनुपन्यासः इत्यलं पल्लवितेन ।

**भावार्थः**—अलङ्घनीयदेवप्रार्थनाद्धेतोः अग्न्युत्पादनार्थं यथा यजमानोऽरणिमिच्छति, तथाऽहं पुत्रोत्पादनार्थं पार्वतीं परिणेतुमिच्छामीति भावः ।

**भाषा**—देवों की प्रार्थना के कारण जिस तरह यजमान आग पैदा करने के लिये अरणि ( काष्ठ विशेष ) की इच्छा करता है, उसी भाति पुत्र पैदा करने के लिये मैं पार्वती के साथ विवाह की इच्छा करता हूं ।

अथ प्रकृतार्थे मुनीनामुपयोगित्वमाह—

**तामस्मदर्थे युष्माभिर्याचितव्यो हिमाऽऽलयः ।**
**विक्रियाय न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥ २९ ॥**

इससे हिमालय से उमा हित आप लोग कहें अभय ।
सत्पुरुष कृत सम्बन्ध होता है विकार रहित सदय ॥

**अन्वयः**—अस्मदर्थे युष्माभिः ता हिमालयः याचितव्यः, सदनुष्ठिताः सम्बन्धाः विक्रियायै न कल्पन्ते ।

**व्याख्या**—अस्मदर्थे = अस्मत्प्रयोजने, अस्मत्प्रयोजननिमित्तमित्यर्थः । युष्माभिः=भवद्भिः, ता = पार्वतीं, हिमाऽऽलयः = हिमवान् , याचितव्यः=प्रार्थनीयः । आवश्यकं चैतदित्याह—सदनुष्ठिताः = सत्पुरुषसंघटिताः, सम्बन्धाः = विवाहादयः, विक्रियायै = दोषाय, न कल्पन्ते = न पर्याप्नुवन्ति, न समर्था भवन्तीत्यर्थः ।

**व्युत्पत्तिः**—अस्माकम् अर्थः अस्मदर्थः, तस्मिन् अस्मदर्थे, "निमित्तात् कर्मयोगे" इति सप्तमी । "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" इत्यमरः । हिमालयः=हिमस्य आलयः हिमालयः । याचितव्यः = याचितुं योग्यः याचितव्यः, याचेर्दुहादित्वात् अप्रधाने कर्मणि तव्यत् प्रत्ययः । सदनुष्ठिताः=सद्भिः अनुष्ठिताः सदनुष्ठिताः, विक्रियायै=विरुद्धा क्रिया विक्रिया, तस्यै विक्रियायै, अलमर्थयोगात् चतुर्थी । अत्राऽर्थान्तरन्यासोऽलङ्कारः ।

**भावार्थः**—युष्माभिः सप्तर्षिभिरस्मत्प्रयोजननिमित्तं हिमवान् ता पार्वतीमभ्यर्थनीयः । सत्पुरुषैः सङ्घटिता विवाहादयः सम्बन्धाः कदाचिदपि दोषं नोत्पादयन्तीति भावः ।

**भाषा**—इस लिये मेरी ओर से हिमालय से पार्वती के लिये प्रार्थना कीजिये । क्यों कि सज्जनों से सङ्घटित विवाहादि सम्बन्धो में कोई बाधा नहीं आती ।

देवकन्याः परित्यज्य पर्वतकन्यायाः परिणये श्लाघ्यसम्बन्धत्वमप्याह—

**उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।**
**तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥**

उन्नत प्रतिष्ठित भूमि धर गिरिराज कहते सर्वदा ।
मुझको अवञ्चित जानिये सम्बन्ध रख उनसे सदा ॥

**अन्वयः**—उन्नतेन स्थितिमता भुवः धुरम् उद्वहता तेन योजितसम्बन्ध मामपि अवञ्चितं वित्त ।

**व्याख्या**—उन्नतेन=उच्चेन, उत्कृष्टेन च, स्थितिमता=प्रतिष्ठावता, अचञ्चलेन च, भुवः=पृथिव्याः, धुरं = भारम् , उद्वहता=धारयता, सार्वभौमेन च, तेन=हिमालयेन, योजितसम्बध = सङ्घटितसम्बन्धं, युष्माभिरिति शेषः । मामपि=

शङ्करमपि, अवञ्चितम् = अव्यामोहितं, कृतार्थमित्यर्थ । वित्त = जानीध्वम् ।

**व्युत्पत्तिः**—उन्नतेन = "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । स्थितिमता = स्थितिः अस्ति यस्य स स्थितिमान्, तेन स्थितिमता, मतुप्प्रत्यः । उद्वहता = उद्वहतीति उद्वहन्, तेन उद्वहता । योजिसम्बन्धं = योजित. सम्बन्धः यस्य स योजितसम्बन्धः, त योजितसम्बन्धम् । अवञ्चित = न वञ्चितः अवञ्चितः, तम् अवञ्चित । वित्त = "विद ज्ञाने" इति धातोर्लोट् ।

**भावार्थः**—यूयं जात्याचारादिभिरुत्कृष्टेन प्रकृते प्रांशुना च स्थिरबुद्धिना प्रकृतेऽचञ्चलस्वरूपेण च सार्वभौमेन प्रकृते भूमेरुद्धरणव्यापारमुद्वहता च तेन हिमालयेन सह विहितसम्बन्ध मामपि कृतार्थं जानीध्वमिति भावः ।

**भाषा**—उन्नत स्थिर और सारी पृथ्वी को धारण करने वाले हिमालय से यदि मेरा सम्बन्ध हो जाय, तो मुझको भी कृतार्थ समझिये ।

"इत्थ स हिमालयः कन्या याचितव्य" इति युष्माक महर्षीणामुपदेशस्य प्रयोजन नेत्याह—

**एवं वाच्यः स कन्याऽर्थमिति वो नोपदिश्यते ।**
**भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१ ॥**

**कन्यार्थ यों कहिये न शिक्षा की जरूरत है प्रवर ।**
**बुध तव-रचित-आचार का उपदेश करते हैं सुधर ॥**

**अन्वय.**—"कन्याऽर्थे स एव वाच्यः" इति वः न उपदिश्यते । हि साधवः भवत्प्रणीतम् आचार आमनन्ति ।

**व्याख्या**—कन्याऽर्थे = कन्याप्रदानाय, सः = हिमाऽऽलयः, एव वाच्यः = एवं वक्तव्यः, इति=एतत्, वः=युष्मभ्यं, न उपदिश्यते = न उपदेशः क्रियते, मयेति शेषः । हि=यस्मात्, साधवः = विद्वासः, भवत्प्रणीत=भवत्कृतं, स्मृतिरूपेण निबद्धमित्यर्थः । आचारम्=आचरणम्, लौकिकवैदिकात्मकमिति यावत् । आमनन्ति = अभ्यस्यन्ति । न हि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इत्यर्थः ।

**व्युत्पत्तिः**—कन्याऽर्थे = कन्यायै इदं कन्यार्थं, वाच्यः = वक्तुं योग्यः वाच्यः, "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः । भवत्प्रणीत = भवद्भिः प्रणीतः प्रवत्प्रणीतः, तं भवत्प्रणीतम् ।

**भावार्थः**—"कन्याप्रदानाय स हिमालय एव वक्तव्य" इति मया युष्मभ्य नोपदिश्यते । यस्मात् विद्वासो भवद्भिः स्मृतिरूपेण निबद्धं लौकिकवैदिकात्मकमा-

चारं परेभ्य उपदिशन्ति । नहि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इति भावः ।

**भाषा**—आप लोग कन्या के लिये हिमालय से किस तरह कहेंगे इसका मैं उपदेश नहीं करता, क्यों कि विद्वान लोग आप लोगों के बनाये हुए आचारों की शिक्षा दूसरों को देते हैं ।

गौरवविशेषाऽभावादरुन्धतीमप्याह—

**आर्याऽप्यरुन्धती तत्र व्यापारं कर्तुमर्हति ।**
**प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥ ३२ ॥**

**यह पूजनीय अरुन्धती उद्वाह में देगी मदद ।**
**प्रायः सुकार्यों में पुरन्ध्री-चतुरता रहती फलद ॥**

**अन्वयः**—कार्या अरुन्धती अपि तत्र व्यापारं कर्तुम् अर्हति । प्रायेण एवं विधे कार्ये पुरन्ध्रीणा प्रगल्भता भवति ।

**व्याख्या**—कार्य्या=पूज्या, अरुन्धती अपि=वशिष्ठपत्नी अपि, तत्र=कन्या-प्रार्थनाया, व्यापारं=साहाय्य, कर्तुं=विधातुम् , अर्हति=योग्या भवति । प्रायेण= प्राचुर्येण, एवंविधे=एतादृशे, कार्ये=कर्मणि, स्त्रीपुरुषसङ्घटनादिरूपे कार्ये इत्यर्थः । पुरन्ध्रीणा=कुटुम्बिनीना, प्रगल्भता=चतुर्यम् , भवतीति शेषः ।

**व्युत्पत्तिः**—आर्या=“ऋहलोर्ण्यत्” इति ण्यत्प्रत्ययः । तत्र=तस्मिन्निति तत्र, “सप्तम्यास्त्रल्” इति त्रल् । एवंविधे=“एव विधा=प्रकारः, यस्य तत् एवंविधं, तस्मिन् एवंविधे, “विधा विधौ प्रकारे च” इत्यमरः । कार्ये कर्तुं योग्यं कार्यं, तस्मिन्कार्ये, ण्यत्प्रत्ययः । पुरन्ध्रीणा=“स्यात्तुकुटुम्बिनी पुरन्ध्री” इत्यमरः । प्रगल्भता=प्रगल्भस्य भावः प्रगल्भता, तल्प्रत्ययः । “प्रगल्भः प्रतिभाऽन्विते” इत्यमरः ।

**भावार्थः**—श्रेष्ठा वशिष्ठपत्नी च कन्याप्रार्थनाया युष्माकं साहाय्यं कर्तुमर्हति। विशेषतो विवाहादिदुर्घटकार्ये कुटुम्बिनीनामेव प्रागल्भ्यं भवतीति भावः ।

**भाषा**—इस कार्य में अरुन्धती भी आप लोगों की सहायता कर सकती है । क्योंकि ऐसे कार्यों में कुटुम्बनी की चतुरता प्रशंसनीय होती है ।

प्रकृतविषये स्ववचनमुपसंहरति—

**तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम्**
**महाकोशीप्रपातेऽस्मिन्सङ्गमः पुनरेव नः ॥ ३३ ॥**

**इस हेतु ओषधि प्रस्थ नामक हिम नगर में जाइये ।**

गिरती महा कोशी नदी मिल कर वहीं पर आइये ॥

**अन्वयः**—तत् ओषधिप्रस्थ हिमवत्पुरं सिद्धये प्रयात । अस्मिन् महाकोशी-प्रपाते एव नः पुनः सङ्गमः भवतु ।

**व्याख्या**—तत = तस्मात्कारणात् , ओषधिप्रस्थम् = ओषधिप्रस्थनामकं, हिमवत्पुर=हिमाऽऽलयनगरं सिद्धये=प्रस्तुतविवाहकार्यलाभाय, प्रयात=गच्छत । अस्मिन् = पुरोवर्तिनि, महाकोशीप्रपाते एव = महाकोशीभृगौ एव, नः = भवताम् , अस्माक च, पुनः=भूयः, सङ्गमः = मेलन भवतु इति शेषः । भवत्समागमं प्रतिपालयन् अहमिहैव निवत्स्यामीति यावत् ।

**व्युत्पत्तिः**—ओषधिप्रस्यम्=ओषधीना प्रस्थः यस्मिन् तत् ओषधिप्रस्थं, तत् । हिमवत्पुर=हिमानि सन्ति यस्मिन् स हिमवान् , तस्य पूः हिमवत्पुरं, तत् । "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अप्रत्ययः । महाकोशी प्रपाते= प्रपतत्यस्मिन्निति प्रपातः = पतनस्थानं, महाकोश्याः प्रपातः महाकोशीप्रपातः, तस्मिन् महाकौशीप्रपाते, "प्रपातस्त्वतटो भृगुः" इत्यमरः । महाकोशी नाम हिमवत्प्रभवा काचिन्नदी । महाकोशीनदीप्रपतनस्थाने इत्यर्थः ।

**भावार्थः**—तस्मात् प्रस्तुतविवाहकार्यसाधनाय यूयमोषधिप्रस्थ नाम हिमवन्नगर गच्छत । कन्याप्रार्थनानन्तरमत्र दृश्यमाने महाकौशीप्रपातस्थाने एव भवद्भिरागन्तव्य, तत्रैवाऽहं भवत्समागमं प्रतिपालयन् निवत्स्यामीति भावः ।

**भाषा**—अब आप लोग कार्य सिद्धि के लिये हिमालय के ओषधि प्रस्थ नगर को जाइये, पुनः जहा महाकोशी नदी गिरति है, वहा मुझसे और आप लोगों से मुलाकात होगी ।

इत्थ महेश्वरेण नियुक्ताना सप्तर्षीणा मानसीं प्रवृत्तिमाह—

**तस्मिन्संयमिनामाद्ये जाते परिणयोन्मुखे ।**
**जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥ ३४ ॥**

योगी प्रवर वृष केतु को उद्वाह–उत्सुक देख कर ।
ऋषि वृन्द ने तज दी त्रपा गार्हस्थ्य मूलक रम्य तर ॥

**अन्वयः**—संयमिनाम् आद्ये तस्मिन् परिणयोन्मुखे जाते सति प्राजापत्याः तपस्विनः परिग्रहव्रीडा जहुः ।

**व्याख्या**—सयमिना = जितेन्द्रियाणाम् , आद्ये=श्रेष्ठे, तस्मिन् = महेश्वरे, परिणयोन्मुखे = विवाहोत्सुके, जाते = प्रवृत्ते सति, प्राजापत्याः = ब्रह्मपुत्राः, तप-

स्विनः=मुनयः, परिग्रहव्रीडा = पत्नीजन्यलज्जा, जहुः =तत्यजुः ।

**व्युत्पत्तिः**—संयमिनां = संयमः अस्ति येषां ते संयमिनः तेषां संयमिनाम्, इनिप्रत्ययः । आद्ये = आदौ भवः आद्यः, तस्मिन् आद्ये, यत्प्रत्ययः । परिणयोन्मुखे=परिणये उन्मुखः परिणयोन्मुखः, तस्मिन्परिणयोन्मुखे । "विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्" इत्यमरः । प्राजापत्याः=प्रजानां पतिः प्रजापतिः, "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इत्यमरः । प्रजापतेः इमे प्राजापत्याः, 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्ययः । तपस्विनः=तपः अस्ति येषां ते तपस्विनः, विनिप्रत्ययः । परिग्रहव्रीडा =परिग्रहैः व्रीडा परिग्रहव्रीडाः तां परिग्रहव्रीडां । विवाहजन्यामित्यर्थः । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इति, "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यप्यमरः । जहुः= "ओहाक् त्यागे" इति धातोर्लिटि रूपम् ।

**भावार्थः**—जितेन्द्रियाणां श्रेष्ठे निवृत्तिमार्गप्रवर्तके महेश्वरे प्रवृत्तिमार्गप्रधाने विवाहे प्रवृत्ते सति, ब्रह्मपुत्राः सप्तर्षयः स्त्रीपरिग्रहजनितां लज्जां तत्यजुरिति भावः

**भाषा**—संयमियो में श्रेष्ठ महादेव को विवाह के लिये उत्सुक देख कर सप्तर्षियों ने स्त्रियों के विषय में लज्जा त्याग दी ।

अथ सप्तर्षीणां गमनोद्योगमाह—

**ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।**
**भगवानपि सम्प्राप्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥**

**स्वीकार कर आज्ञा समुद प्रस्थान ऋषियों ने किया ।**
**सानन्द साङ्केतिक जगह पर शम्भु ने भी चल दिया ॥**

**अन्वयः**—ततः मुनिमण्डलं परमम् इति उक्त्वा प्रतस्थे । भगवान् अपि प्रथमोद्दिष्टम् आस्पदं सम्प्राप्तः ।

**व्याख्या**—ततः =अनन्तरं, मुनिमण्डलम्=ऋषिसमूहः, परमम् इति=ओम् इति, उक्त्वा =कथयित्वा, स्वीकृत्येत्यर्थः । प्रतस्थे =प्रस्थानं चकार । भगवान् अपि=महेश्वरः अपि, प्रथमोद्दिष्ट=पूर्वसंकेतितम् , आस्पद=स्थानं, महाकोशीप्रपातमित्यर्थः । सम्प्राप्तः=सम्प्राप ।

**व्युत्पत्तिः**—मुनिमण्डलं=मुनीनां मण्डलं मुनिमण्डलम् । परमम्=अव्ययमेतत् । "ओमेवं परमं मतम्" इत्यमरः । प्रतस्थे = "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । प्रथमोद्दिष्टं =प्रथमे उद्दिष्टं प्रथमोद्दिष्टं, तत् ।

**भावार्थः**—हरनियोगानन्तरं सप्तर्षिमण्डल महेश्वरोदीरितमर्थमोमिति प्रतिज्ञायौषधिप्रस्थं नाम हिमवन्नगं जगाम। महेश्वरोऽपि पूर्वनिर्दिष्टं महाकौशीप्रपातस्थान सम्प्रापेति भावः।

**भाषा**—इसके बाद ओम् ऐसा कह कर ऋषि लोग चले गये, और भगवान शङ्कर भी अपने सकेत स्थान पर पहुच गये।

अथ तेषा गमनप्रकारमाह—

> **ते चाकाशमसिश्यामसुत्पत्य परमर्षयः।**
> **आसेदुरोषधिप्रस्थं मनसा समरंहसः॥ ३६॥**
> **सप्तर्षि मन सम वेग वाले तनिक भी न जमें थमें।**
> **असि-श्याम-अम्बर में उड़े पहुंचे हिमालय नगर में॥**

**अन्वयः**—मनसा समरंहसः ते परमर्षयश्च असिश्यामम् आकाशम् उत्पत्यओषधिप्रस्थम् आसेदुः।

**व्याख्या**—मनसा = चित्तेन, समरंहसः = तुल्यवेगाः, ते पूर्वोक्ताः, परमर्षयश्च=सप्तर्षयश्च, असिश्यामं=कृपाणनीलम्, आकाशं=खम्, उत्पत्य=उत्पतनं कृत्वा, ओषधिप्रस्थ = हिमालयपुरम्, आसेदुः=प्राप्तवन्तः।

**व्युत्पत्तिः**—समरंहसः=सम रंह. थेषा ते समरहसः, "रंहस्तरसी तु रयः स्यदः जवः" इत्यमरः। परमर्षयः=परमाश्च ते ऋषयः परमर्षयः। असिश्यामम्=असिवत् श्यामम् असिश्यामं, तत्, "उपमानानि सामान्यवचनैः" इति समासः।

**भावार्थः**—मनस्तुल्यवेगास्ते सप्तर्षयो नीलं गगनमुत्पत्य "आकाशमार्गेणेति यावत्" ओषधिप्रस्थ नाम हिमवत्पुर प्रापुरिति भावः।

**भाषा**—मन के समान वेगवाले वे सप्तर्षि नीले आकाश में उड़कर गगन के मार्ग से ओषधि प्रस्थ नामक हिमालय के नगर में गये।

इतः परं दशभिः श्लोकैः हिमालयपुरमोषधिप्रस्थमेव वर्णयति। तत्रादौ सर्वसुखाना धनमूलत्वाद्धनबाहुल्यमाह—

> **अलकामतिवाह्येव वसतिं वसुसम्पदाम्।**
> **स्वर्गाऽभिष्यन्दवमनं कृत्वेवोपनिवेशितम्॥ ३७॥**
> **धन देख ओषधि प्रस्थ की अलका पुरी भी दङ्ग थी।**
> **गिरिराज के पुर को निरख वासव पुरी बदरङ्ग थी॥**

**अन्वयः**—वसुसम्पदा वसतिम् अलकाम् अतिवाह्य इव, स्वर्गाऽभिष्यन्द-वमन कृत्वा इव उपनिवेशितम् ओषधिप्रस्थमासेदुरिति पूर्वेणाऽन्वयः ।

**व्याख्या**—वसुसम्पदा=धनसमृद्धीना, वसतिं = स्थानभूताम्, अलका= कुबेरनगरीम्, अतिवाह्य इव = अतिक्रम्य इव, पराक्रमैरिति यावत् । स्वर्गाऽभि-ष्यन्दवमनं = सुरलोकाऽतिरेकनिःसारणं, कृत्वा इव=विधाय इव, उपनिवेशित= स्थापितम्, हिमवतेति शेषः । ओषधिप्रस्थमासेदुरिति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—वसुसम्पदां = वसूना सम्पदः वसुसम्पदः, तासा वसुसम्पदा । "वसु रत्नं वसु धनं वसुमाहुर्हुताऽशनम्" इति शाश्वतः । स्वर्गाऽभिष्यन्दवमनं= स्वर्गस्य अभिष्यन्दः = अतिरिक्तसम्पत्, स्वर्गाऽभिष्यन्दः, तस्य वमनम् = आन-यन, स्वर्गाऽभिष्यन्दवमनं, तत् । स्वर्गे यावती सम्पद् माति, ततोऽधिका सम्प-दत्राभिष्यन्दशब्देनोच्यते ।

अत्र हिमवत्पुरस्य धनपरिपूर्णत्वदर्शनादुत्प्रेक्षाद्वयम् । कुबेरनगरीमभिभूय तत्रस्थाः सम्पदः समानीय विरचितमिवेत्येका । स्वर्गादतिरिक्ताः सम्पदः समानीय विरचितमित्यन्या । द्विविधा हि नयविदा प्रवृत्तिः । यदाह कौटिल्यः—"भूतपूर्वम-भूतपूर्वं वा जनपदं परदेशाऽपवाहनेन स्वदेशाऽभिष्यन्दवमनेन वा निवेशयेत्" इति। तथा चोक्तं भोजराजेन—

"द्वावभिष्यन्दनिष्यन्दौ सारे निष्पीडनोद्भवे ।
व्यवस्थितादप्यधिकोऽप्यभिष्यन्दो जनादिकः ॥" इति ।

**भावार्थः**—धनसमृद्धीना स्थानभूतं, कुबेरनगरीमलकामतिक्रम्येव, स्वर्गा-तिरिक्तसम्पदानयनं विधायेव' हिमवता निष्पादितमौषधिप्रस्थं जगामेति भावः ।

**भाषा**—अलका नगरी से भी बढकर धन समृद्धि का स्थान भूत वह सम्पत्तिशाली ओषधिप्रस्थ नगर एक दूसरा ही स्वर्ग था ।

अथ रक्षाऽभावे धनस्याप्यस्थिरत्वप्रसङ्गाद् राजधान्या रक्षाप्राधान्याच्च हिम-वत्पुरस्य रक्षाविशेषमाह—

**गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।**
**बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८ ॥**

थी ज्वलित औषधि जाह्नवीके स्रोत से वेष्टित प्रवर ।
माणिक्य वरणावरण तो भी अति मनोहर अति सुघर ॥

**अन्वयः**—गङ्गास्रोतःपरिक्षिप्तं वप्राऽन्तर्ज्वलितौषधि बृहन्मणिशिलासालं गुप्तौ

अपि मनोहरम् ओषधिप्रस्थमासेदुरिति पूर्वेणान्वयः ।

**व्याख्या**—गङ्गास्रोतःपरिक्षिप्त = भागीरथीप्रवाहपरिवेष्टित, गङ्गाप्रवाहैरेव कृतपरिखाकृत्यमित्यर्थः । वप्राऽन्तर्ज्वलितौषधि = चयमध्यप्रकाशमानौषधं, ज्वलितौषधित्वात् रात्रिषु सञ्चारिणा दीपनिरपेक्षमित्यर्थः । बृहन्मणिशिलासाल = विपुलमाणिक्यप्राकारम् , अत एव, गुप्तौ अपि=रक्षायामपि, मनोहरम्=सुन्दरम् अकृत्रिमदुर्गसरक्षितमित्यर्थः । ओषधिप्रस्थमासेदुरिति पूर्वेणान्वयः ।

**व्युत्पत्तिः**—गङ्गास्रोतःपरिक्षिप्त=गङ्गायाः स्रोतांसि गङ्गास्रोतांसि, तैः परिक्षिप्तं गङ्गास्रोतःपरिक्षिप्त । वप्राऽन्तर्ज्वलितौषधि = वप्रस्य = प्राकाराचैत्यस्य, अन्तः वप्रान्तः, वप्राऽन्तः ज्वलिताः वप्राऽन्तर्ज्वलिताः, ताः ओषधयः यस्य तत् वप्रान्तर्ज्वलितौषधि । "स्याच्चयो वप्रमस्त्रिया" मित्यमरः । बृहन्मणिशिलासाल= मणीना शिलाः मणिशिलाः, "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । मणिशिलाना सालः मणिशिलासालः, "प्राकारो वरणः साल." इत्यमरः । बृहत् मणिशिलासालः यस्य तत् बृहन्मणिशिलासाल, मनोहर = हरतीति हरं, पचाद्यच् । मनसः हर मनोहरम् ।

अन्यानि पुराणि कर्दमप्रायैः कलुषैरशुचिभिश्च जलैः परिपूरिताभिः परिखाभिः परिवेष्टितानि, कण्टकिद्रुमावृतैर्वप्रैश्च दृष्टिपरुषाणि, शिलामात्रघटितैः प्राकारैश्च दिदृक्षूणा चक्षूंषि न रञ्जयन्तीति गुप्तौ न रमणीयानि ।

इदं तु गुप्तावपि मनोहरमेवेति व्यतिरेकाऽलङ्कारो ध्वन्यते । तथा चोक्तम्—

"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा । व्यतिरेकः" इति ।

**भावार्थः**—गङ्गाप्रवाहैः परिवेष्टितं, कृतपरिखमिति यावत्, वप्रमध्यप्रकाशमानौषधिवनस्पति, विपुलरत्नशिलाप्राकार, रक्षायामपि रमणीयमोषधिप्रस्थं जगामेति भाव

**भाषा**—वह ओषधिप्रस्थ नगर गङ्गा के प्रवाहो से घिरा हुआ, जलती वनस्पतियों से प्रदीप्त, बड़ी बड़ी मणि शिलाओं से रचित प्राकार वाला सुरक्षित रहने पर भी मनोहर था ।

तत्रत्याना सर्वेषामपि पदार्थाना दिव्यत्वमाह—

**जितसिंहभया नागा यत्राऽश्वा विलयोनयः ।**
**यक्षाः किम्पुरुषाः पौरा योषितो वनदेवताः ॥ ३६ ॥**

जित-सिंह-भय कुञ्जर तथा विल-योनि अश्व विराजते ।
वन देवता-योषित मनोहर यक्ष किन्नर राजते ॥

**अन्वयः**—यत्र नागाः जितसिंहभयाः, अश्वाः बिलयोनयः, यक्षाः किंपुरुषाः पौराः, वनदेवताः योषितः सन्ति ।

**व्याख्या**—यत्र = यस्मिन्पुरे, नागाः=गजाः, जितसिंहभयाः = जितमृगेन्द्रभीतयः, सन्तीति शेषः । गजाना दिव्यत्वात् सिंहभयरहितत्वमित्यर्थः । अश्वाः= तुरङ्गाः, बिलयोनयः=बिलसम्भवाः, सन्ति । तत्रापि दिव्यत्वमेव हेतुः । यक्षाः = देवयोनिविशेषाः, किंपुरुषाः = किन्नराश्च, पौराः=पुरजनाः, सन्ति । वनदेवताः= वनदेव्यः, योषितः = स्त्रियः, सन्ति । न तु मानुष्य इत्यर्थः ।

**व्युत्पत्तिः**—यत्र = यस्मिन्निति यत्र, त्रल्प्रत्ययः । नागाः = "मतङ्गजो गजो नागः कुञ्जरो वारण. करी" इत्यमरः । जितसिंहभयाः=सिंहेभ्यः भय सिंहभय, ',सिंहो मृगेन्द्रः पञ्चाऽऽस्यो हर्यक्षः केसरी हरि." इत्यमरः । सिंहेभ्यः इत्यत्र "भीत्रार्थाना भयहेतुः" इत्यपादानत्वम् । जित सिंहभयं यैस्ते जितसिंहभयाः, बिलयोनयः=बिलं योनिः=उद्भवस्थानं, येषा ते बिलयोनयः । अश्वशास्त्रे ह्यश्वाना सप्तधा जन्म प्रतिपादितम् । तथा हि—

"अमृताद्वाष्पतो वह्नेर्वेढेभ्योऽण्डाच्च गर्भतः ।
साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता ॥" इति ।

अत्र तु दिव्यत्वाद् अश्वाना बिलयोनित्वं पुराणप्रसिद्धम् ॥ किंपुरुषाः=कुत्सिताः पुरुषाः किम्पुरुषा, "किं क्षेपे" इति समासः । पौराः = पुरि भवाः पौराः, "तत्र भवः" इत्यण् । वनदेवताः=वनाना देवताः वनदेवताः । योषितः= "स्त्री योषिदवला योषा नारी सीमन्तिनी वधूः" इत्यमरः ।

**भावार्थः**—यत्रौषधिप्रस्थनगरे गजाः सिंहाधिकबला अभूवन्, अश्वा बिलोत्पन्ना आसन्, यक्षाः किम्पुरुषाश्च पुरवासिनो जना अभवन्, वनाधिष्ठात्र्यो देवता एव स्त्रियो बभूवुरिति भावः ।

**भाषा**—वहाँ के हाथी सिंहों से अधिक बल वाले थे, बिल सम्भव घोड़े थे, यक्ष-किन्नर वहाँ के निवासी और वन देवता की तरह दिव्य स्त्रियाँ थीं ।

अथोन्नतत्वं नित्यप्रवृत्तोत्सवत्वं चाह—

**शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।**
**अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः ॥ ४० ॥**

लटके शिखर में मेघ उस पुर के घरों में गरजते ।
ताडन विशेषों से मुरज गम्भीर रव सब समझते ॥

**अन्वयः**—यत्र शिखराऽऽसक्तमेघाना वेश्मनाम् अनुगर्जितसन्दिग्धा मुरज-स्वनाः करणैः व्यज्यन्ते।

**व्याख्या**—यत्र=यस्मिन्पुरे, शिखराऽऽसक्तमेघाना = शृङ्गासक्तबलाहकाना, वेश्मना = सद्मना, सम्बन्धिनः, अनुगर्जितसन्दिग्धा. = प्रतिगर्जितसन्दिग्धाः, मुर-जस्वनाः = मृदङ्गध्वनयः, करणैः = तालव्यवस्थापकैः ताडनविशेषैः, व्यज्यन्ते = स्फुटीक्रियन्ते।

**व्युत्पत्तिः**—शिखराऽऽसक्तमेघाना = शिखरेषु = शिरोगृहेषु, आसक्ताः = अवस्थिताः, शिखरासक्ताः, ते मेघाः येषा तानि शिखराऽऽसक्तमेघानि, तेषा शि-खराऽऽसक्तमेघनाम्। "अभ्र मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः। वेश्मनां = "गृहं गेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमरः। अनुगर्जितसन्दि-ग्धाः = अनुगर्जितैः सन्दिग्धाः अनुगर्जितसन्दिग्धाः। मुरजस्वनाः=मुरजस्य स्वनाः मुरजस्वनाः, "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः। करणैः=क्रियन्ते एभिस्तानि करणानि, तैः करणैः। तथा चोक्तं राजकन्दर्पे सङ्गीतशास्त्रे—

"नृत्यवादित्रगीताना प्रयोगवशभेदिनाम्।
सस्थानं ताडनं रोधः करणानि प्रचक्षते॥" इति।

अत्र निश्चयान्तः सन्देहाऽलङ्कारः। तल्लक्षणं यथा—

"सन्देहः प्रकृतेऽन्यस्य सशयः प्रतिभोत्थितः।
शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥" इति।

**भावार्थः**—यत्रौषधिप्रस्थनगरे गृहाणा मेघमार्गावगाहित्वान्नित्यप्रवृत्तोत्सवेषु तेषु घनगर्जिताना मृदङ्गध्वनीनाञ्च नित्यमनुस्यूतत्वादुभयोः सान्द्रगम्भीरत्वाच्च कि-मेतानि घनगर्जितानि उत मुरजस्वना इति जनना सशये सति परस्परभेदावगमस्य स्वतो दुष्करत्वेऽपि यत्र जनाः वाद्यताडनविच्छेदविशेषैस्तालैरेव मुरजस्वनान् विविच्याऽवजग्मुरिति भावः।

**भाषा**—वहा के घरों पर घिरे हुए बादलों के गर्जन से मिश्रित मृदङ्गध्वनि ताल और लय से पहचानी जाती थी।

अत्र कल्पवृक्षाणामपि सद्भावमाह—

**यत्र कल्पद्रुमैरेव विलोलविटपांऽशुकैः।**
**गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता॥ ४१॥**

अंशुक सहित शाखा सहित थे कल्पतरु शोभित प्रवर।

निर्मित नहीं थे पौर जन से पर पताका रम्यतर ॥

**अन्वयः**—यत्र विलोलविटपाशुकैः कल्पद्रुमैः एव अपौरादरनिर्मिता गृहयन्त्रपताकाश्रीः भवति ।

**व्याख्या**—यत्र = यस्मिन्नगरे, विलोलविटपाऽशुकैः = चञ्चलशाखावसनैः, कल्पद्रुमैः एव = कल्पवृक्षैः एव, अपौरादरनिर्मिता = अनागरिकप्रयासरचिता, गृहयन्त्रपताकाश्रीः = गृहदारुध्वजपटशोभा, भवतीति शेषः ।

**व्युत्पत्तिः**—विलोलविटपाऽशुकैः=विशेषेण लोलानि विलोलानि, "चलनं कम्पनं कम्प्रं चल लोलं चलाचलम्" इत्यमरः । विटपेषु अंशुकानि विटपाऽशुकानि, विलोलानि विटपाऽशुकानि येषा ते विलोलविटपाऽशुकाः, तैः विलोलविटपाशुकैः, अपौरादरनिर्मिता = पुरि भवाः पौराः = नागरिकाः, तेषाम् आदरः = प्रयासः, पौरादरः, तेन निर्मिता=रचिता, पौराऽऽदरनिर्मिता, न पौरादरनिर्मिता अपौरादरनिर्मिता । अयत्नसिद्धेत्यर्थः । गृहयन्त्रपताकाश्रीः=गृहेषु यन्त्राणि=पताकावन्धनार्थं दारुविशेषाः, गृहयन्त्राणि, तेषु पताकाः गृहयन्त्रपताकाः, तासा श्रीः गृहयन्त्रपताकाश्रीः । अत्र व्यतिरेकालङ्कारः । तत्र यन्त्रप्रतिवस्तुतया विटपानामुपादानं, पताकाप्रतिवस्तुत्वेनाशुकानामुपादानं, निर्माणप्रयासाभावेन चाधिक्यमिति विवेकः ।

**भावार्थः**—यत्रौषधिप्रस्थनगरे चञ्चलशाखास्थितवसनैः कल्पवृक्षैरेवाऽप्रयाससिद्धा सौधध्वजपटशोभा सम्भवतीति भावः ।

**भाषा**—वहाँ उत्तमोत्तम वस्त्ररूपी पल्लव युक्त कल्पवृक्ष ही पुरवासियों से अरचित अत एव स्वतः सिद्ध पताका की तरह शोभित हो रहे थे ।

अत्र पुष्पोपहारोत्पादनस्याप्यप्रयाससिद्धत्वमाह—

**यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।**
**ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥**

आपान भूमि स्फटिक रचित निशि में नखत–छाया पड़ी ।
मालूम होती थी मनोहर सुमन वा मुक्ता बड़ी ॥

**अन्वयः**—यत्र नक्तं स्फटिकहर्म्येषु आपानभूमिषु ज्योतिषा प्रतिबिम्बानि उपहारतां प्राप्नुवन्ति ।

**व्याख्या**—यत्र = यस्मिन्पुरे, नक्तं=रात्रौ, स्फटिकहर्म्येषु = भासुरभवनेषु, आपानभूमिषु = पानगोष्ठीप्रदेशेषु, ज्योतिषा=नक्षत्राणा, प्रतिबिम्बानि=प्रतिच्छायाः, उपहारता=पुरुषोपहारत्व, मौक्तिकोपहारत्वं वा, प्राप्नुवन्ति = गच्छन्ति ।

**व्युत्पत्तिः**—स्फटिकहर्म्येषु = स्फटिकानां हर्म्याणि स्फटिकहर्म्याणि, तेषु स्फटिकहर्म्येषु, "भासुरः स्फाटिकोपलः। शालिपिष्ट धौतशिलम्" इति त्रिकाण्डः शेषः। "हर्म्यादि धनिनां वासः" इत्यमरः। आपानभूमिषु = आपानस्य भूमयः आपानभूमयः, तासु आपानभूमिषु। उपहारताम् = उपहारस्य भावः उपहारता, ताम् उपहारताम्।

सर्वत्र हि जनाः प्रयत्नेन कुसुमान्यानीय पानगोष्ठीषु रात्रौ पुष्पोपहारान् कुर्वन्ति। ओषधिप्रस्थे तु पानगोष्ठीप्रदेशानां स्फटिकमयत्वात् रात्रौ नक्षत्रप्रतिबिम्बैरेव पुष्पोपहारः प्रयत्नं विनैवेति व्यतिरेकालङ्कारः।

**भावार्थः**—यत्रौषधिप्रस्थनगरे रात्रौ स्फटिकनिर्मितेषु पानगोष्ठीप्रदेशेषु नक्षत्राणां प्रतिबिम्बानि ( एव ) पुष्पोपहारत्वं प्राप्नुवन्तीति भावः।

**भाषा**—स्फटिक का बना हुआ वहां का मदिरालय रात्रि में नक्षत्रों के प्रतिबिम्ब से ही फूलों से सजा हुआ मालूम होता था।

तत्राऽभिसारिकावृत्तस्यापि सौकार्यमाह—

**यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः।**
**अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः॥ ४३॥**

दुर्दिन रहे, हो रात, औषधि ज्योति से पथ ज्योति मय।
अभिसारिकायें अभिसरण प्रियतम-निकट करतीं अभय॥

**अन्वयः**—यत्र दुर्दिनेषु नक्तम् ओषधिप्रकाशेन दर्शितसञ्चराः अभिसारिकाः तमिस्राणाम् अनभिज्ञाः भवन्ति।

**व्याख्या**—यत्र = यस्मिन्नगरे, दुर्दिनेषु = मेघच्छन्नदिवसेषु, नक्तं = रात्रौ, ओषधिप्रकाशेन = तृणज्योतिर्दीप्त्या, दर्शितसञ्चराः = प्रकाशितमार्गाः, अभिसारिकाः = कान्ताऽर्थिन्यः, तमिस्राणां = तमसाम्, अनभिज्ञाः = अज्ञान्यः, भवन्ति। अन्धकाराणि नाऽभिजानन्तीत्यर्थः।

**व्युत्पत्तिः**—दुर्दिनेषु = दुष्टानि दिनानि दुर्दिनानि, तेषु दुर्दिनेषु। "कुगतिप्रादयः" इति समासः। दुष्टत्वं च मेघच्छन्नत्वम्। "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः। ओषधिप्रकाशेन = ओषधीनां प्रकाशः ओषधिप्रकाशः, तेन ओषधिप्रकाशेन, दर्शितसञ्चराः = सञ्चरन्त एभिरिति सञ्चराः = पन्थानः, "गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च" इति घप्रत्ययान्तो निपातः। दर्शितः सञ्चरः यासां ताः दर्शितसञ्चराः, अभिसारिकाः = "कान्ताऽर्थिनी तु या याति सङ्केतं साऽभिसारिका"

इत्यमरः । तथा चोक्तं साहित्यदर्पणे—

"अभिसारयते कान्त या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥" इति ।

तमिस्राणाम्="अन्धकारोऽस्त्रिया ध्वान्त तमिस्र तिमिरं तमः" इत्यमरः । कृद्योगात्कर्मणि षष्ठी । अनभिज्ञाः=न अभिज्ञा अनभिज्ञाः ।

**भावार्थः**—यत्रौषधिप्रस्थनगरे मेघावृतदिवसेषु रात्रौ तृणज्योतिःप्रभया प्रकाशितमार्गा अभिसारिकास्तमासि नाभिजानन्तीति भावः ।

**भाषा**—रात में वहाँ के मार्ग औषधि के प्रकाश से इतने साफ दिखलाई देते थे कि अभिसारिकाएँ अन्धकार का अनुभव नहीं करती थीं ।

किञ्च तत्रत्याना जनाना दुःखलेशोऽपि नास्तीत्याह—

**यौवनाऽन्तं वयो यस्मिन्नाऽन्तकः कुसुमाऽऽयुधात् ।**
**रतिखेदस्समुत्पन्ना निद्रा संज्ञाविपर्ययः ॥ ४४ ॥**

**उस शान्ति मय पुर में मनोहर वय जवानी तक खतम ।**
**थी मृत्यु मदन विना न रति श्रम नींद मूर्च्छा मृदुल तम ॥**

**अन्वयः**—यस्मिन् वयः यौवनाऽन्तं, कुसुमायुधात् अन्यः अन्तकः न, रतिखेदसमुत्पन्ना निद्रा एव संज्ञाविपर्ययः ।

**व्याख्या**—यस्मिन्=यत्र पुरे, वयः=अवस्था, यौवनाऽन्तं,=तारुण्याऽन्तं, यौवनाऽवधिकमिति यावत् । सर्वेऽपि अजरा इत्यर्थः । कुसुमाऽऽयुधात्=कामात्, अन्य इति शेषः । अन्तकः=मृत्युः, न=नास्ति । विरहिणा तादृग्दुःखोत्पादकत्वात् अन्तकत्वोपचारः । कामं विना मृत्युर्नाऽस्तीत्यर्थः । रतिखेदसमुत्पन्ना=सुरतश्रमसञ्जाता, निद्रा=सुप्तिः एव, सञ्ज्ञाविपर्ययः=चेतनाऽनुपगमः, न तु दीर्घनिद्रारूप इत्यर्थः ।

**व्युत्पत्तिः**—यौवनाऽन्तं=यूना भावः यौवन, तत् अन्ते यस्य तत् यौवनान्तं । "तारुण्य यौवनं समे" इत्यमरः । कुसुमाऽऽयुधात्=कुसुमानि आयुधानि यस्य स कुसुमाऽऽयुधः, तस्मात् कुसुमायुधात् । अन्तकः=अन्तं करोतीति अन्तकः, "तत्करोति तदाचष्टे" इति णयन्तात् "अति बन्धने" इति धातोः ण्वुल् प्रत्ययः । रतिखेदसमुत्पन्ना=रतेः खेदः रतिखेदः, तस्मात्समुत्पन्ना रतिखेदसमुत्पन्ना, संज्ञाविपर्ययः=संज्ञाया विपर्ययः संज्ञाविपर्ययः । "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना" इत्यमरः । अत्र परिसंख्यालङ्कारः । तल्लक्षणं साहित्यदर्पणे यथा—

"प्रश्नादप्रश्नतो वापि कथितादृस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥ परिसंख्या" इति ।

**भावार्थः**—यस्मिन्नोषधिप्रस्थनगरे तत्रत्याना जनाना सदा यौवनावधिकमेव वय आसीत् , कामादन्यो मृत्युर्नासीत् , रतिश्रमसञ्जातनिद्रैव चेतनानुपगमोऽभू- दिति भावः ।

**भाषा**—पुरवासियों की अवस्था यौवन तक ही होती थी, अर्थात् कोई वृद्ध नहीं था। काम से ही मृत्यु होती थीं, और बेहोशी का कारण रतिखेद-जनित निद्रा ही थी। अर्थात् सब लोग अजर अमर थे ।

तत्रत्ययोषितामतिमनोहरान् भावविशेषानाह—

**भ्रूभेदिभिः सकम्पोष्ठैर्ललिताऽङ्गुलितर्जनैः ।**
**यत्र कोपैः कृताः स्त्रीणामाप्रसादाऽर्थिनः प्रियाः ॥ ४५ ॥**

**भ्रूभङ्ग मय चल-ओष्ठ प्रमदा कोप से होती अरुण ।**
**याचक प्रसाद पर्यन्त रहते हैं बने पुर के तरुण ॥**

**अन्वयः**—यत्र प्रियाः भ्रूभेदिभिः सकम्पोष्ठैः ललिताऽङ्गुलितर्जनैः स्त्रीणा कोपैः आप्रसादाऽर्थिनः कृताः ।

**व्याख्या**—यत्र=यस्मिन्पुरे, प्रियाः=कान्ताः, भ्रूभेदिभिः=भ्रूभङ्गवद्भिः, सकम्पोष्ठैः=वेपथुयुक्ताऽधरैः, ललिताऽङ्गुलितर्जनैः=मनोज्ञाऽङ्गुलितर्जनैः, स्त्रीणां= नारीणा, कोपैः=क्रोधैः, सपत्नीनामग्रहणादिजनितैरित्यर्थः । आप्रसादाऽर्थिनः= प्रसादपर्यन्तं याचकाः, कृता·=विहिताः, न तु शत्रुकोपैरित्यर्थः ।

**व्युत्पत्तिः**—प्रियाः=प्रीणन्तीति प्रिया', कप्रत्ययः । भ्रूभेदिभिः=भ्रुवं भिन्द- न्तीति भ्रूभेदिनः, तैः भ्रूभेदिभिः, ताच्छील्ये णिनिप्रत्ययः । सकम्पोष्ठैः=कम्पेन सहिताः सकम्पाः, ते ओष्ठाः येषा ते सकम्पोष्ठाः, तै. सकम्पोष्ठैः । "ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । ललिताऽङ्गुलितर्जनैः=अङ्गुलीना तर्जनानि अङ्गुलितर्जनानि, ललितानि अङ्गुलितर्जनानि येषु ते ललिताऽङ्गुलितर्जनाः, तैः ललिताङ्गुलितर्जनैः । आप्रसादाऽर्थिनः=प्रसादमभिव्याप्येति आप्रसादम् , "आङ् मर्यादाऽभिविध्यो," इत्यव्ययीभावसमास· । अर्थयन्ते तच्छीलाः अर्थिनः, आप्र- सादम् अर्थिनः आप्रसादार्थिनः । अत्रापि परिसंख्याऽलङ्कारः ।

**भावार्थः**—यत्रौषधिप्रस्थनगरे युवाने भ्रूभङ्गवद्भिः कम्पिततदन्तच्छदैर्मनोह-' राङ्गुलिभर्त्सनैर्वल्लभाना सपत्नीनामग्रहणादिजनितैः क्रोधैस्तासां प्रसादपर्यन्तं प्रा-

र्थयितारः क्रियन्ते इति भावः ।

**भाषा**—वहाँ मानिनी स्त्रियाँ अपनी वक्र–भृकुटी से कम्पित–ओठों से और सुन्दर अङ्गुलियों के तर्जन से ही कोप प्रदर्शित करके प्रसन्न होने के समय तक अपने प्रियतमों को याचक बनाये रखती थीं ।

उपवनस्यापि तत्राऽप्रयासलभ्यत्वमाह—

**सन्तानकतरुच्छायासुप्तविद्याधराऽध्वगम् ।**
**यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ ४६ ॥**

**घन विटप-सन्तानक तले अध्वग अगर निद्रा सना ।**
**सामोद पर्वत गन्धमादन बाहरी उपवन बना ॥**

**अन्वयः**—सन्तानकतरुच्छायासुप्तविद्याधराऽध्वग गन्धवत् गन्धमादनं यस्य बाह्यम् उपवनम् अस्ति ।

**व्याख्या**—सन्तानकतरुच्छायासुप्तविद्याधराऽध्वग = कल्पवृक्षच्छायानिद्रायमाणविद्याधरपान्थं, गन्धवत्=गन्धाऽऽढ्यं, सौरभसम्पन्नमित्यर्थः । गन्धमादन= गन्धमादनाऽऽख्यः पर्वतः, यस्य=औषधिप्रस्थस्य, बाह्य=बहिर्भवम्, उपवनम्= आरामः, अस्तीति शेषः ।

**व्युत्पत्तिः**—सन्तानकतरुच्छायासुप्तविद्याधराऽध्वग=सन्तान एव सन्तानकः, "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥" इत्यमरः । सन्तानकश्चाऽसौ तरुः सन्तानकतरुः, तस्य छायाः सन्तानकतरुच्छायाः, तासु सुप्ताः सन्तानकतरुच्छायासुप्ताः, ते विद्याधरा एव अध्वगाः यस्मिन् तत् सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् । अध्वान गच्छन्तीति अध्वगाः । गन्धवत् = प्रशस्तः गन्धः यस्मिन् तत् गन्धवत्, मतुप्प्रत्ययः । बाह्यं= "बहिषष्टिलोपो यञ्च" इति यञ् टिलोपश्च । उपवनम् = "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः । अनेन विद्याधरपथिकाना वीतभयत्वाद् हिमालयस्य रक्षाचातुर्यं द्योत्यते ।

"सन्तानकतरुच्छायेत्यत्र पूर्वपदाऽर्थबाहुल्यसम्भवेऽपि "शलभच्छायम्" "इक्षुच्छायम्" इति वत्समर्थच्छायानिष्पत्तेस्तदपेक्षाऽभावात् "छाया बाहुल्ये" इति नपुंसकत्व नाऽस्तीत्यनुसन्धेयम् । अत्र "गन्धवद्गन्धमादनम्" इत्यागन्तुकः पाठः । प्राचीनपाठस्तु "सुगन्धिर्गन्धमादनः" इति पुंलिङ्गाऽन्तः । अत एव क्षीरस्वामिना "गन्धमादनमन्ये च" इत्यत्र गन्धेन मादयतीति गन्धमादन इति व्या-

ख्याय, प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्त "सुगन्धिर्गन्धमादनः" इति कालिदास इति च" इति मल्लिनाथः।

**भावार्थः**—यस्यौषधिप्रस्थनगरस्य कल्पवृक्षच्छायानिद्रितविद्याधरपथिकं सुगन्धपरिपूर्णं बहिर्भागभवमुद्यानं गन्धमादनपर्वत एवासीदिति भावः।

**भाषा**—उस नगर के बाहर का सुगन्धित उपवन गन्धमादन पर्वत था, जिसके कल्पवृक्षों की छाया में पथिक विद्याधर सो जाते थे।

ताद‍ृशहिमवत्पुरदर्शनेन सप्तर्षीणां मनोवृत्तिमाह—

**अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम्।**
**स्वर्गाऽभिसन्धिसुकृतं वञ्चनामिव मेनिरे॥ ४७॥**

**ऐसे हिमालय के नगर को देख शुचि सुन्दर बना।**
**स्वर्गाभिसन्धि विमल सुकृत को कह उठे ऋषि वंचना॥**

**अन्वयः**—अथ ते दिव्याः मुनयः हैमवत पुर प्रेक्ष्य स्वर्गाऽभिसन्धिसुकृतं वञ्चनाम् इव मेनिरे।

**व्याख्या**—अथ = अनन्तरं, ते=पूर्वोक्ताः, दिव्याः=दिवि भवाः, मुनयः = सप्तर्षयः, हैमवतं = हिमाऽऽलयसम्बन्धि, हिमाऽऽलयस्येत्यर्थः। पुरं = नगरम्, ओषधिप्रस्थमित्यर्थः। प्रेक्ष्य=दृष्ट्वा, स्वर्गाऽभिसन्धिसुकृतं=सुरलोकोद्देशधर्मं, वञ्चनाम् इव = प्रतारणाम् इव,मे निरे = कल्पितवन्तः।

**व्युत्पत्तिः**—हैमवतं = हिमानि सन्ति यस्मिन् स हिमवान्, मतुप्प्रत्ययः। हिमवति भवं हैमवतं, तत्, "तत्र भवः" इति अण् प्रत्ययः। स्वर्गाऽभिसन्धिसुकृतं=स्वर्गस्य अभिसन्धिः स्वर्गाऽभिसन्धिः, "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशाऽऽलयाः" इत्यमरः। स्वर्गाऽभिसन्धिना सुकृतं स्वर्गाऽभिसन्धिसुकृतं, तत्, स्वर्गस्यैव प्राधान्यमिति बुद्धिमित्यर्थः। अत्रोत्प्रेक्षालङ्कारः।

**भावार्थः**—अथ ते स्वर्गीयाः सप्तर्षयो हिमवत्स्वामिकां तां नगरीं दृष्ट्वा, स्वर्गप्राप्त्युद्देशेन क्रियमाणं ज्योतिष्टोमाद्यनुष्ठानं प्रतारणामिव कल्पयन्ति स्मेति भावः।

**भाषा**—सप्तर्षियों ने हिमालय के ओषधिप्रस्थनामक उस नगर को देख कर "हम लोग इस नगर में न रहकर स्वर्ग में पुण्य फल भोग रहे हैं" सोच कर अपने को वञ्चित समझा।

अथ सप्तर्षीणां हिमालयभवनप्राप्तिप्रकारमाह—

**ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः।**

अवतेरुर्जटाभारैर्लिखिताऽनलनिश्चलैः ॥ ४८ ॥
लिखिताग्नि सम निश्चल निरखते द्वास्थ उन्मुख हो अभी ।
तब तक हिमालय के सुघर दरबार में पहुंचे सभी ॥

**अन्वयः**—लिखिताऽनलनिश्चलैः जटाभारैः उपलक्षिताः ते उन्मुखद्वाःस्थवीक्षिताः सन्तः गिरेः सद्मनि वेगात् अवतेरुः ।

**व्याख्या**—लिखिताऽनलनिश्चलैः = चित्रगताऽग्निनिष्कम्पैः, जटाभारैः,= सटाभरैः, उपलक्षिताः, ते=ऋषयः, उन्मुखद्वाःस्थवीक्षिताः=ऊर्ध्वमुखदौवारिकदृष्टाः सन्तः, न तु निवारिता इत्यर्थः । गिरेः=हिमाऽऽलयस्य, सद्मनि = सौधे, वेगात्=जवात्, अवतेरुः=अवतीर्णवन्तः ।

**व्युत्पत्तिः**—लिखिताऽनलनिश्चलैः=लिखिताश्च ते अनलाः लिखिताऽनलाः, ते इव निश्चलाः लिखिताऽनलनिश्चलाः, तैः लिखितानलनिश्चलैः । जटाभारैः= जटाना भाराः जटाभाराः, तैः जटाभारैः, "इत्थं भूतलक्षणे" इति तृतीया । "व्रतिनस्तु सटा जटा" इत्यमरः । उन्मुखद्वाःस्थवीक्षिताः=ऊर्ध्वं मुखं येषा ते उन्मुखाः, द्वारि तिष्ठन्तीति द्वाःस्थाः, "स्त्री द्वार्द्वारं प्रतीहारः" इति "प्रतीहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यप्यमरः । उन्मुखाश्च ते द्वाःस्थाः उन्मुखद्वास्थाः, तैः वीक्षिताः, उन्मुखद्वास्थवीक्षिताः, अवतेरुः=अवोपसर्गपूर्वकात् "तॄ प्लवनतरणयोः" इति धातोर्लिट् ।

**भावार्थः**—चित्रन्यस्तवह्निनिष्पन्दैर्जटाजूटैरुपलक्षितास्ते सप्तर्षय ऊर्ध्वी कृतमुखैर्द्वारपालैर्विलोकिताः सन्तो हिमालयस्य निकेतने वेगेनाकाशप्रदेशादवपेतुरिति भावः ।

**भाषा**—चित्रगत अनल के समान निश्चल जटाभरों से युक्त, द्वार स्थित लोगों द्वारा ऊपर देखे गये, वे मुनिगण वेग से हिमालय के घर पर उतरे ।

हिमालयदर्शने सप्तर्षीणा क्रमप्राप्तिं वर्णयति—

**गगनादवतीर्णा सा यथावृद्धपुरःसरा ।**
**तोयाऽन्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४६ ॥**
सप्तर्षि उतरे गगन से क्रम से प्रथम बूढ़े चले ।
शोभित हुए हों सूर्य के प्रतिविम्ब ज्यों जल के तले ॥

**अन्वयः**—गगनात् अवतीर्णा यथावृद्धपुरःसरा सा मुनिपरम्परा तोयाऽन्तः भास्कराऽऽली इव रेजे ।

**व्याख्या**—गगनात् = आकाशात्, अवतीर्णा = कृतावतारा, यथावृद्धपुरःसरा=वृद्धाऽनुक्रमाऽग्रसरा, सा = पूर्वोक्ता, मुनिपरम्परा = ऋषिपङ्क्तिः, तोयाऽन्तः= जलाऽभ्यन्तरे, भास्कराऽऽली इव = सूर्यपङ्क्तिः इव, प्रतिबिम्बितार्कपङ्क्तिरिवेत्यर्थः। रेजे–बभौ ।

**व्युत्पत्तिः**—यथावृद्धपुरःसरा = वृद्धम् अनतिक्रम्य यथावृद्धम् । पुरःसरन्ति ते पुरःसराः, "पुरःसरोऽग्रतोऽग्रेषु सर्तेः" इति टप्रत्ययः । यथावृद्धं पुरःसरा यस्या सा, यथावृद्धपुरःसरा । अनुपसर्जनाऽधिकारान्न ङीप् । मुनिपरम्परा = मुनीना परम्परा मुनिपरम्परा । तोयाऽन्तः = तोयस्य अन्तः तोयान्तः, भास्कराऽऽली = भाः करोतीति भास्करः, टप्रत्ययः । भास्कराणाम् आली भास्करालो, "वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः" इत्यमरः । "कृदिकारादक्तिनः" इति ङीष् । रेजे= "राजृ दीप्तौ" इति धातोर्लिट् । अत्रोपमालङ्कारः ।

सप्तर्षीणामवस्थानक्रमश्च प्रदर्शितो वराहमिहिरेण, तथाहि—

> "पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।
> तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥
> पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः ।
> तत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी ॥" इति ।

**भावार्थः**—आकाशप्रदेशात्कृतावतारा वृद्धजनानुक्रमेणावस्थिता सा सप्तर्षीणा पङ्क्तिर्जलमध्यगतसूर्यप्रतिबिम्बपरम्परासदृशी शुशुभे इति भावः ।

**भाषा**—क्रमशः आकाश से उतरी हुई वह मुनि-परम्परा जल में प्रतिबिम्बित सूर्य-पङ्क्ति के समान शोभित हुई ।

अथ हिमालयस्य प्रत्युत्थानप्रकारमाह—

> **तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः ।**
> **नमयन्सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥ ५० ॥**
> पद भार से भू को झुका, ले सलिल पूजा के लिये ।
> ऋषि ओर सादर बढ चले गिरि, भक्ति श्रद्धा ले हिये ॥

**अन्वयः**—गिरिः अर्घ्यम् आदाय सारगुरुभिः पादन्यासैः वसुन्धरा नमयन् अर्घ्यान् तान् दूरात् प्रत्युद्ययौ ।

**व्याख्या**—गिरिः=हिमाऽऽलयः, अर्घ्यम्=पूजाजलम्, आदाय=गृहीत्वा, सारगुरुभिः=अन्तःसारदुर्भरैः, पादन्यासैः=चरणन्यासैः, वसुन्धरा=पृथ्वीं, नमयन्=न-

अत्र क्रमेरगत्यर्थत्वात् "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति तैरित्यस्य न कर्मत्वम् ।

**भावार्थः**—स हिमालयः शास्त्रोक्तविधिपूर्वकं कृतपूजनैः सच्चरित्रैस्तैः सप्तर्षिभिः स्वयमेव मार्गस्योपदेष्टा सन् अन्तःपुरं प्रवेशयामासेति भावः ।

**भाषा**—हिमालय ने विधि पूर्वक सप्तर्षियों का सत्कार कर के स्वयं मार्ग दिखलाता हुआ अन्तः पुर में प्रवेश करवाया ।

अथ हिमालयस्य वचनावसरं प्रस्तौति—

**तत्र वेत्राऽऽसनासीनान्कृताऽऽसनपरिग्रहः ।**
**इत्युवाचेश्वरान्वाचं प्राञ्जलिर्भूधरेश्वरः ॥ ५३ ॥**

सादर बिठा कर वेत्र के मृदु मञ्जु आसन पर प्रवर ।
प्राञ्जलि हिमालय ऋषि वर्गों से वचन यों बोले सुघर ॥

**अन्वयः**—तत्र वेत्राऽऽसनाऽऽसीनान् ईश्वरान् भूधरेश्वरः कृताऽऽसनपरिग्रहः प्राञ्जलिः सन् इति उवाच ।

**व्याख्या**—तत्र = शुद्धान्ते, वेत्राऽऽसनाऽऽसीनान्=वेत्रमयविष्टरनिषण्णान्, ईश्वरान् = प्रभून्, सप्तर्षीनित्यर्थः । भूधरेश्वरः = शैलाऽधीश्वरः, हिमाऽऽलय इत्यर्थः । कृताऽऽसनपरिग्रहः = अङ्गीकृताऽऽसनस्वीकारः, उपविष्टः सन्नित्यर्थः । प्राञ्जलिः = कृताञ्जलिः सन्, इति = एवम्, उवाच=अवोचत् ।

**व्युत्पत्तिः**—वेत्राऽऽसनाऽऽसीनान्=वेत्रं=लताविशेषः । वेत्राणाम् आसनानि वेत्राऽऽसनानि, तेषु आसीनाः वेत्राऽऽसनाऽऽसीनाः, तान् वेत्रासनासीनान् । भूधरेश्वरः = धरन्तीति धराः, पचाद्यच् । भुवः धराः भूधराः, तेषाम् ईश्वरः भूधरेश्वरः । कृताऽऽसनपरिग्रहः=आसनस्य परिग्रहः आसनपरिग्रहः, कृतः आसनपरिग्रहः येन स कृताऽऽसनपरिग्रहः ।

**भावार्थः**—हिमालयोऽन्तःपुरे वेत्रलतानिर्मितेष्वासनेष्वासीनान् सप्तर्षीन् उपविष्टः सन् कृताञ्जलिर्भूत्वा वक्ष्यमाणप्रकारेण वाचमवोचदिति भावः ।

**भाषा**—अन्तः पुरमें सप्तर्षियों को बेंत के आसन पर बैठा कर हिमालय ने हाथ जोड़ कर इस तरह कहा ।

इति शब्दोक्तान् वचनप्रकारानेवाह दशभिः श्लोकैः । तत्रादौ मुनीनामचिन्तितोपस्थितत्वात् सहर्षाद्भुतमाह—

**अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।**

**अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥**

**सुन्दर अदृष्ट-कुसुम-फल सम घन रहित सलिल सम हुए ।**

**अतिशय असम्भव भाग्य ही से आप के दर्शन हुए ॥**

**अन्वय.**—अतर्कितोपपन्न वः दर्शनं अपमेघोदय वर्षम्, अदृष्टकुसुमं फल प्रतिभाति ।

**व्याख्या**—अतर्कितोपपन्नम् = अविचारितोपगतम् अचिन्तितोपस्थितमित्यर्थः । वः = युष्माकं, दर्शनम्=अवलोकनम्, मे=मम, अपमेघोदयं वर्षम्= मेघरहिता वृष्टि., तथा, अदृष्टकुसुमम्=अनवलोकितपुष्पं, फलं=प्रसवः, प्रतिभाति ।

**व्युत्पत्तिः**—अतर्कितोपपन्नम् = न तर्कितम् अतर्कितं, तत् यथा तथा उपपन्नम् अतर्कितोपपन्नम् । अपमेघोदयम्=मेघस्य उदयः मेघोदयः, अपगतः मेघोदयः यस्य तत् अपमेघोदयम् । अदृष्टकुसुम=न दृष्टम् अदृष्टं, तत् कुसुमं यस्य तत् अदृष्टकुसुमम् । अनेन मुनिविषयकरतेर्व्यभिचारिणौ हर्षाद्भुतावभिव्यज्येते । अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाऽभिधानात् विभावना, मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकाऽलङ्कारश्च, इत्युभयोः ससृष्टिः ।

**भावार्थः**-हे महर्षयः! अचिन्तितोपनतं युष्माकमिदमवलोकनमहं मेघरहित वर्षणमिव पुष्परहित फलमिव सम्भावयामीति भावः ।

**भाषा**—आपलोगों का अकस्मात् होने वाला यह दर्शन विना मेघ के वर्षण की तरह और विना कुसुक के फल की तरह मुझको मालूम हो रहा है ।

मुनिदर्शनानन्तरं जङ्गमस्वरूपस्यात्मनः पूर्वस्मात् कालादुत्कर्षातिशयमाह—

**मूढं बुद्धमिवाऽऽत्मानं हैमीभूतमिवायसम् ।**

**भूमेर्दिवमिवाऽऽरूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥**

**मैं आप की मंजुल कृपा से बुद्ध जड़ से बन गया ।**

**अय से सुवर्ण हुआ मही से स्वर्ग पर मैं चढ़ गया ॥**

**अन्वयः**—भवदनुग्रहात् आत्मानं मूढ बुद्धम् इव, आयसं हैमीभूतम् इव, भूमेः दिवम् आरूढम् इव, मन्ये ।

**व्याख्या**—भवदनुग्रहात् = भवत्प्रसादात्, आत्मानं = स्वं, मूढं =मूर्खं, बुद्धम् इव=पण्डितम् इव, अनयोरपेक्षया ज्ञानतो वैशिष्ट्यं दर्शितम् । आयसम्=अयोविकारं, हैमीभूतम् इव=सौवर्णीभूतम् इव, आयसत्वं विहाय सौवर्णत्व

आतमिवेत्यर्थः । अनयोरुत्प्रेक्षया स्वरूपतो वैशिष्ट्यं दर्शितम् । भूमेः=भूलोकात्, दिवं=स्वर्गम् , आरूढम् इव=अधिरूढम् इव, अनयोरु त्प्रेक्षयाऽधिकारतोऽपि वैशिष्ट्यं दर्शितम् । मन्ये=जाने ।

**व्युत्पत्तिः**—भवदनुग्रहात्=भवताम् अनुग्रहः भवदनुग्रहः, तस्मात् भवदनुग्रहात् । मूढं="मूढाऽल्पाऽपटुनिर्भाग्या, मन्दाः" इत्यमरः । बुद्धं=कर्तरि क्तप्रत्ययः । आयसम्=अयसः विकारः आयस, तत् , "तस्य विकार" इत्यण् । हैमीभूतं=हेम्नः विकारः हैमम्, अहेम हैमं यथा सम्पद्यते तथाभूतं हैमीभूतं, तत् । अत्र सर्वत्रोत्प्रेक्षाऽलङ्कारः ।

**भावार्थः**—अहं भवतामागमनानुग्रहात् ज्ञानरहितमात्मानं सर्वज्ञमिव, लोहमयमात्मानं सुवर्णमयमिव, भूलोकस्थितमात्मानमिदानीं स्वर्गाधिरूढमिव कल्पयामीति भावः ।

**भाषा**—में आप लोगों के आगमन के अनुग्रह से ज्ञान रहित से सर्वज्ञ की तरह, लोहमय को सुवर्ण की तरह, पृथ्वी में रहता हुआ स्वर्गीय की तरह, अपने को समझता हूँ ।

अथ स्थावरस्वरूपस्याप्यात्मन उत्कर्षातिशयमाह—

**अद्यप्रभृति भूतानमधिगम्योऽस्मि शुद्धये ।**
**यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६ ॥**

**अब आज के दिन से प्रजा-जन शुद्धि अर्थ हुआ सुखद ।**
**सज्जन-अधिष्ठित स्थान जो वह तीर्थ होता मोद प्रद ॥**

**अन्वयः**—अद्य प्रभृति भूताना शुद्धये अधिगम्यः अस्मि । हि यत् अर्हद्भिः अध्यासित, तत् तीर्थं प्रचक्षते ।

**व्याख्या**—अद्य प्रभृति=इत आरभ्य, भूताना=प्राणिना, शुद्धये=पापाऽपनुत्तये, अधिगम्यः अस्मि=प्राप्यः अस्मि । हि=यस्मात् , यत्=स्थानम् , अर्हद्भिः=सद्भिः, अध्यासितम्=अधिष्ठितं, जुष्टमिति यावत् । तत्=स्थानं, तीर्थं=पुण्यक्षेत्रं, प्रचक्षते=कथयन्ति ।

**व्युत्पत्तिः**—भूताना="कृत्याना कर्तरि वा" इति षष्ठी । अधिगम्यः=अधिगन्तुं योग्यः अधिगम्यः, अर्हद्भिः=अर्हन्तीति अर्हन्तः तैः अर्हद्भिः । तीर्थं="निपानाऽऽगमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः ।

**भावार्थः**—अहमेतस्माद्दिवसादारभ्य काशीतीर्थादिवत् स्वकृतपातकादिपरि-

जिहीर्षुभिर्मनुष्यैराश्रयणीयः सञ्जातोऽस्मि। सत्पुरुषैर्यत् स्थानमधिष्ठितं, तदेव हि तीर्थमित्युच्यते, नान्यदिति भाव'।

**भाषा**—मैं आज से अपने को प्राणियों की शुद्धि का तीर्थ स्थान मानता हू, क्यों कि जहाँ आप लोगों जैसे सत्पुरुष बैठे हुए हैं वह तीर्थ ही कहा जायेगा।

मुनिजनपादप्रक्षालनजलस्य गङ्गाजलसाम्यमाह—

**अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः।**
**मूर्ध्नि गङ्गाप्रपातेन धौतपादाऽम्भसा च वः॥ ५७॥**

**दो वस्तुओं से मानता हूँ पूत निज को सर्वथा।**
**गङ्गा पतन से शीश पर क्षालित चरण जल से तथा॥**

**अन्वयः**—हे द्विजोत्तमाः! मूर्ध्नि गङ्गाप्रपातेन वः धौतपादाऽम्भसा च द्वयेन एव आत्मान पूतम् अवैमि।

**व्याख्या**—हे द्विजोत्तमाः=हे ब्राह्मणश्रेष्ठाः, मूर्ध्नि=ममाधित्यकाया, गङ्गा-प्रपातेन = मन्दाकिनी पातेन, वः = युष्माक, धौतपादाऽम्भसा च = प्रक्षालितचरणजलेन च, द्वयेन एव = द्वितयेन एव, आत्मान = स्थावरजङ्गमात्मकं स्वं, पूत= पवित्रम्, अवैमि = अवगच्छामि।

**व्युत्पत्तिः**—हे द्विजोत्तमाः=द्विर्जायन्ते इति द्विजा', तेषा तेषु वा उत्तमाः द्विजोत्तमा', तत्सम्बोधने हे द्विजोत्तमाः। "यतश्च निर्द्धारणम्" इति जातौ षष्ठी, सप्तमी वा। गङ्गाप्रपातेन=गङ्गाया' प्रपातः गङ्गाप्रपातः, तेन गङ्गाप्रपातेन। धौतपादाऽम्भसा=धौतौ च तौ पादौ धौतपादौ "धावु गतिशुद्ध्योः" इति धातोः क्तप्रत्ययेन धौतपदसिद्धिः। धौतपादयोः अम्भः धौतपादाऽम्भः, तेन धौतपादा-म्भसा। द्वयेन=द्वौ अवयवौ यस्य तद् द्वयं, तेन द्वयेन। पूत="पवित्रः प्रयतः पूतः" इत्यमरः। अवैमि=अवोपसर्गपूर्वकात् "इण् गतौ" इति धातोः लट्। गत्यर्थाना ज्ञानार्थत्वाज्जानामीत्यर्थः।

अत्र श्लोके गङ्गाजलवत्पादाऽम्भसः पावनत्वमित्यौपम्यं गम्यते। तच्च "प्रस्तुताऽप्रस्तुतयोः" इति दीपकाऽलङ्कार.। "प्रियः प्रियतराऽऽख्यानम्" इति लक्षणात् प्रियोऽलङ्कार इति च केचित्।

**भावार्थः**—हे ब्राह्मणश्रेष्ठाः! ममाधित्यकाया मन्दाकिन्याः सततपातेन, युष्माकं प्रक्षालितचरणजलेन चेति द्वाभ्यामेवाहमात्मान पवित्रमधिगच्छामीति भावः।

**भाषा**—हे द्विजोत्तम! शिर पर गङ्गा के गिरने से और आप लोगों के धोये

हुए चरणों के जल से मैं अपने को दोनों तरह पवित्र मानता हूं।

स्थावरजङ्गमात्मकं मम शरीरद्वयमपि भवद्भिरनुगृहीतमित्याह—

**जङ्गमं प्रैष्यभावे वः स्थावरं चरणाऽङ्कितम् ।**
**विभक्ताऽनुग्रहं मन्ये द्विरूपमपि मे वपुः ॥ ५८ ॥**

**वपु रूप दो दोनों कृपा से आप की अतिशय अमल ।**
**कैङ्कर्य से जङ्गम तथा स्थावर पदाङ्कित से विमल ॥**

**अन्वयः**—हे मुनयः ! द्विरूपम् अपि मे वपुः, जङ्गमं वः प्रैष्यभावे, स्थावरं चरणाङ्कितम्, अतः विभक्ताऽनुग्रहं मन्ये ।

**व्याख्या**—हे मुनयः ! द्विरूपमपि=उभयरूपमपि, जङ्गमस्थावराऽऽत्मकत्वात् द्विप्रकारकमपीत्यर्थः । मे=मम, वपुः=शरीरं, जङ्गमं=चरिष्णु, वपुरितिशेषः । वः=युष्माकं, प्रैष्यभावे,=कैङ्कर्ये, स्थितमिति शेषः । स्थावरं=जङ्गमेतरत्, वपुरिति शेषः । चरणाऽङ्कितं=पादचिह्नित, वः इति सम्बन्धः । अतः=अस्मात् कारणात्, विभक्ताऽनुग्रह=विभागीकृत प्रसादं, मन्ये=जाने ।

**व्युत्पत्तिः**—द्विरूपं=द्वे रूपे यस्य तत् द्विरूप, तत् । जङ्गमं="चरिष्णु जङ्गमचरं त्रसमिङ्ग चराचरम्" इत्यमरः । प्रैष्यभावे=पेष्यते इति प्रैष्यः, प्रोपसर्गपूर्वकात् "इषगतौ" "इष आभीक्ष्ण्ये" इति वा धातोः ण्यत् प्रत्ययः।"प्रादूह्योढोढ्येषैष्येषु" इति वृद्धिः । "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः । प्रैष्यभावे=प्रैष्यस्य भाव. प्रैष्यभावः, तस्मिन् प्रैष्यभावे । चरणाऽङ्कित=चरणाभ्याम् अङ्कित चरणाऽङ्कितं, तत् । विभक्ताऽनुग्रहं=विभक्तः अनुग्रहः यस्य तत् विभक्ताऽनुग्रहं, तत् ।

**भावार्थः**—मम जङ्गमशरीरं युष्माकं भृत्यकोटयामभूत्, मम स्थावरशरीर भवता पादन्यासेन पवित्रित चाभूत्, इति भवता प्रेषणचरणन्यासाभ्या मम रूपद्वयमपि विभज्य विहितप्रसाद कल्पयामीति भावः ।

**भाषा**—मेरे दोनों तरह के शरीर पर आप लोगों ने अनुग्रह किया, जंगम शरीर पर दासभाव से और स्थावर शरीर पर पवित्र चरणों को रखकर ।

मुनिजनागमनजनितं सन्तोषातिशयमाह—

**भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।**
**अपि व्याप्तदिगन्तानि नाऽङ्गानि प्रभवन्ति मे ॥ ५९ ॥**

**पावन सुदर्शन से बढ़ा इतना हृदय का हर्ष है ।**

दिग्व्याप्त मेरे अङ्ग में अटता नहीं उत्कर्ष है॥

**अन्वयः**—व्याप्तदिगन्तानि अपि मे अङ्गानि भवत्सम्भावनोत्थाय मूर्च्छते परितोषाय न प्रभवन्ति।

**व्याख्या**—व्याप्तदिगन्तानि अपि=आक्रान्तदिशाऽन्तानि अपि, महान्त्यपीत्यर्थ.। मे=मम, अङ्गानि=शरीराणि, भवत्सम्भावनोत्थाय=युष्मदनुग्रहोत्पन्नाय, मूर्च्छते=व्याप्नुवते, परितोषाय=हर्षाय, न प्रभवन्ति=न पर्याप्नुवन्ति। अलमर्थयोगात् "नम·स्वस्तिस्वाहास्वधाऽलवषड्योगाच्च" इति चतुर्थी।

**व्युत्पत्तिः**—व्याप्तदिगन्तानि=दिशाम् अन्ता· दिगन्ताः, "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमर। व्याप्ताः दिगन्ता यैस्तानि व्याप्तदिगन्तानि। भवत्सम्भावनोत्थाय=भवता सम्भावना भवत्सम्भावना, तस्याः उत्तिष्ठतीति भवत्सम्भावनोत्थः, तस्मै भवत्सम्भावनोत्थाय। मूर्च्छते=मूर्च्छतीति मूर्च्छन्, तस्मै मूर्च्छते, "मूर्छा मोहसमुच्छ्राययोः" इति धातोः शतृप्रत्ययः।

अत्र श्लोकेऽधिकालङ्कार·। तल्लक्षणं साहित्यदर्पणे यथा—

"आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते।" इति।

**भावार्थः**—महान्त्यपि ममाङ्गानि युष्मदनुग्रहजन्याय व्याप्नुवते हर्षाय न पर्याप्नुवन्तीति भाव।

**भाषा**—आप लोगों के आगमन से पैदा भया हुआ हर्ष मेरे इतने बड़े शरीर में भी नहीं अटता है।

अन्तःकरणशुद्धिरपि मे भवद्दर्शनेन सञ्जातेत्याह—

**न केवलं दरीसंस्थं भास्वतां दर्शनेन वः।**
**अन्तर्गतमपास्तं मे रजसोऽपि परं तमः॥ ६०॥**

**केवल दरी का ही नहीं तम आप द्वारा नाश है।**
**रज जन्य दुर्गम हृदय का भी ध्वान्त सत्यानाश है॥**

**अन्वयः**—भास्वता वः दर्शनेन केवल दरीसस्थं तमः न अपास्तं, किन्तु मे अन्तर्गतं रजस. परं तम· अपि अपास्तम्।

**व्याख्या**—भास्वता=तेजस्विना, सूर्याणामिति च स्फुरति। वः=युष्माकं, दर्शनेन=विलोकनेन, केवलम्=एकं, दरीसस्थं=गुहागतं, तमः=अन्धकारं, न अपास्तं=न दूरीकृत, किन्तु, मे=मम, अन्तर्गतम्=अन्तरात्मस्थितं, हृदयकुहरगतमित्यर्थ.। रजसः=रजोगुणात्, परम्=अनन्तर, तमः अपि=अज्ञानम्

अपि, अपास्तं=दूरीकृतम् ।

**व्युत्पत्तिः**—भास्वतां=भाः अस्ति येषा ते भास्वन्तः, तेषां भास्वता, दरीसंस्थं=दर्या संस्था यस्य तत् दरीसंस्थं, "दरी तु कन्दरो वा स्त्री" इत्यमरः। अपास्तम्=अपोपसर्गपूर्वकात "असु क्षेपणे" इति धातो. क्तप्रत्ययः ।

अत्र प्रसिद्धैः सूर्यतेजोभिर्बाह्यं तमोऽपास्यते, एभिस्तु आन्तरमपीति उपमा· नाऽपेक्षया उपमेयस्य वैशिष्टयबोधनाद् व्यतिरेकाऽलङ्कारो व्यज्यते ।

**भावार्थः**—तेजस्विना युष्माकमवलोकनेन मम स्थावरशरीरान्तर्गत तिमि· रमात्रं न केवलं निरस्तम्, अपि तु मम जङ्गमशरीरहृदयकुहरगतस्तमो गुणोऽपि निरस्त इति भावः ।

**भाषा**—तेजस्वी आप लोगो के दर्शन से केवल गुफाओं में रहने वाला अन्धकार का ही नाश नहीं हुआ है, बल्कि हृदय में रहने वाला अज्ञान-तम भी दूर हो गया है ।

अथ सप्तर्षीणामागमनप्रयोजनं स्वयमेव विचारयन्नाह—

**कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते ।**
**मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥**

**कर्त्तव्य लखता हूँ न यदि हो, तो असम्भव क्या कभी ।**
**पावन बनाने के लिये या आप आये हैं सभो ॥**

**अन्वयः**—कर्तव्यं वः न पश्यामि, अथ स्यात् चेत् किं न उपपद्यते । मत्पा· वनाय एव भवताम् इह प्रस्थानं मन्ये ।

**व्याख्या**—कर्तव्यं=कार्यं, वः=युष्माकं, न पश्यामि=न विलोकयामि, निस्पृहत्वादित्यर्थः । अथ, स्यात् चेत्=विद्येत यदि, किं न उपपद्यते=किं न सम्भवति, तपोबलेन सर्वं सुलभमेवेत्यर्थः । मत्पावनाय एव=मम शुद्धिविधानाय एव, भवता=युष्माकं, निराकाङ्क्षाणामित्यर्थः ॥ इह=अस्मिन् प्रदेशे, प्रस्था· नम्=आगमनं, मन्ये=तर्कयामि ।

**व्युत्पत्तिः**—कर्तव्यं=कर्तुं योग्यं कर्त्तव्य, तत् । तव्यत्प्रत्ययः । उपपद्यते= उपोपसर्गपूर्वकात् "पद गतौ" इति धातोर्लट् । मत्पावनाय=मम पावनं मत्पावनं तस्मै मत्पावनाय ।

**भावार्थः**—निपुणं विचारयन्नप्यहं भवता साध्यभूतं वस्तु लोकत्रये, किमपि न पश्यामि । भवतां साध्यभूतं यत्किञ्चिदपि भवितुं सम्भावितं चेत् तपश्शक्त्या·

किं न प्राप्यते । तर्हि निस्पृहाणा भवतामिहागमनं केवलं ममान्तःकरणशुद्धिविधानार्थमेवेति कल्पयामीति भावः ।

**भाषा**—निःस्पृह होने से मैं आप लोगों का कोई कार्य नहीं देखता हूँ, यदि होगा भी तो वह आप लोगो के तपोबल से सुलभ ही है, में तो जानता हूं, आप लोगों का यहा आगमन मुझको केवल पवित्र करने के लिये ही हुआ है।

अथात्मनः कैङ्कर्यमेव प्रकटयन्नाज्ञा प्रार्थयते—

**तथाऽपि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।**
**विनीयोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥ ६२ ॥**

हे ऋषि वरो । आनन्द से आदेश मुझको दीजिये
विनियोग से ही भृत्य प्रभु के मुदित होते हैं हिये ॥

**अन्वयः**—तथाऽपि कस्मिंश्चित् आज्ञा तावत् मे दातुम् अर्हथ । हि किङ्कराः प्रभविष्णुषु विनियोगप्रसादाः भवन्ति ।

**व्याख्या**—तथाऽपि = एवं स्थितेऽपि, कस्मिंश्चित् = कुत्रचित्, कर्मणीतिशेषः । आज्ञाम्=आदेशम् , "इदं कुरु" इति निर्देशाऽऽत्मकमित्यर्थः । तावत्= इदानीं, मे = मह्यं, दातु = वितरीतुम् अर्हथ = योग्या भवत । हि=यस्मात् , किङ्कराः = भृत्याः, प्रभविष्णुषु=प्रभुषु विषये, विनियोगप्रसादाः = प्रेषणाऽनुग्रहाः, भवन्तीति शेषः ।

**व्युत्पत्तिः**—किङ्कराः = किञ्चित् कुत्सित वा कुर्वन्तीति किङ्कराः । "किंयत्तद्बहुषु कृञोऽज्विधानम्" इति अच्प्रत्ययः । "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः । प्रभविष्णुषु=प्रभवन्तीति प्रभविष्णवः, तेषु, प्रभविष्णुषु, "भुवश्च" इति इष्णुच् प्रत्यय । विनियोगप्रसादाः=विशेषेण नियोगः विनियोगः, "सुप्सुपा" इति समासः । विनियोग प्रसादः येषा ते विनियोगप्रसादाः ।

**भावार्थः**—यद्यपीदं भवतामागमन स्वार्थशून्यमस्ति, तथापि भवता मनसि स्फूर्यमाणे कस्मिंश्चिदपि कार्यविशेषे मह्य नियोग दातुं योग्याः स्थ । यतः सेवकाः प्रभुषु विषये प्रेषणानुग्रहा भवन्तीति भाव ।

**भाषा**—तो भी आप लोग मुझे कुछ आज्ञा दीजिये, क्योंकि सेवक पर मालिक की प्रसन्नता का लक्षण उसका आदेश ही है ।

आज्ञाया अपि विषयसङ्कोच कुर्वन् ग्राह्यपदार्थेष्वनादरं दर्शयति—

**एते वयममी दाराः कन्येयं कुलजीवितम् ।**

**ब्रूत येनाऽत्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ६३ ॥**

**मैं हूँ, प्रिया है, और मम कुल-प्राण कन्या भी यहीं ।**
**जिससे सफल हो कार्य बोले वित्त में आस्था नहीं ॥**

**अन्वयः**—एते वयम्, अमी दाराः, इयं कुलजीवितं कन्या, अत्र येन वः कार्यं भवति, ब्रूत, बाह्यवस्तुषु अनास्था ।

**व्याख्या**—एते=इमे, वयं=हिमालयाः, अमी दाराः = एषा पत्नी, मेना इत्यर्थः । इयम्=असौ, कुलजीवितं = वंशप्राणभूता, परमस्नेहाऽऽस्पदमित्यर्थः । कन्या=कुमारी, पार्वतीति शेषः । अत्र = एषा मध्ये, येन = जनेन, वः=युष्माकं, कार्यं = प्रयोजनं, भवतीति शेषः । ब्रूत = वदत, त जनमिति शेषः । रत्नहिरण्यादिकं तु न मे गण्यमित्याह—बाह्यवस्तुषु=बहिर्भवपदाऽर्थेषु, सुवर्णरत्नादिष्वित्यर्थः। अनास्था = अनादरः अदेय न किञ्चिदस्तीत्यर्थ. ।

**व्युत्पत्तिः**—दाराः="भार्या जायाऽथ पुंभूम्नि दाराः" इत्यमरः । कुलजीवितं = कुलस्य जीवितं कुलजीवितं, व्यस्तरूपकम् । बाह्यवस्तुषु = बहिर्भवानि बाह्यानि, तानि च तानि वस्तूनि बाह्यवस्तूनि, तेषु बाह्यवस्तुषु । अनास्था=न आस्था अनास्था, "प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते" इत्यभिप्रायेण समासः ।

**भावार्थः**—एषोऽहम्, इयं च मे भार्या, एषा च मम कुलस्य प्राणभूता कान्या, एतेषु मध्ये येन भवत्कार्यं सिध्यति, तद्वदत । एतद्व्यतिरिक्तेषु बाह्यपदार्थेषु युष्मभ्यं सम्प्रदातुं ममादरो नास्तीति भावः ।

**भाषा**—मैं हूँ, यह मेरी स्त्री है, और यह मेरी प्यारी कन्या है, इनमें से जिससे आपलोगों का कार्य सिद्ध हो कहिये क्योंकि बाहरी रत्नादि वस्तुओं में तो कभी भी आस्था नहीं होगी ।

हिमालयस्य वचनक्रममुपसंहरति—

**इत्यूचिवांस्तमेवाऽर्थं गुहामुखविसर्पिणा ।**
**द्विरिव प्रतिशब्देन व्याजहार हिमाऽऽलयः ॥ ६४ ॥**

**निकली हिमालय के दरी मुखसे मृदुल वाणि प्रवर ।**
**प्रतिशब्द से मानो कहा दो बार हिमगिरिने सुघर ॥**

**अन्वयः**—इति ऊचिवान् हिमालयः गुहामुखविसर्पिणा प्रतिशब्देन तम् एव अर्थं द्विः व्याजहार इव ।

**व्याख्या**—इति=इत्थम्, ऊचिवान् = उक्तवान्, हिमालयः=हिमवान्,

स्वाभाविकः = नैसर्गिकः, नित्यसिद्ध इत्यर्थः । अस्ति ।

**व्युत्पत्तिः**—व्यापकः = व्याप्नोतीति व्यापकः, ण्वुल्प्रत्ययः । महिमा = महतो भावः महिमा, "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्ययः । त्रिविक्रमोद्यतस्य = त्रिषु विक्रमेषु उद्यतः, तस्य त्रिविक्रमोद्यतस्य = बलिमखे पदत्रयेण त्रैलोक्यं क्रमितुमुद्यतस्येत्यर्थः । "तद्धितार्थोत्तरपदसमाहारे च" इति समासः । स्वाभाविकः= स्वभावात् आगतः स्वाभाविकः, "तत आगतः" इति ठञ्प्रत्ययः । "स्वरूपं च स्वभावश्च निसर्गः" इत्यमरः । अत्र व्यतिरेकाऽलङ्कारः ।

**भावार्थः**—बलिमखे पदत्रयेण त्रैलोक्यं क्रमितुमुद्युक्तस्य वामनाऽवतारे विष्णोर्महत्त्वं परितः उपरिभागेऽधोभागे च सकृदेव सर्वलोकव्यापि बभूव । भवतस्तु स सर्वलोकव्यापी महिमा सर्वदैव स्वभावसिद्धो भवतीति भावः ।

**भाषा**—जिस तरह बलि मख में वामन भगवान के तीन डगों से विष्णु की महिमा एकवार सर्वव्यापक हुई, किन्तु तुम्हारी सर्वव्यापकता सार्वकालिक सिद्ध है ।

हिमालयस्य स्वकीयपर्वतजात्युत्कर्षत्वमप्याह—

**यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।**
**उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥**

**मख-भाग-भुक् के मध्य तेरा एक पावन स्थान है ।**
**है व्यर्थ मेरु कनक शिखर मय अमित तव सम्मान है ॥**

**अन्वयः**—यज्ञभागभुजां मध्ये पदम् आतस्थुषा त्वया सुमेरोः हिरण्मयं उच्चैः शृङ्गं वितथीकृतम् ।

**व्याख्या**—यज्ञभागभुजां = क्रत्वंशभुजाम्, इन्द्रादीनामित्यर्थः । मध्ये = अन्तरे, पदं = स्थानम्, आतस्थुषा = निहितवता, त्वया=भवता, सुमेरोः=हेमाद्रेः, हिरण्मयं =सुवर्णमयं, उच्चैः=उन्नतं, शृङ्गं=शिखरं, प्राधान्यं च, वितथीकृतम् = व्यर्थीकृतम् ।

**व्युत्पत्तिः**—यज्ञभागभुजां = यज्ञस्य भागः यज्ञभागः, तं भुञ्जन्तीति यज्ञभागभुजः, तेषां यज्ञभागभुजाम् । हिरण्मयं=हिरण्यस्य विकारः हिरण्मयं, "दाण्डिनायनहास्तिनायनाऽऽथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि" इति निपातनात्साधु । शृङ्गं="शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः । वितथीकृतम् = अवितथं वितथं यथा सम्पद्यते तथा कृतं वितथीकृतम् । च्विप्रत्ययः । सुमेरोः यज्ञभागाऽभावादित्यर्थः । हिमालयस्य तु यज्ञभागसद्भावे

"हिमवतो हस्ती" इति श्रुतिरेव प्रमाणम्।

**भावार्थः**—मखाशभोजिनामिन्द्रादीना मध्ये स्थानं प्राप्तवता देवतात्मना भवता महामेरोः सुवर्णमयं शिखरं तस्य यज्ञभागभोजित्वाऽभावात् निष्फली-कृतमिति भावः।

**भाषा**—यज्ञ के भाग को ग्रहण करने वाले इन्द्रादि देवों के मध्य तुमने पद ग्रहण करके सुमेरु पर्वत के सुवर्णमय शिखर को व्यर्थ कर दिया।

अथाऽस्य प्रश्रयगुणशालित्वमाह—

**काठिन्यं स्थावरे काये भवता सर्वमर्पितम्।**
**इदं तु ते भक्तिनम्रं सतामाराधनं वपुः॥ ७३॥**
**पाषाण मय स्थिर काय में काठिन्य सब अर्पण किया।**
**यह भक्ति-नत तव वपु सुजन तूजित तथा मृदु है हिया॥**

**अन्वयः**—भवता सर्वं काठिन्यं स्थावरे काये अर्पितम्। सताम् आराधनं ते इदं वपुस्तु भक्तिनम्रम् अस्ति।

**व्याख्या**—भवता=त्वया, सर्वं=सम्पूर्णं, काठिन्यं=कठिनत्वम्, अर्थिषु कार्कश्यं च स्फुरति। स्थावरे=स्थिरे, काये=शरीरे, पर्वतशरीरे इत्यर्थः। अर्पितं=न्यस्तम्। सताम्=सज्जनानाम्, आराधनं=पूजासाधनं, ते=तव, इदं=पुरोनिर्दिष्टं, वपुस्तु=शरीरं तु, जङ्गमशरीरमित्यर्थः। भक्तिनम्रं=नमन-शीलम्, अस्तीति शेषः।

**व्युत्पत्तिः**—काठिन्यं=कठिनस्य भावः काठिन्य, "गुणवचनब्राह्मणाऽऽ-दिभ्यः कर्मणि च" इति ष्यञ्प्रत्ययः। "तद्धितेष्वचामादेः" इत्यादिवृद्धिः। "कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्" इत्यमरः। स्थावरे="ष्ठा गतिनि-वृत्तौ" इति धातोः "स्थेशभासपिसकसो वरच्" इति वरच्प्रत्ययः। आराधनम्= आराध्यते अनेन इति आराधनं, करणे ल्युट्। भक्तिनम्र=भक्त्या नम्रं भक्तिन-म्रम्, अनेनातिमृदुत्वमुक्तम्। नहि कठिनाना नमनशीलत्वमुपपद्यते।

**भावार्थः**—त्वया सकलं स्वकीयकठिनत्वं पर्वतस्वरूपे स्वशरीरे स्थापित-मस्ति। सज्जनाराधनसाधनमिदं दृश्यमानं तव जङ्गमशरीरं तु भक्त्या नमनशील-मत एव काठिन्यलेशरहितं वर्तते इति भावः।

**भाषा**—तुमने अपनी सारी कठोरता स्थावर शरीर को अर्पण कर दिया है, और यह जङ्गम शरीर भक्ति से नम्र और सज्जनों के आराधन की वस्तु है।

हिमालयस्य जगदाधारत्वमाह—

**स्थाने त्वां स्थावराऽऽत्मानं विष्णुमाहुस्तथाहि ते ।**
**चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७ ॥**

यह योग्य ही है विष्णु हो तुम तव शरीर अपार है ।
सुन्दर चराचर भूत का तव कुक्षि ही आधार है ॥

**अन्वयः**–स्थावरात्मानं त्वा विष्णुम् आहुः, स्थाने । तथाहि–ते कुक्षिः चराचराणा भूतानाम् आधारता गतः अस्ति ।

**व्याख्या**—स्थावराऽऽत्मानं = स्थावरस्वरूपिणं, पर्वतस्वरूपमित्यर्थः । त्वा= भवन्त, विष्णुं = नारायणम् , आहुः = कथयन्ति । "स्थावराणा हिमालयः" इति गीतावचनात् , स्थाने = युक्तम् । तथा हि—ते = तव, कुक्षिः = मध्यभागः, उदरं च, चराचराणा=जङ्गमस्थावराणा, भूताना=लोकानाम् , आधारताम्=आश्रयत्वं, गतः = प्राप्तः, अस्तीति शेषः ।

**व्युत्पत्तिः**—स्थावराऽऽत्मानं = स्थावरः आत्मा यस्य स स्थावरात्मा, तं स्थावरात्मान । स्थाने = अव्ययमेतत् , "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । कुक्षिः = हिमालयपक्षे कुक्षिशब्दः मध्यभागवाची । विष्णुपक्षे तु कुक्षिशब्दः उदरवाचीति बोध्यम् । "पिचण्डकुक्षी जठरोदरं तुन्दम्" इत्यमरः । चराऽचराणा= चरन्तीति चराः, चराश्च अचराश्च चराऽचराः, तेषा चराचराणम् । आधारताम्= आधारस्य भाव आधारता, ताम् आधारताम् । हिमालयस्योर्ध्वभागो हि व्योमव्यापी, अधोभागस्तु पातालव्यापीति युक्तं मध्यभागस्य चराचरात्मकजगदाधारत्वम् ।

**भावार्थः**–"स्थावराणां हिमलयः" इति भगवद्गीतावचनानुसारेण सत्पुरुषा यद् भवन्तं नारायणमेवाहुस्तदुचितमेव । तथाहि—यथा विराट्स्वरूपिणो विष्णोः कुक्षिः=उदरं, चराचरात्मकस्य जगत अधारत्वेन प्रसिद्धः, तथा भवतोऽपि कुक्षिः= मध्यभागः, चराचरात्मकस्य जगत आधारभूतोऽस्तीति भावः ।

**भाषा**—तुमको गीता के वचनानुसार जो विष्णु कहते हैं वह उचित ही है, क्योंकि;जैसे विष्णु की कुक्षि=उदर, चराचर प्राणियों का आधार भूत है, वैसे ही तुम्हारी भी विशाल कुक्षि=मध्यभाग, चराचर जगत के लिये आधार भूत है ।

तत्र हिमालयस्योर्ध्वदेशव्यापित्व तु "अधो विवस्वान् परिवर्तमानः"इति श्लोकेन पूर्वमेवोक्तं, साम्प्रतमधोदेशव्यापित्वमाह—

**गामधास्यत् कथं नागो मृणालमृदुभिः फणैः ।**

**आ रसातलमूलात् त्वमवालम्बिष्यथा न चेत् ॥ ६८ ॥**

विस मृदुल फण से किस तरह अहि भूमि को धरता कहो ।
यदि आ रसातल चरणसे भू को न धरते तुम अहो ॥

**अन्वयः**—नागः मृणालमृदुभिः फणैः गा कथम् अधास्यत् ? त्वम् आ रसातलमूलात् न अवालम्बिष्यथाः चेत् ।

**व्याख्या**—नागः=शेषः, मृणालमृदुभिः=बिसकोमलैः, फणैः=स्फटाभिः गा= भुवं, कथं=केन प्रकारेण, अधास्यत्=धारयेत् । त्व हिमालयः, आ रसातलमूलात् पातालपर्यन्तं, न अवालम्बिष्यथाः चेत्=न अवालम्बेथा यदि, पादैरिति शेषः ।

**व्युत्पत्तिः**—मृणालमृदुभिः = मृणालानि इव मृदवः मृणालमृदवः, तैः मृणालमृदुभिः, "सुकुमारं तु कोमलं मृदुलं मृदु" इत्यमरः । फणैः ='स्फटाया तु फणा द्वयोः" इत्यमरः । गा="गौरिला कुम्भिनी क्षमा"इत्यमरः । अधास्यत्= "डुधाञ् धारणपोषणयोः" इति धातोः लृङ् । रसातलमूलात्=रसायास्तल रसा तलं, "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इति "अधः स्वरूपयोरस्त्री तलम्" इति चाऽमरः । रसातलस्य मूलं रसातलमूलं, तस्मात् रसातलमूलात्, 'आ' इत्यनेन सह "आङ् मर्यादाऽभिविध्योः" इति सूत्रेण विकल्पादसमासः । अवालम्बिष्यथाः=अवोपसर्गपूर्वकाद् "लबि अवस्रंसने" इति धातोः लृङ् । "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इत्युभयत्रापि लृङ् । यदि त्व पातालमूलपर्यन्तमधः स्थितः पृथिव्या धारणं नाकरिष्यः, तर्ह्यनन्तः पृथिव्या धारणं कथमकरिष्यदित्यर्थः । "अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्य" इति मल्लिनाथोक्तिस्तु न सम्यग् प्रतिभाति ।

**भावार्थः**—यदि त्वं पातालमूलपर्यन्तमधः स्थितः पृथिव्या धारणा नाकरिष्यः, तर्ह्यनन्तो विसवत् कोमलैः फणैः पृथिव्या धारणं कथमकरिष्यदिति भावः ।

**भाषा**—यदि तुम रसातल की जड़ तक पृथ्वी को न थामे रहते तो कमल दण्ड के समान कोमल फणों से शेष नाग कैसे पृथ्वी धारण करते ।

अथ हिमालयस्य पुण्यश्लोकत्व लोकपावनत्वञ्चाह—

**अच्छिन्नामलसन्तानाः समुद्रोर्म्यनिवारिताः ।**
**पुनन्ति लोकान्पुण्यत्वात्कीर्तयः सरितश्च ते ॥ ६९ ॥**

अवच्छिन्न-अमल-प्रवाह जलधर-उर्मि-अनिवारित विमल ।
तव कीर्ति गङ्गा लोक को पावन बनाती है युगल ॥

**अन्वयः**—अच्छिन्नाऽमलसन्तानाः समुद्रोर्म्यनिवारिताः ते कीर्तयः सरितश्च पुण्यत्वात् लोकान् पुनन्ति ।

**व्याख्या**—अच्छिन्नाऽमलसन्तानाः=कीर्तिपक्षे-अनवच्छिन्ननिर्मलप्रबन्धाः, सरित्पक्षे-अनवच्छिन्ननिर्मलप्रवाहाः, समुद्रोर्म्यनिवारिताः=अब्धितरङ्गाऽप्रतिहताः, कीर्तिपक्षे—पारगमनात्, सरित्पक्षे—अन्तःप्रवेशाच्च । ते=तव, कीर्तयः= यशांसि, सरितश्च=नद्यश्च, गङ्गाद्या इत्यर्थः । पुण्यत्वात्=पवित्रत्वात्, लोकान्= भुवनानि, पुनन्ति=पावयन्ति, लोकपावनाः खलु पुण्यकीर्तयो भवन्तीत्यर्थः ।

**व्युत्पत्तिः**—अच्छिन्नाऽमलसन्तानाः=अविद्यमानं मलं येषु ते अमलाः, न छिन्ना अच्छिन्नाः, ते अमलाः सन्ताना यासां ताः अच्छिन्नामलसन्तानाः । समुद्रोर्म्यनिवारिताः=समुद्रस्य ऊर्मयः समुद्रोर्मयः, "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः । न निवारिताः अनिवारिताः । समुद्रोर्मिभिः अनिवारिताः समुद्रोर्म्यनिवारिताः । कीर्तयः="यशः कीर्तिः समज्ञा च" इत्यमरः । पुण्यत्वात्= पुण्यानां भावः पुण्यत्वं, तस्मात् पुण्यत्वात्, "त्वतलोर्गुणवचनस्य" इति पुंवद्भावः । अत्र साम्यगर्भः समुच्चयाऽलङ्कारः । अथवा "केवलप्रकृतविषयस्तुल्ययोगिताऽलङ्कारः ।" तल्लक्षणं साहित्यदर्पणे यथा—

"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥" इति ।

**भावार्थः**—यथा त्वत्तो निर्गता निरवच्छिन्ननिर्मलप्रवाहाः समुद्रतरङ्गैरप्य निवारिता गङ्गाद्याः नद्यो विसर्गपावनत्वात् लोकस्याऽघं हरन्ति, तथैवावच्छिन्ननिर्मलप्रबन्धानि समुद्रस्य पारङ्गतानि तव यशांसि च पुण्यकीर्तनत्वात् लोकऽस्याऽघं हरन्तीति भावः ।

**भाषा**—जिस तरह तुमसे निकली हुई निर्मल प्रवाह वाली, समुद्र के तरङ्गों से अनवारित गङ्गादि नदियाँ संसार के पापकों नाश करती हैं, उसी तरह तुम्हारी कीर्त्ति भी जगत के पाप को दूर करती है ।

अथ हिमालस्य नारायणसमानत्वमप्याह—

**यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥**

पद विष्णु से निकली प्रशंसा-योग्य गङ्गा है यथा ।
हरि चरणवत तव शीश से निकली प्रशंसित है तथा ॥

**अन्वयः**—गङ्गा प्रभवेण परमेष्ठिनः पादेन यथा एव श्लाघ्यते, तथा एव द्वितीयेन प्रभवेण उच्छिरसा त्वया श्लाघ्यते ।

**व्याख्या**—गङ्गा = भागीरथी, प्रभवेण = कारणेन, परमेष्ठिनः = विष्णोः, पादेन = चरणेन, यथा एव = येन प्रकारेण एव, श्लाघ्यते=प्रशस्यते । तथा एव= तेन प्रकारेण एव, द्वितीयेन = द्वयोः पूरणेन, प्रभवेण = कारणेन, उच्छिरसा = उन्नतमूर्ध्ना, त्वया = भवता, श्लाघ्यते = प्रशस्यते ।

**व्युत्पत्तिः**—प्रभवेण = प्रभवति अस्मात् इति प्रभवः, तेन प्रभवेण, अप्प्रत्ययः । परमेष्ठिनः=परमे स्थाने तिष्ठतीति परमेष्ठी, तस्य परमेष्ठिनः, "परमे स्थः कित्" इत्युणादिसूत्रेण इनिः । "तत्पुरुषे कृति बहुलम्" इत्यलुक् । "स्थास्थिन् स्थूणाम्" इति षत्वम् । द्वितीयेन=द्वयोः पूरणः द्वितीयः, तेन द्वितीयेन, "द्वेस्तीयः" इति तीयप्रत्ययः । उच्छिरसा=उन्नतं शिरः यस्य स उच्छिराः, तेन उच्छिरसा, "उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः ।

**भावार्थः**—यथा पूर्वं विष्णुपादप्रदेशेन स्वप्रकाशनेन भागीरथी "नान्या मत्सदृशी नदी" त्यात्मन बहु मन्यते, द्वितीयेन त्वयि निपातेनापि स्वप्रभवेण तथैव बहु मन्यते इति भावः ।

**भाषा**—जिस तरह गङ्गा विष्णु के चरण से निकल कर अपने को प्रशंसनीय समझती है, उसी तरह तुम्हारे शिर से निकल कर भी अपने को प्रशंसा योग्य समझती है ।

हिमालयस्य भगवतो वामनादाधिक्यमाह—

**तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।**
**त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव ॥ ७१ ॥**

**अध-ऊर्ध्व तिर्यक से त्रिविक्रम विष्णु की महिमा रही ।**
**महिमा तुम्हारी तो प्रकृति से नित्य व्यापक है सही ॥**

**अन्वयः**—तिर्यक् ऊर्ध्वम् अधस्ताच्च व्यापकः महिमा हरेः त्रिविक्रमोद्यतस्य आसीत् । तव तु सः व्यापकः महिमा स्वाभाविकः अस्ति ।

**व्याख्या**—तिर्यक = कुटिलम्, ऊर्ध्वम् = उपरि, अधस्ताच्च = नीचैश्च, व्यापकः = व्याप्तियुक्तः, सर्वव्यापीत्यर्थः । महिमा=महत्त्वं, हरेः=विष्णोः, त्रिविक्रमोद्यतस्य = विक्रमत्रयोद्युक्तस्य सतः, आसीत् = अभूत् । वामनावतार इत्यर्थः । तव तु = भवतः तु, सः = पूर्वोक्तः, व्यापकः = व्याप्तियुक्तः महिमा = महत्त्वं,

गुहाविसर्पिणा = गह्वरविवरप्रसारिणा, प्रतिशब्देन=प्रतिध्वनिना, तम् एव=पूर्वोक्तम् एव, अर्थम्=अभिधेय, द्विः=द्विवारम् , व्याजहार इव=बभाषे इव ।

**व्युत्पत्तिः**—ऊचिवान्=उक्तवानिति ऊचिवान् "वच परिभाषणे" इति धातोः क्वसुप्रत्ययः । हिमालयः=हिमानाम् आलयः हिमालयः । गुहामुखविसर्पिणा=गुहाना मुखानि गुहामुखानि, "देवखातबिले गुहा । गह्वरम्" इत्यमरः । गुहामुखेषु दरीविवरेषु, विसर्पति=व्याप्नोति, तच्छीलः गुहामुखविसर्पी, तेन गुहामुखविसर्पिणा । द्विः = द्विवारम् इति द्विः, "द्वित्रिचतुर्भ्यः सुच्" सुच्प्रत्ययः । अत्रोत्प्रेक्षालङ्कार । तया चादरातिशयो द्योत्यते ।

**भावार्थः**—इत्थमभिधाय विरतवचसि हिमवति, तस्य स्थावरशरीरदरीमुखव्यापिना प्रतिध्वनिना पूर्वं जङ्गमशरीरोदितमर्थमेव, स्थावरशरीरेण पुनरप्युक्तमिति भावः ।

**भाषा**—इस तरह कहने पर हिमालय मे स्थावरशरीर के दरीमुख में व्याप्त प्रतिध्वनि से जङ्गमशरीर के कहे हुए अर्थ को मानो फिर दुहराया ।

अथ मुनीना प्रतिवचनोपक्रमाह—

**अथाऽङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।**
**ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥ ६५ ॥**

सानन्द सुन करके हिमालय की मधुर बातें सकल ।
ऋषि अङ्गिरा गिरिराज से बोले वचन सुखकर विमल ॥

**अन्वयः**—अथ ऋषयः उदाहरणवस्तुषु अग्रण्यम् अङ्गिरसं नोदयामासुः । सः भूधरं प्रत्युवाच ।

**व्याख्या**—अथ = अनन्तरम् , ऋषयः = मुनयः, षट्सङ्ख्यका इत्यर्थः । उदाहरणवस्तुषु=कथाप्रसङ्गाऽर्थेषु अग्रण्यं=प्रगल्भम् , अङ्गिरसम् = अङ्गिरोनामकम् ऋषिम् , नोदयामासुः,=प्रेरयामासुः, प्रतिवक्तुमिति शेषः । सः=अङ्गिराः, भूधरं=हिमालयं, प्रत्युवाच = प्रत्युत्तरं ददौ ।

**व्युत्पत्तिः**—उदाहरणवस्तुषु=उदाह्रियन्ते इत्युदाहरणानि, तानि एव वस्तूनि उदाहरणवस्तूनि, तेषु उदाहरणवस्तुषु । अग्रण्यम् = अग्रं नयतीति अग्रणीः, तम् अग्रण्यं, "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप् , "अग्रग्रामाभ्या नयतेर्णो वाच्यः" इति णत्वम् । नोदयामास = णिजन्तात् "णुद प्रेरणे" इति धातोर्लिट् । "णो नः" इति णस्य नत्वम् । भूधरं = धरतीति

धरः, भुवः धरः भूधरः, तं भूधरं, "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः" इत्यमरः।

**भावार्थः**—अथ हिमवतो नियोगप्रार्थनानन्तरमन्ये महर्षयो महेश्वरसन्दिष्टमर्थं वक्तुमुक्तिकौशलशालिनमङ्गिरसं नामान्यतममृषिं प्रेरयामासुः। अङ्गिराः हिमवन्तं प्रतिजगादेति भावः।

**भाषा**—हिमालय की प्रार्थना के अनन्तर ऋषियों ने महेश्वर के सन्देश को कहने के लिये अङ्गिरा नामक ऋषि को प्रेरित किया, उसने हिमालय से कहा।

अथाङ्गिरसः प्रतिवचनप्रकारमेवाह—उपपन्नमित्यादिभिः। तत्रादावष्टभिः श्लोकैः हिमालयं स्तौति। प्रथमं तद्वचनप्रशंसामाह—

**उपपन्नमिदं सर्वमतः परमपि त्वयि।**
**मनसः शिखराणां च सदृशी ते समुन्नतिः॥ ६६॥**

तुमने कहा जो हर तरह से हर दशा में सत्य है।
मन भी तुम्हारा शिखर के सम अति समुन्नत तथ्य है॥

**अन्वयः**—इदं सर्वम् अतः परम् अपि त्वयि उपपन्नम्। ते मनसः शिखराणां च समुन्नतिः सदृशी।

**व्याख्या**—इदम् = "एते वयममी दाराः ६।६३" इत्याद्युक्तं सर्वस्वसमर्पणं, सर्वं = सकलम्, अतः परम् अपि = अस्मात् अधिकम् अपि, त्वयि = भवति, उपपन्नं = युक्तम्। तथा हि—ते = तव, मनसः = चित्तस्य, शिखराणां च = शृङ्गाणां च, समुन्नतिः = उन्नतत्वं, सदृशी = तुल्या। तव मनः शिखरसदृशं महोन्नतमित्यर्थः।

**व्युत्पत्तिः**—शिखराणां = "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। समुन्नतिः = सम्यक् उन्नतिः समुन्नतिः, मनस उन्नतिरौदार्यम्, शिखराणामुन्नतिस्तुङ्गत्वम्। "अत्र श्लोके प्रस्तुताऽप्रस्तुतयोः मनःशिखरयोरौपम्यस्य गम्यत्वाद्दीपकाऽलङ्कारः। तल्लक्षणं साहित्यदर्पणे यथा—

"अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥" इति।

**भावार्थः**—हे हिमालय! त्वया यदभिहितं तत्सर्वं ततोऽप्यधिकं च त्वयि युज्यते। यथा ते शिखराणामुन्नतिः = तुङ्गत्वं दृश्यते, तथा मनसोऽपि समुन्नतिः = औदार्यम् अस्त्येवेति भावः।

**भाषा**—हे हिमालय! जो तुमने कहा वह तुम्हारे लिये योग्य ही है, जैसा तुम्हारा शिखर ऊंचा है वैसा ही मन भी ऊंचा है।

अथ प्रस्तुतमेवार्थमवतारयति—

**तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।**
**श्रेयसामुपदेशात्तु वयमत्रांऽशभागिनः ॥ ४७ ॥**

**आगमन कार्य सुनो गिरे ! यह कार्य तेरा ही प्रवर ।**
**कल्याण के उपदेश से हम अंश-भागी रम्यतर ॥**

**अन्वयः**—तत् नः आगमनकार्यं शृणु । तत् तव एव । वयं तु श्रेयसाम् उपदेशात् अत्र अंशभागिनः स्मः ।

**व्याख्या**—तत् = तस्मात् , नः = अस्माकम् , आगमनकार्यम् = आगमनप्रयोजन, शृणु = आकर्णय । तत् = कार्यं, तव एव=भवतः एव । वयं तु = ऋषयस्तु, श्रेयसां = कल्याणानाम् , उपदेशात् = मार्गनिर्देशात् , अत्र = कार्ये, अंशभागिनः = भागभाजः, स्मः ।

**व्युत्पत्तिः**—आगमनकार्यम् = कर्तुं योग्यं कार्यम्, "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययः । आगमनस्य कार्यम् आगमनकार्यं, तत् । एव = अयमवधारणाऽर्थकः । उपदेशात् = उपोपसर्गपूर्वकात् "दिश अतिसर्जने' इति धातोर्घञ्प्रत्ययः । अंशभागिनः=अंशं भजन्तीति अंशभागिनः ।

एकस्मिन्नेव हि कर्मणि बहूनि फलान्युपपद्यन्ते । तेषु कानि चित् तत्र सहायभूतानधिगच्छन्ति । तस्मादुपदेष्टरि विद्यमानेनैवांशेन वयमिह पूर्णकामा भवाम इति तात्पर्यम् ।

**भावार्थः**—अस्माकमागमनस्य यत् प्रयोजनं तदाकर्णय । वस्तुतोऽस्मदागमनं त्वत्प्रयोजनमात्रपरमस्ति वयं तु तव कल्याणानां ज्ञापनात् अत्र कार्ये फलभागभाजो भवेमेति भावः ।

**भाषा**—अब हम लोगों के आने का कारण सुनो। वस्तुतः यह कार्य तुम्हारा हि हित साधक हैं । हम लोग तो केवल कल्याण के उपदेश मात्र से फल भागी हैं।

अथ वरगुणप्रशंसया हिमालयं प्रोत्साहयति त्रिभिः श्लोकैः । तत्रादावीश्वरशब्दस्याऽनन्यवाचकत्वमाह—

**अणिमाऽऽदिगुणोपेतमस्पृष्टपुरुषान्तरम् ।**
**शब्दमीश्वर इत्युच्चैः साऽर्धचन्द्रं बिभर्ति यः ॥ ७५ ॥**

**अस्पृष्ट पुरुषान्तर अमर अणिमादि गुण से युक्त जो ।**
**चन्द्रार्ध धर ईश्वर तथा हर वस्तु से है मुक्त जो ॥**

**अन्वयः**—यः अणिमाऽऽदिगुणोपेतम् अस्पृष्टपुरुषाऽन्तरम् उच्चैः ईश्वर इति शब्दं साऽर्धचन्द्रं बिभर्ति ।

**व्याख्या**—यः=शम्भुः, अणिमादिगुणोपेतम्=अणिमाद्यैश्वर्ययुक्तम् , अष्टैश्वर्यवाचकमित्यर्थः । अतएव-अस्पृष्टपुरुषान्तरम्=अनामृष्टनरान्तर, पुरुषान्तरस्याऽनभिधायकमित्यर्थः । उच्चैः=लोकप्रख्यातम् , ईश्वर इति शब्दम्=ईश्वर इति पदं, निरुपपदेश्वरशब्दमित्यर्थः । साऽर्धचन्द्रम् = अर्धचन्द्रसहितम् , अर्धचन्द्रं चेत्यर्थः । बिभर्ति=धारयति ।

**व्युत्पत्तिः**—अणिमादिगुणोपेतम्=अणोर्भावः अणिमा, "पृथ्वादिभ्य इमनिज्वा" इति इमनिज्प्रत्ययः । "स्त्रिया मात्रा त्रुटिः पुंसि लवलेशकणाऽणवः" इति "विभूतिर्भूतिरैश्वर्यमणिमाऽऽदिकमष्टधा" इति चाऽमरः । अणिमा आदिर्येषां ते अणिमादयः, ते च ते गुणाः इति अणिमादिगुणाः, तैः उपेतः अणिमाऽऽदिगुणोपेतः, तम् अणिमाऽऽदिगुणोपेतम् । अस्पृष्टपुरुषान्तरम्=अन्यः पुरुषः पुरुषान्तरम् । न स्पृष्टम् अस्पृष्टम् , तत् पुरुषान्तरं येन सः अस्पृष्टपुरुषान्तरः, तम् अस्पृष्टपुरुषान्तरम् । सार्धचन्द्रम् = अर्धचन्द्रेण सहितः सार्धचन्द्रः, तं सार्धचन्द्रं, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सहस्य सभावः । हिमाऽशुश्चन्द्रमाश्चन्द्र" इत्यमरः । ऐश्वर्यमणिमादिगुणोपेत भवतीति-स्कन्दपुराणेऽप्युक्तम् । तथाहि—

> "अणिमा महिमा चैव लघिमा गरिमा तथा ।
> ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च ॥
> ईश्वरस्येत्थमैश्वर्यमष्टधा परिकीर्तितम् ।" इति ।

**भावार्थः**—यः शम्भुः अणिमाद्यष्टैश्वर्यसहितं पुरुषान्तरानभिधायकं लोकप्रख्यातमीश्वर इति शब्दवाच्यत्वमर्धचन्द्रेण सह "महेश्वरस्त्र्यम्बक एव नापरः" इत्युक्तदिशा धारयतीति भावः ।

**भाषा**—जो अणिमादि आठ ऐश्वर्यों से युक्त, लोक प्रसिद्ध ईश्वर के नाम से पुकारा जाता है, तथा जो अर्ध चन्द्र से युक्त हैं ।

महेश्वरस्य सर्वसाधारणभोगप्रदत्वमाह—

> **कलिताऽन्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।**
> **येनेदं ध्रियते विश्वं धुर्यैर्यानमिवाऽध्वनि ॥ ७६ ॥**
> **मूर्त्यष्ट से अन्योन्य बल से विश्व यों धारण किया ।**
> **जिस तरह अश्वों से विमल धारण गया स्यन्दन किया ॥**

**अन्वयः**—येन कलिताऽन्योन्यसामर्थ्यैः पृथिव्यादिभिः आत्मभिः इदं। विश्व "धुर्यैः अध्वनि यानम् इव" ध्रियते।

**व्याख्या**—येन = शम्भुना, कलिताऽन्योन्यसामर्थ्यैः=सम्पादितपरस्परशक्तैः, पृथिव्यादिभिः=पृथिवीसलिलात्ममारुततेजस्सूर्यचन्द्राकाशरूपैः अष्टभिः, आत्मभिः = शरीरैः, इद = व्यक्तं, विश्वं = भुवनं, धुर्यैः = अश्वैः, अध्वनि = मार्गे, यानम् इव=रथ इव, ध्रियते = अवतिष्ठते।

**व्युत्पत्तिः**—कलिताऽन्योन्यसामर्थ्यैः=समर्थस्य भावः कर्म वा सामर्थ्यम्। अन्योन्येषु सामर्थ्यम् अन्योन्यसामर्थ्यम्। कलित=धृतिसंग्रहाऽऽदिस्वस्वगुणसम्पादितम्, अन्योन्यसामर्थ्यं=परस्परसहकाररूपं, यैस्ते कलिताऽन्योन्यसामर्थ्याः' तैः कलितान्योन्यसामर्थ्यैः। पृथिव्यादिभिः=पृथिवी आदिर्येषा ते पृथिव्यादयः, तैः पृथिव्यादिभिः, आत्मभिः="आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः। धुर्यैः = धुरं वहन्तीति धुर्याः, तैः धुर्यैः, "धुरो यड्ढकौ" इति यत्प्रत्ययः। ध्रियते = "धृङ् अवस्थाने" इति तौदादिकधातोर्लट्।

अत्रोपमालङ्कारः। तत्र कलितान्योन्यसामर्थ्यैरिति साधारणो धर्मः। तथा हि—जलं कूपतटाकादिरूपया पृथिव्या धृतमेव स्वकार्यभूतं स्नानादिकं जनयति। तेजोऽपि काष्ठादिरूपया पृथिव्या धृतमेव पाकादिकार्यकृद् भवति। पृथिवी तु सलिलानुगृहीतैव सस्यादिकार्यमुत्पादयति, जलतेजोभ्यामनुगृहीतैव घटादिकार्यं सम्पादयतीत्यादिसर्वत्र द्रष्टव्यम्। एवं धुर्याणामपि वहनसामर्थ्यमन्योन्यकृतमेवेति बोध्यम्। महेश्वरशरीरैरेव सर्वे जना यथासुखं वर्तन्त इति तात्पर्यम्।

**भावार्थः**—येन शम्भुना स्वस्वगुणसम्पादितपरस्परसामर्थ्यैः पृथिवीसलिलात्ममारुततेजस्सूर्यचन्द्राकाशरूपैरष्टभिः स्वशरीरैरिदं दृश्यमानं जगत् "मार्गेऽश्वै रथ इव" धार्यते इति भावः।

**भाषा**—जो महेश्वर परस्पर सामर्थ्य को बढ़ाने वाले पृथ्वी–सलिलादि आठ शरीरों से संसार को "मार्ग में घोड़ों से रथ की तरह" धारण किये हुए हैं।

अथ महेश्वरस्य मोक्षप्रदत्वमप्याह—

**योगिनो यं विचिन्वन्ति क्षेत्राऽभ्यन्तरवर्तिनम्।**
**अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः॥ ७७॥**

योगी जिसे करते मनन जो क्षेत्रवर्ती वन्द्य तर।
कहते बुधाऽनावृत्तिभय जिसके विमल पद को सुवर॥

**अन्वयः**—योगिनः क्षेत्राऽभ्यन्तरवर्तिनं यं विचिन्वन्ति। मनीषिणः यस्य पदम् अनावृत्तिभयम् आहुः ।

**व्याख्या**—योगिनः = योगाभ्यासशीलाः । क्षेत्राऽभ्यन्तरवर्तिनं = शरीराऽन्तर्विद्यमान, सर्वभूताऽन्तर्यामिणं परमात्मस्वरूपिणमित्यर्थः । यं = शम्भु, विचिन्वन्ति = गवेषयन्ति, परमात्मस्वरूपावधारणार्थमतद्व्यावृत्तिमुखेनाऽन्विच्छन्तीत्यर्थः । अनेन परमात्मस्वरूपस्य परमसूक्ष्मत्वमुक्तं भवति । मनीषिणः=प्राज्ञाः, मन्वादय इत्यर्थः । यस्य=शम्भोः, पदं = स्वरूपम्, अनावृत्तिभयम् = पुनरावृत्तिभयरहितम्, आहुः = कथयन्ति ।

**व्युत्पत्तिः**—क्षेत्राऽभ्यन्तरवर्तिनं = क्षेत्रस्य अभ्यन्तरं क्षेत्राऽभ्यन्तरम्; "क्षेत्रं पत्नीशरीरयोः" इत्यमरः । तथा चोक्तं गीतायामपि भगवता श्रीकृष्णेन–

"इदं शरीरं कौन्तय ! क्षेत्रमित्यभिधीयते " इति ।

"अभ्यन्तरं त्वन्तरालम्" इत्यमरः । क्षेत्राऽभ्यन्तरे वर्तते तच्छीलः क्षेत्राऽभ्यन्तरवर्ती, तं क्षेत्राभ्यन्तरवर्तिन, मनीषिणः=मनस ईषिणः मनीषिणः "शकन्ध्वादिषु पररूप वाच्यम्" इति पररूपत्वम् । "धीरो मनीषी ज्ञः प्राज्ञः सख्यावान् पण्डितः कविः" इत्यमरः । अनावृत्तिभयम् = आवृत्तिः=आवर्तनं, पुनः ससारापत्तिरित्यर्थः । आवृत्तेः भयम् आवृतिभयं, अविद्यमानम् आवृत्तिभयं यस्मिन्; तत् अनावृत्तिभयं, तत् । आहुः–ब्रूञ् धातोर्लटः प्रथमपुरुषबहुवचने रूपम् । स्मृतिरप्याह—

"यद् गत्वा न निवर्तन्ते तद्धाम परमं पदम् ॥"

"यतः प्रतिनिवर्तन्ते नैव जातु विपश्चितः ॥" इति ।

**भावार्थः**—अध्यात्मवेदिनः सर्वभूतान्तर्यामिणं परमसूक्ष्मस्वरूपं परमात्मसंज्ञं यं महेश्वरं महता प्रयासेन मृगयन्ते । मन्वादयो यस्य शम्भोः स्वरूपभावागमनरूपसंसारभयनिवर्तकं वदन्तीति भावः ।

**भाषा**—योगी लोग जिस को अन्तरात्मा में खोजते हैं, महर्षि गण जिस शङ्कर के स्वरूप को मोक्ष पद कहते हैं ।

अथ महेश्वरसन्देशमेवाह—

**स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।**
**वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥ ७८ ॥**

जग कर्म-साक्षी वरद शंकर हम सवों द्वारा अमल ।
है समुद्र करता याचना तव पार्वती दुहिता विमल ॥

**अन्वयः**—विश्वस्य कर्मणा साक्षी वरदः स शम्भुः अस्मत्संक्रामितैः पदैः ते दुहितरं साक्षात् वृणुते।

**व्याख्या**—विश्वस्य = जगतः, कर्मणा=क्रियाणा, सत्कर्मणा दुष्कर्मणा चेत्यर्थः। साक्षी=द्रष्टा, वरदः = वरदाता, तत्तत्फलप्रदातेत्यर्थः। सः=पूर्वोक्तसकलगुणविशिष्टः, शम्भुः=शङ्करः, अस्मत्संक्रामितैः=अस्मन्निवेशितैः, पदैः=शब्दैः, वाक्यैरित्यर्थः। "पदसमूहो वाक्यम्" इति सिद्धाऽन्तात्। ते=तव, दुहितरं= तनया, पार्वतीमित्यर्थः। साक्षात्=स्वयमेव, वृणुते=याचते।

**व्युत्पत्तिः**—साक्षी="साक्षाद् द्रष्टरि संज्ञायाम्"इति इनिप्रत्ययः। "सौ च" इति दीर्घः। वरदः=वरान् ददातीति वरदः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः। अस्मत्संक्रामितैः = अस्मासु संक्रामितानि अस्मत्संक्रामितानि, तैः अस्मसंक्रामितैः। अनेन लेखस्थानीया वयमिति द्योत्यते।

**भावार्थः**—सर्वेषामपि जीवाना सत्कर्मणा दुष्कर्मणा च द्रष्टा तत्तत्फलप्रदाता च स महेश्वरोऽस्मन्मुखेन तव पुत्री पार्वतीं स्वयमेव याचते इति भावः।

**भाषा**—जो संसार के भले बुरे कर्मों को देखने वाला है, वह वरद शम्भु-हमलोगों के शब्दों से तुम्हारी कन्या पार्वती के साथ विवाह करना चाहता है।

सम्प्रति हिमालयस्य कर्तव्यमाह—

**तमर्थमिव भारत्या सुतया योक्तुमर्हसि।**
**अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता॥ ७९॥**

**वागर्थ सम शिव को सुता से युक्त करना है अमल।**
**सद्भर्तृ को देकर सुता होता पिता सुख मय विमल॥**

**अन्वयः**—तं "भारत्या अर्थम् इव" सुतया योक्तुम् अर्हसि। हि सद्भर्तृप्रतिपादिता कन्या पितुः अशोच्या भवति।

**व्याख्या**—तं=शम्भुं, भारत्या = वाण्या, अर्थम् इव = अभिधेयम् इव, सुतया=दुहित्रा, पार्वत्येत्यर्थः। योक्तु सयोजयितुम्, अर्हसि=योग्योऽसि। हि=तथाहि, सद्भर्तृप्रतिपादिता=सद्वरप्रदत्ता, कन्या = तनया, पितुः = जनकस्य, अशोच्या = अशोचनीया, भवति।

**व्युत्पत्तिः**—भारत्या="ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः। अर्थम् = "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। सद्भर्तृप्रतिपादिता = बिभर्तीति भर्ता, संश्चाऽसौ भर्ता सद्भर्ता, तस्मै प्रतिपादिता सद्भर्तृप्रति-

पादिता । अशोच्या=शोचितुं योग्या शोच्या, न शोच्या अशोच्या, भवतीति शेषः।

ईश्वरकृतः शब्दार्थयोः सम्बन्ध इति तार्किकाणा मतम्। तदनुसारेणेयमुक्तिः। यथेश्वरो जगत्सर्गानन्तरं शब्दार्थौ परस्परं योजयति, तथा त्वमुमामहेश्वरौ परस्परं योजयितुमर्हसीति तात्पर्यम् । अत्रोपमया दम्पत्योः परस्परोपकर्तृत्वं च ध्वन्यते। "अर्थो हि शब्दोल्लेखेनैव प्रकाशते" इति हि वैयाकरणाना मतम्। तथा चोक्तम्- "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति । शब्दश्चार्थप्रकाशेनैव चरितार्थो भवतीति यथा शब्दार्थयोः परस्परोपकर्तृत्व तथाऽत्रापीत्यर्थः ।

**भावार्थः**—त्वं तं महेश्वरं "वाचाऽभिधेयमिव" पुत्र्या पार्वत्या योजयितुं योग्योऽसि । पुत्री श्रेष्ठवराय प्रदत्ता सती जनकस्य श्लाघ्या भवतीति भावः ।

**भाषा**—तुम अपनी कन्या की शादी शङ्कर से कर दो, क्यों कि उत्तम पति से अपनी लड़की का विवाह करके पिता चिन्ता-रहित हो जाता है ।

अथ हरवरप्राप्त्या पार्वत्यास्तत्तादृशीं भाविनीं प्रतिष्ठां श्लोकद्वयेन वर्णयति । तत्रादौ तस्या जगन्मातृत्वमाह—

**यावन्त्येतानि भूतानि स्थावराणि चराणि च ।**
**मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥८० ॥**

**जितने चराचर भूत गण हैं सृष्टि के हे अचल वर ।**
**उनकी उमा माता बनेगी और जनक सुवन्द्य हर ॥**

**अन्वयः**—स्थावराणि चराणि च यावन्ति एतानि भूतानि एना मातरं कल्पयन्तु । हि ईशः जगतः पिता अस्ति ।

**व्याख्या**—स्थावराणि = अचराणि, चराणि च=जङ्गमानि च, यावन्ति= यत्परिमाणानि, एतानि, भूतानि=प्राणिनः, सर्वाणि भूतानीत्यर्थः । एना=ते दुहितरं, पार्वतीमित्यर्थः । मातरं = जननीं, कल्पयन्तु=जानन्तु, मातृत्वेन व्यवहरन्त्वित्यर्थः । हि = यतः, ईशः = शम्भुः, जगतः = लोकस्य, पिता=जनकः, अस्ति ।

**व्युत्पत्तिः**—चराणि=चरन्तीति चराणि, "चरेष्ट" इति टप्रत्ययः । मातर= "जनयित्री प्रसूर्माता" इत्यमरः । पिता = "तातस्तु जनकः पिता" इत्यमरः ।

**भावार्थः**—अजङ्गमानि जङ्गमानि च यावन्ति दृश्यमानानि जगन्ति सन्ति, तानि सर्वाणि भूतानि तव पुत्रीं पार्वतीं जननीं कल्पयन्तु । यतो हि महेश्वरः स्थावरजङ्गमात्मकस्य सकलस्य प्रपञ्चस्य जनकस्तस्मात् "पत्न्यः पितुर्मातर एव सर्वाः" इति न्यायेन तत्पत्नी पार्वती च तन्मातैवेति भावः ।

**भाषा**—जितने ये स्थावर जङ्गम संसार के प्राणी हैं, तुम्हारी कन्या उनकी माता होगी, क्योंकि शङ्कर उनके पिता हैं।

अथ सकलदेवतावन्दनीयत्वमप्याह—

**प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।**
**चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१ ॥**

**शिति कण्ठ का सादर प्रथम करके प्रणाम अजर अमर ।**
**चूड़ामणी-कर से रंगे गे पार्वती के पद सुघर ॥**

**अन्वयः**—विबुधाः शितिकण्ठाय प्रणम्य, तदनन्तरम् अस्याः चरणौ चूडामणिमरीचिभिः रञ्जयन्तु ।

**व्याख्या**—विबुधा.=देवाः, शितिकण्ठाय=शिवाय, प्रणम्य=नमस्कृत्वा, तदनन्तरं=तदनु, शितिकण्ठप्रणामाऽनन्तरमित्यर्थः । अस्याः=पार्वत्याः, चरणौ=पादौ, चूडामणिमरीचिभिः=शिरोरत्नदीधितिभिः, रञ्जयन्तु=रक्तौ कुर्वन्तु ।

**व्युत्पत्तिः**—विबुध्यन्ते इति विबुधाः, "त्रिदशा विबुधाः सुराः" इत्यमरः । शितिकण्ठाय=शितिः कण्ठः यस्य सः शितिकण्ठः, तस्मै शितिकण्ठाय, क्रियायोगे चतुर्थी । "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्" इत्यमरः । तदनन्तरम्=तस्मात् अनन्तर तदनन्तर । चूडामणिमरीचिभिः=चूडायाः मणयः चूडामणयः, तेषा मरीचयः चूडामणिमरीचयः, तैः चूडामणिमरीचिभिः="भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः । रञ्जयन्तु=णिजन्तात् "रञ्ज रागे" इति धातो लोट् ।

**भावार्थः**—देवा महेश्वराय प्रणमन कृत्वा तदनन्तरं स्वकिरीटरत्नप्रभाभिस्तव पुत्र्याः पार्वत्या अपि पादौ रागयुक्तौ कुर्वन्त्विति भावः ।

**भाषा**—देवता लोग पहले शङ्कर को प्रणाम करके तदनन्तर पार्वती के चरणों को अपनी चूडामणि मरीचियों से रञ्जित करें !

अनेन विवाहविधिना तव कुलस्य लोकोत्तरमौन्नत्य भविष्यतीत्याह—

**उमा वधूर्भवान्दाता याचितार इमे वयम् ।**
**वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२ ॥**

**गिरिजा वधू, दाता अचल तुम, हम सभी याचक, गिरे ! ।**
**वर शम्भु, इससे अधिक कुल-सम्मान क्या होगा गिरे ! ॥**

**अन्वयः**—उमा वधूः, भवान् दाता, इमे वयं याचितारः, शम्भुः वरः, एषः

विधिः त्वत्कुलोद्भूतये अलं हि ।

**व्याख्या**—उमा = पार्वती, वधूः=जनी, भवान्=त्वं दाता = दायकः, इमे= एते, वयम् = ऋषयः, याचितारः = प्रार्थकाः, शम्भुः=ईश्वरः, वरः = वोढा, एषः विधिः = एषा सामग्री, त्वत्कुलोद्भूतये = त्वद्वंशोन्नतये, अलं = पर्याप्तं, हि= निश्चयेन । !

**व्युत्पत्तिः**—उमा="उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः। दाता=ददातीति दाता, तृच्प्रत्ययः । याचितारः=याचन्ते इति याचितारः, तृच्प्रत्ययः । त्वत्कुलोद्भूतये = तव कुलं त्वत्कुलं, तस्य उद्भूतिः त्वत्कुलोद्भूतिः, तस्यै त्वत्कुलोद्भूतये । अलंशब्देन योगात् चतुर्थी । हीति निश्चयार्थकः । अत्र पूर्वोक्तेष्वेकैकस्यापि कुलोन्नतौ पर्याप्तत्वेऽपि समस्तमेलनात् कुलस्योत्कृष्टत्व द्योत्यते।

**भावार्थः**—सौशील्यादिगुणविशिष्टा पार्वती कन्या, श्रद्धादिगुणविशिष्टो भवान् दानकर्ता, शमदमादिगुणविशिष्टा वयं प्रार्थयितारः, पारमैश्वर्यादिलोकोत्तरगुणविशिष्टो महेश्वरो भर्ता । अस्मन्नियोगपूर्वक-त्वत्कर्तृक-हरार्पणरूप एष पार्वत्या विवाहविधिः तव कुलस्य समृध्द्यै पर्याप्त एवास्तीति भावः ।

**भाषा**—उमा वधू , तुम देने वाले, हम लोग मागने वाले, शङ्कर वर, इससे बढ़कर तुम्हारे कुल का क्या सत्कार होगा ।

तवाप्यलौकिकोन्नतिरित्याह —

> **अस्तोतुः स्तूयमानस्य वन्द्यस्याऽनन्यवन्दिनः ।**
> **सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥**
> **जो वन्द्य सबसे, वन्द्य उससे है न जन, प्रस्तरस्वनो ! ।**
> **कन्या-उमा-सम्बन्ध से उस विश्व गुरु का गुरु बनो ॥**

**अन्वयः**—अस्तोतुः स्तूयमानस्य वन्द्यस्य अनन्यवन्दिनः विश्वगुरोः सुतासम्बन्धविधिना गुरुः भव ।

**व्याख्या**—अस्तोतुः = स्तुतिम् अकुर्वतः, आत्मकर्तृकस्तवनरहितस्येत्यर्थः । स्तूयमानस्य = सर्वस्तुत्यस्य, वन्द्यस्य=अभिवादनीयस्य, सर्वैः कृतस्तवनस्येत्यर्थः । अनन्यवन्दिनः = अन्यमनभिवादयतः, आत्मकर्तृकवन्दनरहितस्येत्यर्थः । विश्वगुरोः = जगद्गुरोः, शम्भोरित्यर्थः । सुतासम्बन्धविधिना=पुत्रीसम्बन्धविधानेन, गुरुः = पूज्यः, भव = एधि ।

**व्युत्पत्तिः**—अस्तोता=स्तौतीति स्तोता, न स्तोता अस्तोता, तस्य अस्तो·

तुः । स्तूयमानस्य=स्तूयते इति स्तूयमानः, तस्य स्तूयमानस्य, "स्तूञ् स्तवने" इति धातोः कर्मणि यक्, तदन्तात् शानच् । वन्द्यस्य=वन्दितुं योग्यः वन्द्यः, तस्य वन्द्यस्य । अनन्यवन्दिनः=अन्यं वन्दते तच्छीलः अन्यवन्दी, णिनिप्रत्ययः । न अन्यवन्दी अनन्यवन्दी, तस्य अनन्यवन्दिनः । विश्वगुरोः=विश्वस्य गुरुः विश्वगुरुः, तस्य विश्वगुरोः । सुतासम्बन्धविधिना=सुतायाः सम्बन्धः सुतासम्बन्धः, तस्य विधिः सुतासम्बन्धविधिः, तेन सुतासम्बन्धविधिना । "विधिर्विधाने दैवे च" इत्यमरः । श्वशुरस्यापि गुरुत्वं स्मृतिप्रसिद्धम् । तथाहि—

"पित्रादयस्त्रयो भ्राता पितुर्मातामहस्तथा ।
ज्येष्ठभ्राता मातुलश्च श्वशुरो गुरवस्त्विमे ॥" इति ।

**भावार्थः**—आत्मकर्तृकस्तवनरहितस्य, सर्वैरपि जनैः कृतस्तवनस्य, तथैवात्मकर्तृकवन्दनरहितस्य, सकलजनवन्दनीयस्य, त्रैलोक्यगुरोरपि महेश्वरस्य, कन्याया तेन सहात्मसम्बन्धविधानेन त्वं श्वशुरभावं लभस्वेति भावः ।

**भाषा**—स्वयं किसी की स्तुति नहीं करता, किन्तु संसार उसकी स्तुति करता है, स्वय किसी की वन्दना नहीं करता, किन्तु विश्व उसकी वन्दना करता है, ऐसे जगद्गुरु शङ्कर के साथ अपनी कन्या का विवाह करके उसके श्वशुर-पद का ग्रहण करो ।

अथ रसाभिनिविष्टः कविः क्रमप्राप्ताद् हिमालयवृत्तान्तात् पूर्वमेव मुनिवचनसमाप्तिं दर्शयन् पार्वतीवृत्तान्तमनुसन्धत्ते—

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥**

**सप्तर्षि करते बात थे गिरि निकट नत मुख थी सती ।**
**लीला-कमल पत्रावली को गिन रही थी पार्वती ॥**

**अन्वयः**—देवर्षौ एवं वादिनि सति, पार्वती पितुः पार्श्वे अधोमुखी सति लीलाकमलपत्राणि गणयामास ।

**व्याख्या**—देवर्षौ=सुरर्षौ, अङ्गिरसीत्यर्थः । एवं वादिनि=एवं भाषिणि सति, पार्वती=गौरी, पितुः=हिमाऽऽलयस्य, पार्श्वे=समीपे, अधोमुखी=अवनतवदना सती, लज्जया इति शेषः । लीलाकमलपत्राणि=लीलापद्मदलानि, गणयामास=सञ्चख्यौ ।

**व्युत्पत्तिः**—देवर्षौ=देवानाम् ऋषिः देवर्षिः, तस्मिन् देवर्षौ, एवंवादिनि=

एवं वदतीति एवंवादी, तस्मिन् एवंवादिनि, अधोमुखी=अधः कृत मुखं यया सा अधोमुखी । लीलाकमलपत्राणि = लीलायाः कमलानि लीलाकमलानि, तेषा पत्राणि लीलाकमलपत्राणि, तानि । "पत्रं पलाशं छदन दल पर्णं छन्दः पुमान्" इत्यमरः । लज्जावशात् कमलपत्रगणनाच्छलेन हर्षं गोपयामासेत्यर्थः । अनेन अवहित्थाऽऽख्यः व्यभिचारिभाव उक्तः । "अवहित्थाऽऽकारगुप्तिः" इत्यमरः । तथा चोक्तं साहित्यदर्पणे विश्वनाथकविराजेन—

"भयगौरवलज्जाऽऽदेर्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्यन्यथावभाषणविलोकनाऽऽदिकरी ॥" इति ।

**भावार्थः**—अङ्गिरसि पूर्वोक्तप्रकारेण वदति सति, पार्वती हिमालयस्य समीपे लज्जया नम्रानना सती क्रीडापद्मदलानि सङ्ख्यातवती । लज्जावशात् कमलदलगणनाव्याजेन हर्षं जुगोपेति भावः ।

**भाषा**—अङ्गिरा ऋषि के बोलने के समय नम्रमुखी पार्वती अपने पिता के पास बैठकर लज्जा-वश लीला-कमल-पत्रों को गिन रही थी ।

अथ प्रकरणक्रमागता हिमालस्य प्रवृत्तिमेवानुसन्धत्ते—

**शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।**
**प्रायेण गृहिणीनेत्राः कन्याऽर्थेषु कुटुम्बिनाः ॥ ८५ ॥**

**दानेच्छु था तो भी अचल मेना वदन लखने लगा ।**
**कन्या हितार्थ गृहस्थ रहता निज प्रिया सम्मति पगा ॥**

**अन्वयः**—शैलः सम्पूर्णकामः अपि मेनामुखम् उदैक्षत । तथाहि प्रायेण कुटुम्बिनः कन्याऽर्थेषु गृहीणीनेत्राः भवन्ति ।

**व्याख्या**—शैलः=हिमाऽऽलयः, सम्पूर्णकामः अपि=समग्राऽभिलाषः अपि, मेनामुखं=पत्नीवदनम् , उदैक्षत = अद्राक्षीत् । तदभिप्रायवेदनार्थमिति यावत् । तथाहि-प्रायेण=विशेषेण, कटुम्बिनः = गृहस्थाः, कन्याऽर्थेषु = कन्याप्रयोजनेषु, दानादिकर्मस्वित्यर्थः, गृहीणीनेत्राः=गेहिनीनयनाः, पत्नीप्रधानवृत्तयो भवन्तीत्यर्थः।

**व्युत्पत्तिः**—सम्पूर्णकामः=सम्पूर्णः कामः यस्य स सम्पूर्णकामः, मेनामुखं=मेनाया मुख मेनामुखं, तत् । कटुम्बिनः=कुटुम्बम् अस्ति येषा ते कुटुम्बिनः। कन्याऽर्थेषु=कन्याया अर्थाः कन्याऽर्थाः, तेषु कन्यार्थेषु । गृहीणीनेत्राः= गृहम् अस्ति अस्याः सा गृहीणी, इनिप्रत्ययः, तदन्तात् स्त्रीत्वविवक्षाया ङीप् । गृहिणी नेत्रं येषा ते गृहिणीनेत्राः, गृहिणीप्रमाणा इत्यर्थः । भवन्तीति शेषः ।

**भावार्थः**—हिमालयः परिपूर्णमनोरथः सन्नपि समुचितोत्तरजिज्ञासया स्वभार्याया मेनाया वदनमुदीक्षितवान् । गृहस्थाः कन्यादानादिकर्मसु प्रायशः कलत्रप्रधानवृत्तयो भवन्तीति भावः ।

**भाषा**—अङ्गिरा ऋषि की बातें सुनकर, कन्या दान करने का निश्चय कर लेने पर भी हिमालय ने अपनी स्त्री मेना के मुख को देखा, प्रायः गृहस्थ कन्यादान के विषय में अपनी स्त्री की ही प्रधानता रखते हैं ।

अथ मेनाया अपि सानुकूलत्वमाह—

**मेने मेनाऽपि तत्सर्वं पत्युः कार्यमभीप्सितम् ।**
**भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ८६ ॥**
**पति के अभीप्सित को किया स्वीकार मेना ने सरति ।**
**पति चाह के अनुकूल ही रहती सती उससे सनति ॥**

**अन्वयः**—मेना अपि पत्युः तत् सर्वम् अभीप्सितं कार्यं मेने । तथाहि—पतिव्रताः भर्तुः इष्टे अव्यभिचारिण्यः भवन्ति ।

**व्याख्या**—मेना अपि = हिमाऽऽलयपत्नी, अपि, पत्युः=भर्तुः, हिमालयस्येत्यर्थः । तत्, सर्वम्=सकलम्, अभीप्सितम्=अभीष्टं, कार्यं=कन्यादानरूपं कर्म, मेने = स्वीचकार । तथाहि–पतिव्रताः=सत्यः, भर्तुः=पत्युः इष्टे = अभीप्सिते, अव्यभिचारिण्यः = अविरोधिन्यः, भवन्ति = वर्तन्ते ।

**व्युत्पत्तिः**—अभीप्सितम्="अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इत्यमरः । कार्यं = कर्तुं योग्य कार्यं, तत् । ण्यत् प्रत्ययः । पतिव्रताः = पतिरेव व्रत यासा ताः पतिव्रताः, "सुचरित्रा तु, सती साध्वी पतिव्रता" इत्यमरः । अव्यभिचारिण्यः = व्यभिचरन्तीति तच्छीलाः व्यभिचारिण्यः, न व्यभिचारिण्यः अव्यभिचारिण्यः । अत्राऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—हिमालयपत्नी मेनापि भर्तुरभीप्सितं "हराय पार्वतीप्रदानरूप" तत्सर्वं कार्यजातमङ्गीचकार । तथाहि–पतिव्रताः स्त्रियः पत्युरभीप्सितेषु कार्येष्वविरोधिन्यो भवन्तीति भावः ।

**भाषा**—मेना ने भी अपने पति के अनुकूल ही शङ्कर के साथ पार्वती के विवाह का स्वीकार कर लिया, क्योंकि सती स्त्रिया अपने पती के विरुद्ध कोई कार्य नहीं करती है ।

मेनास्वीकृतिप्राप्त्यनन्तरं हिमालयस्य प्रवृत्तिमाह—

**इदमत्रोत्तरं न्याय्यमिति बुद्धया विमृश्य सः ।**

**आददे वचसामन्ते मङ्गलाऽलङ्कृतां सुताम् ॥ ८७ ॥**

यह न्याय्य उत्तर बुद्धि के द्वारा हिमालय सोचकर ।
वाक्यान्त में सानन्द बोला पार्वती से रम्यतर ॥

**अन्वयः**—सः वचसाम् अन्ते "अत्र इदम् न्याय्यम् उत्तरम्" इति बुद्ध्या विमृश्य मङ्गलालङ्कृता सुताम् आददे ।

**व्याख्या**—सः = हिमाऽऽलयः, वचसा=मुनिवाक्यानाम्, अन्ते = अवसाने, अत्र=मुनिकृते कन्याप्रार्थने, इदं = वक्ष्यमाणं कन्यार्पणमेव, न्याय्यम् = न्यायात् अनपेतं, युक्तमित्यर्थः । उत्तरं = प्रतिवचनम्, इति=इत्थं, बुद्ध्या = धिया, विमृश्य = विचार्य, मङ्गलाऽलङ्कृता = मङ्गलभूषिता, सुता = पुत्रीम्, आददे = जग्राह, हस्ताभ्यामिति शेषः ।

**व्युत्पत्तिः**—वचसां = "व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः । न्याय्यं = "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । विमृश्य = "विमर्शो भावना चैव वासना च निगद्यते" इत्यमरः । मङ्गलाऽलङ्कृता=मङ्गलैः = दुर्वाङ्कुरादिभिः, अलङ्कृता = भूषिता, मङ्गलाऽलङ्कृता, ता मङ्गलालङ्कृताम् । आददे = दानार्थं हस्तेन गृहीतवानित्यर्थः ।

**भावार्थः**—स हिमालयः सप्तर्षिकृते कन्याप्रार्थने हृदयगतं कन्यार्पणमेव युक्तमिति स्वमनीषया विचारपूर्वकं निश्चित्य मुनिवचनावसानसमय एव कृतमङ्गलनैपथ्यां पार्वतीं प्रदातुं हस्ताभ्यां जग्राहेति भावः ।

**भाषा**—सप्तर्षियों के कह लेने पर, विचार पूर्वक कन्या अर्पण करने का निश्चय करके हिमालय ने अलंकृत कन्या पार्वती को ही उनके सामने हाजिर कर दिया ।

आत्मना निश्चितमर्थं पार्वतीं प्रत्याह—

**एहि विश्वाऽऽत्मने वत्से ! भिक्षाऽसि परिकल्पिता ।**
**अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८८ ॥**

वत्से ! गई मांगी महेश्वर अर्थ भिक्षा-रूपया ।
याचक बने सप्तर्षि-गण गृह मेधि फल मैं पागया ॥

**अन्वयः**—हे वत्से ! एहि । त्वं विश्वात्मने भिक्षा परिकल्पिता असि । मुनयः अर्थिनः, मया गृहमेधिफलं प्राप्तम् ।

**व्याख्या**—हे वत्से=हे पुत्रि ! एहि=आगच्छ । त्वं, विश्वात्मने=शिवाय, भिक्षा = भैक्ष्यं, परिकल्पिता असि=निश्चिता असि । मुनयः=ऋषयः, अर्थिनः=

याचकाः, सन्तीति शेषः । मया = हिमालयेन, गृहमेधिफलं = गृहस्थफलं, प्राप्तम्= आसादितम् ।

**व्युत्पत्तिः**—विश्वाऽऽत्मने = विश्वम् आत्मा यस्य स विश्वात्मा, तस्मै विश्वात्मने । अर्थिनः=अर्थयन्ते इति अर्थिनः । गृहमेधिफल = गृहैः मेधन्ते इति गृहमेधिनः, "मेधृ सङ्गमे" इति धातोः णिनिप्रत्ययः । गृहमेधिना फल गृहमेधिफलं, गृहस्थाश्रमावलम्बनस्य फलमित्यर्थः । हस्थस्य याचकाय भिक्षादानं धर्मः । अन्यथा प्रत्यवाय उक्तः स्मृतौ । यथा हि—

"गृहस्थः श्रद्धया दद्याद् भिक्षा भिक्षार्थिने सदा ।
भिक्षामददतः पुंसो गार्हस्थ्यं निष्फल भवेत् ॥" इति ।

**भावार्थः**—हे पुत्रि ! त्वमागच्छ । मया त्व महेश्वराय प्रदातुं भिक्षाद्रव्यं निश्चिताऽसि । महेश्वरनियोगात् त्वद्याचनार्थमेते सप्तर्षयः समागताः ,सन्ति । सम्प्रति गृहस्थाश्रमावलम्बनस्य फल मया सम्प्राप्तमिति भावः ।

**भाषा**—हे वत्से ! आओ, तुम शङ्कर के लिये भिक्षा मागी गई हो, ये सप्तषि मागने के लिये ही आये हुए हैं। इस समय गृहस्थ होने का फल मुझको मिल गया ।

अथ हिमालयस्य मुनिप्रार्थितस्यार्थस्य सविशेषमङ्गीकरणमेवाह—

**एतावदुक्त्वा तनयामृषीनाह महीधरः ।**
**इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥ ८९ ॥**

**यह कह सुता से समुद फिर सप्तर्षि से बोले अचल ।**
**करती प्रणाम त्रिनेत्र-पत्नी यह सभी ऋषि का अमल ॥**

**अन्वयः**—महीधरः तनयाम् एतावत् उक्त्वा, "इयं त्रिलोचनवधूः वः सर्वान् नमति" इति ऋषीन् आह ।

**व्याख्या**—महीधरः=हिमालयः, तनया=पार्वतीम्, एतावत्=एतावन्मात्रं, परिमिताक्षरमित्यर्थ । उक्त्वा=कथयित्वा, इयं=पुरो विद्यमाना, त्रिलोचनवधूः= त्र्यम्बकपत्नी, वः=युष्मान्, सर्वान्=सकलान्, सप्तर्षीन् इत्यर्थः । नमति=नमस्करोति, इति=इत्थम्, ऋषीन्=मुनीन्, आह=अब्रवीत् ।

**व्युत्पत्तिः**—महीधरः=धरतीति धरः, मह्या धरः महीधरः । एतावत्= एतत् परिमाणं यस्य तत् एतावत्, तत् । त्रिलोचनवधूः=त्रीणि लोचनानि यस्य स त्रिलोचनः, "लोचनं नयनं नेत्रमीक्षण चक्षुरक्षिणी" इत्यमरः । त्रिलोचनस्य

वधूः त्रिलोचनवधूः । नमति = "णम प्रह्वत्वे शब्दे" इति धातोर्लट् । इति शब्दः प्रकारवाची । अत्र त्रिलोचनवधूरिति सिद्धवदभिधानान्मुनिप्रार्थितस्यार्थस्य सविशेषमनुवादं दर्शितवान् ।

**भावार्थः**—हिमालयः पार्वतीमेतावन्मात्रं प्रमिताक्षरमभिधाय "इयं महेश्वरपत्नी युष्मान् सर्वान् प्रणमती"ति तान् सप्तर्षीन् प्रति जगादेति भावः ।

**भाषा**—हिमालयने इस तरह अपनी कन्या से कहकर ऋषियों से कहा—यह महेश्वर की भावी पत्नी आप सब लोगों को प्रणाम करती है ।

पार्वतीप्रणामानन्तरं मुनीना तदनुरूपा प्रवृत्तिमाह—

**ईप्सिताऽर्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।**
**आशीर्भिरेधयामासुः पुरः पाकाभिरम्बिकाम् ॥ ८० ॥**

**ऋषि ईप्सितार्थ क्रिया उदार वचन मनोहर श्रवण कर ।**
**आशीर्वचन बोले उमा को विमल फलद मनोज्ञ तर ॥**

**अन्वयः**—ते ईप्सिताऽर्थक्रियोदारं गिरेः वचः अभिनन्द्य, अम्बिका पुरः पाकाभिः आशीर्भिः एधयामासुः ।

**व्याख्या**—ते = ऋषयः, ईप्सिताऽर्थक्रियोदारम् = अभीप्सिताऽर्थकरणमहत्, गिरेः = हिमालयस्य, वचः = वचनम्, अभिनन्द्य = अभिनन्दनं कृत्वा, साध्विति संस्तुत्येत्यर्थः । अम्बिका = पार्वतीं, पुरःपाकाभिः = पुरस्कृतफलाभिः, आशीर्भिः = आशीर्वादैः, एधयामासुः = संवर्धयामासुः ।

**व्युत्पत्तिः**—ईप्सिताऽर्थक्रियोदारम् = ईप्सितश्चाऽसौ अर्थः ईप्सिताऽर्थः, तस्य क्रिया ईप्सिताऽर्थक्रिया, तया उदारम् ईप्सिताऽर्थक्रियोदारं, तत् । "उदारा दातृमहतोः" इत्यमरः । अम्बिकाम्=अम्बा एव अम्बिका, ताम् अम्बिकाम् । "अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका" इत्यमरः । पुरःपाकाभिः = पच्यत इति पाकः=फलम्, पुरस्कृतः पाकः यासा ताः पुरःपाकाः ताभिः पुरःपाकाभिः, एधयामासुः = "एध वृद्धौ" इति धातोः लिट् ।

**भावार्थः**-ते सप्तर्षयः मनोभिलषितकार्यसम्पादनेनोदारं हिमालयस्य पूर्वोक्तवचनजातं संस्तुत्य पार्वतीं पुरस्कृतफलैराशिर्वादवचनैः सवर्धयामासुरिति भावः ।

**भाषा**—सप्तर्षियों ने अपने मनोऽभिलषित कार्य को सिद्ध हुआ जान कर, हिमालय के वचन का अभिनन्दन करके पार्वती को आशीर्वाद दिया ।

अथाऽरुन्धत्याः स्वपदप्रणतपार्वतीविषयां प्रवृत्तिमाह—

**तां प्रणामाऽऽदरस्रस्तजाम्बूनदवतंसकाम् ।**

**अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥**

सादर विनीत प्रमाण करने से कनक कुण्डल पतन ।
ली अङ्क मध्य अरुन्धती ने लज्जिता को कर यतन ॥

**अन्वयः**—प्रणामाऽऽदरस्रस्तजाम्बूनदवतंसका लज्जमाना ताम् अरुन्धती अङ्कम् आरोपयामास ।

**व्याख्या**—प्रणामाऽऽदरस्रस्तजाम्बूनदवतंसका = नमनसत्कारपतितकनककुण्डला, स्वपदप्रणतामित्यर्थः । लज्जमाना=लज्जायुक्ता. ता=पार्वतीम्, अरुन्धती=वशिष्ठपत्नी, अङ्कम्=उत्सङ्गम्, आरोपयामास=स्थापयामास ।

**व्युत्पत्तिः**—प्रणामाऽऽदरस्रस्तजाम्बूनदवतसका=प्रणामस्य आदरः प्रणामाऽऽदरः, तेन स्रस्ते प्रणामादरस्रस्ते । जाम्बूनदस्य विकारौ जाम्बूनदे, "रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः । "अवतसक" इत्यत्र भागुरिमतेनाकारलोप । प्रणामाऽऽदरस्रस्ते जाम्बूनदे वतसके यस्याः सा प्रणामाऽऽदरस्रस्तजाम्बूनदवतसका, ता प्रमाणाऽऽदरस्रस्तजाम्बूनदवतंसका । लज्जमाना=लज्जते इति लज्जमाना, ता लज्जमाना । शानच्प्रत्ययः । अङ्कम् = "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः । आरोपयामास = 'रुहः पोऽन्यतरस्याम्" इति पकारः ।

**भावार्थः**–वशिष्ठपत्नी सादरप्रणामपतितसुवर्णकुण्डला स्वपदप्रणता लज्जावतीं ता पार्वतीं प्रसादातिशयादात्मन उत्सङ्गेऽवस्थापयामासेति भावः ।

**भाषा**—सिर नवा कर पैरों पर प्रणाम करने वाली लज्जित पार्वती को अरुन्धती ने अपनी गोद में ले लिया ।

अथ मेनाविषयामरुन्धत्याः प्रवृत्तिमाह—

**तन्मातरं चाऽश्रुमुखीं दुहितृस्नेहविक्लवाम् ।**
**वरस्याऽनन्यपूर्वस्य विशोकामकरोद्गुणः ॥ ९२ ॥**

दुहिता-सनेह विकल हुई मेना सजल दृग हो गई ।
वर के अनन्य अपूर्व गुण से फिर व्यथा सब खो गई ॥

**अन्वयः**—दुहितृस्नेहविक्लवाम् अश्रुमुखीं तन्मातरं च अनन्यपूर्वस्य वरस्य गुणैः विशोकाम् अकरोत् ।

**व्याख्या**—दुहितृस्नेहविक्लवा = पुत्रीप्रेमविह्वलाम्, अश्रुमुखीम् = रुदतीं, तन्मातरं च = मेना च, अनन्यपूर्वस्य = अनपरपूर्वस्य, (भार्यान्तररहितस्येत्यर्थः । वरस्य = भर्तुः, हरस्येत्यर्थः । गुणैः = मृत्युञ्जयत्वादिभिः, विशोका = शोकरहि-

ताम् , अकरोत् = चकार ।

**व्युत्पत्तिः**—दुहितृस्नेहविक्लवा=दुहितुः स्नेहः दुहितृस्नेहः, "प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्" इत्यमरः । दुहितृस्नेहेन विक्लवा दुहितृस्नेहविक्लवा, ता दुहितृस्नेहविक्लवाम् । अश्रुमुखीम् = अश्रूणि मुखे यस्याः सा अश्रुमुखी, ताम् अश्रुमुखीं । तन्मातरं = तस्याः माता तन्माता, ता तन्मातरम् अनन्यपूर्वस्य — अन्या पूर्वं विद्यते यस्य सः अन्यपूर्वः, "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वपदस्य पुंवद्भावः । न अन्यपूर्वः अनन्यपूर्वः, तस्य अनन्यपूर्वस्य । विशोका = विगतः शोकः यस्याः सा विशोका, ता विशोकाम् ।

**भावार्थः**—कन्याप्रेमदुःखितामश्रुपूर्णाननां पार्वतीमातरं मेनां च भार्यान्तररहितस्य जामातुः शङ्करस्यानन्यसाधारणैर्गुणैर्विगतशोकामकरोच्चेति भावः ।

**भाषा**—पुत्री के स्नेह से विकल, सजल नयना मेना को शकर के गुणानुवाद से अरुन्धती ने शोक रहित किया ।

हिमालयसंवादप्रकरणमुपसंहरति—

**वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।**
**ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ९३ ॥**

**हरबन्धुने तत्क्षण वहीं वैवाहिकी तिथि पूछ ली ।**
**चौथे दिवस उद्वाह-तिथि कह मण्डली ऋषि की चली ॥**

**अन्वयः**—चीरपरिग्रहाः ते तत्क्षणं हरबन्धुना वैवाहिकीं तिथिं पृष्टाः सन्तः त्र्यहात् ऊर्ध्वम् आख्याय चेरुः ।

**व्याख्या**—चीरपरिग्रहाः = वल्कलवसनाः, ते = ऋषयः, तत्क्षणं = तस्मिन् अवसरे, हरबन्धुना = श्वशुरभावं गमिष्यता हिमाऽऽलयेन, वैवाहिकीं=विवाहसम्बन्धिनीं, तिथिं = दिनं, पृष्टाः = अनुयुक्ताः सन्तः, त्र्यहात्=दिनत्रयात् , ऊर्ध्वम् = उपरि, चतुर्थेऽहनीत्यर्थः । आख्याय = कथयित्वा, चेरुः = उदचलन् ।

**व्युत्पत्तिः**—चीरपरिग्रहाः=चीरम् एव परिग्रहो येषां ते चीरपरिग्रहाः । तत्क्षणं=सः क्षणः यस्मिन्कर्मणि तद्यथा तथा तत्क्षणं, "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । हरबन्धुना = हरस्य बन्धुः हरबन्धुः, तेन हरबन्धुना । वैवाहिकीं=विवाहस्य इयं वैवाहिकी, ता वैवाहिकीम् , इदमर्थेऽण्प्रत्ययः । त्र्यहात्=त्रयाणामह्नां समाहारस्त्र्यहः, तस्मात् त्र्यहात् । "तद्धितार्थोत्तरपदसमाहारे च" इति समासः । "राजाऽहःसखिभ्यष्टच्" इति टच्प्रत्ययः ।

द्विगुत्वादेकवचनम् । "रात्राह्नाहाः पुंसि" इति पुंलिङ्गता ।

**भावार्थः**—हरश्वशुरेण हिमालयेन तस्मिन् क्षणे एव "विवाहयोग्यो दिवसः कः" इति पृष्टाः वल्कलवसनास्ते सप्तर्षयो विवाहयोग्यं दिनं चतुर्थेऽह्नीत्युक्त्वा स्वासनादुदचलन् इति भावः ।

**भाषा**—हिमालय ने उसी समय विवाह की तिथि पूछी, सप्तर्षी विवाह की तिथि चौथे दिन बतला कर आसन से उठ कर चल पड़े ।

मुनिप्रवृत्तिमुपसंहरति—

**ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम् ।**
**सिद्धं चास्मै निवेद्याऽर्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥**

**ऋषि अचल से ले निमन्त्रण निकट शिव के चल गये ।**
**कह सिद्ध कार्य त्रिनेत्र से आकाश में वे उड गये ॥**

**अन्वयः**—ते हिमालयम् आमन्त्र्य, पुनः शूलिनं प्राप्य, सिद्धम् अर्थम् अस्मै निवेद्य च, तद्विसृष्टाः खम् उद्ययुः ।

**व्याख्या**—ते = ऋषयः, हिमालय = हिमवन्तम्, आमन्त्र्य = "याम" इति आपृच्छ्य, पुनः=भूयः, शूलिन = शिवं, प्राप्य=लब्ध्वा, सिद्धं=निष्पन्नम्, अर्थं=प्रयोजनम्, अस्मै=शिवाय, निवेद्य च = विज्ञाप्य च, तद्विसृष्टा. = तदाज्ञप्ताः सन्त, खम्=आकाश, ज्योतिष्पथमित्यर्थः । उद्ययुः=उत्पेतुः ।

**व्युत्पत्तिः**—हिमालयं = हिमस्य आलयः हिमालयः, तं हिमालयं । शूलिनं=शूलम् अस्याऽस्तीति शूली, तं शूलिनं, "शम्भुरीशः पशुपतिः शिवः, शूली महेश्वरः" इत्यमरः । तद्विसृष्टाः=तेन विसृष्टाः तद्विसृष्टाः ।

अत्र सङ्क्षिप्ताऽर्थाऽभिधानात्संक्षेपो नाम गुणः । तदुक्तम्—

"सङ्क्षिप्ताऽर्थाऽभिधानं यत् सङ्क्षेपः परिकीर्तितः ।" इति ।

**भावार्थः**—ते सप्तर्षयो हिमालयमापृच्छ्य, भूयोऽपि पूर्वसङ्केतितमहाकौशीप्रपातप्रदेशे महेश्वरं सम्प्राप्य, निजप्रयाससिद्धं प्रयोजनं तस्मै हराय विज्ञाप्य च हरेण गमनायानुज्ञाताः सन्तो ज्योतिष्पथमुत्पेतुरिति भावः ।

**भाषा**—वे सप्तर्षी हिमालय से बिदा होकर, फिर शङ्कर से भेंट कर, उनसे कार्य की सिद्धि बतलाकर, उनकी आज्ञा पाकर, आकाश मार्ग से चले गये ।

महेश्वरवृत्तान्तमेवानुसन्दधाति—

**पशुपतिरपि तान्यहानि कृच्छ्राद्गमयदद्रिसुतासमागमोत्कः ।**

कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ६५ ॥

गिरिजेच्छु शिव को कष्ट से वे बीतने वासर लगे ।
जब विभु हुए व्याकुल अपर फिर क्यों न भावों में पगे ॥

**अन्वयः**—अद्रिसुतासमागमोत्कः पशुपतिः अपि तानि अहानि कृच्छ्रात् अगमयत् । अमी भावाः अवशम् अपरं क न विप्रकुर्युः, यत् विभुम् अपि स्पृशन्ति ।

**व्याख्या**—अद्रिसुतासमागमोत्कः=पार्वतीपरिणयोत्कण्ठितः, पशुपतिः अपि= शम्भुः अपि, तानि=पूर्वोक्तानि, अहानि=दिनानि, त्रीणीत्यर्थः । कृच्छ्रात्-कष्टात्, अगमयत्=अयापयत् । अमी=एते, भावाः=औत्सुक्यादयः, सञ्चारिण इत्यर्थः । अवशम्=इन्द्रियाऽधीनम्, मायापरवशमित्यर्थः । अपर=हरव्यतिरिक्तं, कं=पुरुषं, न विप्रकुर्युः=न विकारं नयेयुः, यत्=यतः, विभुं= समर्थं, तम् अपि=स्मरहरम् अपि, स्पृशन्ति=बाधन्ते, विकुर्वन्तीत्यर्थः ।

**व्युत्पत्तिः**— अद्रिसुतासमागमोत्कः=अद्रेः सुता अद्रिसुता, तया समागमः अद्रिसुतासमागमः । उत्कण्ठितं मनो यस्य स उत्कः, "उत्क उन्मनाः" इति निपातः । अद्रिसुतासमागमे उत्कः अद्रिसुतासमागमोत्कः । पशुपतिः=पशूना= ब्रह्मादिस्तम्बपर्यन्ताना जीवाना, पतिः=प्रवृत्तिनिवृत्तिनियमकारी, पशुपतिः, तथा चोक्तं शैवागमे—

'ब्रह्मादयो जगति जीवगणास्तृणान्ताः सर्वे विमोहितधियः पशवः प्रदिष्टाः ।
तेषामभूदधिपतिः शिव एक एव तस्माद्विदुः पशुपति परमेश्वर तम् ॥"इति ।

"शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्यमरः । अहानि=घस्रो दिनाऽहनी वा तु क्लीबे दिवसवासरौ" इत्यमरः । "अत्र विभुविकारसमर्थनादर्थादितरजनविकारः कैमुतिकन्यायात् आपततीत्यर्थापत्तिरलङ्कारः । यथोक्त साहित्यदर्पणे-

"दण्डाऽपूपिकयाऽन्याऽर्थागमोऽर्थाऽऽपत्तिरिष्यते ।" इति ।

इदं पुष्पिताग्रावृत्त, वृत्तरत्नाकरे तल्लक्षणं यथा—

"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।" इति ।

**भावार्थः**—पार्वतीसमागमोत्सुको महेश्वरोऽपि विवाहोचितचतुर्थदिवसप्राप्तिपरिपन्थिभूतानि तानि त्रीणि दिनानि यथाकथञ्चित् अयापयत् । अमी औत्सुक्यादयः सञ्चारिणो भावाः इन्द्रियपरतन्त्रमन्यं साधारणजन कं न विकारं नयेयुः, ये तादृशं जितेन्द्रियं त महेश्वरमपि विकुर्वन्तीति भावः ।

**भाषा**—पार्वती से मिलने के लिये उत्सुक शङ्कर जी के वे तीन दिन बड़े

कष्ट से बीते । जब सासारिक भाव जितेन्द्रिय शम्भु को भी विकल करते हैं, तो दूसरों की क्या चर्चा की जावे ।

इति श्रीभारद्वाजगङ्गाधरशास्त्रिविरचितया पुसवनीसमाख्यया व्याख्यया समेतः
श्री कालिदासकृतौ कुमारसम्भवे महाकाव्ये पार्वतीप्रदानो नाम
षष्ठः सर्गः समाप्त. ।

## अथ सप्तमः सर्गः ।

अथ षष्ठसर्गोपक्षिप्तो गौरीविवाहोत्सव. सप्तमेनाऽनेन सर्गेण वर्ण्यते । तत्रादौ हिमालयस्य तद्विषया प्रवृत्तिमाह—

**अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।**
**समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥**

**विधु वृद्धि में जामित्र गुण से युक्त तिथि में मोद से ।**
**गिरि ने विवाह किया उमा का बन्धु सहित विनोद से ॥**

**अन्वयः**—अथ हिमवान् ओषधीनाम् अधिपस्य वृद्धौ तिथौ च जामित्रगुणाऽन्वितायां समेतबन्धुः सन् सुतायाः विवाहदीक्षाविधिम् अन्वतिष्ठत् ।

**व्याख्या**—अथ = अनन्तरं, त्र्यहानन्तरमित्यर्थः । हिमवान् = हिमालयः, ओषधीनामधिपस्य=औषधाना पत्युः, चन्द्रस्येत्यर्थः । वृद्धौ=वर्द्धनकाले । शुक्लपक्षे इत्यर्थः । तिथौ च=तिथ्या च, जामित्रगुणाऽन्वितायां=लग्नसप्तमस्थानशुद्धियुक्तायां, समेतबन्धुः=युक्तबन्धुः सन्, सुतायाः=पुत्र्याः, पार्वत्या इत्यर्थः । विवाहदीक्षाविधिम्=परिणयसंस्कारविधानम्, अन्वतिष्ठत्=अनुष्ठितवान्, कृतवानित्यर्थः ।

**व्युत्पत्तिः**—हिमवान् = हिमानि सन्ति यस्य स हिमवान्, मतुप्प्रत्ययः । अधिपस्य=अधि पातीति अधिपः, तस्य अधिपस्य । जामित्रगुणाऽन्वितायां=जामित्रं=लग्नात्सप्तमं स्थानम् । गुणः=शुद्धिः, सा च ग्रहराहित्यम् । जामित्रस्य गुणः जामित्रगुणः, तेन अन्विता जामित्रगुणाऽन्विता, तस्या जामित्रगुणान्वितायां, "यद्यपि जामित्रशुद्धिर्लग्नधर्मस्तथाऽपि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । समेतबन्धुः=समेताः बन्धवः यस्य स समेतबन्धुः । विवाहदीक्षाविधिं=विवाहस्य दीक्षा विवाहदीक्षा, सा एव विधिः विवाहदीक्षाविधिः, तं विवाहदीक्षाविधिम् । "विधिर्विधाने दैवे च" इत्यमरः ।

**भावार्थः**—अथ सप्तर्षिनिर्दिष्टदिवसत्रयात्ययानन्तरं हिमालयः शुक्लपक्षे-

लग्नात् सप्तमस्थानशुद्धायां तिथौ सकलबान्धवगणैः सम्भूय पार्वत्याः विवाहसंस्कारकर्म समकरोदिति भावः ।

भाषा—इसके बाद सप्तर्षियों के आज्ञानुसार शुक्ल पक्ष में लग्न से सप्तम स्थान-शुद्ध तिथि को हिमालय ने अपने बन्धु-बान्धवों को बुलाकर भगवान् शङ्कर के साथ पार्वती का विवाह संस्कार कर दिया ।

अथ विवाहदीक्षामेवानुक्रमेण वर्णयितुमुपक्रमते—

**वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।**
**आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥ २ ॥**

**गृहगृह पुरन्ध्रि-समूह मंगल अमित कार्यों में लसे ।**
**हिम नगर अन्तःपुर बना उपमेय यक गृह गोत्र से ॥**

**अन्वयः**—अनुरागात् गृहे गृहे वैवाहिकैः कौतुकसंविधानैः व्यग्रपुरन्ध्रिवर्गं सानुमतः पुरम् अन्तःपुरं च एककुलोपमेयम् आसीत् ।

**व्याख्या**—अनुरागात्=प्रीतेः, गृहे गृहे=प्रतिगृहं, वीप्सायां द्विर्भावः। वैवाहिकैः=विवाहप्रयोजनैः, कौतुकसंविधानैः=मङ्गलाऽर्थसम्पादनैः, व्यग्रपुरन्ध्रिवर्गं=व्याकुलकुटुम्बिनीसङ्घ, सानुमतः=हिमालयस्य, पुरं=नगरम्, ओषधिप्रस्थमित्यर्थः । अन्तःपुरं च=शुद्धाऽन्तश्च, एककुलोपमेयम्=एकगृहतुल्यम् असीत्=अभूत् ।

**व्युत्पत्तिः**—वैवाहिकैः=विवाहः प्रयोजनं येषां तानि वैवाहिकानि, तैः वैवाहिकैः, "प्रयोजनम्" इति ठक्प्रत्ययः । "किति च" इत्यादिवृद्धिः । कौतुकसंविधानैः=कौतुकानां संविधानानि कौतुकसंविधानानि, तैः कौतुकसंविधानैः। व्यग्रपुरन्ध्रिवर्गं=पुरन्ध्रीणां वर्गः पुरन्ध्रिवर्गः, व्यग्रः पुरन्ध्रिवर्गः यस्मिन् तत् व्यग्रपुरन्ध्रिवर्गम् । सानुमतः=सानवः सन्ति यस्य सः सानुमान्, तस्य सानुमतः। एककुलोपमेयम्=एकं च तत् कुलम् एककुलम्, "सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्" इति विश्वः । उपमातुं योग्यम् उपमेयम् । एककुलेन उपमेयम् एककुलोपमेयम् ।

**भावार्थः**—प्रीतिवशात् प्रतिगृहं मङ्गलसम्पादनेषु व्यापृतकुटुम्बिनीजनानां हिमालयस्य पौराणामन्तः पुरवासिनां च तदानीमेकवंशोद्भूतत्वप्रतीतिर्बभूवेति भावः।

**भाषा**—प्रेम-वश हरेक घरों में मंगल के तोरण-पताका आदि बँध गये, उत्सव में व्यस्त नागरिक जन और अन्तःपुरवासी जनों में कोई अन्तर नहीं

मालूम होता था, नगर के सब लोग इस तरह प्रसन्न थे, मानों एक ही घर के सब पैदा हुए हों।

मङ्गलोपकरणसम्पादनस्य फलमाह—

**सन्तानकाकीर्णमहापथं तच्चीनांऽशुकैः कल्पितकेतुमालम्।**
**भासोज्ज्वलत्काञ्चनतोरणानां स्थानान्तरं स्वर्ग इवाऽऽबभासे॥ ३॥**

**सड़कें हुईं मन्दारमय विरचित ध्वजाओं से सुघर।**
**शुचि स्वर्ण तोरण से नगर अमरावती के सम प्रवर॥**

**अन्वयः**—सन्तानकाऽऽकीर्णमहापथं चीनाऽशुकैः कल्पितकेतुमाल काञ्चनतोरणाना भासा उज्ज्वलत् तत् स्थानाऽन्तर गतः स्वर्ग इव आबभासे।

**व्याख्या**—सन्तानकाऽऽकीर्णमहापथं = सन्तानपुष्पाऽऽस्तृतराजमार्गं, चीनाऽशुकैः=पट्टवस्त्रैः, कल्पितकेतुमाल=विरचितध्वजपङ्क्ति, काञ्चनतोरणाना = सुवर्णबहिर्द्वाराणा, भासा = प्रभया, उज्ज्वलत् = दीप्यमान, तत् = पुरम्, ओषधिप्रस्थमित्यर्थः। स्थानाऽन्तरम् = अन्यत् स्थान, गतः=प्राप्तः, स्वर्गः इव = सुरलोक इव, आबभासे = रेजे।

**व्युत्पत्तिः**—सन्तानकाऽऽकीर्णमहापथ = सन्तान एव सन्तानकः, "पञ्चैते देवतरवो मन्दार. पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥" इत्यमरः। सन्तानकस्य पुष्पाणि सन्तानकानि, "तस्य विकार" इत्यण्, तस्य "पुष्पमूलेषु बहुलम्" इति लुक्। सन्तानकैः आकीर्णाः सन्तानकाऽऽकीर्णाः। महान्तश्च ते पन्थानः महापथाः, "ऋक्पूरब्धूः पथामानक्षे" इति समाऽसान्तः अप्रत्यय। "अयनं वर्त्ममार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः। सन्तानकाऽऽकीर्णा. महापथाः यस्मिन् तत् सन्तानकाकीर्णमहापथं, चीनाऽशुकैः=चीनस्य अंशुकानि चीनाऽशुकानि, तैः चीनांशुकैः, कल्पितकेतुमालं=केतूना मालाः केतुमालाः, "ग्रहभेदे ध्वजे केतुः" इत्यमरः। कल्पिताः केतुमालाः यस्य तत् कल्पितकेतुमालं, काञ्चनतोरणानां = काञ्चनस्य विकाराः काञ्चनानि, तानि च तोरणानि काञ्चनतोरणानि, तेषा काञ्चनतोरणाना, "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः। उज्ज्वलत् = उज्ज्वलतीति उज्ज्वलत्, शतृप्रत्ययः। आबभासे="भासृ दीप्तौ" इति धातोर्लिट्। अत्रोत्प्रेक्षालङ्कारः।

**भावार्थः**—देवतरुकुसुमविकीर्णराजमार्गं पट्टवस्त्रनिर्मितध्वजपङ्क्ति कनकनिर्मिततोरणशोभया देदीप्यमानं हिमालयस्य तत् ओषधिप्रस्थं नगरं मेरुशिखर-

व्यतिरिक्तस्थानं प्राप्तः स्वर्ग इव शुशुभे इति भावः।

भाषा—राजमार्ग पर कल्प वृक्ष के कुसुम बिछे हुए थे, पट्टवस्त्रों से ध्वजाए बनाई गई थी, और सोने के बने हुए तोरण देदीप्यमान थे, वह ओषधिप्रस्थ नगर उस समय मेरु-शिखर से अलग स्वर्ग की तरह शोभित हो रहा था।

इत्थमासन्नविवाहाया पार्वत्या पित्रोः प्रीतिविशेषमाह—

**एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य दृष्टेव मृतोत्थितेव।**
**आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव॥ ४॥**

**खोई हुई थी मिल गई यक दम मरी थी जी गई।**
**आसन्न पाणि ग्रहण उमा गिरि के लिये ऐसी भई॥**

**अन्वयः**—पुत्रपङ्क्तौ सत्याम् अपि उमा एका एव चिरस्य दृष्टा इव, मृतोत्थिता इव, आसन्नपाणिग्रहणा इति पित्रोः विशेषोच्छ्वसितं बभूव।

**व्याख्या**—पुत्रपङ्क्तौ = पुत्रदुहितृपङ्क्तौ, सत्याम् अपि = विद्यमानायाम् अपि, उमा = पार्वती, एका एव=एकका एव, चिरस्य दृष्टा इव=चिरात् लब्धा इव, पूर्वमतिचिरकालमदृष्टा सती पुनः सहसा दृष्टेवेत्यर्थः। मृतोत्थिता इव = मृत्वा पुनरुत्पन्ना इव, पूर्वं गतजीविता पुनर्दैववशात् सञ्जातजीवितेवेत्यर्थः। आसन्नपाणिग्रहणा = आसन्नविवाहा, इति=हेतोः, भर्तृगृह गमिष्यतीति हेतोरित्यर्थः। पित्रोः = मातापित्रोः, मेनाहिमालययोरित्यर्थः। विशेषोच्छ्वसित= प्राणभूता, बभूव=अभवत्। पुमपत्यादपि अधिकस्नेहाऽऽस्पदमभूदित्यर्थः।

**व्युत्पत्तिः**—पुत्रपङ्क्तौ=पुत्राश्च दुहितरश्च पुत्रा', "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" इत्येकशेषः। "पुत्रौ पुत्रश्च दुहिता च" इत्यमरः। तेषा पङ्क्तिः पुत्रपङ्क्तिः, तस्या पुत्रपङ्क्तौ। सत्याम्=अस्तीति सती, तस्या सत्या। चिरस्य= "चिरायचिररात्रायचिरस्याद्याश्चिराऽर्थकाः" इत्यमरः। मृतोत्थिता = मृता चाऽसौ उत्थिता मृतोत्थिता। आसन्नपाणिग्रहणा = पाणेः ग्रहण पाणिग्रहणम्, आसन्न पाणिग्रहणं यस्याः सा आसन्नपाणिग्रहणा। पित्रोः = माता च पिता च पितरौ, तयोः पित्रोः, "पिता मात्रा" इत्येकशेषः। "मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ" इत्यमरः। विशेषोच्छ्वसित=विशेषेण उच्छ्वसितं विशेषोच्छ्वसितं, "सुप्सुपा" इति समासः।

**भावार्थः**—अपत्यवर्गे विद्यमानेऽपि केवलमेका पार्वती एव प्रत्यासन्नविवाहत्वात् स्वल्पेनैव कालेनेयं स्वभर्तृगृह गमिष्यतीति हेतोः पूर्वमतिकालमदृष्टा

सती पुनः सहसा दृष्टेव, पूर्वं गतजीविता पुनर्दैववशात् सञ्जातजीवितेव, मातापित्रोर्मेनाहिमालययोः अत्यधिकप्रेमास्पद बभूवेति भावः ।

**भाषा**—अनेक सन्तानों के रहने पर भी शीघ्र विवाह होने के कारण तथा निकट भविष्य में पति के गृह जाने के लिये उद्यत पार्वती को ही माता पिता ने बड़े ध्यान से देखा, तथा उसे चिरदृष्ट एव पुनर्जीवित की तरह विशेष स्नेह से अवलोकन किया ।

अन्येषामपि बन्धुजनाना प्रतिपत्तिविशेषमाह—

**अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।**
**सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम् ॥५॥**

**भूषण इतर भूषण उमा इस अङ्क से उस अङ्क में ।**
**सम्बन्धि-भिन्न तथापि गिरि-कुल-स्नेह गिरिजा में थमें ॥**

**अन्वयः**—सा उदीरिताऽऽशीः सती अङ्कात् अङ्क ययौ । मण्डनात् मण्डनम् अन्वभुङ्क्त । सम्बन्धिभिन्नः अपि गिरेः कुलस्य स्नेहः तदेकाऽऽयतनं जगाम ।

**व्याख्या**—सा = पार्वती, उदीरिताऽऽशी.=प्रयुक्ताऽऽशीर्वादा सती, अङ्कात्=उत्सङ्गात् , अङ्कम्=उत्सङ्ग, ययौ=जगाम् , ता सर्वेऽप्यङ्कमारोप्याशीर्वादानुदीरयामासुरित्यर्थः । मण्डनात्=भूषणात् , मण्डनम्=भूषणान्तरम् , अन्यत् भूषणमित्यर्थः । अन्वभुङ्क्त=अनुबभूव । मण्डनमत्र बन्धुजनप्रीतिदायानामाभरणानामर्पणम् । सम्बन्धिभिन्नः अपि=स्वपुत्राऽऽदिविभक्तोऽपि, गिरेः=हिमालयस्य, कुलस्य = वशस्य, स्नेहः = प्रेम, तदेकायतन=तदेकस्थान, जगाम = अगच्छत् ।

**व्युत्पत्तिः**—उदीरिताशीः = उदीरिताः आशिषः यस्यै सा उदीरिताशीः । सम्बन्धिभिन्न' = सम्बन्धः अस्ति येषा ते सम्बन्धिनः = स्वपुत्रादयः, तैः भिन्नः सम्बन्धिभिन्न । स्नेहः="प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः । तदेकायतनम्=एक च तत् आयतनम् एकायतन, सा च तत् एकायतनं तदेकायतनम् । हिमवत्कुलजाताना स्नेहः पुत्रादिविभक्तोऽप्येकाकारेण तामेव प्राविशदिवेत्युत्प्रेक्षागर्भेयमुक्तिः ।

**भावार्थः**—सा पार्वती एकैकयोत्सङ्गमारोप्य प्रदत्तमाशीर्वचनमनुभूयान्याभिरुत्सङ्गमारोप्य प्रदत्तमाशीर्वचनमनुबभूव । तथैवैकैकेन बन्धुजनेनार्पित प्रीतिदायमाभरणमनुभूयान्यैरर्पित प्रीतिदायमाभरणमनुबभूव । हिमवत्कुलजाताना स्नेहः पुत्रादिविभक्तोपि तदानीमेकाकारेण तामेव पार्वतीं प्राविशदिति भावः ।

**भाषा**—सब कुटुम्बियों ने पार्वती को अपने अपने अङ्क में बिठाया, आशीर्वाद दिया, तथा उसको विविध अलङ्कारों से अलङ्कृत किया, मानों हिमालय के वंश भर का स्नेह उस समय पार्वती में ही एकत्र हो गया था।

अथ शुभे मुहूर्ते सौभाग्यवतीक्रियमाणं पार्वत्याः शरीरप्रसाधनं वर्णयितुमारभते—

**मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु।**
**तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः॥ ६॥**

**शुभ फल्गुनी नक्षत्र मैत्रमुहूर्त्त में पतिसुतवती।**
**भूषण पिन्हाने लग गईं बन ठन गईं शुचि पार्वती॥**

**अन्वयः**—अथ मैत्रे मुहूर्त्ते उत्तरफल्गुनीषु शशलाञ्छनेन योग गतासु तस्याः शरीरे याः पतिपुत्रवत्यः, ताः बन्धुस्त्रियः पतिकर्म चक्रुः।

**व्याख्या**—अथ = अनन्तरम्, मैत्रे = मित्रदैवत्ये, मुहूर्ते = क्षणे, उदयमुहूर्तात्तृतीयमुहूर्त्त इत्यर्थः। "आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च" इति बृहस्पतिस्मरणात्। उत्तरफल्गुनीषु=उत्तराफल्गुनीनक्षत्रे, शशलाञ्छनेन=चन्द्रेण, योगं=सम्बन्धं, गतासु=प्राप्तासु, तस्याः = पार्वत्याः, शरीरे = देहे, याः, पतिपुत्रवत्यः=भर्तृसुतयुक्ताः, ताः, बन्धुस्त्रियः=बान्धवयोषितः, प्रतिकर्म = प्रसाधन चक्रुः = अकुर्वन्।

**व्युत्पत्तिः**—मैत्रे=मित्रः देवता अस्य मैत्रः, तस्मिन् मैत्रे, "साऽस्य देवता" इत्यण्। "द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विभावसुः" इत्यमरः। उत्तरफल्गुनीषु= उत्तराश्च ताः फल्गुन्यः उत्तरफल्गुन्यः, तासु उत्तरफल्गुनीषु, "फल्गुनीप्रोष्ठपदाना च नक्षत्रे" इति एकस्मिन्नपि बहुवचनम्। शशलाञ्छनेन=शशः लाञ्छनं यस्य स शशलाञ्छनः, तेन शशलाञ्छनेन। पतिपुत्रवत्य'=पतिश्च पुत्राश्च पतिपुत्राः, ते सन्ति यासा ताः पतिपुत्रवत्यः, बन्धुस्त्रियः = बन्धूना स्त्रियः बन्धुस्त्रियः। प्रतिकर्म = "प्रतिकर्म प्रसाधनम्" इत्यमरः।

**भावार्थः**—अथ सूर्योदयात् तृतीये मैत्रमुहूर्ते चन्द्रोत्तराफल्गुन्योर्योगे जीवद्भर्तृका जीवदपत्याश्च बान्धवस्त्रियः पार्वत्याः शरीरे प्रसाधनमकुर्वन्निति भावः।

**भाषा**—इस के अनन्तर सूर्योदय के बाद तीसरे मुहूर्त्त मे तथा उत्तरा फल्गुनी नक्षत्र में कुल की सुहागिनी स्त्रियों ने पार्वती के शरीर का शृङ्गार किया।

अथ वैवाहिकमङ्गलस्नानार्थं पार्वत्या अभ्यञ्जनवेश वर्णयति—

**सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नशोभम्।**

निर्नाभिकौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥

शुचि श्वेत सरसो से तथा मृदु दूब अङ्कुर से सुघर ।
निर्नाभि पट शर को किया भूषित सुछवि देकर प्रवर ॥

**अन्वयः**—सा गौरसिद्धाऽर्थनिवेशवद्भिः दूर्वाप्रवालैः प्रतिभिन्नशोभं निर्नाभिकौशेयम् उपात्तबाणम् अभ्यङ्गनेपथ्यम् अलञ्चकार ।

**व्याख्या**—सा पार्वती, गौरसिद्धार्थनिवेशवद्भिः=श्वेतसर्षपप्रक्षेपवद्भिः, दूर्वाप्रवालैः=दूर्वाऽङ्कुरैः, प्रतिभिन्नशोभं=विशेषितशोभं, निर्नाभिकौशेयम्=अतिक्रान्तनाभिदुकूलम्, उपात्तबाणं=गृहीतशरम्, अभ्यङ्गनेपथ्यम्=अभ्यञ्जनवेशम्, अलञ्चकार=अलङ्कृतवती ।

**व्युत्पत्तिः**—गौरसिद्धाऽर्थनिवेशवद्भिः = गौराश्च ते सिद्धार्थाः गौरसिद्धार्थाः, "अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः" इत्यमरः । सिद्धः अर्थः यस्मात् स सिद्धाऽर्थः, "सिद्धाऽर्थस्त्वेव धवलः" इत्यमरः । सिद्धाऽर्थपदेनैव सर्षपस्य गौरत्वविशेषणलाभेऽपि पुनर्गौरपदोपादानं मङ्गलार्थम् । गौरसिद्धाऽर्थानां निवेशः गौरसिद्धाऽर्थनिवेशः, सः अस्ति येषां तानि गौरसिद्धाऽर्थनिवेशवन्ति, तैः गौरसिद्धार्थनिवेशवद्भिः । मतुप्प्रत्ययः । दूर्वाप्रवालैः=दूर्वायाः प्रवालानि दूर्वाप्रवालानि, तैः दूर्वाप्रवालैः, "प्रवालमङ्कुरेऽप्यस्त्री" इत्यमरः । प्रतिभिन्नशोभं = प्रतिभिन्ना शोभा यस्य तत् प्रतिभिन्नशोभं, तत् । निर्नाभिकौशेयं=नाभेः निष्क्रान्तं निर्नाभि, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः । उद्गतनीविबन्धमिति यावत् । कोशे सम्भूतं कौशेयं, "कोशाड्ढञ्" इति ढञ् । "कौशेयं कृमिकोशोत्थम्" इत्यमरः । निर्नाभि कौशेयं यस्मिन् तत् निर्नाभिकौशेयं, तत् । उपात्तबाणम्=उपात्तः बाणः यस्मिन् तत् उपात्तबाणं, तत् । क्षत्रियकन्यया शरो ग्राह्य इत्युक्तं मनुना ।

तथाहि—"शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने ॥" इति । ३-४४

देवेषु महेश्वर एक एव ब्राह्मण इति श्रुतिप्रसिद्धिरिति हिमालयस्य क्षत्रियत्वमनेन प्रतिपादितम् । अभ्यङ्गनेपथ्यम्=अभ्यङ्गस्य=अभ्यञ्जनस्य, नेपथ्यं=वेशः, अभ्यङ्गनेपथ्यं, तत् । "आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः । स्नानस्य वक्ष्यमाणत्वात् ।

**भावार्थः**—सा पार्वती धवलसर्षपयुक्तैर्दूर्वाप्रवालैः सञ्जातशोभमतिक्रान्त-

नाभिप्रदेशं कृमिकोशोद्भवं दुकूलं गृहीतशरमभ्यङ्गवेशमलमकरोदिति भावः ।

**भाषा**—पार्वती ने बाण के साथ सफेद सरसों से युक्त दूबों से शोभित स्नानीय कौशेय वस्त्र को धारण किया ।

बाणग्रहणमेव विशेषतो वर्णयति—

**बभौ च सम्पर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।**
**करेण भानोर्बहुलाऽवसाने सन्धुक्ष्यमाणेव शशाऽङ्करेखा ॥ ८ ॥**

नव बाण के सम्पर्क से शोभित हुई बाला तथा ।
बहुलान्त में रवि किरण से बढ़ती शशी-रेखा यथा ॥

**अन्वयः**—बाला नवेन दीक्षाविधिसायकेन सम्पर्कम् उपेत्य बहुलाऽवसाने भानोः करेण सन्धुक्ष्यमाणा शशाऽङ्करेखा इव बभौ ।

**व्याख्या**—बाला=पार्वती, नवेन=नवीनेन, दीक्षाविधिसायकेन=विवाहार्थशरेण, सम्पर्कम्=सम्बन्धम्, उपेत्य=आसाद्य, बहुलाऽवसाने=कृष्णपक्षाऽत्यये, शुक्लपक्षादावित्यर्थः । भानोः=सूर्यस्य, करेण=किरणेन, सन्धुक्ष्यमाणा=उपचीयमाना, शशाङ्कऽरेखा इव=चन्द्रकला इव, बभौ=शुशुभे ।

**व्युत्पत्तिः**—नवेन="प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । दीक्षाविधिसायकेन=दीक्षाया विधिः दीक्षाविधि, तस्मिन् सायकः दीक्षाविधिसायकः, तेन दीक्षाविधिसायकेन । "शरे खड्गे च सायकः" इत्यमरः । अत्र "विवाहदीक्षाविधिसायकेन" इति साम्प्रदायिकः पाठः । बहुलाऽवसाने=बहुलस्य अवसानं बहुलाऽवसानं, तस्मिन् बहुलावसाने । सन्धुक्ष्यमाणा=सन्धुक्ष्यते इति सन्धुक्ष्यमाणा, समुपसर्गपूर्वकात् "धुक्ष सन्दीपनक्लेशनयोः" इति धातोः कर्मणि यक्, तदन्तात् शानच् । शशाङ्करेखा=शशः अङ्कः यस्य स शशाऽङ्कः, तस्य रेखा शशाऽङ्करेखा, रविकरैरेव शशिकलावर्धनमुक्तम् । तथाहि—

"सलिलमये शशिनि रवेर्दिधितयो मूर्च्छितास्तमो नैशम् ।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥" इति ।

**भावार्थः**—बाला सा पार्वती नूतनेन विवाहसंस्कारार्थशरेण सम्बन्ध प्राप्य शुक्लपक्षप्रतिपदि सूर्यकिरणेन संवर्ध्यमाना चन्द्रकलेवाधिकं शुशुभे इति भावः ।

**भाषा**—वह पार्वती नवीन विवाह संस्कार के बाण से सम्बन्ध प्राप्त कर के शुक्ल पक्ष की प्रतिपदा में सूर्य किरण से बढ़ने वाली चन्द्रकला की तरह

अथ माङ्गलिकस्नानस्योपक्रममाह—

**तां लोध्रकल्केन हृताऽङ्गतैलामाश्यानकालेयकृताऽङ्गरागाम् ।**
**वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काऽभिमुखं व्यनैषुः ॥ ९ ॥**

मृदु लोध से उबटी हुई कालेय से सुरभित अमल ।
स्नानार्थ स्त्री-जन-सङ्ग आई मज्जनालय में विमल ॥

**अन्वयः**—लोध्रकल्केन हृताऽङ्गतैलाम् आश्यानकालेयकृताङ्गरागाम् अभिषेकयोग्यं वासः वसाना ता नार्यः चतुष्काऽभिमुख व्यनैषुः ।

**व्याख्या**—लोध्रकल्केन = लोध्रचूर्णेन, हृताऽङ्गतैलाम्=अपास्तदेहस्नेहाम्, कृतोद्वर्तनामित्यर्थः । आश्यानकालेयकृताऽङ्गरागाम्=ईषदार्द्रगन्धद्रव्यविहितशरीररागाम्, अभिषेकयोग्य = स्नानयोग्य, वासः=वस्त्र, शाटीमित्यर्थः । वसानाम्= आच्छादयन्तीं, कौशेयादिवाससामभिषेकयोग्यत्वाभावात् कृतकार्पासवसनपरिधानामित्यर्थः । ता = पार्वतीं, नार्यः = स्नानाधिकृताः सीमन्तिन्यः, चतुष्काऽभिमुख = चतुःस्तम्भगृहसम्मुख, व्यनैषुः = अनयन् । स्नानगृह निन्युरित्यर्थः ।

**व्युत्पत्तिः**—लोध्रकल्केन=लोध्रस्य कल्क लोध्रकल्कं, तेन लोध्रकल्केन । हृताऽङ्गतैलाम् = अङ्गस्य तैलम् अङ्गतैलम्, हृतम् अङ्गतैलं यस्याः सा हृताऽङ्गतैला, तां हृताङ्गतैलाम् । आश्यानकालेयकृताऽङ्गरागाम्=कालेय गन्धद्रव्यम् । "अथ जायकम्, कालेयकं च कालाऽनुसार्यम्", इत्यमरः । अङ्गस्य रागः अङ्गरागः । आश्यानं च तत् कालेयम् आश्यानकालेयम्, आश्यानकालेयेन कृतः अङ्ग रागः यस्याः सा आश्यानकालेयकृताऽङ्गरागा, ताम् आश्यानकालेयकृताङ्गरागाम् । अभिषेकयोग्यम्=योक्तुम् अर्हं योग्यम्, अभिषेकस्य योग्यम् अभिषेकयोग्यं, तत् । चतुष्काऽभिमुख=चतुष्कस्य अभिमुख चतुष्काऽभिमुख, तत् यथा तथा ।

**भावार्थः**—स्नानाधिकृता नार्यः लोध्रचूर्णेन कृतोद्वर्तनामीषदार्द्रजावकगन्धद्रव्येण कृतस्नैग्ध्या कृतस्नानवस्त्रपरिधाना ता पार्वतीं चतुस्तम्भस्नानमण्डप आपयामासुरिति भावः ।

**भाषा**—सुहागिनी स्त्रियों ने उबटन लगाया, सुगन्धित द्रव्यों से स्निग्ध किया, तथा नहाने योग्य वस्त्र पहना कर पार्वती को स्नान-गृह में ले गईं ।

सतुर्यस्नानमेवाह—

**विन्यस्तवैदूर्यशिलातलेऽस्मिन्नाबद्धमुक्ताफलभक्तिचित्रे ।**
**आवर्जिताऽष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥**

मरकत जटित आबद्ध मुक्ता रचित चित्र शिला तले ।
कञ्चन कलश जल से स्त्रियों ने स्नान करवाया भले ॥

**अन्वयः**—विन्यस्तवैदूर्यशिलातले आबद्धमुक्ताफलभक्तिचित्रे अस्मिन् एनाम् आवर्जिताऽष्टापदकुम्भतोयैः सतूर्यं स्नपयाबभूवुः ।

**व्याख्या**—विन्यस्तवैदूर्यशिलातले,=स्थापितमरकतशिलातले, आबद्धमुक्ताफलभक्तिचित्रे = सूत्रप्रोतमौक्तिकफलरचनाविचित्रे, अस्मिन् = चतुःस्तम्भे मण्डपे, एना = पार्वतीम् , आवर्जिताऽष्टापदकुम्भतोयैः = आस्रावितसुवर्णकलशजलैः, सतूर्यं = मङ्गलवाद्ययुक्तं यथा तथा क्रि० वि०, स्नपयाम्बभूवुः = स्नपयामासुः ।

**व्युत्पत्तिः**—विन्यस्तवैदूर्यशिलातले = वैदूर्याणा शिलाः वैदूर्यशिलाः, तासा तलं वैदूर्यशिलातलं, विन्यस्तं वैदूर्यशिलातल यस्मिन् , तस्मिन् विन्यस्तवैदूर्यशिलातले, आबद्धमुक्ताफलभक्तिचित्रे=मुक्ता एव फलानि मुक्ताफलानि । आ समन्तात् बद्धानि आबद्धानि, "सुप्सुपा" इति समासः । आबद्धानि च तानि मुक्ताफलानि आबद्धमुक्ताफलानि, तेषा भक्तयः आबद्धमुक्ताफलभक्तयः । ताभिः चित्रम् , तस्मिन् आबद्धमुक्ताफलभक्तिचित्रे, आवर्जिताऽष्टापदकुम्भतोयैः = अष्टसु=धातुषु, पदं=प्रतिष्ठा, यस्य तत् अष्टापदम् , "अष्टनः संज्ञायाम्" इति दीर्घः । "अष्टापदं स्यात्कनकम्" इति विश्वः । अष्टापदस्य विकाराः अष्टापदाः, ते च ते कुम्भाः अष्टापदकुम्भाः, आवर्जिताश्च ते अष्टापदकुम्भाः आवर्जिताऽष्टापदकुम्भाः, तेषा तोयानि आवर्जिताऽष्टापदकुम्भतोयानि, तैः आवर्जिताष्टापदकुम्भतोयैः । सतूर्यं= तूर्यैः सहितं सतूर्यं, तद्यथा तथा, सवाद्यघोषमित्यर्थः । स्नपयाम्बभूवुः = णिजन्तात् "ष्णाशौचे" इति धातोर्लिट्, मित्त्वाद्ध्रस्वः ।

**भावार्थः**—ताः स्त्रियो मौक्तिकतोरणचित्रिते चतुस्तम्भमण्डपे मरकतशिलाधिष्ठिता ता पार्वतीं काञ्चनकलशजलैः सवाद्यघोषं स्नपयामासुरिति भावः ।

**भाषा**—उन स्त्रियों ने मोती के तोरणों से चित्रित चतुस्तम्भ मण्डप में मरकत मणि की शिला पर बिठा कर सोने के घड़ों के जल से बजते हुए मङ्गल बाजों के बीच पार्वती को स्नान करवाया ।

अथ कृतमङ्गलस्नानायाः पार्वत्याः शोभा वर्णयति—

**सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।**
**निर्वृत्तपर्जन्यजलाऽभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥**

कर स्नान वर का धौत पट ले बन गई वह इस तरह ।
अभिषिक्त जल से फुल्ल काश मयी मही हो जिस तरह ॥

**अन्वयः**—मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा सा, निर्वृत्तपर्जन्यजलाऽभिषेका प्रफुल्लकाशा वसुधा इव, रेजे।

**व्याख्या**—मङ्गलस्नानविशुद्धगात्री = विवाहस्नाननिर्मलाङ्गी, गृहीतपत्युद्गमनीयवस्त्रा = स्वीकृतवरधौतवस्त्रा, धौतवस्त्रमाच्छादितवतीत्यर्थः। सा = पार्वती, निर्वृत्तपर्जन्यजलाऽभिषेका = निष्पन्नमेघतोयाभिषेका, प्रफुल्लकाशा = विकसितकाशपुष्पा, वसुधा इव=पृथ्वी इव, रेजे=शुशुभे।

**व्युत्पत्तिः**—मङ्गलस्नानविशुद्धगात्री = विशेषेण शुद्ध विशुद्ध, तत् गात्रं यस्याः विशुद्धगात्री, "स्वाऽङ्गाच्चोपसर्जनादसयोगोपधात्" इत्यधिकारे "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति वा ङीष्। मङ्गलार्थं स्नानं मङ्गलस्नानं, तेन विशुद्धगात्री, मङ्गलस्नानविशुद्धगात्री। गृहीतपत्युद्गमनीयवस्त्रा=उद्गमनीयं च तद्वस्त्रम् उद्गमनीयवस्त्रम्, "धौतमुद्गमनीय स्यात्" इति हलायुधः। "तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्" इत्यमरः। युगग्रहणं तु प्रायिकाऽभिप्रायम्। अत एवाऽत्र क्षीरस्वामी-"युग प्रायशो यल्लक्ष्यं तदेव" इति व्याख्याय "गृहीतपत्युद्गमनीयवस्त्रा" इत्येतदेवोदाहृतवान् इति मल्लिनाथः। पत्युः उद्गमनीयवस्त्र पत्युद्गमनीयवस्त्र, गृहीत पत्युद्गमनीयवस्त्र यया सा गृहीतपत्युद्गमनीयवस्त्रा। निर्वृत्तपर्जन्यजलाऽभिषेका = पर्जन्यस्य जल पर्जन्यजल, तेन अभिषेकः पर्जन्यजलाऽभिषेकः। निर्वृत्तः पर्जन्यजलाऽभिषेकः यस्या. सा निर्वृत्तपर्जन्यजलाभिषेका। प्रफुल्लकाशा = प्रफुल्लतीति प्रफुल्ल, "फुल्ल विकसने" पचाद्यच्। काशस्य पुष्पं काशं, "तस्य विकार·" इति अण्, तस्य "पुष्पमूलेषु बहुलम्" इति लुक्। प्रफुल्ल काश यस्याः सा प्रफुल्लकाशा। वसुधा = "सर्वसहा वसुमती वसुधोर्वी वसुन्धरा" इत्यमरः। अत्रोपमालङ्कारः।

**भावार्थः**—मङ्गलस्नानेन संक्षालिताङ्गरागा वरोद्गमनीयधवलवसनपरिधाना पार्वती वर्षजलक्षालितपङ्का शरदागमे विकसितकाशपरिष्कृता भूमिरिव रराजेत्यर्थः।

**भाषा**—मगल-स्नान करने से निर्मल शरीर वाली तथा स्वच्छ वस्त्र को धारण करने वाली पार्वती मेघजल से अभिषिक्त होने के बाद शरद् ऋतुमें खिले हुए श्वेत काशकुसुम से युक्त पृथ्वी की तरह शोभित हुई।

अथ पार्वत्या मङ्गलालङ्कारभवनप्रवेशप्रकारमाह—

**तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन।**
**पतिव्रताभिः परिगृह्य निन्ये क्लृप्ताऽऽसनं कौतुकवेदिमध्यम्॥ १२॥**

मणि-चार स्तम्भ वितान मय सज्जित सुआसन से विमल ।
उद्वाह-वेदी-मध्य आई पतिव्रतालिङ्गित अमल ॥

**अन्वयः**—सा तस्मात् प्रदेशात् वितानवन्त मणिस्तम्भचतुष्टयेन युक्तं क्लृप्ताऽऽसनं कौतुकवेदिमध्य पतिव्रताभिः परिगृह्य निन्ये ।

**व्याख्या**—सा = पार्वती, तस्मात् = पूर्वोक्तात् , प्रदेशात्=स्नानमण्डपात् , वितानवन्तम्=उल्लोचयुक्त, मणिस्तम्भचतुष्टयेन = रत्नस्थूणाचतुष्केण, युक्तं= युतं, क्लृप्ताऽऽसनं=सज्जमानाऽऽसनं, कौतुकवेदिमध्यं=मङ्गलस्थलोत्सङ्गम्, अलङ्कारमण्डपमित्यर्थः । पतिव्रताभिः=साध्वीभिः, परिगृह्य = गृहीत्वा, दोर्भ्यामालिङ्ग्येत्यर्थः । निन्ये = नीता, अलङ्करणार्थमिति यावत् ।

**व्युत्पत्तिः**—वितानवन्तं=वितानमस्ति यस्य स वितानवान् , तं वितानवन्त, मतुप्प्रत्ययः । "अस्त्री वितानमुल्लोचः" इत्यमरः । मणिस्तम्भचतुष्टयेन= चत्वारः अवयवा यस्य तत् चतुष्टयं, "सख्यया अवयवे तयप्" इति तयप्प्रत्ययः। स्तम्भाना चतुष्टय स्तम्भचतुष्टय मणीना स्तम्भचतुष्टयं, मणिस्तम्भचतुष्टय, तेन मणिस्तम्भचतुष्टयेन, क्लृप्ताऽऽसन = क्लृप्तम् आसनं यस्मिन् स क्लृप्ताऽऽसनः, त क्लृप्तासनं । कौतुकवेदिमध्यं = कौतुकस्य वेदिः कौतुकवेदिः, "वेदिः परिष्कृता भूमिः" इत्यमरः । कौतुकवेदेर्मध्यः कौतुकवेदिमध्यः, तं कौतुकवेदिमध्यं । पतिव्रताभिः = पत्यौ व्रतं यासा ताः पतिव्रताः, ताभिः पतिव्रताभिः, "सुचरित्रा तु सती साध्वी पतिव्रता" इत्यमरः। निन्ये="णीञ् प्रापणे" इति धातोः कर्मणि लिट्।

**भावार्थः**—सा पार्वती पतिव्रताभिरन्तःपुरसुन्दरीभिः सस्नेहबहुमान निजकरैरवलम्ब्य स्नानान्तरमाबद्धवितानं मणिमयैश्चतुर्भिः स्तम्भैरुपेतं कल्पितासनमलङ्कारमण्डपं नीतेति भावः ।

**भाषा**—स्नान गृह से पतिव्रताएँ चार मणिस्तम्भों से युक्त, वितानमय अलकारगृह के मध्य सजे हुए आसन पर बड़े प्रेम से पार्वती को भूषण पहनाने के लिये ले आईं ।

पार्वत्याः स्वाभाविकशोभया प्रसाधिकाना व्यामोह वर्णयति—

**तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः ।**
**भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥ १३ ॥**

बिठला उमा को पूर्व मुख सतियां उसे लखने लगीं ।
क्षण भर प्रसाधन काल वे स्वाभाविनी छवि में पगीं ॥

**अन्वयः**—नार्यः तां तन्वीं तत्र प्राङ्मुखीं निवेश्य पुरो निषण्णाः प्रसाधने संनिहिते अपि भूताऽर्थशोभाह्रियमाणनेत्राः सत्यः क्षण व्यलम्बन्त ।

**व्याख्या**—नार्य.=अन्तःपुरस्त्रिय, प्रसङ्गात् प्रसाधिका इत्यर्थः । ता तान्वीं=ता कृशाङ्गीं, । पार्वतीमित्यर्थः । तत्र=वेदिमध्ये, प्राङ्मुखीं=पूर्वाऽभिमुखीं, निवेश्य=उपवेश्य, पुरः=अग्रे, निषण्णाः=स्थिताः, प्रसाधने=अलङ्करणवर्गे, सनिहिते अपि=समीपस्थिते अपि, भूताऽर्थशोभाह्रियमाणनेत्राः= स्वाभाविककान्त्याकृष्यमाणनयनाः सत्यः, क्षण=कञ्चित्कालं, व्यलम्बन्त=विलम्ब चक्रुः ।

**व्युत्पत्तिः**—प्राङ्मुखी=प्राचि मुखं यस्याः सा प्राङ्मुखीं, ता प्राङ्मुखीं प्रसाधने=प्रसाध्यते अनेन इति प्रसाधन, तस्मिन् प्रसाधने, करणे ल्युट् प्रत्यय । भूताऽर्थशोभाह्रियमाणनेत्राः=भूतः अर्थः यस्या सा भूतार्था=सत्यरूपा, स्वाभाविकीति यावत् । भूताऽर्था चाऽसौ शोभा भूताऽर्थशोभा, 'शोभा कान्तिर्द्युतिश्छविः'' इत्यमर' । ह्रियमाणानि नेत्राणि यासा ताः ह्रियमाणनेत्रा , भूताऽर्थशोभया ह्रियमाणनेत्रा , भूताऽर्थशोभाह्रियमाणनेत्राः, क्षण = "कालाऽऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । व्यलम्बन्त=व्युपसर्गपूर्वकात् "लबि अवस्रंसने" इति धातोर्लङ् ।

**भावार्थः**—तत्रालङ्कारमण्डपे पार्वतीं पूर्वभागमुखीभवस्थाप्याग्रे स्थिताः प्रसाधिका अन्त'पुरस्त्रिय अलङ्करणसाधनेषु सन्निहितेषु सत्स्वपि पार्वतीस्वाभाविकशोभाहृतनयनाः सत्य' प्रसाधन कर्तुं क्षणमात्र कालक्षेप चक्रुरिति भावः ।

**भाषा**—अलकार गृह मण्डप में पार्वती को पूर्वाभिमुख बिठाकर आगे अलंकार पहनाने के लिये बैठी हुई अन्त पुर की स्त्रिया अलंकार समीप होने पर भी पार्वती की स्वाभाविक-सुन्दरता क्षण पर एक टक देखती रह गई ।

अथ पार्वत्याः केशप्रसाधनमाह—

**धूपोष्मणा त्याजितमार्द्रभावं केशाऽन्तमन्तःकुसुमं तदीयम् ।**
**पर्याक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥**

धूपोष्म से कच को सुखा उसमें ससुरभि कुसुम सुघर ।
दूर्वा-ग्रथित मधु पाण्डुमाला पार्वती पहनो प्रवर ॥

**अन्वयः**—काचित् धूपोष्मणा आर्द्रभाव त्याजितम् अन्तःकुसुम तदीयं केशाऽन्त दूर्वावता पाण्डुमधूकदाम्ना उदारबन्धं पर्याक्षिपत् ।

**व्याख्या**— काचित् = प्रसाधिका, धूपोष्मणा = धूपोष्णेन, आर्द्रभावम् = आर्द्रत्व, त्याजितं=विसर्जितम्, अन्तःकुसुमम् = अन्तर्निक्षिप्तपुष्पं, तदीय = पार्वतीसम्बन्धिन, पार्वत्याः इत्यर्थः । केशाऽन्त=केशपाशं, दूर्वावता=दूर्वायुक्तेन, मध्ये मध्ये ग्रथितदूर्वेणेत्यर्थः । पाण्डुमधूकदाम्ना=हरितमधुद्रुमपुष्पमाल्येन, उदारबन्ध = श्रेष्ठरचनं यथा तथा, पर्याक्षिपत् = बबन्ध ।

**व्युत्पत्तिः**—धूपोष्मणा = धूपस्य ऊष्मा धूपोष्मा, तेन धूपोष्मणा, आर्द्रभावम्=आर्द्रस्य भावः आर्द्रभावः, तम् आर्द्रभावं, त्याजितं="त्यज वयोहानौ" इति धातोः णिजन्तात् अप्रधाने कर्मणि क्तप्रत्यय. । पचादिषु पाठाद् द्विकर्मकत्वम् । अन्तःकुसुमम् = अन्तर्निक्षिप्तानि कुसुमानि यस्मिन्सः अन्तःकुसुमः, तम् अन्तःकुसुमं, तदीयं = तस्या अयं तदीयः. तं तदीयं, केशान्तं=केशानामन्तः केशाऽन्तः, तं केशान्तं, दूर्वावता=दूर्वाः सन्ति यस्मिन् तत् दूर्वावत्, तेन दूर्वावता । पाण्डुमधूकदाम्ना=मधूकस्य पुष्पाणि मधूकानि, पाण्डूनि च तानि मधूकानि पाण्डुमधूकानि, "मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः । पाण्डुमधूकस्य दाम पाण्डुमधूकदाम, तेन पाण्डुमधूकदाम्ना । उदारबन्धम्=उदारःबन्धः यस्मिन् कर्मणि उदारबन्धं तत् यथा तथा, पर्याक्षिपत्=पर्योपसर्गपूर्वकात् "क्षिप प्रेरणे" इति धातोः लङ् ।

**भावार्थः**—काचन प्रसाधिका सौरभ्यातिशयार्थमगरुचन्दनादिसंस्कृतधूपोष्मेन विशोषित पुष्पगुम्फितं पार्वत्याः केशपाशं दूर्वाङ्कुरानुविद्धया हरितमधूककुसुममालया उत्कृष्टबन्धनप्रकारं यथा स्यात्तथा बन्धयामासेति भावः ।

**भाषा**—किसी ने अगरु-चन्दनादि के धूप से गीले बालों को सुखाकर उसमें फूल लगाये, तथा दूर्वों के अङ्कुरों से युक्त हरे महुए के फूलों की माला बाधी।

अङ्गरागार्पणप्रकारमाह—

**विन्यस्तशुक्लाऽगुरु चक्रुरङ्गं गोरोचनापत्रविभक्तमस्याः ।**
**सा चक्रवाकाऽङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥**

रचना किसी ने अगुरु से गोरोचना से की विमल ।
थी मात पीत रथाङ्ग अङ्कित जाह्नवी शोभा अमल ॥

**अन्वयः**—ताः अस्याः अङ्ग विन्यस्तशुक्लागुरु गोरोचनापत्रविभक्तं चक्रुः । सा चक्रवाकाऽङ्कितसैकतायाः त्रिस्रोतसः कान्तिम् अतीत्य तस्थौ ।

**व्याख्या**—ताः = प्रसाधिका., अस्याः=पार्वत्याः, अङ्ग=शरीर, विन्यस्तशुक्लाऽगुरु = विरचितशुभ्राऽगुरु, गोरोचनापत्रविभक्तं=गोरोचनापत्ररचनाविशे-

षित, चक्रुः=अकुर्वन्। सा=तथाभूता पार्वती, चक्रवाकाऽङ्कितसैकतायाः=कोकचिह्नितवीरायाः, त्रिस्रोतसः=गङ्गायाः, कान्तिं=शोभाम्, अतीत्य=अतिक्रम्य, तस्थौ=स्थितवती।

व्युत्पत्तिः—विन्यस्तशुक्लाऽगुरु=शुक्लं च तत् अगुरु शुक्लाऽगुरु, "शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः" इत्यमरः। विन्यस्तं शुक्लाऽगुरु यस्मिन् तत् विन्यस्तशुक्लाऽगुरु तत्, गोरोचनापत्रविभक्तं=गोरोचनायाः पत्राणि गोरोचनापत्राणि, तैः विभक्तं गोरोचनापत्रविभक्तं, तत्। चक्रवाकाऽङ्कितसैकतायाः=चक्रवाकैः अङ्कितं चक्रवाकाङ्कितं, "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इत्यमरः। चक्रवाकाऽङ्कितं सैकतं यस्याः सा चक्रवाकाङ्कितसैकता, तस्याः चक्रवाकाङ्कितसैकतायाः, त्रिस्रोतसः=त्रीणि स्रोतांसि यस्याः सा त्रिस्रोताः, तस्याः त्रिस्रोतसः, "भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि" इत्यमरः। अत्र गोरोचनाचक्रवाकयोः रक्तत्वेन साम्यं, त्रिस्रोतसो धावल्यं तु प्रसिद्धत्वात् न स्वपदेन उपात्तम्।

भावार्थः—ता नार्यः स्वच्छतरशुक्लागरुनिर्मिताङ्गरागं पार्वत्या अङ्गं रक्ततरगोरोचनापत्रविभक्तमकुर्वन्। रक्तगोरोचनाविभक्तशुक्लाङ्गरागा सा पार्वती रक्ततरचक्रवाकयुक्तपुलिनायाः स्वत एव शुक्लतराया गङ्गायाः शोभामधश्चकारेति भावः।

भाषा—स्त्रियों ने पार्वती के शरीर में शुक्लागुरु-निर्मित अङ्गराग लगाया, और रक्ततर गोरोचन से पत्र-रचना की, उस समय पार्वती ने लाल-चक्रवाक-युक्त पुलिन-वाली शुक्लतर गंगा की शोभा को भी नीचा दिखा दिया।

अलकसंस्कारं प्रकारान्तरेणाह—

**लग्नद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम्।**
**तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम्॥ १६॥**

अलि लग्न सरसिज का सघन शशि का अमित अपमान कर।
सादृश्य भङ्ग किया उमा ने वदन श्री दिखला सुघर॥

अन्वयः—प्रसिद्धैः अलकैः तदाननश्रीः लग्नद्विरेफं पद्मं, समेघलेखं शशिनः बिम्बं च, परिभूय सादृश्यकथाप्रसङ्गं चिच्छेद॥

व्याख्या—प्रसिद्धैः=भूषितैः, अलकैः=चूर्णकुन्तलैः, उपलक्षिता, तदाननश्रीः=पार्वतीमुखशोभा, लग्नद्विरेफं=संश्लिष्टभ्रमरं, पद्मं=कमलं, समेघलेखं=मेघरेखायुक्तं, शशिनः=चन्द्रस्य, बिम्बं च=मण्डलं च, परिभूय=तिरस्कृत्य, सादृश्यकथाप्रसङ्गम्=उपमोक्तिप्रस्तावम्, चिच्छेद=अभिनत्। अत्र पूर्वार्धवा-

कयाऽर्थस्य सादृश्यकथाच्छेद प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गमलङ्कारः । तल्लक्षण यथा—"हेतोर्वाक्यपदाऽर्थत्वे काव्यलिङ्गमुदाहृतम् ।" इति

**व्युत्पत्तिः**—प्रसिद्धैः="प्रसिद्धौ ख्यातभूषितौ" इत्यमरः । तदाननश्री=तस्या आननं तदाननं, तस्य श्रीः तदाननश्रीः । लग्नद्विरेफ=लग्ना द्विरेफा यस्मिन् तत् लग्नद्विरेफ, तत् । समेघलेखं=मेघस्य लेखा मेघलेखा, तया सहित समेघलेख, तत् । सादृश्यकथाप्रसङ्गम्=सदृशस्य भावः सादृश्य, तस्य कथा सादृश्यकथा, तस्याः प्रसङ्गः, सादृश्यकथाप्रसङ्गः, त सादृश्यकथाप्रसङ्गम् ।

**भावार्थः**—कुसुमचूर्णादिविभूषितैः केशपाशैरुपलक्षिता पार्वत्या मुखशोभा भ्रमरसहितं कमल, मेघरेखायुक्तं चन्द्रबिम्बं च, तिरस्कृत्य लोके स्वसादृश्यकथाप्रस्ताव दूरतो निराचकारेति भावः ।

**भाषा**—कोमल कुंचित और काले केशों से युक्त उसके मुख ने, भ्रमरमय कमल को और मेघ सहित चन्द्र बिम्ब को तिरस्कृत करके दुनिया में अपना सानी नहीं रक्खा ।

मङ्गलार्थं यवाङ्कुरकर्णावतंसार्पणमाह—

**कर्णाऽर्पितो लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे ।**
**तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥**

शुचि लोध-विशद कपोल मृदु गोरोचना से अरुण तर ।
श्रुति के यवांकुर ने विलोचन को लिया आकृष्ट कर ॥

**अन्वयः**—तस्याः कर्णाऽर्पितः यवप्ररोहः लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे कपोले परभागलाभात् चक्षूंषि बबन्ध ।

**व्याख्या**—तस्याः=पार्वत्याः, कर्णाऽर्पितः=श्रोत्रनिक्षिप्तः, कर्णावतंसत्वेन न्यस्त इत्यर्थः । यवप्ररोहः=यवाऽङ्कुरः, लोध्रकषायरूक्षे=लोध्रविलेपनविशदे, गोरोचनाक्षेपनितान्तगौरे=गोरोचनाविन्यासाऽत्यन्तारुणे, कपोले=गण्डस्थले, परभागलाभात्=वर्णोत्कर्षप्राप्तेः चक्षूंषि=नेत्राणि, दृष्टृणामिति शेषः । बबन्ध=जहार, आचकर्षेत्यर्थः ।

**व्युत्पत्तिः**—कर्णाऽर्पितः=कर्णे अर्पितः कर्णार्पितः । यवप्ररोहः=यवस्य प्ररोहः यवप्ररोहः । लोध्रकषायरूक्षे=लोध्रस्य कषायः लोध्रकषायः, "कषायो रसभेदे स्यादङ्गरागे विलेपने" इति विश्वः । लोध्रकषायेण रूक्षः लोध्रकषायरूक्षः, तस्मिन् लोध्रकषायरूक्षे । गोरोचनाक्षेपनितान्तगौरे=गोरोचनायाः क्षेपः गोरोच-

नाक्षेपः, । नितान्त गौरः नितान्तगौर. । "गौरः श्वेतेऽरुणे पीते" इति विश्वः । गोरोचनाक्षेपेण नितान्तगौरः गोरोचनाक्षेपनितान्तगौरः, तस्मिन् गोरोचनाक्षेपनितान्तगौरे । परभागलाभात् = परः भागः यस्य स. परभाग. = उत्कर्षः, तस्य लाभः परभागलाभः, तस्मात् परभागलाभात् ।

**भावार्थः**—कर्णावतंसत्वेन न्यस्तो दीर्घशूकाङ्कुरः पार्वत्या लोध्रपङ्कविशदे गोरोचनाविन्यासेनात्यन्तारुणे गण्डस्थले वर्णोत्कर्षप्राप्त्या द्रष्टृणां नयनानि समाचकर्षेति भावः ।

**भाषा**—लोध्र के विलेपन से विशद, और गोरोचन से नितान्त गौर, कान से लटकता हुआ, उसके कपोल पर यवाङ्कुर अपनी सुन्दरता से बरबस दर्शकों की आँखें बाँध लेता था ।

अधरोष्ठं वर्णयति—

**रेखाविभक्तः सुविभक्तगात्र्याः किञ्चिन्मधूच्छिष्टविमृष्टरागः ।**
**कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ॥१८॥**

रेखा विभक्त अमल अरुण वहती स्फुरित से छवि-कथा ।
आसन्न था लावण्य फल ऐसा उमा-अधरोष्ठ था ॥

**अन्वयः**—सुविभक्तगात्र्याः रेखाविभक्तः किञ्चिन्मधूच्छिष्टविमृष्टरागः आसन्नलावण्यफलः अधरोष्ठ. स्फुरितैः काम् अपि अभिख्याम् अपुष्यत् ।

**व्याख्या**—सुविभक्तगात्र्याः = सुसंश्लिष्टाऽवयवायाः, पार्वत्या इत्यर्थः । रेखाविभक्तः=लेखासुश्लिष्टः, किञ्चिन्मधूच्छिष्टविमृष्टरागः = ईषत्सिक्थकनिर्मलीकृतरागः, आसन्नलावण्यफलः = सन्निहितसौन्दर्यप्रयोजन., अधरोष्ठः=अधोऽधरः, स्फुरितै. = स्पन्दनै, प्रियतमभावनाजनितै· सात्विकविकाररूपैरित्यर्थः । काम् अपि = अनिर्वचनीयाम्, अभिख्या=शोभाम्, अपुष्यत्=पुपोष ।

**व्युत्पत्तिः**—सुविभक्तगात्र्याः=शोभन विभक्तं सुविभक्तं, तत् गात्रं यस्याः सा सुविभक्तगात्री, तस्याः सुविभक्तगात्र्या । रेखाविभक्त =रेखया=मध्यगतया, विभक्तः=कृतविभागः, रेखाविभक्त. । किञ्चिन्मधूच्छिष्टविमृष्टराग.=मधुच्छिष्टेन-विमृष्टः मधूच्छिष्टविमृष्ट', "मधूच्छिष्टं तु सिक्थकम्" इत्यमरः । किञ्चित्=ईषत्, मधूच्छिष्टविमृष्टः रागः यस्य सः किञ्चिन्मधूच्छिष्टविमृष्टरागः । "निर्णिक्त शोधित मृष्टम्" इत्यमरः । "अलौहित्याऽपगमाय अधरेषु सिक्थकलेपः क्रियते" इति लोकप्रसिद्धि' । आसन्नलावण्यफल=लावण्यस्य फलं लावण्यफलं, प्रियकृतमुख-

चुम्बनाऽऽदिरूपमित्यर्थः । आसन्नं लावण्यफलं यस्य स आसन्नलावण्यफलः । अधरोष्ठः = अधरश्चाऽसौ ओष्ठः अधरोष्ठः, "ओत्वोष्ठयोः समासे वा" इति वृद्धिबाधकं पररूपत्वम् । अभिख्याम्="अभिख्या नामशोभयोः" इत्यमरः ।

**भावार्थः**—सुसंश्लिष्टावयवायाः पार्वत्याः रेखाविभक्तसन्निवेशः सिक्थकलेपनिर्मलीकृतरागः प्रत्यासन्नप्रियतमोपभोगसौन्दर्यप्रयोजनो दन्तच्छदः प्रियतमभावनाजनितसात्त्विकविकाररूपैः स्फुरणैः कामप्यनिर्वचनीयां शोभां प्रापदिति भावः।

**भाषा**—मध्य-रेखा से विभक्त, सिक्थक के कारण निर्मल राग मय, और निकट लावण्य का फल पाने वाले पार्वती के अधरोष्ठ ने अपने कम्पन से अनुपम शोभा को प्राप्त किया ।

पादयोरलक्तकरसार्पणे प्रकारान्तरेणाह—

**पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥१९॥**

**बोली सहास सखी चरण रंग शम्भु शिर शशि यह छुवे ।**
**निर्वचन माला से सखी पर प्रेम से ताडन हुए ॥**

**अन्वयः**—सख्या चरणौ रञ्जयित्वा अनेन पत्युः शिरश्चन्द्रकलाम् स्पृश इति परिहासपूर्वं कृताऽऽशीः सा तां माल्येन निर्वचनं जघान ।

**व्याख्या**—सख्या = वयस्यया, चरणौ = पादौ, रञ्जयित्वा = लाक्षारसाक्तौ कृत्वा, अनेन = चरणेन, पत्युः = महेश्वरस्य, भविष्यत इति यावत् । शिरश्चन्द्रकला=शीर्षेन्दुकला, सुरतविशेषे इति शेषः । स्पृश=ताडय, इति = इत्थं, परिहासपूर्वं=सोल्लुण्ठनं, कृताऽऽशीः =प्रयुक्ताऽऽशीर्वादा, सा =पार्वती, तां=सखीं, माल्येन=मालया, निर्वचनं=निर्वचः, यथा तथा, तूष्णीमित्यर्थः । जघान = ताडयामास ।

**व्युत्पत्तिः**—शिरश्चन्द्रकला = चन्द्रस्य कला चन्द्रकला, शिरसः चन्द्रकला इति शिरश्चन्द्रकला, तां शिरश्चन्द्रकलां परिहासपूर्वं=परिहासः पूर्वः यस्मिन् कर्मणि तत् परिहासपूर्वं, यथा तथा, कृताऽऽशीः=कृता आशीर्यस्यै सा कृताशीः । माल्येन="माल्यं मालास्रजौ" इत्यमरः । निर्वचनं=निर्गतं वचनं यस्मात् कर्मणः, तत् निर्वचनं, यथा तथा । निर्वचनमित्यनेन विहृताऽऽख्यः शृङ्गाराऽनुभाव उक्तः। तदुक्तम्—

"प्राप्तकाले तु यद् ब्रूयात्कुर्याद्वा विहृतं हि तत् ।" इति ।

**भावार्थः**—वयस्ययाऽलक्तकरसेन पादौ रञ्जयित्वा "लाक्षारसाक्तेनानेन चरणेन पत्युश्चन्द्रशेखरस्य शिरसि या चन्द्रकला तां स्पृशे"ति सपरिहास प्रयुक्ताशीर्वादा सा पार्वती तां वयस्यां करधृतेन लीलाकमलेन तूष्णीं ताडयामासेति भावः।

**भाषा**—सखी ने पार्वती के चरणों को रँगकर परिहास पूर्वक आशीर्वाद दिया कि तुम मानवती होकर अपने इन चरणों से शङ्कर के शिर में स्थित चन्द्रमा को स्पर्श करो, इस पर पार्वती ने कुछ मुँह से न कह कर केवल माला से उसे मारा।

पार्वत्या नयनप्रसाधने विशेषमाह—

**तस्याः सुजातोत्पलपत्रकान्ते प्रसाधिकाभिर्नयने निरीक्ष्य।**
**न चक्षुषोः कान्तिविशेषबुद्ध्या कालाऽञ्जनं मङ्गलमित्युपात्तम्॥ २०॥**

सुन्दर कमल दल के सदृश दृग पार्वती के देख कर।
अञ्जन लगा उनमें न लख कर मङ्गलार्थ छविं अपर॥

**अन्वयः**—प्रसाधिकाभिः सुजातोत्पलपत्रकान्ते तस्याः नयने निरीक्ष्य कालाऽञ्जनं चक्षुषोः कान्तिविशेषबुद्ध्या न उपात्त, किन्तु मङ्गलम् इति उपात्तम्।

**व्याख्या**—प्रसाधिकाभिः = अलङ्कर्त्रीभिः, सुजातोत्पलपत्रकान्ते = सम्यगुत्पन्नकमलदलसुन्दरे, तस्याः=पार्वत्याः, नयने=नेत्रे, निरीक्ष्य=दृष्ट्वा, कालाञ्जनम्=कज्जलं, चक्षुषोः=नेत्रयोः, कान्तिविशेषबुद्ध्या=शोभाऽतिशयधिया, अनेन शोभाऽतिशयो भविष्यतीति बुद्ध्या इत्यर्थः। न उपात्तं=न अर्पितं, किन्तु=अपि तु, मङ्गलम्=शुभम्, इति=हेतोः, उपात्तं = उपयोजितम्।

**व्युत्पत्तिः**—सुजातोत्पलपत्रकान्ते=सम्यक् जाते सुजाते, "कुगतिप्रादयः" इति गतिसमासः। उत्पलस्य पत्रे उत्पलपत्रे, "पत्रं पलाश छदनं दलं पर्णं छदः पुमान्" इत्यमरः। सुजाते च ते उत्पलपत्रे सुजातोत्पलपत्रे, ते इव कान्ते, सुजातोत्पलपत्रकान्ते, ते। कालाञ्जनं=काल च तत् अञ्जनं कालाञ्जनं "कालाञ्जनं दीपमषी कज्जलम्" इति भोज। कान्तिविशेषबुद्ध्या=कान्तेः विशेषः कान्तिविशेषः, तस्य बुद्धिः, कान्तिविशेषबुद्धिः, तया कान्तिविशेषबुद्ध्या। मङ्गलं="श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः।

**भावार्थः**—अलङ्कारकर्त्रीभिर्नीलोत्पले इवातीव कृष्णे दीर्घे च पार्वत्या नयने समीक्ष्य कज्जलम् "अस्मिन्नर्पिते सति नेत्रयोः शोभाधिक्यं भविष्यती"ति विचारेण नार्पितम्, अपि तु, केवलं शुभाचारबुद्ध्यैवार्पितमभूदिति भावः।

**भाषा**—अलङ्कार करनेवाली स्त्री ने नील कमल के समान कृष्ण और दीर्घ पार्वती के नेत्रों में शोभा को बढ़ाने के लिये काजल नहीं लगाया, किन्तु मङ्गल आचार के खयाल से लगाया।

इत्थमङ्गरागार्पणमुक्त्वा हाराद्याभरणार्पणप्रकारमाह—

**सा सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।**
**सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाऽऽभरणा चकासे ॥ २१ ॥**

**शोभित हुई भूषण पहन कर शैल तनया इस तरह ।**
**कुसुमित लता, उडुमय निशा, खगमय नदी, हो जिस तरह ॥**

**अन्वयः**—आमुच्यमानाऽऽभरणा सा सम्भवद्भिः कुसुमैः लता इव, उद्यद्भिः ज्योतिर्भिः त्रियामा इव, लीयमानैः विहङ्गैः सरित् इव, चकासे।

**व्याख्या**—आमुच्यमानाऽऽभरणा = अर्प्यमाणभूषणा, सा=पार्वती, सम्भवद्भिः = उत्पद्यमानैः, कुसुमैः=पुष्पैः, लता इव=वल्ली इव, उद्यद्भिः = प्रादुर्भवद्भिः, ज्योतिर्भिः=नक्षत्रैः, त्रियामा इव=रात्रिः इव, लीयमानैः = आश्रयद्भिः, निषीदद्भिरित्यर्थः। विहङ्गैः=हंसादिभिः, सरित् इव = नदी इव, चकासे=रेजे।

**व्युत्पत्तिः**—आमुच्यमानाऽऽभरणा = आमुच्यन्ते इति आमुच्यमानानि, तानि आभरणानि यस्याः सा आमुच्यमानाभरणा। सम्भवद्भिः = सम्भवन्तीति सम्भवन्ति, तैः सम्भवद्भिः, शतृप्रत्ययः। लता = "वल्ली तु प्रततिर्लता" इत्यमरः। उद्यद्भिः=उद्यन्तीति उद्यन्ति, तैः उद्यद्भिः, उदुपसर्गपूर्वकात् "इण् गतौ" इति धातोः शतृप्रत्ययः। त्रियामा = त्रयः यामाः यस्याः सा त्रियामा, "द्वौ यामप्रहरौ समौ" इत्यमरः। लीयमानैः=लीयन्ते इति लीयमानाः, तैः लीयमानैः, "लीङ् श्लेषणे" इति दैवादिकाद्धातोः शानच्प्रत्ययः। अत्र मालोपमालङ्कारः। तदुक्तं साहित्यदर्पणे—"मालोपमा यदेकस्योपमानं बहु दृश्यते"। इति

**भावार्थः**—आभरणैरलङ्कृता सा पार्वती प्रादुर्भवद्भिः पुष्पैर्लतेव, प्रकाशमानैर्नक्षत्रादिभी रात्रिरिव, निषीदद्भिर्हंसादिभिर्नदीव, शुशुभे इति भावः।

**भाषा**—अलङ्कारों से अलङ्कृत वह पार्वती खिले हुए पुष्पों से लता की तरह, चमकते हुए तारों से रात की तरह, तथा बैठे हुए हंसों से नदी के समान शोभित हुई।

इत्थं धार्यमाणानामलङ्काराणां फलमाह—

**आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।**

**हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेशः ॥ २२ ॥**

सज धज उमा ने मुकुर में निज रूप को देखा विमल ।
शिव के लिये व्याकुल हुई, स्त्री वेश प्रिय–दर्शन सुफल ॥

**अन्वयः**—गौरी शोभमानम् आत्मानम् आदर्शबिम्बे आलोक्य स्तिमिताऽऽयताऽक्षी सती हरोपयाने त्वरिता बभूव । हि स्त्रीणां वेशः प्रियाऽऽलोकफल. भवति।

**व्याख्या**—गौरी=पार्वती, शोभमानं=दीप्यमानम्, आत्मानं=स्वशरीरम्, आदर्शबिम्बे=दर्पणमण्डले, आलोक्य=दृष्ट्वा, स्तिमिताऽऽयताऽक्षी=निश्चलदीर्घलोचना सती, हरोपयाने=शिवसमीपप्राप्तौ, त्वरिता=उत्सुका, बभूव=अभवत् । हि=यतः, स्त्रीणां=सीमन्तिनीनां, वेशः=नेपथ्य, प्रियाऽऽलोकफलः=वल्लभदर्शनप्रयोजन', भवतीति शेषः ।

**व्युत्पत्तिः**—शोभमानं=शोभते इति शोभमान', तं शोभमानम्, आत्मानम्="आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः । आदर्शबिम्बे=आदर्शस्य बिम्बम् आदर्शबिम्बं, तस्मिन् आदर्शबिम्बे । "दर्पणे मुकुरादर्शौ" इत्यमरः । स्तिमिताऽऽयताऽक्षी=स्तिमिते आयते अक्षिणी यस्याः सा स्तिमितायताक्षी । हरोपयाने=उप=समीपे, यानम् उपयानम् । हरस्य उपयान हरोपयानं, तस्मिन् हरोपयाने, त्वरिता=त्वरा सञ्जाता यस्या. सा त्वरिता, इतच्प्रत्ययः । प्रियाऽऽलोकफलः=प्रीणातीति प्रियः, तस्य आलोकः प्रियालोक., सः फल यस्य सः प्रियालोकफलः । प्रियकर्तृकमवलोकनमेव हि स्त्रीणामलङ्कारस्य फलमित्यर्थः । अत्राऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—सा पार्वती दर्पणतले स्वाभाविकेन सौन्दर्येण भूषणजनितया कान्त्या च दीप्यमान स्वदेह दृष्ट्वा निश्चलायतलोचना सती हरसामीप्यप्राप्तौ व्यग्रा बभूव । प्रियकर्तृकमवलोकनमेव हि नारीणामलङ्करणस्य प्रयोजनमिति भावः ।

**भाषा**—वह पार्वती आभूषणों से युक्त अपने शरीर की शोभा दर्पण में देखकर, शङ्कर की प्राप्ति के लिये व्यग्र हो गई, क्योंकि स्त्रियों का शृङ्गार पति के देखने से ही सफल होता है ।

अथ पार्वतीमात्रा मेनयैवाऽवश्यकर्तव्य मङ्गलालङ्कारविशेषं वर्णयति–त्रिभिः श्लोकैः । तत्रानन्तरश्लोके वक्ष्यप्रमाणस्य विवाहदीक्षातिलकविधानस्याङ्गभूत मुखोन्नयनमाह—

**अथाऽङ्गुलिभ्यां हरितालमार्द्रं माङ्गल्यमादाय मनःशिलां च ।**

**कर्णाऽवसक्ताऽमलदन्तपत्रं माता तदीयं मुखमुन्नमय्य ॥ २३ ॥**

दो अँगुलियों से ले अमल हरिताल और मनःशिला ।
श्रुति लग्न मुख को उर्ध्व करके दन्त पत्रों से मिला ॥

**अन्वयः**—अथ माता माङ्गल्यम् आर्द्रं हरितालं मनःशिला च अङ्गुलिभ्याम् आदाय, कर्णाऽवसक्ताऽमलदन्तपत्रं तदीयं मुखम् उन्नमय्य, 'विवाहदीक्षातिलक चकार' इति वक्ष्यमाणश्लोकेन अन्वयः ।

**व्याख्या**—अथ = अलङ्करणाऽनन्तरं, माता = मेनका, माङ्गल्यं=मङ्गलाऽर्थम्, आर्द्रं = क्लिन्नं, हरितालं=हरितालकल्कं, मनःशिला च = मनोगुप्ताकल्क च, अङ्गुलिभ्या=तर्जनीमध्यमाभ्याम्, आदाय=गृहीत्वा, कर्णाऽवसक्ताऽमलदन्तपत्रं=श्रोत्रलग्ननिर्मलदन्तपत्रं, तदीयं = पार्वतीसम्बन्धि, मुखम्=आननम्, उन्नमय्य=ऊर्ध्वं कृत्वा, विवाहदीक्षातिलकं=परिणयकृत्यतिलकं, चकार = अकरोत्, इति वक्ष्यमाणश्लोकेनान्वयः ।

**व्युत्पत्तिः**—माङ्गल्यं=मङ्गलाय इदं माङ्गल्यं, तत् । आर्द्रम्="आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुतं च" इत्यमरः । मनःशिला = "मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका" इत्यमरः । कर्णाऽवसक्ताऽमलदन्तपत्रम्=अविद्यमानं मलं ययोस्ते अमले, नञ्बहुव्रीहिः । कर्णयोः अवसक्ते कर्णावसक्ते, ते अमले दन्तपत्रे यस्य तत् कर्णाऽवसक्ताऽमलदन्तपत्रं, तत् । तदीयं = तस्या इदं तदीयं, तत् ।

**भावार्थः**—प्रसाधिकाकृतप्रसाधनानन्तरं मेना स्वयमेव पार्वत्या मुखमादौ गजदन्तनिर्मितकर्णावतंसभूषितं विधाय पुनः दक्षिणहस्ताङ्गुलिभ्यामार्द्रं हरितालकल्कं मनःशिलाकल्कं चादाय तिलकविधानार्थं तदीयमाननमुन्नीयेति भावः ।

**भाषा**—अलङ्कार पहनाने के बाद मेना ने दो अङ्गुलियों से गीले हरिताल और मनःशिला के कल्क को लेकर मङ्गल तिलक करने के लिये पार्वती के कर्णफूल युक्त मुख को ऊँचा कर ।

अथ मुखोन्नयनस्य कार्यभूतं तिलकविधानमाह—

**उमास्तनोद्भेदमनुप्रवृद्धो मनोरथो यः प्रथमं बभूव ।**
**तमेव मेना दुहितुः कथंचिद्विवाहदीक्षातिलकं चकार ॥ २४ ॥**

उद्भेद कुच के समय गिरिजा के मनोरथ जो हुआ ।
उस काल माँ द्वारा वही शुचि तिलक रूप रुचिर हुआ ॥

**अन्वयः**—उमास्तनोद्भेदम् अनु प्रवृद्धः यः मनोरथः प्रथमं बभूव । मेना दुहितुः तम् एव विवाहदीक्षातिलकं कथंचित् चकार ।

**व्याख्या**—उमास्तनोद्भेदम् अनु = पार्वतीकुचोदयम् अनु, पार्वतीस्तनोदयमारभ्य इत्यर्थः । प्रवृद्धः = वृद्धिं गतः, यः, मनोरथः=इच्छा, प्रथम = प्राक् , बभूव=अभवत् । मेना=पार्वतीजननी, दुहितुः=पार्वत्याः, तम् एव=मनोरथभूतम् एव, विवाहदीक्षातिलक=परिणयकृत्यतिलकं, कथञ्चित्=यथाकथञ्चित् , हर्षपरवाशादित्यर्थः । चकार = अकरोत् । युग्मकम् ।

**व्युत्पत्तिः**—उमास्तनोद्भेदम् = उमायाः स्तनौ उमास्तनौ, तयोः उद्भेदः उमास्तनोद्भेदः, तम् उमास्तनोद्भेद । प्रवृद्धः=प्रकर्षेण वृद्धः प्रवृद्धः । मनोरथः= "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः । विवाहदीक्षातिलकं=विशिष्टो वाहः विवाहः, तस्य दीक्षा = संस्कारः, विवाहदीक्षा, तस्या तिलकः विवाहदीक्षातिलकः, त विवाहदीक्षातिलकम् ।

**भावार्थः**—उमास्तनोद्भेदकालादारभ्य मनसि वृद्धिं गतः "पुत्र्या विवाहदीक्षातिलक कदा करिष्यामी" त्याकारको यो मनोरथ: प्रागेवोत्पन्नोऽभूत् । मेना कन्यायाः पार्वत्यास्तमेव मनोरथभूतं विवाहसंस्कारतिलकं हर्षपरवशत्वेन हस्तनेत्रस्य सम्यक् प्रवृत्त्यभावेऽपि यथा कथञ्चिदकरोदिति भावः ।

**भाषा**—उमा के जब स्तन धीरे धीरे बढने लगे, तभी मेना के हृदय में विवाह=दीक्षा-तिलक लगाने की इच्छा हुई थी । आज उसे सफल बनाने के लिये किसी किसी तरह मेना ने कन्या को तिलक लगाया ।

कौतुकसूत्रबन्धनमप्याह—

**बबन्ध चाऽस्राऽऽकुलदृष्टिरस्याः स्थानान्तरे कल्पितसन्निवेशम् ।**
**धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥**

हर्ष परवश मेनका से पर ठौर पर लाई गई ।
धात्र्यङ्गुली से मृदुल ऊर्णा हाथ में बांधी गई ॥

**अन्वयः**—अस्राऽऽकुलदृष्टिः सा अस्याः स्थानान्तरे कल्पितसन्निवेश धात्र्यङ्गुलीभिः प्रतिसार्यमाणम् ऊर्णामयं कौतुकहस्तसूत्रं बबन्ध च ।

**व्याख्या**—अस्राऽऽकुलदृष्टिः=आनन्दबाष्पाऽऽकुलचक्षुः, सा=मेना, अस्याः=पार्वत्याः, स्थानान्तरे = अन्यस्थाने, कल्पितसन्निवेश=कृतनिक्षेप, विहितस्थानादन्यत्र स्थापितमित्यर्थः । अत एव-धात्र्यङ्गुलीभिः = उपमात्रङ्गुलीभिः,

प्रतिसार्यमाणं=स्वस्थानं प्राप्यमाणम् , ऊर्णामयं=मेषाऽऽदिरोमनिर्मितं, कौतुकहस्तसूत्रं=मङ्गलहस्तसूत्र, बबन्ध च=अबध्नाच्च ।

**व्युत्पत्तिः**—अस्राऽऽकुलदृष्टिः, आकुले दृष्टी यस्याः सा आकुलदृष्टिः, अस्रैः आकुलदृष्टिः अस्राकुलदृष्टिः । स्थानान्तरे=अन्यत्स्थानम् स्थानान्तरं तस्मिन् स्थानान्तरे । कल्पितसन्निवेशं=कल्पितः सन्निवेशः यस्य तत् कल्पितसन्निवेशं, तत् । धात्र्यङ्गुलीभिः = धात्र्या अङ्गुल्यः धात्र्यङ्गुल्यः, ताभिर्धात्र्यङ्गुलीभिः । प्रतिसार्यमाणं = प्रतिसार्यते इति प्रतिसार्यमाणं, तत् , कर्मणि यक् , तदन्तात् शानच् । उर्णामयं=प्रचुरा उर्णाः यस्मिन् तत् उर्णामयं तत् । प्राचुर्येऽर्थे मयट् । "उर्णा मेषाऽऽदिलोम्नि स्यात्" इत्यमरः । कौतुकहस्तसूत्रं = हस्तस्य सूत्र हस्तसूत्रं, कौतुकाऽर्थं हस्तसूत्रं कौतुकहस्तसूत्रं, तत् । "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः ।

**भावार्थः**—हर्षपरवशत्वात् आनन्दाश्रुभिराकुलदर्शना मेना पार्वत्याः स्थानान्तरे बद्धुमारब्धमुपमात्राङ्गुलीभिर्बन्धनोचितस्थानमेव नीयमानमूर्णातन्तुनिर्मित विवाहमङ्गलबन्धनीयं कौतुकाख्यं हस्तसूत्रं बबन्धेति भावः ।

**भाषा**—पार्वती के हाथों में सजल नयना मेना से स्थानान्तर में बाधा जाने वाला ऊन से निर्मित विवाह सूत्र धाई के द्वारा यथास्थान में बाँधा गया ।

दुकूलपरिधानं दर्पणग्रहणं च प्रकारान्तरेणाह—

**क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।**
**नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥२६॥**

पट धारिणी नव मुकुर सहिता वह उमा शोभित हुई ।
क्षीरोद वेला फेन मय शरदिन्दु मय रजनी हुई ॥

**अन्वयः**—नवक्षौमनिवासिनी नवं दर्पणम् आदधाना सा सफेनपुञ्जा क्षीरोदवेला इव, पर्याप्तचन्द्रा शरत्त्रियामा इव, भूयः बभौ ।

**व्याख्या**—नवक्षौमनिवासिनी=नूतनदुकूलधारिणी, नवं=नूतनं, दर्पणं= मुकुरम् , आदधाना=बिभ्रती, सा = पार्वती, सफेनपुञ्जा = सडिण्डीरपङ्क्तिः, क्षीरोदवेला इव=क्षीरसमुद्रतीरभूमिः इव, पर्याप्तचन्द्राः = पूर्णचन्द्रा, शरत्त्रियामा इव=शरद्रात्रिः इव, भूयः = भूयिष्ठं, यथा तथा, बभौ = चकासे ।

**व्युत्पत्तिः**—नवक्षौमनिवासिनी = नव च तत् क्षौमं नवक्षौमं, तत् निवस्ते इति क्षौमनिवासिनी, वसे आच्छादने" इति धातोर्णिनीः । दर्पणं = "दर्पणे

मुकुराऽऽदर्शौ" इत्यमरः । सफेनपुञ्जा = फेनाना पुञ्जः फेनपुञ्जः तेन सहिता सफेन-पुञ्जा, बहुव्रीहिः, "डिण्डीरोऽब्धिकफ· फेनः" इत्यमरः । क्षीरोदवेला=क्षीरम् उदकं यस्य स. क्षीरोदः, "उदकस्योदः सज्ञायाम्" इत्युदादेशः । क्षीरोदस्य वेला क्षीरो-दवेला। । लक्षणया वेलाशब्दस्तीरभूमिवाचकः । "वेला काले च जलधेस्तीरनीर-विकारयोः" इति विश्वः । पर्याप्तचन्द्रा = पर्याप्तः चन्द्रः यस्या सा पर्याप्तचन्द्रा । शरत्त्रियामा=त्रयः यामाः यस्याः सा त्रियामा, "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः । शरदः त्रियामा शरत्त्रियामा । बभौ = "भा दीप्तौ" इति धातोर्लिट् ।

**भावार्थः**—अभिनवधवलतरदुकूलं परिदधानानूतनदर्पणं बिभ्रती सा पार्वती फेनसमूहसहिता क्षीरसमुद्रलहरीव, पूर्णचन्द्रसहिता शरत्कालरात्रिरिव, सुतरा शुशुभे इति भावः ।

**भाषा**—नवीन वस्त्र धारण करने वाली पार्वती दर्पण के साथ, फेन से युक्त क्षीरोद-वेला की तरह और पूर्णचन्द्र के सहित रात्रि की तरह शोभित हुई ।

इत्थ कृतनैपथ्यायाः पार्वत्याः कुलदेवतावन्दनं पतिव्रतापादाभिवन्दनं चाह—

**तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।**
**अकारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥**

कर्मज्ञ मेना ने स्वकुल सुर का प्रणाम समुद्र करा ।
पदग्रहण करवाया सती गण का समोद कुशल भरा ॥

**अन्वयः**—कारयितव्यदक्षा माता कुलप्रतिष्ठा ताम् अर्चिताभ्यः कुलदेवता-भ्यः प्रणमय्य सतीना पादग्रहणं क्रमेण अकारयत् ।

**व्याख्या**—कारयितव्यदक्षा=कारयितव्यकुशला । कर्मोपदेशनिपुणेत्यर्थः । माता=मेनका, कुलप्रतिष्ठा=वशस्थितिकारिणीं' सरक्षिणीमित्यर्थः । ता=पार्वतीम्, अर्चिताभ्यः=पूजिताभ्यः, कुलदेवताभ्यः=वशदेवताभ्यः, गृहदेवताभ्यो वा, प्रण-मय्य =प्रणामं कारयित्वा सतीना=पतिव्रताना, पादग्रहण=चरणाऽभिवन्दनं, क्रमेण = आनुपूर्व्या, अकारयत् =कारितवती ।

**व्युत्पत्तिः**—कारयितव्यदक्षा = कारयितुं योग्यानि कारयितव्यानि, तेषु दक्षा कारयितव्यदक्षा । णिजन्तात् "डुकृञ् करणे" इति धातोः तव्यप्रत्ययः, ततः सप्तमीतत्पुरुषः । कुलप्रतिष्ठा =प्रति तिष्ठति अस्यामिति प्रतिष्ठा, "आतश्चोपसर्गे" इति कः, ततः स्त्रिया टाप् । कुलस्य प्रतिष्ठा कुलप्रष्ठि, ता कुलप्रतिष्ठा, कुल-

देवताभ्यः = देवा एव देवताः, स्वाऽर्थे तल् । कुलस्य देवताः कुलदेवताः, ताभ्यः कुलदेवताभ्यः । प्रणमय्य = प्रोपसर्गपूर्वात् णिजन्तात् "णम प्रह्वत्वे शब्दे" इति धातोः क्त्वाप्रत्ययः, तस्य ल्यबादेशः । "ल्यपि लघुपूर्वात्" इति णेरयादेशः । सतीना = "सुचरित्रा तु सती साध्वी पतिव्रता" इत्यमरः । पादग्रहणं = पादयोर्ग्रहणं पादग्रहणं, तत् । अकारयत् = णिजन्तात् "डुकृञ् करणे" इति धातोर्लङ् । "ह्रक्रोरन्यतरस्याम्" इत्यणि कर्तुः कर्मत्वम् । अन्यत्र च "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति नमेरकर्मकत्वात् ।

**भावार्थः**—कर्मोपदेशकुशला माता मेना स्वकुलालम्बनभूता ता पार्वतीं कुलक्रमार्चिताभ्यो देवताभ्यो नमस्कारं कारयित्वा, पश्चात् विवाहदर्शनकुतूहलादागताना बन्धुभूताना पतिव्रतानामाभिजात्यवयः प्रभृतिक्रमेणाभिवादनं कारयामासेति भावः ।

**भाषा**—मेंना ने पार्वती से कुल देवताओं को प्रणाम करवा कर, पश्चात् विवाह देखने के लिये आई हुई सतिओं के चरणों का स्पर्श कराया ।

पार्वत्याः कृतपादाभिवादनाना तासां पतिव्रताना प्रत्यभिवादनप्रकारमाह—

**अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।**
**तया तु तस्याऽर्धशरीरभाजा पश्चात्कृताः स्निग्धजनाऽऽशिषोऽपि॥८६**

**पति का अखण्डित प्रेम पावो बन्धु जन ने कह दिया ।**
**वह शम्भु का तन अर्ध लेकर विफल आशिष को किया ॥**

**अन्वयः**—नम्रा उमा ताभिः "पत्युः अखण्डितं प्रेम लभस्व" इति उच्यते स्म । तस्य अर्धशरीरभाजा तया तु स्निग्धजनाऽऽशिषः अपि पश्चात्कृता ।

**व्याख्या**—नम्रा = प्रणता, उमा=पार्वती, ताभिः = पतिव्रताभिः, "पत्युः= भर्तृभूतस्य हरस्य, अखण्डितम् = अक्षतं, सपत्नीभूतयान्ययानुपात्ताशमित्यर्थः । प्रेम–स्नेहं, लभस्व = प्राप्नुहि" इति=एवम् , उच्यते स्म=उक्ताभूत् । तस्य = हरस्य, अर्धशरीरभाजा = अर्धदेहग्रहीत्र्या, तया तु = पार्वत्या तु, स्निग्धजनाऽऽशिषः अपि = बन्धुजनाऽऽशीर्वादा अपि, पश्चात्कृताः = अधरीकृताः । ततोऽप्यधिकफललाभादित्यर्थः ।

**व्युत्पत्तिः**—अखण्डितं = खण्डं सञ्जातमस्य तत् खण्डित, इतच्प्रत्ययः । न खण्डितमखण्डितं, तत् । प्रेम = "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः"इत्यमरः । लभस्व = "डुलभष् प्राप्तौ" इति धातोराशीर्लोट् । उच्यते स्म = "लट् स्मे"इति

भूतार्थे लट् । अर्धशरीरभाजा = शरीरस्य अर्धम् अर्धशरीरम्, "अर्धं नपुंसकम्" इति समासः । अर्धशरीरं भजतीति अर्धशरीरभाक्, तया अर्धशरीरभाजा, "भजो ण्विः" इति ण्विः । स्निग्धजनाऽऽशिषः = स्निग्धाश्च ते जनाः स्निग्धजनाः, तेषामाशिषः स्निग्धजनाशिषः ।

**भावार्थः**—पतिव्रतानां पादानता पार्वती ताभिः पतिव्रताभिः पत्युः परं प्रेमास्पदं भवेत्याशीर्वादेनाऽभिनन्दिताभूत् । तया पार्वत्या तु सतीनां स्निग्धानां च तासां भर्तृप्रेमलाभमात्रपरा आशिषो, भर्तुः शरीरार्धस्यैव स्वीकारादधः कृता इति भावः ।

**भाषा**—सतियों ने 'तुम पति का अखण्ड प्रेम प्राप्त करो' ऐसा नम्रमुखी पार्वती को आशीर्वाद दिया, किन्तु भगवान् शङ्कर के आधे शरीर को प्राप्त कर उसने उस आशीर्वाद को भी नीचा दिखला दिया ।

कन्याविवाहोत्सवे हिमालयस्य कर्तव्यं कारयितव्यं चार्थजातमुपसंहरति—

**इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।**
**सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः ॥२६॥**

इच्छा विभूत्यनुरूप गिरिजा का सुकृत्य समाप्त कर ।
करने लगा शिव की प्रतीक्षा कुशल सज्जन गिरि प्रवर ॥

**अन्वयः**—कृती सभ्यः अद्रिः इच्छाविभूत्योः अनुरूपं तस्याः कृत्यम् अशेषयित्वा सुहृदास्थितायां सभायां वृषाऽङ्काऽऽगमनप्रतीक्षः सन् तस्थौ ।

**व्याख्या**—कृती = कुशलः, सभ्यः = सभायां साधुः, अद्रिः = हिमालयः, इच्छाविभूत्योः = वाञ्छैश्वर्ययोः, अनुरूपं = सदृशं, तस्याः = पार्वत्याः, कृत्यं = कर्तव्यम्, कौतुकबन्धनादिरूपमित्यर्थः । अशेषयित्वा = समाप्य, सुहृदास्थितायां = बन्धवाऽधिष्ठितायां, सभायां परिषदि, वृषाऽङ्काऽऽगमनप्रतीक्षः = हराऽऽगमनप्रतीक्षः सन्, तस्थौ = स्थितः ।

**व्युत्पत्तिः**—कृती=कृतमस्याऽस्तीति कृती, इनिप्रत्ययः । "वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि" इत्यमरः । सभ्यः = सभायां साधुः सभ्यः, "सभाया यः" इति यप्रत्ययः । इच्छाविभूत्योः = इच्छा च विभूतिश्च इच्छाविभूती, तयोः इच्छाविभूत्योः । अनुरूपं = रूपस्य योग्यं अनुरूपम् । अशेषयित्वा = न शेषम् अशेषं, तत् कृत्वा अशेषयित्वा, अशेषशब्दात् "तत्करोति तदाचष्टे" इति णयन्तात् क्त्वाप्रत्ययः । "विश्वमशेषं कृत्स्नं समस्तनिखिलाऽखिलानि निःशेषम्" इत्यमरः ।

सुहृदास्थितायाम् = शोभनं हृदयं येषां ते सुहृदः, तैः आस्थिता सुहृदास्थिता, तस्यां सुहृदास्थितायां । वृषाऽङ्काऽऽगमनप्रतीक्षः=वृषः अङ्कः यस्य स वृषाऽङ्कः, तस्य आगमनं वृषाऽङ्काऽऽगमन तत् प्रतीक्षते इति वृषाऽङ्कागमनप्रतीक्षः, "कर्मण्यण्" इत्यण् ।

**भावार्थः**—सज्जनसम्भाषणकुशलो हिमालय उत्साहैश्वर्ययोः सदृशं पार्वत्याः कौतुकबन्धनादिरूपं कर्तव्यजातं निश्शेषं कृत्वा बन्धुजनपरिपूर्णायां सभायां हरागमनं प्रतिपालयामासेति भावः ।

**भाषा**—हिमालय उत्साह और ऐश्वर्य के साथ पार्वती के विवाह के पहले के सब कर्मों को पूरा करके कुटुम्बिओं के साथ सभा में बैठकर भगवान् शङ्कर की प्रतीक्षा करने लगा ।

अथ प्रधाननायकस्य हरस्य वृत्तान्तं प्रस्तौति—

**तावद्भवस्याऽपि कुबेरशैले तत्पूर्वपाणिग्रहणाऽनुरूपम् ।**
**प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पुरशासनस्य ॥ ३० ॥**

कैलास पर उद्वाह के अनुरूप भूषण मान से ।
ब्राह्मी प्रभृति ने शम्भु के आगे रखा सम्मान से ॥

**अन्वयः**—तावत् कुबेरशैले तत्पूर्वपाणिग्रहणाऽनुरूपं प्रसाधनम् आदृताभिः मातृभिः पुरशासनस्य पुरस्तात् न्यस्तम् ।

**व्याख्या**—तावत्=तत्कालपर्यन्त यावद् गौरीप्रसाधनं क्रियते तत्काल एवेत्यर्थः । कुबेरशैले = धनदपर्वते, कैलासे इत्यर्थः । तत्पूर्वपाणिग्रहणाऽनुरूप = तत्पूर्वविवाहसदृशम्, प्रथमविवाहोचितमित्यर्थः । प्रसाधनम्=अलङ्कारं, वसनाभरणादिकमित्यर्थः । आदृताभिः=आदरयुक्ताभिः, मातृभिः=ब्राह्मीत्यादिसप्तमातृकाभिः, पुरशासनस्य = शिवस्य, पुरस्तात्=अग्रे, न्यस्तं=निक्षिप्तम् ।

**व्युत्पत्तिः**—तावत् = "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः । कुबेरशैले = कुबेरस्य शैलः कुबेरशैलः, तस्मिन् कुबेरशैले, "कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः" इत्यमरः । तत्पूर्वपाणिग्रहणाऽनुरूपं=पाणेर्ग्रहण पाणिग्रहणं, तदेव पूर्वं तत्पूर्वं, तच्च तत् पाणिग्रहणं तत्पूर्वपाणिग्रहणं, रूपस्य योग्यमनुरूपं, तत्पूर्वपाणिग्रहणस्य अनुरूपं तत्पूर्वपाणिग्रहणानुरूपम्, प्रसाधन=प्रसाधयति=अलङ्करोति, अनेनेति प्रसाधनम्—अलङ्कारः । करणे ल्युट् । आदृताभिः = कर्तरि क्तप्रत्ययः । मातृभिः="ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।

वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः" इत्यमरः। पुरशासनस्य=पुरं शास्तीति पुरशासनः, तस्य पुरशासनस्य। "कृत्यल्युटो बहुलम्" इति बाहुलकात् कर्तरि ल्युट्।

**भावार्थः**—तस्मिन्नेव समये कैलासे हरस्य प्रसाधनार्थं प्रथमविवाहोचितं वसनाभरणादिकमुपकरणं सादराभिः सप्तमातृकाभिः त्रिपुरहरस्य पुरोभागे निहितमासीदिति भावः।

**भाषा**—उसी समय कैलास पर सादर सप्त माताओं ने प्रथम विवाह में पहनने योग्य मंगलार्थ वस्त्र-भूषणादि शङ्कर के आगे रखे।

महेश्वरस्य प्रसाधनविषये वैशिष्ट्यमाह—

**तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण।**
**स एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे॥ ३१॥**

**शिव ने विभूषण मातृ-आदर के लिये ही छू दिया।**
**हर के मनोहर वेश ने वर रूपवर धारण किया॥**

**अन्वयः**—ईश्वरेण सा मङ्गलमण्डनश्रीः तद्गौरवात् केवलं पस्पृशे। किन्तु तस्य विभोः स एव वेषः परिणेतुः इष्टं भावान्तरं प्रपेदे।

**व्याख्या**—ईश्वरेण=शिवेन, सा=पूर्वोक्ता, मण्डलमण्डनश्रीः=कौतुकप्रसाधनसम्पत्, तद्गौरवात्=मात्रादरात्, केवलं, पस्पृशे=स्पृष्टा एव। "न तु दध्रे" इत्यवधारणाऽर्थः केवलशब्दः। किन्तु, तस्य, विभोः=शिवस्य, स एव=पूर्वकालिक एव, वेषः=नेपथ्यं, स्वाभाविको भस्मकपालाऽऽदिवेष एवेत्यर्थः। परिणेतुः= वरस्य, विवाहोद्युक्तस्येत्यर्थः। इष्टम्=अपेक्षितम्। अभीप्सितमित्यर्थः। भावान्तरं=रूपान्तरं, प्रपेदे=प्राप्तवान्। अङ्गरागाऽऽदिरूपता प्रापेत्यर्थः।

**व्युत्पत्तिः**—ईश्वरेण=ईष्टे असौ इति ईश्वरस्तेन ईश्वरेण मङ्गलमण्डनश्रीः= मङ्गलाऽर्थं मण्डनं मङ्गलमण्डनं, तस्य श्रीः मङ्गलमण्डनश्रीः। तद्गौरवात्=गुरोर्भावः गौरवम्। तासु गौरवं तद्गौरवं, तस्मात् तद्गौरवात्। केवलं="केवलं चाऽवधारणे," इति शाश्वतः। परिणेतुः=परिणयतीति परिणेता, तस्य परिणेतुः, तृच्-प्रत्ययः। भावान्तरम् = अन्यो भावः भावान्तरं, तत्।

**भावार्थः**—हरेण मातृभिः पुरो निहिता सा मङ्गलालङ्करणलक्ष्मीः मातृषु बहुमानात् केवलं हस्तेन स्पृष्टाऽभूत्, न तु दध्रे। किन्तु प्रभोर्हरस्य भस्मकपाला-

दिकं स्वाभाविकमलङ्कारसाधनमेव विवाहोचितं सिताङ्गरागशिरोऽलङ्कारकुसुमादिस्वरूपता प्रापेति भावः।

**भाषा**—शङ्कर ने माताओं के आदर के लिये उन वस्त्र भूषणादिकों का केवल स्पर्श मात्र किया, धारण नहीं किया। स्वाभाविक भस्म कपालादि वेश ही मङ्गल अलङ्कार के रूप में परिणत हो गया।

भस्मादीना रूपान्तराऽऽपत्तिमेवाऽऽह—

**बभूव भस्मैव सिताऽङ्गरागः कपालमेवाऽमलशेखरश्रीः।**
**उपान्तभागेषु च रोचनाऽङ्को गजाऽजिनस्यैव दुकूलभावः॥३२॥**

गन्धानुलेपन भस्म शेखर था मनोज्ञ कपाल हो।
गज चर्म सुन्दर हंस चिह्नित वस्त्र भाव बना वही॥

**अन्वयः**—भस्म एव सिताऽङ्गरागः बभूव, कपालम् एव अमलशेखरश्रीः बभूव, गजाऽजिनस्य एव उपान्तभागेषु रोचनाऽङ्कः दुकूलभावश्च बभूव।

**व्याख्या**—भस्म एव=भसितम् एव, सिताऽङ्गरागः=शुभ्रचन्दनानुलेपनं, बभूव=अभवत्। कपालम् एव=कर्परः एव, अमलशेखरश्रीः=निर्मलशिरोभूषणशोभा, बभूव=अभवत्। गजाऽजिनस्य एव=हस्तिचर्मणः एव, उपान्तभागेषु=अञ्चलप्रदेशेषु, रोचनाऽङ्कः=रोचनाचिह्नः, गोरोचनादिलिखितहंसमिथुनसनाथ इत्यर्थः। दुकूलभावश्च=पटांशुकत्वं च, बभूव=अभवत्।

**व्युत्पत्तिः**—सिताऽङ्गरागः=अङ्गस्य रागः अङ्गरागः, सितश्चाऽसौ अङ्गरागः सिताङ्गरागः। "अवदातः सितो गौरीऽवलक्षो धवलोऽर्जुनः" इत्यमरः। कपालं="स्यात्कर्परः कपालोऽस्त्री" इत्यमरः। अमलशेखरश्रीः=अविद्यमानं मलं यस्य तत् अमलं, तच्च तत् शेखरं अमलशेखरं, तस्य श्रीः अमलशेखरश्रीः। गजाऽजिनस्य=गजस्य अजिनं गजाऽजिनं, तस्य गजाजिनस्य, "अजिन चर्म कृत्तिः स्त्री" इत्यमरः। उपान्तभागेषु=उपान्ताश्च ते भागाः उपान्तभागाः, तेषु उपान्तभागेषु, रोचनाऽङ्कः=रोचना एव अङ्कः=हंसाऽऽदिचिह्नं, यस्य सः रोचनाङ्कः। दुकूलभावः=दुकूलस्य भावः दुकूलभावः। अत्र परिणामाऽलङ्कारः। तल्लक्षण यथा साहित्यदर्पणे—

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनी।
परिणामो भवेत् तुल्याऽतुल्याऽधिकरणो द्विधा॥" इति।

**भावार्थः**—हरेण शरीरे विलिप्तं भस्मैव चन्दनाद्यङ्गरागोऽभूत्। ब्रह्मशिरः-

कपालमेव निर्मलं शोभमानं च शिरोलङ्कारसाधनमभूत् । गजचर्मस्यैव गोरोचनादिलिखितहंसमिथुनसनाथपर्यन्तं पटांशुकत्वं चाभूदिति भावः ।

**भाषा**—भस्म ही श्वेत अङ्गराग हुआ, कपाल ही शिरोभूषण बना, गजचर्म को ही शङ्कर ने गोरोचनचिह्नित वस्त्र बनाया ।

महेश्वरस्य ललाटलोचनमेव हरितालतिलकं सञ्जातमित्याह—

**शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टाऽमलपिङ्गतारम् ।**
**सांनिध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥ ३३ ॥**

**भालास्थि शोभित कपिश तारक शम्भु का जो है नयन ।**
**हरि ताल मय वह ही तिलक शुचि बन गया शोभा सदन ॥**

**अन्वय**.—शङ्खान्तरद्योति अन्तर्निविष्टाऽमलपिङ्गतारं यत् विलोचनं, तत् । एव हरितालमय्याः तिलकक्रियायाः सानिध्यपक्षे जातम् ।

**व्याख्या**—शङ्खान्तरद्योति = भालाऽस्थिमध्यशोभि, अन्तर्निविष्टाऽमलपिङ्गतारम् = मध्यगतनिर्मलपिशङ्गकनीनिकं, यत्, विलोचनं=तृतीयनेत्रं, तत् एव= तृतीयलोचनम् एव, हरितालमय्याः=हरितालप्रचुरायाः, तिलकक्रियायाः=तिलकरचनायाः, सानिध्यपक्षे = सामीप्यसाध्ये, स्थानापन्नमित्यर्थः । जातं=सञ्जातम् ।

**व्युत्पत्तिः**—शङ्खान्तरद्योति=शङ्खयोरन्तरं शङ्खान्तरं, "शङ्खो निधौ ललाटास्थ्नि" इत्यमरः । शङ्खान्तरे द्योतते तच्छीलं शङ्खान्तरद्योति । णिनिप्रत्ययः । अन्तर्निविष्टाऽमलपिङ्गतारम् = अविद्यमानं मलं यस्याः सा अमला । अन्तर्निविष्टा अमला पिङ्गा तारा यस्य तत् अन्तर्निविष्टामलपिङ्गतारं, "तारकाऽक्ष्णः कनीनिका" इत्यमरः । विलोचन=विशिष्टं लोचनं विलोचनं, गतिसमासः । हरितालमय्याः= प्रचुरं हरितालम् अस्ति अस्या सा हरितालमयी, तस्याः हरितालमय्याः, "तत्प्रकृतवचने मयट्" इति मयट्प्रत्ययः, टित्वान्ङीप् । तिलकक्रियायाः=तिलकस्य क्रिया तिलकक्रिया, तस्याः तिलकक्रियायाः, सानिध्यपक्षे=सनिधिः एव सानिध्यं= सामीप्यं, स्वाऽर्थे ष्यञ् । सानिध्यस्य पक्षः=साध्यः, सानिध्यपक्षः, तस्मिन् सानिध्यपक्षे, "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति यादवः । अत्रापि परिणामाऽलङ्कारः ।

**भावार्थः**—ललाटमध्यदीप्यमानमभ्यन्तरस्थितनिर्मलपीतकनीनिकं हरस्य तृतीयलोचनमेव हरितालरचिततिलकस्थानापन्नमभूदिति भावः ।

**भाषा**—ललाट में स्थित, दीप्यमान, पीतकनीनिका से युक्त, शङ्कर का

तीसरा लोचन ही हरिताल-रचित तिलक बन गया ।

भुजगानामेव हारकाञ्चीकटकादिभावप्राप्तिमाह—

**यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।**
**शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥**

भूषण पहनने के लिये जो उचित स्थान रुचिर रहा ।
अहिने लिया कर प्राप्त पर फण रत्न पहले सा रहा ॥

**अन्वयः**—यथाप्रदेशम् आभरणान्तरत्व करिष्यता भुजगेश्वराणा शरीरमात्र विकृतिं प्रपेदे । फणरत्नशोभाः तथा एव तस्थुः ।

**व्याख्या**—यथाप्रदेशं = यथास्थानम्, स्वेषु स्वेषु प्रदेशेष्वित्यर्थः । आभरणान्तरत्वं=भूषणान्तरत्वं, हारकाञ्चीकटकादिभावमित्यर्थः । करिष्यता = सम्पादयिष्यता, भुजगेश्वराणा = वासुकिप्रभृतीना, शरीरमात्र=देह एव, विकृतिं = विकारं, हारादिभावमित्यर्थः । प्रपेदे=प्राप । फणरत्नशोभाः=स्फटामणिकान्तयः, तथा एव = तेन प्रकारेण एव, तस्थुः = स्थितवत्यः, विकारं न प्रापुरित्यर्थः ।

**व्युत्पत्तिः**—यथाप्रदेशं = प्रदेशान् = प्रकोष्ठादीन्, अनतिक्रम्य यथाप्रदेशम्, आभरणान्तरत्वम् = अन्यानि आभरणानि आभरणान्तराणि, तेषा भावः आभरणान्तरत्वं, तत् । करिष्यता = करिष्यन्तीति करिष्यन्तः, तेषा करिष्यता, "लृटः सद्वा" इति शतृप्रत्ययः । भुजगेश्वराणा=भुजगानाम् ईश्वराः भुजगेश्वराः, तेषा भुजगेश्वराणा । "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः । शरीरमात्रं=शरीरम् एव शरीरमात्र, "मयूरव्यंसकादयश्च" इति समासः । फणरत्नशोभाः = फणाना रत्नानि फणरत्नानि, "स्फटाया तु फणा द्वयोः" इत्यमरः । फणरत्नाना शोभाः फणरत्नशोभाः ।

**भावार्थः**—स्वेषु स्वेषु प्रदेशेषु तत्तत्स्थानोचितकङ्कणादिभूषणविशेषत्व सम्पादयिष्यता वासुकिप्रभृतीना सर्पाणा शरीरमेव रूपान्तर प्रापत् । फणास्थितरत्नाना शोभा तु पूर्ववदेव समतिष्ठदिति भावः ।

**भाषा**—यथा स्थानों में सर्प ही उचित भूषण हो गये, विशेषता यह थी कि उन के फणों के रत्नों की कान्ति पहले ही की तरह चमकती थी ।

चूडामणिस्थाने निहितस्य चन्द्रस्य तु स्वरूपमात्रेऽपि विकारो न सञ्जात इत्याह—

**दिवाऽपि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।**
**चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥**

कर कान्ति करते प्रकट दिन में भी कलङ्क रहित शशी ।
थे मुकुट चूड़ामणि गये बन अधिक कान्त हुए वशी ॥

**अन्वयः**—दिवा अपि निष्ठ्यूतमरीचिभासा बाल्यात् अनाविष्कृतलाञ्छनेन चन्द्रेण नित्य प्रतिभिन्नमौलेः हरस्य चूडामणेः ग्रहणं किम् ? ।

**व्याख्या**—दिवा अपि=दिने अपि, निष्ठ्यूतमरीचिभासा = उद्गीर्णकिरण-कान्तिना, बाल्यात्=अल्पशरीरत्वात्, कलामात्रत्वादित्यर्थः । अनाविष्कृतला-ञ्छनेन=अप्रकटितकलङ्केन, अदृश्यमानकलङ्केनेत्यर्थः । चन्द्रेण=चन्द्रमसा, नित्य= सर्वदा, प्रतिभिन्नमौलेः = सन्नतमुकुटस्य, हरस्य = शिवस्य, चूडामणेः = शिरो-मणेः, ग्रहणं = स्वीकार, कि=किमर्थम् । निष्प्रयोजनमित्यर्थः ।

**व्युत्पत्तिः**—निष्ठ्यूतमरीचिभासा = मरीचीना भासः मरीचिभासः, "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधिति. स्त्रियाम्" इत्यमर. । निष्ठ्यूताः मरीचिभासः यस्य स निष्ठ्यूतमरीचिभाः, तेन निष्ठ्यूतमरीचिभासा । बाल्यात् = बालस्य भावः बाल्य, तस्मात् बाल्यात् । अनाविष्कृतलाञ्छनेन=न आविष्कृतम् अनावि-ष्कृत, तत् लाञ्छन यस्य सः अनाविष्कृतलाञ्छनः, तेन अनाविष्कृतलाञ्छनेन । "कलङ्काऽङ्कौ लाञ्छनं च" इत्यमरः । प्रतिभिन्नमौलेः=प्रतिभिन्नः मौलिः यस्य स प्रतिभिन्नमौलिः, तस्य प्रतिभिन्नमौलेः । चूडामणे. = चूडाया मणि चूडामणिः, तस्य चूडामणेः । अत्र चन्द्रचूडामणेः साधारणचूडामणिभ्यो वैशिष्ट्यप्रतिपाद-नात् व्यतिरेकाऽलङ्कारः । तथा चोक्तमप्पय्यदीक्षितेन —

"व्यतिरेको विशेषश्चेदुपनामोपमेययोः ॥" इति ।

**भावार्थः**—अहन्यप्युद्गीर्णकिरणकान्तिना कलामात्रत्वाददृश्यमानकलङ्केन बालचन्द्रेण सर्वदा सन्नतमुकुटस्य हरस्य चूडामणिधारण निष्प्रयोजनमेवेति भावः ।

**भाषा**—दिन में भी विशद किरणों से युक्त, एक कलात्मक होने से निष्कल-ङ्कचन्द्र ही चूडामणि के स्थान पर होगया, अन्य चूडामणि की आवश्यकता ही नहीं रही ।

इत्थ कृतनैपथ्यस्य महेश्वरस्य दर्पणावलोकनप्रकारमाह—

**इत्यद्भुतैकप्रभवः प्रभावात्प्रसिद्धनेपथ्यविधेर्विधाता ।**
**आत्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥**

आश्चर्य-मय निज वेश रचना की उन्होंने हर्ष में ।
देखी सुछवि आसन्न-गण-उपनीत असि-आदर्श में ॥

**अन्वयः**—इति प्रभावात् प्रसिद्धनेपथ्यविधेः विधाता अद्भुतैकप्रभवः सः आसन्नगणोपनीते खड्गे निषक्तप्रतिमम् आत्मान ददर्श ॥

**व्याख्या**—इति = इत्थं, प्रभावात् = सामर्थ्यात्, प्रसिद्धनेपथ्यविधेः = सम्पन्नवेषविधानस्य, विधाता=निर्माता, अत एव—अद्भुतैकप्रभवः = विस्मयैकोत्पत्तिहेतुः, सः=शिवः, आसन्नगणोपनीते=सन्निहितप्रमथगणाऽऽनीते, खड्गे = असौ, निषक्तप्रतिमं = संक्रान्तप्रतिबिम्बम, आत्मान=स्वं, ददर्श = दृष्टवान् । वीरपुरुषाणामेष आचारः । खड्ग एव दर्पणत्वमुपगत इति वा ।

**व्युत्पत्तिः**—प्रभावात्=प्रकृष्टो भावः प्रभावः, तस्मात् प्रभावात्, प्रसिद्धनेपथ्यविधेः-नेपथ्यस्य विधिः नेपथ्यविधिः, प्रसिद्धश्चाऽसौ नेपथ्यविधिः प्रसिद्धनेपथ्यविधिः, तस्य प्रसिद्धनैपथ्यविधेः । अद्भुतैकप्रभवः=प्रभवति अस्मादिति प्रभवः, "ऋदोरप्" इत्यप्प्रत्ययः । एकश्चाऽसौ प्रभवः एकप्रभवः, "एके मुख्याऽन्यकेवलाः" इत्यमरः । अद्भुतस्य एकप्रभवः अद्भुतैकप्रभवः । "विस्मयोऽद्भुतमाश्चर्यं चित्रम्" इत्यमरः । आसन्नगणोपनीते=आसन्नश्चासौ गणः आसन्नगणः=पार्श्वस्थवर्गः, प्रमथगण इत्यर्थः । तेन उपनीतः आसन्नगणोपनीतः, तस्मिन् आसन्नगणोपनीते । निषक्तप्रतिमं=निषक्ता प्रतिमा यस्य स निषक्तप्रतिमः, तं निषक्तप्रतिमं, "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया" इत्यमरः ।

**भावार्थः**—इत्थं स्वसामर्थ्यात् लोकप्रसिद्धवेषविधानस्य निर्माता विस्मयरसप्रधानो हरः पार्श्वस्थपरिचारकेन भूतगणेन समीपं प्रापिते खड्गे प्रतिबिम्बित स्वशरीर वीरपुरुषोचितमपश्यदिति भावः ।

**भाषा**—इस तरह अपनी शक्ति से लौकिक अलङ्कार के निर्माता अद्भुत रस-प्रधान शङ्कर ने, परिचारक गणों के समीपस्थ खड्ग में प्रतिबिम्बित अपने शरीर को वीर पुरुषोचित देखा ।

अथ महेश्वरस्य हिमवत्पुरप्रस्थानं वर्णयितुमुपक्रमते—

**स गोपतिं नन्दिभुजाऽवलम्बी शार्दूलचर्माऽन्तरितोरुपृष्ठम् ।**
**तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥**

हरि-चर्म-वेष्ठित पीठ मय वृषभ विशाल शरीर पर ।
कैलास के सम चढ़ गये शिव कर सहारा नन्दि कर ॥

**अन्वयः**—स नन्दिभुजाऽवलम्बी सन् शार्दूलचर्माऽन्तरितोरुपृष्ठं गोपतिं "तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणं कैलासम् इव" आरुह्य प्रतस्थे ।

**व्याख्या**—सः = शिवः, नन्दिभुजाऽवलम्बी=नन्दिकेश्वरबाहुलम्बनः सन्, शार्दूलचर्माऽन्तरितोरुपृष्ठं=व्याघ्राऽजिनाऽऽच्छादितविशालपृष्ठं, गोपतिं=वृषभं, तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणं=तद्भक्तिसङ्कोचिताऽऽयतप्रमाणं, कैलासम् इव=कैलास-पर्वतम् इव, आरुह्य = आरोहणं कृत्वा, प्रतस्थे = गन्तुमुदयुङ्क्त ।

**व्युत्पत्तिः**—नन्दिभुजाऽवलम्बी = नन्दिनः भुजः नन्दिभुजः "शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः" इत्यमरः । नन्दिभुजमवलम्बते इति नन्दिभु-जावलम्बी, णिनिप्रत्ययः । शार्दूलचर्माऽन्तरितोरुपृष्ठं=शार्दूलस्य चर्म शार्दूल-चर्म, "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः । शार्दूलचर्मणा अन्तरितम्, इति शार्दू-लचर्माऽन्तरितं, तत् उरु पृष्ठं यस्य सः शार्दूलचर्माऽन्तरितोरुपृष्ठः, तं शार्दूलच-र्मान्तरितोरुपृष्ठं, गोपतिं = गवां पतिः गोपतिः, तं गोपतिं, तद्भक्तिसङ्क्षिप्तबृह-त्प्रमाणं=तस्मिन्भक्तिः तद्भक्तिः, तया सङ्क्षिप्तं, तद्भक्तिसङ्क्षिप्तं, तत् बृहत् प्रमाणं येन सः तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणः, तं तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणं । प्रतस्थे="सम-वप्रविभ्यः स्थः" इति आत्मनेपदम् । अत्रोत्प्रेक्षाऽलङ्कारः । धवलवर्णत्वं महाका-यत्वं महेश्वराधिष्ठितत्वं चोत्प्रेक्षाबीजम् ।

**भावार्थः**—स हरो नन्दिकेश्वरभुजावलम्बनः सन् सिंहाजिनाच्छादितविशा-लपृष्ठभागं वृषभं महेश्वरभक्त्या सङ्कोचितविस्तृतप्रमाणं कैलासपर्वतमिवाऽधिरुह्य जगामेति भावः ।

**भाषा**—नन्दिकेश्वर की भुजाओं के सहारे से भगवान शङ्कर सिंह के चर्म से आच्छादित, "भक्ति से खलाये हुए कैलास की तरह", वृषभ की विशाल पीठ पर चढ कर चले ।

अथ महेश्वरपरिजनानामपि प्रस्थानं वर्णयति-श्लोकद्वयेन । तत्र ब्रह्माण्यादी-नां सप्तमातॄणां प्रस्थानमाह—

**तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।**
**मुखैः प्रभामण्डलरेणुगौरैः पद्माऽऽकरं चक्रुरिवाऽन्तरिक्षम् ॥ ३८ ॥**

पश्चात मातायें चलीं वाहन चपल कुण्डल सुघर ।
छवि रेणु लोहित वदन से नभ था सरोजाकर प्रवर ॥

**अन्वयः**—तम् अनुव्रजन्त्यः स्ववाहनक्षोभचलाऽवतंसाः मातरः प्रभाम-ण्डलरेणुगौरैः मुखैः अन्तरिक्षं पद्माकरं चक्रुः इव ।

**व्याख्या**—तं=शिवम्, अनुव्रजन्त्यः = अनुगच्छन्त्यः, स्ववाहनक्षोभच-

लाऽवतंसाः=आत्मवाहनचलनचञ्चलकुण्डलाः, मातरः=ब्रह्माण्याद्याः सप्तमातृकाः, प्रभामण्डलरेणुगौरैः=दीप्तिमण्डलपरागाऽरुणैः, मुखैः=आननैः, अन्तरिक्षम् = आकाश, पद्माऽऽकरं=कमलाऽऽकरं, चक्रुः = अकुर्वन् , इव ।

**व्युत्पत्तिः**—अनुव्रजन्त्यः=अनु व्रजन्तीति अनुव्रजन्त्यः, शतृप्रत्ययः। स्ववाहनक्षोभचलाऽवतंसाः = स्वस्य वाहन – हंससिंहवृषमयूरादि, स्ववाहन, तस्य क्षोभः=चलन, स्ववाहनक्षोभः, तेन चलौ अवतंसौ यासा ताः स्ववाहनक्षोभचलावतंसाः, प्रभामण्डलरेणुगौरैः=प्रभाणा मण्डलानि प्रभामण्डलानि, "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः। प्रभामण्डलानि एव रेणवः प्रभामण्डलरेणः, तैः गौराणि प्रभामण्डलरेणुगौराणि, तैः प्रभामण्डलरेणुगौरैः। "गौरोऽरुणे सिते पीते" इति यादवः। अन्तरिक्ष = "नभोऽन्तरिक्ष गगनम्" इत्यमरः। पद्माऽऽकरं=पद्मानाम् आकरः पद्माकरः, तं पद्माकरं, "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इति "खनि स्त्रियामाकरः स्यात्" इति चाऽमरः। अत्राप्युत्प्रेक्षाऽलङ्कारः ।

**भावार्थः**—प्रस्थितं तं हरमनुगच्छन्त्यो निजवाहनभूतहंसवृषमयूरादीनां गमनसम्भवेन कम्पेन चञ्चलकुण्डला ब्रह्माण्याद्याः सप्त मातरः स्वकान्तिपुञ्जचूर्णधवलैरात्मीयैर्वदनैर्गगनं कमलप्रचुरं सर इव चक्रुरिति भावः।

**भाषा**—शङ्कर के पीछे चलने वाली माताओं ने अपने वाहनों के चलने से हिलते हुए कर्ण भूषणों से शोभित अत्यन्त सुन्दर मुखों से आकाश को अनेक कमलों से युक्त तालाब की तरह बना दिया।

अथ भद्रकाल्याः प्रस्थानोद्योगमाह—

**तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे।**
**बलाकिनी नीलपयोदराजी दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥**

भूषण कपाल सुवर्ण सम छवि युक्त काली भी चली।
बिजली-बलाका-मय जलद की पंक्ति सम अतिशय भली ॥

**अन्वयः**—कनकप्रभाणां तासां पश्चात् कपालाऽऽभरणा काली च "बलाकिनी दूरं पुरःक्षिप्तशतह्रदा नीलपयोदराजिः इव" चकासे।

**व्याख्या**—कनकप्रभाणां=सुवर्णवर्णानां, तासां=मातृणां, पश्चात्=पृष्ठतः, कपालाऽऽभरणा=कर्परभूषणा, श्वेतकर्पराऽलङ्कारेत्यर्थः। काली च=भद्रकाली च बलाकिनी = बलाकावती, दूरं = विप्रकृष्टक, दूरभागे इत्यर्थः । पुरःक्षिप्त

शतह्रदा = अग्रप्रसारितविद्युत्, नीलपयोदराजिः इव = कृष्णमेघपङ्क्तिः इव, चकासे = शुशुभे ।

व्युत्पत्तिः—कनकप्रभाणा=कनकस्य प्रभा इव प्रभा यासा ताः कनकप्रभाः, तासा कनकप्रभाणा । कपालाऽऽभरणा=कपाला आभरणानि यस्याः सा कपालाभरणा, "स्यात्कर्परः कपालोऽस्त्री" इत्यमरः । बलाकिनी=बलाकाः सन्ति यस्याः सा बलाकिनी, "व्रीह्यादिभ्यश्च" इति इनिप्रत्ययः, तदन्तात् स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् । पुरःक्षिप्तशतह्रदा=पुरःक्षिप्ताः शतह्रदाः यस्या सा पुरःक्षिप्तशतह्रदा, "शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा" इत्यमरः । नीलपयोदराजिः=पयासि ददतीति पयोदाः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः । नीलाश्च ते पयोदाः नीलपयोदाः, तेषा राजिः नीलपयोदराजिः ।

अत्र कालीनीलपयोदराज्योः कालीशब्दस्याऽन्वर्थत्वाद् वर्णसाम्यम् । शिरःकपालाना धवलत्वाद् बलाकासाम्यम् । सुवर्णवर्णाना मातॄणा विद्युत्साम्यम् । काल्याः पश्चाद्गतत्वात् पुरःक्षिप्तशतह्रदमेघसाम्यम् । मातॄणामत्यन्तसामीप्याभावाद्दूरपदप्रयोगोपपत्तिः । तथाचोपमाप्रतिभोत्पत्तिहेतुकोत्प्रेक्षाऽलङ्कारः ।

भावार्थः—सुवर्णकान्तीना तासा मातॄणा पृष्ठभागे श्वेतकपालालङ्करा भद्रकाली धवलबलाकावती दूर पुरोभागप्रसारितसौदामनी नीलमेघपङ्क्तिरिव शुशुभे इति भावः ।

भाषा—कनक-वर्ण-वाली उन माताओं के पीछे चलने वाली श्वेत कपाल के अलङ्कार से युक्त भद्रकाली, बलाकामयी सुदूर फैली हुई बिजली से युक्त नील मेघ पङ्क्ति के समान शोभित हुई ।

अथ वाद्यघोषप्रकारमाह—

**ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः ।**
**विमानशृङ्गाण्यवगाहमानः शशंस सेवाऽवसरं सुरेभ्यः ॥ ४० ॥**

गण वाद्य मङ्गल के बजाते चढ़ पड़े उत्साह से ।
सुर समुद सेवा के लिये रव सुन विमानों में लसे ॥

अन्वयः—ततः शूलभृतः पुरोगैः गणैः उदीरितः मङ्गलतूर्यघोषः विमानशृङ्गाणि अवगाहमानः सन् सुरेभ्यः सेवाऽवसर शशंस ।

व्याख्या—ततः = प्रस्थानानन्तर, शूलभृतः=शूलिनः, शिवस्येत्यर्थः । पुरोगैः=अग्रेसरैः, गणैः = प्रमथैः, उदीरितः = उत्पादितः, मङ्गलतूर्यघोषः=मङ्ग-

लवाद्यध्वनिः, विमानशृङ्गाणि=व्योमयानशिखराणि, अवगाहमानः=प्रविशन् सन्, सुरेभ्यः=देवेभ्यः, सेवाऽवसरं=सेवनकालं, शशंस=सूचयामास ।

**व्युत्पत्तिः**—शूलभृतः=शूलं बिभर्तीति शूलभृत्, तस्य शूलभृतः, पुरोगैः=पुरो गच्छन्तीति पुरोगाः, तैः पुरोगैः, "अन्यत्रापि दृश्यते" इति गमेर्ड-प्रत्ययः । मङ्गलतूर्यघोषः=मङ्गलस्य तूर्याणि मङ्गलतूर्याणि, तेषां घोषः मङ्गलतूर्य-घोषः । विमानशृङ्गाणि=विमानानां शृङ्गाणि विमानशृङ्गाणि, तानि, "व्योमयान विमानोऽस्त्री" इत्यमरः । अवगाहमानः=अवगाहते इति अवगाहमानः, शान-च्प्रत्ययः । सुरेभ्यः = क्रियायोगे चतुर्थी । सेवाऽवसरं = सेवाया अवसरः सेवाऽ-वसरस्तं सेवावसरम् । तुर्यश्रवणानन्तरं देवानामागमनदर्शनाच्छशंसेत्युत्प्रेक्षा-गर्भो निर्देशः ।

**भावार्थः**—प्रस्थानानन्तरं महेश्वरस्याग्रेसरैः प्रमथादिगणैरुत्पादितो वैवा-हिकवाद्यविशेषनादो देवयानशिरोगृहमापूरयन् देवेभ्यः सेवासमयं निवेदयामा-सेति भावः ।

**भाषा**—प्रस्थान के बाद शङ्कर के आगे गणों द्वारा बजाये गये मङ्गल सूचक बाजों की ध्वनि ने विमानस्थ देवताओं को सेवा का अवसर बतलाया ।

ज्ञापितावसराणां देवानां हरोपस्थानप्रकारमाह—

**उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निमितमातपत्रम् ।**
**स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाऽङ्गे ॥ ४१ ॥**

**रवि ने लिया था विश्वकर्मा रचित छत्र अमित प्रवर ।**
**पट-निकट शिर से अमल बहती जाह्नवी मय सम-सुघर ॥**

**अन्वयः**—तस्य सहस्ररश्मिः त्वष्ट्रा निर्मितं नवम् आतपत्रम् उपाददे, तद्दुकूलात् अविदूरमौलिः सः उत्तमाङ्गे पतद्गङ्गः इव बभौ ।

**व्याख्या**—तस्य = हरस्य, सहस्ररश्मिः = सहस्राऽंशुः, सूर्य इत्यर्थः । त्वष्ट्रा = विश्वकर्मणा, निर्मितं = रचितं, नवं = नूतनम्, आतपत्रं = सितच्छत्रम्, उपाददे = जग्राह, तद्दुकूलात्=छत्रपट्टाऽंशुकात्, अविदूरमौलिः=आसन्नशिराः, सः=हरः, उत्तमाऽङ्गे=शिरसि, पतद्गङ्गः इव=पतद्भागीरथ इव, बभौ = शुशुभे ॥

**व्युत्पत्तिः**—सहस्ररश्मिः = सहस्रं रश्मयः यस्य सः सहस्ररश्मिः = "भानुर्हंसः सहस्राऽंशुस्तपनः सविता रविः" इत्यमरः । आतपत्रम् = आतपात् त्रायते इति आतपत्रं, तत्, आतपोपपदपूर्वकात् "त्रैङ् पालने" इति धातोः "आतोऽनु

पसर्गे कः" इति कः, "आदेच उपदेशेऽशिति" इत्यात्वम् । तद्दुकूलात्=तस्य दुकूलं तद्दुकूलं तस्मात् तद्दुकूलात् । अविदूरमौलिः = न विदूरम् अविदूरं, अविदूरे मौलिर्यस्य सः अविदूरमौलिः । उत्तमाऽङ्गे=उत्तमं च तत् अङ्गम् उत्तमाऽङ्गम्, तस्मिन् उत्तमाङ्गे, "उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । पतद्गङ्गः=पतन्ती गङ्गा यस्य सः पतद्गङ्गः । अत्र पतद्गङ्गत्वोत्प्रेक्षया पूर्वं गङ्गापतनदर्शिना दिव्यजनानां तादृशद्दुकूलदर्शने पूर्वदृष्टगङ्गाप्रपतनस्मरणं द्योत्यते ।

**भावार्थः**—सूर्यो हरस्य विवाहप्रस्थानार्थे विश्वकर्मणा तदानीमेव निर्मितं सितच्छत्रं जग्राह । तस्य च्छत्रस्य प्रान्तलम्बिनो धवलदुकूलात् समीपशिरस्कः स हरः शिरसि स्रस्तभागीरथीप्रवाह इव शुशुभे इति भावः ।

**भाषा**—सूर्य ने विश्वकर्मा से बनाया गया विवाहार्थ शङ्कर का नूतन छत्र धारण किया, शिर के समीप छत्र के लटकते हुए पट से मालूम होता था मानो गङ्गा ही गिर रही हों ।

गङ्गायमुन्योः सेवाप्रकारमाह—

**मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।**
**समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥**

शुचि मूर्त-गङ्गा जाह्नवी शिव के लिये चामर झलीं ।
सरिता-प्रवाह-अभाव में भी, हंस-पंक्ति मयी भलीं ॥

**अन्वयः**—गङ्गायमुने च तदानीं मूर्ते सचामरे समुद्रगारूपविपर्यये अपि सहंसपाते इव लक्ष्यमाणे देवम् असेविषाताम् ।

**व्याख्या**—गङ्गायमुने च = भागीरथीकालिन्द्यौ च, तदानीं=विवाहप्रस्थानाऽवसरे, मूर्ते=शरीरिण्यौ, गृहीतदेवस्त्रीशरीरे भूत्वेत्यर्थः । सचामरे=चामरसहिते, समुद्रगारूपविपर्यये अपि=नदीस्वरूपव्यत्यासे अपि, सहंसपाते इव=सचक्राङ्गचारे इव, लक्ष्यमाणे=दृश्यमाने, जनैरिति शेषः । देवं=शिवम्, असेविषाताम्=अभजताम् ।

**व्युत्पत्तिः**—गङ्गायमुने=गङ्गा च यमुना च गङ्गायमुने, "गङ्गा भागीरथी जह्नुतनया सुरनिम्नगा" इति "कालिन्दी सूर्यतनया यमुना शमनस्वसा" इति चाऽमरः । सचामरे = चामरेण सहिते सचामरे, समुद्रगारूपविपर्यये = समुद्रं गच्छतीति समुद्रगा, डप्रत्ययः । समुद्रगाया रूपं समुद्रगारूपं, तस्य विपर्ययः समुद्रगारूपविपर्ययः, तस्मिन् समुद्रगारूपविपर्यये । सहंसपाते=पतनं पातः, हंसस्य

पातः हंसपातः, पातः=उत्पतननिपतनादिरूपो व्यापारः । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । अत्र द्विवचनत्वात् "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञा. ततः "प्लुतप्रगृह्या अचि नित्यम्" इति प्रकृतिभावान्न सन्धिः । लक्ष्यमाणे = लक्ष्येते इति लक्ष्यमाणे, कर्मणि शानच् । असेविषाताम्=सेवतेर्लङ् । अत्राप्युत्प्रेक्षालङ्कारः ।

**भावार्थः**—महेश्वरस्य विवाहप्रस्थानसमये, गङ्गायमुने नदीरूपमपहाय सुरसुन्दरीरूपमुपादाय च पार्श्वद्वये स्थित्वा, तयोः समीपे पुनःपुनर्निपततोरुत्पततोश्च सितव्यजनयोः साक्षात्कारे, लोकैः सहसपातत्वसम्भावनया दृश्यमाने सत्यौ चामरव्यजनवीजनैः सेवा चक्रतुरिति भावः ।

**भाषा**—उस समय गंगा और यमुना ने नदी का रूप छोड़ सुन्दर शरीर धारण कर, हंस सहित विलसित होती हुई, शंकर को चॅवर डुलाने काम किया।

विष्णुब्रह्मणोरपि महेश्वरविवाहोत्सवप्रस्थानं सेवाप्रकारश्चाह—

**तमभ्यगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।**
**जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥४३॥**

विधि-विष्णु भी जयकार करते शम्भु सन्मुख आ गये ।
हवि से बढ़ाते वह्नि के सम वे समुद आये नये ॥

**अन्वयः**—प्रथमः विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् तम् अभ्यगच्छत् । जय इति वाचा अस्य महिमानं, हविषा वह्निम् इव, सवर्धयन्तौ तौ अवर्तेताम् इति शेषः ।

**व्याख्या**—प्रथमः=आद्यः, विधाता = प्रजापतिः, ब्रह्मा इत्यर्थः । मरीच्यादीना सर्गशेषविधायित्वाद् ब्रह्मणो विधातृषु प्राथम्यम् । श्रीवत्सलक्ष्मा = श्रीवत्साऽङ्कः, पुरुषश्च = विष्णुश्च, साक्षात् = स्वयं, स्वेनैव रूपेणेत्यर्थः । तं = महेश्वरम्, अभ्यगच्छत् = सम्मुखमाजगाम । जय=वर्धस्व, इति = इत्थं, वाचा = वाण्या, जयशब्देनेत्यर्थः । अस्य=हरस्य, महिमानं=नैसर्गिकं महत्व, हविषा = आज्येन, वह्निम् इव = अग्निम् इव सवर्धयन्तौ = वृद्धिं गमयन्तौ, तौ=ब्रह्माविष्णू, अवर्तेताम् = अविद्येताम् , इति शेषोऽर्थः ।

**व्युत्पत्तिः**—श्रीवत्सलक्ष्मा=श्रीवत्सः लक्ष्म यस्य सः श्रीवत्सलक्ष्मा, "श्रीवत्सो लाञ्छनं स्मृतम्" इत्यमरः । वाचा = "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः । महिमानं=महतो भावः महिमा, त महिमानं संवर्धयन्तौ=

सवर्धयतः इति सवर्धयन्तौ । शतृप्रत्ययः ।

अत्र सवर्धयन्ताविति द्विवचनप्रयोगात् अभ्यगच्छदित्येकवचनप्रयोगो न युज्यते, तथा च वाक्यार्थभेदेन व्याख्यान योजनीयम् । "सवर्धयन्त्या" इति तृतीयान्तपाठे तु "अस्य महिमान सवर्धयन्त्या वाचा" इत्यन्वयेन न काऽप्यनुपपत्तिः ।

**भावार्थः**—ब्रह्मदेवो नारायणश्चोभौ जयेत्यादिरूपया स्तुतिवाचा महेश्वरस्य नैसर्गिक महत्वमाज्येन पावकमिवसंवर्धयन्तौ स्वेनैव रूपेण हरमभिजग्मतुरिति भावः।

**भाषा**—शङ्कर जी के चलने के समय सम्मुख आकर साक्षात् ब्रह्मा और विष्णु ने जय जय कहकर उनके स्वाभाविक महत्व को "घीसे आग के समान" बढ़ाया ।

अथ हरिहरहिरण्यगर्भानामभेदप्रतिपादनमुखेन प्रधाननायकस्य महेश्वरस्य परमात्मस्वरूपं प्रदर्शयन् परमोत्कृष्टत्वमाह—

**एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमाऽवरत्वम् ।**
**विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ॥४४॥**

वह एक, तीन हुए, न उनमें वर अवर कोई रहा ।
उनमें परस्पर एक पर का आद्य-भाव बना रहा ॥

**अन्वयः**—सा एका एव मूर्तिः त्रिधा बिभिदे । एषा प्रथमाऽवरत्वं सामान्यम् । कदाचित् हरः विष्णोः आद्यः, कदाचित् हरिः तस्य आद्यः, कदाचित् वेधाः तयोः आद्यः, कदाचित् तौ अपि धातु' आद्यौ ।

**व्याख्या**—सा=प्रसिद्धा, एका एव=एकका एव, मूर्तिः=स्वरूपं, त्रिधा=प्रकारत्रयेण, सृष्टिस्थितिप्रलयकार्यापेक्षया, ब्रह्मविष्णुशिवाऽऽत्मकत्वेनेत्यर्थः । बिभिदे=भिन्नाऽभूत् । औपाधिकोऽय भेदो नतु वास्तविक इत्यर्थः । अत एव, एषा=हरिहरहिरण्यगर्भाणा, प्रथमाऽवरत्व=ज्येष्ठकनिष्ठभावः, सामान्य=समानम् , कल्पनयैव सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः । कदाचित्=जातुचित्, हरः=शिवः, विष्णोः=नारायणस्य, आद्यः=प्रथमः, उत्कृष्ट इत्यर्थः । एवमन्यत्रापि बोध्यम् । कदाचित् = जातुचित् , हरिः = विष्णुः, तस्य = हरस्य आद्यः = प्रथमः । कदाचित्=जातुचित् , वेधाः=ब्रह्मा, तयोः = हरिहरयोः, आद्यः = प्रथमः । कदाचित्=जातुचित् , तौ अपि = हरिहरौ अपि, धातुः = ब्रह्मणः, आद्यौ = प्रथमौ ।

**व्युत्पत्तिः**—त्रिधा = त्रिभिः प्रकारैः इति त्रिधा, "सख्याया विधाऽर्थे धा" इति धाप्रत्ययः । प्रथमाऽवरत्व=प्रथमश्च अवरश्च प्रथमाऽवरौ, तयोर्भावः प्रथमा-

वरत्वं । सामान्यं = समानाना भावः सामान्यम् । "सामान्यं तु समानत्वे समानेऽपि क्वचिद् भवेत्" इति कौशिकः । आद्यः = आदौ भवः आद्यः । अत्राद्यावित्ययं शब्दो विभक्तिव्यत्ययेन पूर्ववाक्यत्रये योजनीयः ।

**भावार्थः**—सा चैका परब्रह्मस्वरूपा शिवमूर्तिः सृष्टिस्थितिप्रलयकार्यापेक्षया ब्रह्मविष्णुहररूपेण त्रिधा भिन्नाऽभूत् । अतएवैषा हरिहरहिरण्यगर्भाणा ज्येष्ठत्वं कनिष्ठत्व चेच्छाधीनं साधारणमासीत् । तथा हि—कदाचिद्धरेः प्रथमो हरः, कदाचित् हरस्य प्रथमो हरिः, कदाचित् हरिहरयोः प्रथमो हिरण्यगर्भः, कदाचित् हिरण्यगर्भस्य प्रथमौ हरिहरावपीति । अतस्तेषा पौर्वापर्यमनियतमिति भावः ।

**भाषा**—एक ही मूर्ति सृष्टि स्थिति और प्रलय के सम्बन्ध से ब्रह्मा विष्णु और महेश तीन भागों में विभक्त हुई हैं । इनमें कौन बड़ा है और कौन छोटा । यह कहा नहीं जा सकता ।

इन्द्रादिलोकपालाना सेवाप्रकारमाह—

**तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।**
**दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४१ ॥**

**तज विभव आये नम्र वासव दर्शनार्थ त्रिनेत्र वर ।**
**नन्दी-प्रदर्शित शम्भु का सादर प्रणाम किया सुघर ॥**

**अन्वयः**—श्रीलक्षणोत्सर्गविनीतवेषाः दृष्टिप्रदाने कृतनन्दिसज्ञाः तद्दर्शिताः पुरुहूतमुख्याः लोकपालाः प्राञ्जलयः सन्तः तं प्रणेमुः ।

**व्याख्या**—श्रीलक्षणोत्सर्गविनीतवेषाः=लक्ष्मीचिह्नपरित्यागाऽनुनीतवेषाः, दृष्टिप्रदाने = दर्शननिमित्ते, दर्शनप्रदानाऽर्थमित्यर्थः । कृतनन्दिसज्ञाः = विहितनन्दिसङ्केताः, तद्दर्शिताः=नन्दिदर्शिताः, पुरुहूतमुख्याः=इन्द्रादय , लोकपालाः= दिक्पालाः, प्राञ्जलयः = कृताऽञ्जलयः सन्तः, तं=शिव, प्रणेमुः = ववन्दिरे ।

**व्युत्पत्तिः**—श्रीलक्षणोत्सर्गविनीतवेषाः=श्रियः=राजलक्ष्याः, लक्षणानि = छत्रचामरवाहनादीनि, श्रीलक्षणानि, तेषामुत्सर्गः = त्यागः, श्रीलक्षणोत्सर्गः । विनीतः वेषः येषा ते विनीतवेषाः । श्रीलक्षणोत्सर्गेण विनीतवेषाः श्रीलक्षणोत्सर्गविनीतवेषाः । दृष्टिप्रदाने = प्रकृष्टं दान प्रदानं, दृष्टयोः प्रदानं दृष्टिप्रदान, तस्मिन् दृष्टिप्रदाने । कृतनन्दिसंज्ञाः = नन्दिनः संज्ञा नन्दिसंज्ञा, "सज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना" इत्यमरः । कृता नन्दिसज्ञा यैस्ते कृतनन्दिसज्ञाः । तद्दर्शिताः=तेन दर्शिताः तद्दर्शिताः । पुरुहूतमुख्याः = पुरुहूतः मुख्यः येषा ते पुरुहूत

मुख्याः, "वृद्धश्रवाः शुनासीरः पुरुहूत. पुरन्दरः" इत्यमरः। लोकपालाः = लोकान् पालयन्तीति लोकपालाः।

**भावार्थः**—छत्रचामराद्यैश्वर्यचिह्नत्यागेन विनीतवेषाः हरसन्दर्शनार्थं नन्दिकेश्वरं प्रति कृतप्रार्थनाः, अथ तेन नन्दिना हरदर्शन प्रापिता, महेन्द्रादयो देवाः कृताञ्जलिपुटाः सन्तस्त महेश्वर प्रणेमुरिति भावः।

**भाषा**—इन्द्रादि देवताओंने छत्र-चामरादि राज चिह्नों को छोड़, विनीत वेश से नन्दी के द्वारा दर्शन कराये गये शिव को करबद्ध प्रणाम किया।

इत्थमुपस्थितेषु सकलेषु देवेषु महेश्वरस्य तत्तज्जनोचिता प्रवृत्तिमाह—

**कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन।**
**आलोकमात्रेण सुरानशेषान्सम्भावयामास यथाप्रधानम्॥ ४६॥**

**विधि विष्णु को चल शिर गिरा से, इन्द्र को मुसुकान से।**
**आलोक से सुर अपर को, प्रमुदित किया सम्मान से॥**

**अन्वयः**—सः शतपत्रयोनिं मूर्ध्नः कम्पेन, हरिं वाचा, वृत्रहणं स्मितेन, अशेषान् सुरान् आलोकमात्रेण, यथाप्रधानं सम्भावयामास।

**व्याख्या**—स.=शिवः, शतपत्रयोनिं=ब्रह्माणं, मूर्ध्न =शिरसः, कम्पेन = चालनेन, हरिम् = विष्णु, वाचा=वाण्या, सम्भाषणेनेत्यर्थ.। वृत्रहणम् = इन्द्र, स्मितेन = मन्दहासेन, अशेषान् = सम्पूर्णान्, सुरान् देवान्, आलोकमात्रेण = दर्शनमात्रेण, यथाप्रधान = यथार्हं, सम्भावयामास = सम्भावयाम्बभूव।

**व्युत्पत्तिः**—शतपत्रयोनिं = शत पत्राणि यस्य तत् शतपत्रं, "सहस्रपत्रं कमल शतपत्र कुशेशयम्" इत्यमरः। शतपत्र = कमल, योनि. = उत्पत्तिहेतुः, यस्य सः शतपत्रयोनि, तं शतपत्रयोनिं, "धाताऽब्जयोनिर्द्रुहिणः" इत्यमरः। वृत्रहणं = वृत्र हतवान् इति वृत्रहा, त वृत्रहण, "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विप्। "वासवो वृत्रहा वृषा" इत्यमरः। आलोकमात्रेण=आलोक एव आलोकमात्र, तेन आलोकमात्रेण। यथाप्रधान = प्रधानमनतिक्रम्य यथाप्रधानम्।

**भावार्थः**—स महेश्वरः ब्रह्माणं शिरसश्चालनेन, विष्णुं सम्भाषणेन, महेन्द्रं मन्दहासेन, अवशिष्टान् देवान् दृष्टिपातमात्रेण, यथायोग्य सम्मानितवानिति भावः।

**भाषा**—महेश्वर ने शिर हिलाकर ब्रह्मा का, बोलकर विष्णु का, मन्द हास्य करके इन्द्र का, और शेष देवों को केवल देखकर, यथायोग्य सम्मान किया।

अथ सप्तर्षीणां प्राप्तिं तद्विषया सम्भावना चाह—

**तस्मै जयाऽऽशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।**
**विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥**

सप्तर्षियों ने शम्भु की जय कह विमल आशिष दिया ।
उद्वाह मे शिव ने उन्हें ऋत्विग बना आदर किया ॥

**अन्वयः**—सप्तर्षिभिः पुरस्तात् तस्मै जयाऽऽशीः ससृजे । स तान् "वितते अत्र विवाहयज्ञे यूयं मया पूर्ववृताः अध्वर्यवः" इति स्मितपूर्वम् आह ।

**व्याख्या**—सप्तर्षिभिः = कश्यपादिभिः, पुरस्तात्=अग्रे, तस्मै =शिवाय, जयाशीः—विजयाशीः, ससृजे = प्रयुक्ता । सः = हरः, तान्=सप्तर्षीन् , वितते = विस्तृते, अत्र=अस्मिन् , विवाहयज्ञे = परिणयक्रतौ, यूयं = भवन्तः, मया = शिवेन, पूर्ववृताः = प्राक्प्रार्थिताः, अध्वर्यवः = ऋत्विजः, इति=एवम् । स्मितपूर्वं = मन्दहास्यपूर्वकम् ।, आह = उवाच ।

**व्युत्पत्तिः**—सप्तर्षिभिः=सप्त च ते ऋषयः सप्तर्षयः, तैः सप्तर्षिभिः, "दिक्संख्ये संज्ञायाम्" इति समासः । जयाशीः=जयस्य आशीः जयाशीः, विवाहयज्ञे=विवाह एव यज्ञः विवाहयज्ञः, तस्मिन् विवाहयज्ञे, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः"इत्यमरः । पूर्ववृताः = पूर्वं वृताः पूर्ववृताः, "सुप्सुपा" इति समासः । स्मितपूर्वं = स्मितं पूर्वं यस्मिन्कर्मणि तद्यथा तथा स्मितपूर्वम् ।

**भावार्थः**—सप्तर्षयस्तस्मै हराय जयेत्याशीर्वादं प्रथममुदीरयामासुः । अथ स हरस्तान् सप्तर्षीन् "अस्मिन् विस्तृते विवाहयागे यूयं मया पूर्वमेव स्वीकृता ऋत्विज आस्तेति" सस्मितमुवाचेति भावः ।

**भाषा**—सप्तर्षियोंने जय कहकर आशीर्वाद दिया, तब शंकरने हँसकर उनसे कहा कि आप लोगों को इस विवाह-यज्ञ में मैने पहले ही से पुरोहित बनाया है।

अथ गन्धर्वकृतसेवाप्रतिपादनपुरस्सरं महेश्वरस्य प्रयाणं वर्णयति—

**विश्वावसुप्राग्रहरैः प्रवीणैः सङ्गीयमानत्रिपुराऽवदानः ।**
**अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराऽधिपखण्डधारी ॥ ४८ ॥**

गन्धर्व गाते थे त्रिपुर के हर विजय को रख हिया ।
चन्द्रार्ध धर शिव ने सुपथ को प्रेम से लंघन किया ॥

**अन्वयः**-विश्वावसुप्राग्रहरैः प्रवीणैः सङ्गीयमानत्रिपुराऽवदानः अध्वान्तविकारलङ्घ्यः ताराऽधिपखण्डधारी अध्वानं ततार ।

**व्याख्या**-विश्वावसुप्राग्रहरैः=विश्वावसुप्रमुखैः, प्रवीणैः=निपुणैः, प्रकृष्टवीणैर्वा, सङ्गीयमानत्रिपुराऽवदान =संस्तूयमानत्रिपुरविजयः, अध्वान्तविकारलङ्घ्यः=तमोविकाराऽनाक्रमणीयः, ताराऽधिपखण्डधारी = चन्द्रशेखरः, अध्वानं = मार्गं, ततार =अत्यगच्छत् ।

**व्युत्पत्तिः**-विश्वावसुरिति गन्धर्वाणामधीशितुः संज्ञा । विश्वावसुः प्राग्रहरः येषां ते विश्वावसुप्राग्रहराः, तैः विश्वावसुप्राग्रहरैः, "पराार्ध्याग्रप्राग्रहरप्राग्र्याऽग्र्याऽग्रीयमग्रियम्" इत्यमरः । प्रवीणैः="प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः । यद्वा-प्रकृष्टा वीणा येषां ते प्रवीणा, तैः प्रवीणैः, सगीयमानत्रिपुराऽवदानः=सङ्गीयते इति सङ्गीयमानम्, त्रयाणां पुराणां समाहारस्त्रिपुर, "तद्धिताऽर्थोत्तरपदसमाहारे च" इति द्विगुः । "पात्राद्यन्तस्य न" इति स्त्रीलिङ्गतानिषेधः । त्रिपुरस्य अवदान=पूर्ववृत्तं कर्म, विजयरूपमित्यर्थः । त्रिपुराऽवदान, सङ्गीयमानं त्रिपुराऽवदानं यस्य सः सङ्गीयमानत्रिपुरावदानः । "अवदानं कर्मवृत्तम्" इत्यमरः । अध्वान्तविकारलङ्घ्यः=ध्वान्त तमः, मोह इति यावत्, ध्वान्तस्य विकारः=रागाऽऽदिः, इति ध्वान्तविकारः, लङ्घितुं योग्यो लङ्घ्यः । ध्वान्तविकारेण लङ्घ्यः ध्वान्तविकारलङ्घ्यः, न ध्वान्तविकारलङ्घ्यः अध्वान्तविकारलङ्घ्यः ताराऽधिपखण्डधारी = ताराणामधिपः ताराऽधिपः, तस्य खण्डं ताराधिपखण्डं तद्धारयतीति तच्छीलः ताराऽधिपखण्डधारी ।

**भावार्थः**—गीयमानत्रिपुरदहनादिभगवच्चरितैर्वैणिकैर्विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तूयमानस्तमोविकारैरनभिभवनीयश्चन्द्रशेखरो मार्गमगच्छदिति भावः ।

**भाषा**—जब शंकर जी चलने लगे तब विश्वावसु प्रभृति गन्धर्व लोग वीणा बजाकर त्रिपुर-दहन आदि शंकर के चरित को गाने लगे ।

अथ वाहनभूतस्य वृषाकृतेर्धर्मस्य महेश्वरसेवाप्रकारमाह—

**खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।**
**तटाऽभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥ ४९ ॥**

नभ मध्य गामी सरव घुंघरू-सहित वृष ने मोद से ।
घन से भिगी थी सींग शिव को ले लिया आमोद से ॥

**अन्वयः**—खे खेलगामी सशब्दचामीकरकिङ्किणीकः वाहः प्रोतघने तटाऽभिघातात् लग्नपङ्के इव विषाणे मुहुः धुन्वन् सन् तम् उवाह ।

**व्याख्या**—खे = आकाशे, खेलगामी = सुंदरगामी, सशब्दचामीकरकिङ्कि-

णीकः = शब्दायमानसुवर्णक्षुद्रघण्टिकः, वाहः = वाहनभूतो वृषभः, प्रोतघने = स्यूतमेघे, अत एव-तटाऽभिघातात्=रोधोभेदात्=लग्नपङ्के इव=श्लिष्टकर्दमे इव विषाणे = शृङ्गे, मुहुः = वारं वारम्, धुन्वन् = कम्पयन् सन्, त = शिवम् उवाह = वहति स्म ।

**व्युत्पत्तिः**—खेलगामी=खेलं गच्छतीति खेलगामी, णिनिप्रत्ययः। सशब्द चामीकरकिङ्किणीकः=शब्दैः सहिताः सशब्दाः, चामीकरस्य किङ्किण्यः चामीकरकिङ्किण्यः, "किङ्किणी क्षुद्रघण्टिका" इत्यमरः । सशब्दाः चामीकरकिङ्किण्य यस्य सः सशब्दचामीककिङ्किणीकः, "नद्यृतश्च" इति कप् । वाहः=वाह्यते अनेनेति वाहः, करणे घञ् । प्रोतघने=प्रोताः घनाः ययोस्ते प्रोतघने, ते । तटाऽभिघातात्=तटे अभिघातः तटाभिघातः, तस्मात् तटाभिघातात्, लग्नपङ्के=लग्न पङ्कः ययोस्ते लग्नपङ्के, ते ।

**भावार्थः**—गगने सुन्दरगमनः शब्दायमानसुवर्णघण्टिको वृषभः सङ्घट्टितमेघे रोधोभेदाद् श्लिष्टकर्दमे इव स्थिते शृङ्गे मुहुर्मुहुः कम्पयन सन् हरमूढवानिति भावः ।

**भाषा**—आकाश में सुन्दरता से चलने वाला, सोने की घण्टियों से शब्दायमान, पङ्क की तरह मेघों के लगने से सींगों को बार-बार कँपाता हुआ वृषभ शङ्कर को लेकर चला ।

अथ महेश्वरस्य हिमवत्पुरप्राप्तिमाह—

**स प्रापदप्राप्तपराऽभियोग नगेन्द्रगुप्तं नगरं मुहूर्तात् ।**
**पुरो विलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणम् ॥ ५० ॥**

रक्षित हिमालय से मनोहर पुर हिमाचल का जहाँ ।
शिव-दृष्टि-कंचन सूत्र से वृष कृष्यमाण हुआ वहाँ ॥

**अन्वयः**—सः अप्राप्तपराऽभियाग नगेन्द्रगुप्तं नगरं पुरोविलग्नैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाणम् इव मुहूर्त्तात् प्रापत् ।

**व्याख्या**—सः = वृषभः, अप्राप्तपराऽभियोगम् = अननुभूतपराभिभवं नगेन्द्रगुप्त = हिमालयरक्षितं, नगरम् = ओषधिप्रस्थाभिधानं पुरं, पुरोविलग्नैः=अग्रसक्रान्तैः, हरदृष्टिपातैः=शिवनयनपातैः, सुवर्णसूत्रैः=हैमसूत्रैः, कृष्यमाणम् इव= आकृष्यमाणम् इव, मुहूर्त्तात्=क्षणमात्रात्, प्रापत्=प्राप्तवान् ।

**व्युत्पत्तिः**—अप्राप्तपराऽभियोगं=न प्राप्तः अप्राप्तः, परस्य अभियोगः परा·

ऽभियोगः। अप्राप्तः पराऽभियोगः येन तत् अप्राप्तपराऽभियोगं, तत्। नगेन्द्र-गुप्त=न गच्छन्तीति नगाः, तेषामिन्द्र नगेन्द्रः, तेन गुप्तं नगेन्द्रगुप्त, तत्। हरदृष्टिपातैः=हरस्य दृष्टयः हरदृष्टयः, तेषां पाता हरदृष्टिपाता, तैः हरदृष्टिपातैः। सुवर्णसूत्रैः=सुवर्णस्य सूत्राणि सुवर्णसूत्राणि, तैः सुवर्णसूत्रैः। कृष्यमाणम्=कृष्यते इति कृष्यमाणं, तत्। अत्र हरदृष्टिपातानां कपिलत्वात् सुवर्णसूत्रत्वोत्प्रेक्षा। वेगेन गमने पुरो भागस्थिते वस्तुन्यागमनप्रतीतिरुत्प्रेक्षाहेतुः। वेगातिशयप्रतीतिश्च फलम्।

**भावार्थः**—स हरवाहनरूपो वृषराजोऽननुभूतशत्रुसमाक्रमणं हिमालयस्वामिकमोषधिप्रस्थाभिधानं नगरं पुरःपतितैः शिवदृष्टिप्रचाररूपैः कनकदामभिराकृष्यमाणमिवाल्पेनैव कालेन प्राप्तवानिति भावः।

**भाषा**—वह वृषभ नगर की ओर लगी हुई शम्भु की दृष्टि रूपी सुवर्णसूत्र से आकर्षित हिमालय के ओषधि-प्रस्थ नाम के उस नगर में शीघ्र पहुँच गया।

इत्थं हिमवत्पुरपर्यन्तमुपगतस्य हिमालयप्रत्युद्गमनसौकर्यार्थमवस्थानमाह—

**तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः।**
**स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः॥ ५१॥**

**घन-नील-कण्ठ समीप पुर के पौर-उन्मुख थे नयन।**
**निज बाण-चिह्नित उतर पथ से निकट पहुँचे विश्व घन॥**

**अन्वयः**—तस्य उपकण्ठे घननीलकण्ठः देवः कुतूहलात् उन्मुखपौरदृष्टः सन् स्वबाणचिह्नात् मार्गात् अवतीर्य आसन्नभूपृष्ठम् इयाय।

**व्याख्या**—तस्य=पुरस्य, ओषधिप्रस्थस्येत्यर्थः। उपकण्ठे=समीपे, घननीलकण्ठः=मेघकृष्णगलः, देवः=महादेवः, कुतूहलात्=दर्शनौत्सुक्यात्, उन्मुखपौरदृष्टः=ऊर्ध्वाऽऽननागरिकाऽवलोकितः सन्, स्वबाणचिह्नात्=आत्मशराङ्कात्, त्रिपुरविजयसमये इत्यर्थः। मार्गात्=पथः, आकाशप्रदेशादित्यर्थः। अवतीर्य=अवरुह्य, आसन्नभूपृष्ठं=निकटभूमितटम्, इयाय=प्राप॥

**व्युत्पत्तिः**—घननीलकण्ठः=घन इव नीलः घननीलः, "उपमानानि सामान्यवचनैः" इति समासः। "घनजीमूतमुदिरजलमुग्धूमयोनयः" इति, "कृष्णो नीलाऽसितश्यामकालश्यामलमेचकाः" इत्यप्यमरः। घननीलः कण्ठः यस्य सः घननीलकण्ठः। उन्मुखपौरदृष्टः=ऊर्ध्वं मुखं येषां ते उन्मुखाः, पुरि भवाः पौराः, भवाऽर्थे अण्। उन्मुखाश्च ते पौराः उन्मुखपौराः, तैः दृष्टः उन्मुखपौरदृष्टः। स्वबाणचिह्नात्=स्वस्य बाणाः स्वबाणाः, ते एव चिह्नानि यस्मिन् सः स्वबाणचिह्नः,

तस्मात् स्वबाणचिह्नात्। आसन्नभूपृष्ठम् = आसन्ना चाऽसौ भूः आसन्नभूः, तस्याः पृष्ठम् आसन्नभूपृष्ठ, तत् ।

**भावार्थः**—तस्यौषधिप्रस्थनगरस्य समीपे सजलजलधरश्यामलगलप्रदेशो हरो दर्शनौत्सुक्यात् ऊर्ध्वमुखैर्हिमवत्पुरवासिभिर्जनैरीक्ष्यमाणः सन् गगनमार्गात् निकटभूमितट प्रापेति भावः ।

**भाषा**—उस ओषधिप्रस्थ नगर के समीप, घन के समान नील कण्ठ वाले, दर्शन की उत्सुकता से ऊपर मुख करके नगर निवासियों से देखे गये, शंकर जी आकाश मार्ग से पृथ्वी पर उतरे ।

अथ हिमालयस्य प्रत्युद्गमनप्रकारमाह—

**तमृद्धिमद्बन्धुजनाऽधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।**
**प्रत्युज्जगामाऽऽगमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥**

**अधिरूढ़ स्वजनों से द्विरद गण आ गये सम्मुख अमल ।**
**मानो विकच तरु कटक से गिरि ने किया स्वागत विमल ॥**

**अन्वयः**—आगमनप्रतीतः गिरिचक्रवर्ती ऋद्धिमद्बन्धुजनाऽधिरूढैः गजाना वृन्दैः "प्रफुल्लवृक्षैः स्वैः कटकैः इव" तं प्रत्युज्जगाम ।

**व्याख्या**—आगमनप्रतीतः = शिवाऽऽगमनप्रसन्नः, गिरिचक्रवर्ती = पर्वताऽधिराजः, हिमालय इत्यर्थः । ऋद्धिमद्बन्धुजनाऽधिरूढैः = समृद्धबान्धवजनकृतारोहणैः, गजाना = हस्तिना, वृन्दैः = समूहैः, प्रफुल्लवृक्षैः = विकसिततरुभिः, स्वैः = स्वकीयैः, कटकैः इव = प्रस्थैः इव, तं=हरं, प्रत्युज्जगाम = अभिययौ ।

**व्युत्पत्तिः**—आगमनप्रतीतः = आगमनेन प्रतीतः आगमनप्रतीतः । गिरिचक्रवर्ती = गिरीणा गिरिषु वा चक्रवर्ती गिरिचक्रवर्ती । ऋद्धिमद्बन्धुजनाऽधिरूढैः=प्रशस्ता ऋद्धिर्येषा ते ऋद्धिमन्तः, बन्धवश्च ते जनाः बन्धुजनाः, ऋद्धिमन्तश्च ते बन्धुजनाः ऋद्धिमद्बन्धुजनाः, तैः अधिरूढा ऋद्धिमद्बन्धुजनाऽधिरूढाः, तैः ऋद्धिमद्बन्धुजनाधिरूढैः । प्रफुल्लवृक्षैः=प्रफुल्लाः वृक्षा येषु ते प्रफुल्लवृक्षाः, तैः प्रफुल्लवृक्षैः, "प्रफुल्लोत्फुल्लसम्फुल्लव्याकोशविकचस्फुटाः । फुल्लश्चैते विकसिते" इत्यमरः । कटकैः=कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः ।

**भावार्थः**—हरागमनसन्तुष्टः पर्वतराजो हिमालयो वस्त्रालङ्कारसमृद्धबान्धवकृतारोहणैर्गजसमूहैः साधनैर्विकसितकुसुमवृक्षैः स्वकीयैः प्रस्थैरिव हरं प्रत्युद्गतवानिति भावः ।

**भाषा**—शम्भु के आगमन से प्रसन्न पर्वताधिराज हिमालय ने "पुष्पित वृक्षों से युक्त शिखरों के समान" वस्त्राभूषणादि से सजकर हाथियों पर बैठे हुए अपने कुटुम्बियों के साथ शङ्कर भगवान की आगवानी की।

अथ महेश्वरहिमालययोः समागमं वर्णयिष्यन्नादौ तत्सैनिकाना समागममाह—

**वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटिताऽपिधाने।**
**समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥**

**गिरि देव के समुदाय पुर में मिल गये झट इस तरह।**
**पुल भग्न सलिल प्रवाह मिलता है परस्पर जिस तरह ॥**

**अन्वयः**—दूरविसर्पिघोषौ देवमहीधराणाम् उभौ वर्गौ उद्घटिताऽपिधाने पुरस्य द्वारे "भिन्नैकसेतू पयसाम् ओघौ इव" समीयतुः।

**व्याख्या**—दूरविसर्पिघोषौ = विप्रकृष्टगामिशब्दौ, देवमहीधराणा = सुरपर्वतानाम्, उभौ = द्वौ, वर्गौ=समुदायौ, उद्घटिताऽपिधाने=अपनीतकपाटे, पुरस्य= नगरस्य, द्वारे = प्रतीहारे, भिन्नैकसेतू = दीर्णैकाली, पयसा = जलानाम्, ओघौ इव = प्रवाहौ इव, समीयतुः = समागम प्रापतुः।

**व्युत्पत्तिः**—दूरविसर्पिघोषौ = विसर्पतीति विसर्पी, णिनिप्रत्ययः। दूरं यथा तथा विसर्पी दूरविसर्पी, "सुप्सुपा" इति समासः। दूरविसर्पी घोषः=गजतुरगसैनिकादिकलकलः, जलप्रवाहादिशब्दश्च, ययोस्तौ दूरःविसर्पिघोषौ। देवमहीधराणां= दीव्यन्तीति देवा.। धरन्तीति धराः, मह्याः धराः महीधरा, कर्मणः शेषत्वविवक्षा। "महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः" इत्यमर.। देवाश्च महीधराश्च देवमहीधराः, तेषा देवमहीधराणाम्, द्वंद्वसमासः। उद्घटिताऽपिधाने = उद्घटितम् अपिधानं यस्य तत् उद्घटिताऽपिधान, तस्मिन् उद्घटितापिधाने, "अपिधानतिरोधानपिधानाच्छादनानि च" इत्यमरः। द्वारे = "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः। भिन्नैकसेतू = एकश्चासौ सेतुः एकसेतुः, "सेतुरालौ स्त्रिया पुमान्" इत्यमरः। भिन्नः एकसेतुः याभ्या तौ भिन्नैकसेतू। पयसा = "पय कीलालममृतं जीवनं भुवन वनम्" इत्यमरः। अत्र कपाटप्रतिवस्तुत्वेन सेतुरुपात्तः। सैनिकद्वयप्रतिवस्तुत्वेन जलप्रवाहद्वयम्। तथा चोपमालङ्कारेण वर्गद्वयस्यातिमहत्त्वं सूचितम्।

**भावार्थः**—दूरगामिकलकलध्वनियुक्तौ महेन्द्रादीना देवाना महामेरुप्रभृतीना पर्वताना चोभौ समुदायौ विवृतकपाटे गोपुरे "सेतुमुन्मूल्योभौ जलप्रवाहाविव" परस्परं समागमम्प्रापतुरिति भावः।

**भाषा**—सुदूर गामी कोलाहल से युक्त महेन्द्रादि देव और मेरुहिमालयादि पर्वत इन दोनों का समुदाय, खुले किवाड़ों वाले पुरके द्वारपर, बाँध टूट जाने पर जल-प्रवाह की तरह परस्पर मिल गये ।

अथ हरहिमालययोः समागमप्रकारमाह —

**ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।**
**पूर्वं महिम्ना स हि तस्य दूरमावर्जितं नात्मशिरो विवेद ॥५४॥**

**हर-कृत-प्रणाम हिमाद्रि अतिशय हो गया लज्जित महा ।**
**निज शीश को जाना न, पहले लख महत्त्व झुका रहा ॥**

**अन्वयः**—भूमिधरः त्रैलोक्यवन्द्येन हरेण कृतप्रणामः सन् ह्रीमान् अभूत् । हि सः पूर्वं तस्य महिम्ना दूरम् आवर्जितम् आत्मशिरः न विवेद ।

**व्याख्या**—भूमिधरः = हिमालयपर्वतः, त्रैलोक्यवन्द्येन = लोकत्रयनमस्कार्येण, हरेण=शङ्करेण, कृतप्रणामः=विहितनमस्कारः सन्, ह्रीमान् = लज्जितः, अभूत् = अभवत् । हि = यस्मात्कारणात्, सः = हिमालयः, पूर्वं = प्रागेव, हरदर्शनसमय एवेत्यर्थः । तस्य = शङ्करस्य, महिम्ना = प्रभावेण, दूरम्=अत्यन्तम्, आवर्जितं = नमितम्, आत्मशिरः=स्वमूर्धानं न विवेद = न ज्ञातवान् ।

**व्युत्पत्तिः**—धरतीति धरः, पचाद्यच् । भूमेर्धरः भूमिधरः । त्रैलोक्यवन्द्येन=त्रयाणां लोकाना समाहारस्त्रिलोकी, "तद्धितार्थोत्तरपदसमाहारे च" इति समासः, तस्य "संख्यापूर्वो द्विगुः" इति द्विगुसंज्ञा, ततः "द्विगोः" इति ङीप् । त्रिलोकी एव त्रैलोक्यं, स्वार्थे ष्यञ् । वन्दितुमर्हः वन्द्यः, "वदि अभिवादनस्तुत्योः" इति धातोः "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः, "इदितो नुम् धातोः" इति नुम् । त्रैलोक्यस्य वन्द्यः त्रैलोक्यवन्द्यः, तेन त्रैलोक्यवन्द्येन । कृतप्रणामः=कृतः प्रणामः यस्मै सः कृतप्रणामः, अत्राऽर्थे स्मृतिरप्याह—

"ऋत्विक्पितृव्यश्वशुरमातुलाना यवीयसाम् ।
प्रवयाः प्रथमं कुर्यात्प्रत्युत्थायाऽभिवादनम् ॥" इति ।

ह्रीमान्=ह्रीः विद्यते यस्य स ह्रीमान्, मतुप्प्रत्ययः, "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । महिम्ना = महतो भावः महिमा, तेन महिम्ना, "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्ययः । आत्मशिरः=आत्मनः शिरः आत्मशिरः, तत् ।

**भावार्थः**—श्वशुरत्वेन भाविनो हिमालयस्य गुरुत्वसम्भवात् तदुचिते नमस्कारे त्रैलोक्यपूजितेन हरेण कृते सति 'अत्यन्तमनुचित मयेदमङ्गीक्रियते" इति

हिमालयस्य महती लज्जाऽभूत् । किन्तु नमस्कारात्पूर्वं हरदर्शनसमय एव हर-प्रभावादात्मनो मस्तक स्वयमेव प्रणतमासीदिति त्वसौ न ज्ञातवानिति भावः ।

**भाषा**—त्रैलोक्य वन्दनीय शंकर के श्वशुर-सम्बन्ध से हिमालय को प्रणाम करने पर वह बहुत लज्जित हुआ । शकर को देखकर महिमा से उसका शिर पहले ही नत हो गया था, लेकिन यह वह न जान सका ।

अथ महेश्वरस्य श्वशुरनगरप्रवेशं वर्णयति—

**स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।**
**प्रावेशयन्मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥**

**सन्तुष्ट गिरि दामाद आगे आ उन्हे सम्मान से ।**
**शुचि कुसुम मय लाये सुपथ से रम्य पुर में मान से ॥**

**अन्वयः**—प्रीतियोगात् विकसन्मुखश्रीः सः जामातुः अग्रेसरताम् उपेत्य एनम् आगुल्फकीर्णाऽऽपणमार्गपुष्पम् ऋद्धं मन्दिरं प्रावेशयत् ।

**व्याख्या**—प्रीतियोगात् = सन्तोषसम्बन्धात्, विकसन्मुखश्रीः = वर्धमानाऽननशोभः, सः = हिमवान्, जामातुः = वरस्य, हरस्येत्यर्थः । अग्रेसरताम् = पुरोगामित्वम्, उपेत्य = प्राप्य, एनं = शङ्करम्, आगुल्फकीर्णाऽऽपणमार्गपुष्पम् = पादग्रन्थिपर्यन्तपर्यस्तपण्यवीथिकाकुसुमम्, ऋद्धं = समृद्धं, मन्दिरं = नगर, प्रावेशयत् = प्रवेशयामास ।

**व्युत्पत्तिः**—प्रीतियोगात् = प्रीतेर्योगः प्रीतियोगः, तस्मात् प्रीतियोगात्, विकसन्मुखश्रीः = मुखस्य श्रीः मुखश्रीः, विकसन्ती मुखश्रीः यस्य स विकसन्मुखश्रीः, "स्त्रियाः पुंवद्भाषितपुस्कादनूङ् समानाऽधिकरणे स्त्रियामपूरणी प्रियादिषु" इति पूर्वपदस्य पुंवद्भावः । जामातुः=जाया मिमीते=जानातीति, जामाता, तस्य जामातुः, "पृषोदरादीनि यथोपदिष्टम्" इति साधुः । "जमाता दुहितुः पतिः" इत्यमरः । अग्रेसरताम् = अग्रे सरतीति अग्रेसरः, "पुरःसरोऽग्रतोऽग्रेषु सर्तेः" इति टप्रत्ययः । अग्रेसरस्य भावः अग्रेसरता, ताम् अग्रेसरता, तल्प्रत्ययः । आगुल्फकीर्णाऽऽपणमार्गपुष्पम् = गुल्फाभ्याम् आ आगुल्फम्, "आङ् मर्यादाऽभिविध्योः" इति अव्ययीभावः । आगुल्फं कीर्णानि आगुल्फकीर्णानि । आपणाना मार्गाः आपणमार्गाः । "अयनं वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः" इत्यमरः । आपणमार्गेषु पुष्पाणि आपमार्गपुष्पाणि । आगुल्फकीर्णानि आपणमार्गपुष्पाणि यस्मिन् तत्, आगुल्फकीर्णाऽऽपणमार्गपुष्पं, तत् । "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः ।

मन्दिरं = "मन्दिरं नगरेऽगारे मन्दिरो मकराऽऽलये" इति विश्वः । प्रावेशयत्= प्रोपसर्गपूर्वकात् णिजन्तात् "विशप्रवेशने" इति धातोर्लङ् ।

**भावार्थः**—सन्तोषाद् देदीप्यमानवदनकान्तिः स हिमालयो भाविनो दुहितुः पत्युर्हरस्य पुरोगामित्वं ( मार्गदर्शकता ) प्राप्यैनं हरं गुल्फपर्यन्तविक्षिप्तपण्यवीथिकाकुसुमं मणिमुक्तादिचित्रितं निजनगरं प्रवेशयामासेति भावः ।

**भाषा**—प्रसन्न-मुख हिमालय अपने भावी जामाता को मार्ग दिखलाता हुआ, उस रास्ते से मणि मुक्ता चित्रित औषधिप्रस्थ नगर में ले गया, जिस पर फूल बिखरे हुए थे ।

महेश्वरस्य नगरप्रवेशसमये पुरस्त्रीजनवृत्तान्तं सप्तभिश्लोकैः वर्णयति । तत्राद्येन श्लोकेन तमेव सामान्येनाह—

**तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।**
**प्रासादमालासु बभूवुरित्थं त्यक्त्वाऽन्यकार्याणि विचेष्टितानि ॥ ५६ ॥**

**उस समय सब तज कार्य प्रमदायें सभी व्याकुल हुईं ।**
**शुभ शम्भु दर्शन के लिये वे इस तरह आकुल हुईं ॥**

**अन्वयः**—तस्मिन् मुहूर्ते ईशानसंदर्शनलालसाना पुरसुन्दरीणा प्रासादमालासु इत्थं त्यक्त्वाऽन्यकार्याणि विचेष्टितानि बभूवुः ।

**व्याख्या**—तस्मिन् = तत्र, मुहूर्ते=क्षणे, हरपुरप्रवेशसमये इत्यर्थः । ईशान संदर्शनलालसाना=शङ्कराऽवलोकनलोलुपाना, पुरसुन्दरीणां=नगराऽङ्गनाना, प्रासादमालासु = हर्म्याऽऽवलिषु, इत्थम् = वक्ष्यमाणप्रकारेण, त्यक्त्वाऽन्यकार्याणि= विसृष्टकार्यान्तराणि, विचेष्टितानि = व्यापारः, बभूवुः = आसन् ।

**व्युत्पत्तिः**—ईशानसंदर्शनलालसानाम् = सम्यक् दर्शनं संदर्शनम्, "कुगतिप्रादयः" इति गतिसमासः । ईशानस्य संदर्शनम् ईशानसदर्शनम्, "ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः" इत्यमरः । ईशानसदर्शने लालसाः यासा ता ईशानसंदर्शनलालसाः, तासाम् ईशानसन्दर्शनलालसाना, "लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः" इति यादवः । पुरसुन्दरीणा=पुरस्य सुन्दर्यः पुरसुन्दर्यः, तासा पुरसुन्दरीणा । प्रासादमालासु=प्रासादाना मालाः प्रासादमालाः, तासु प्रासादमालासु, "प्रासादो देवभूभुजाम्" इत्यमरः । इत्थम्=अनेन प्रकारेण इत्यम्, "इदमस्थमुः" इति थमुप्रत्ययः । त्यक्त्वाऽन्यकार्याणि=त्यक्तानि अन्यानि कार्याणि येषु तानि त्यक्त्वाऽन्यकार्याणि, "अनेकमन्यपदाऽर्थे" इति त्रिपदो बहुव्रीहिः।

विचेष्टितानि = विविधानि चेष्टितानि विचेष्टितानि, गतिसमासः । "नपुंसके भावे क्तः" इति क्तप्रत्ययः ।

**भावार्थः**—महेश्वरस्य नगरप्रवेशसमये हरावलोकनसमुत्सुकाना नगरस्त्रीणां सौधपङ्क्तिषु वक्ष्यमाणप्रकारेण विसृष्टकार्यान्तरा व्यापारा आसन्निति भावः ।

**भाषा**—उस समय शिव-दर्शन के लिये उत्सुक नगर की स्त्रियाँ अट्टालिकाओं पर अपने अन्य कार्यों को छोड़ कर इस प्रकार देखने लगी ।

इत्थंशब्दोक्तान् प्रकारानेव प्रपञ्चयति पञ्चभिः श्लोकैः । तत्र कस्याश्चिदवस्था दर्शयति—

**आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।**
**बद्धुं न सम्भावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥**

छुट केश का बन्धन गया कर से पकड़ कच-चय विकल ।
आलोक शुचि पथ पर गई स्मृति था न बन्धन की विमल ॥

**अन्वयः**—आलोकमार्गं सहसा व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः करेण रुद्धः अपि केशपाशः तावत् बद्धुं न सम्भावित एव ।

**व्याख्या**—आलोकमार्गं = दर्शनपथ, वातायनमित्यर्थः । सहसा = अकस्मात्, व्रजन्त्या = गच्छन्त्या, कयाचित् = रमण्या, उद्वेष्टनवान्तमाल्यः = उन्मुक्तबन्धनोद्गीर्णमाल्यः, करेण = हस्तेन, रुद्धः अपि = गृहीतः अपि, केशपाशः = केशकलापः, तावत् = वातायनप्राप्तिपर्यन्त, बद्धुं = बन्धनाय, न सम्भावित एव = न स्मृत एव ।

**व्युत्पत्तिः**—आलोकमार्गम् = आलोकनम् आलोकः । "आलोकौ दर्शनद्योतौ" इत्यमरः । आलोकस्य मार्गः आलोकमार्गः, तम् आलोकमार्गम् । सहसा = "अतर्किते तु सहसा" इत्यमरः । व्रजन्त्या = व्रजतीति व्रजन्ती, तया व्रजन्त्या, शतृप्रत्ययः नुम् च । उद्वेष्टनवान्तमाल्यः = उद्गत वेष्टन यस्य स उद्वेष्टनः, मालाना समूहः माल्य, "पाशादिभ्यो यः" इति यप्रत्ययः । वान्त माल्य यस्मात् स वान्तमाल्यः । उद्वेष्टनश्चाऽसौ वान्तमाल्यः उद्वेष्टनवान्तमाल्यः । उद्वेष्टनः अत एव वान्तमाल्य इत्यर्थः । केशपाशः = केशाना पाशः केशपाशः, "चिकुरः कुन्तलो बालः कच केशः शिरोरुह" इति, "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यप्यमरः ।

**भावार्थः**—केशेषु कुसुमानि निधाय केशाग्रैरेव किञ्चित्परिवेष्ट्य यावद् दाम्ना बद्धुमारभ्यते, यावद् महेश्वरागमनकोलाहलमाकर्ण्य प्रकृतं केशबन्धनं परित्यज्य

सत्वरमुत्थाय दर्शनपथं प्रस्थितया कयाचित् द्रुतगतिवशादुन्मुक्तबन्धनोऽत एवोद्गीर्णकुसुमः करेण गृहीतोऽपि केशकलापोऽवलोकनमार्गप्राप्तिपर्यन्त बन्धनाय न स्मृतोऽभूदिति भावः ।

**भाषा**—कोई स्त्री बालों में फूल गुथकर बाधना ही चाहती थी, तब तक शंकर के आने का समाचार पाकर हाथ से बालों को थामे दर्शन के लिये दौडी ।

अन्यस्या अवस्थामाह—

**प्रसाधिकाऽऽलम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।**
**उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥**

जाते रंगे थे राग से पद शीघ्र उनको खींच कर ।
तज गति सुपथ रङ्गती गई आलोक निकट स्त्रियां सुघर ॥

**अन्वयः**—काचित् प्रसाधिकाऽऽलम्बितं द्रवरागम् एव अग्रपादम् आक्षिप्य उत्सृष्टलीलागतिः सती, आ गवाक्षात् पदवीम् अलक्तकाङ्का ततान ।

**व्याख्या**—काचित्=पुरवधूः, प्रसाधिकाऽऽलम्बितम्=अलङ्कर्त्रीधृतं, रञ्जनार्थमित्यर्थः । द्रवरागम् एव=आर्द्रोऽलक्तकम् एव, अग्रपादं=पादाऽग्रम्, आक्षिप्य=आकृष्य, प्रसाधिकाकरादिति शेषः । उत्सृष्टलीलागतिः=त्यक्तमन्दगमना सती, आ गवाक्षात्=वातायनपर्यन्तं, पदवीं=सृतिम्=अलक्तकाऽङ्काम्=लाक्षारसचिह्नां, ततान=चकार ।

**व्युत्पत्तिः**—प्रसाधिकालम्बितं=प्रसाधिकया आलम्बितः प्रसाधिकाऽऽलम्बितः, तं प्रसाधिकालम्बितं । द्रवरागं=रज्यते अनेनेति रागः, "रञ्जरागे" करणे घञ् । द्रवः रागः यस्य स द्रवरागः, तं द्रवरागम् । अग्रपादम्=अग्रश्चाऽसौ पादः अग्रपादः, तम् अग्रपाद । राजदन्तादिषु पाठादुपसर्जनभूतस्य पादपदस्य परनिपातः । अमरसिंहस्तु तस्मिन्ननन्तरभावमभ्युपगम्य "पादाग्रं प्रपद" मित्येवोक्तवान् । तन्मतेन राजदन्तादिगणे सदपाठपक्षे "हस्ताऽग्राऽग्रहस्तादयो गुणगुणिनोर्भेदाऽभेदाभ्याम्" इति वामनोक्तक्रमेण परनिपात इत्यभ्युपगन्तव्यम् । उत्सृष्टलीलागतिः=लीलया गतिः लीलागतिः, उत्सृष्टा लीलागतिः यया सा उत्सृष्टलीलागतिः । गवाक्षात्=गवामक्षीव गवाक्षः, तस्मात् गवाक्षात्, आ गवाक्षादित्यत्र विभाषया न समासः । "वातायनं गवाक्षः" इत्यमरः । अलक्तकाङ्काम्=अलक्तकम् अङ्कः यस्याः सा अलक्तकाऽङ्का, ताम् अलक्तकाङ्कां । ततान="तनुविस्तारे" इति धातोर्लिट् ।

**भावार्थः**—काचित् पुरवधूरलङ्कर्त्र्या रञ्जनार्थं गृहीतमार्द्रालक्तकमेव पादाग्रं बलादाकृष्य त्यक्तविलासमन्दगमना सती, गवाक्षपर्यन्तं मार्गं सालक्तकचिह्नं चकारेति भावः ।

**भाषा**—कोई स्त्री पैरों में महावर लगवा रही थी, बरात के बाजों की अवाज सुनकर लगाने वाली के हाथों से अपने पैरों को खींच कर गवाक्ष तक मार्ग में उसने पैरों से महावर के अनेक चिह्न लगा दिये ।

अथाऽपरस्याः सम्भ्रमातिशयमाह—

**विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातयानसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥**

दक्षिण नयन कज्जल सहित था बाम नेत्र बचा रहा ।
लेकर शलाका झट गई आलोक तक व्याकुल महा ॥

**अन्वयः**—अपरा दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य, तद्वञ्चितवामनेत्रा सती, तथा एव शलाका वहन्ती, वातायनसंनिकर्षं ययौ ।

**व्याख्या**—अपरा = अन्या पुरवधूः, दक्षिणं = वामेतर, विलोचनं=नेत्रम् , अञ्जनेन = कज्जलेन, सम्भाव्य=अलङ्कृत्य, तद्वञ्चितवामनेत्रा=अञ्जनवर्जितवामनयना सती, तथा एव = तेनैव रूपेण, शलाकाम् = अञ्जनकूर्चिका, वहन्ती = बिभ्रती, वातायनसनिकर्षं = गवाक्षसमीप = ययौ = जगाम ।

**व्युत्पत्तिः**—तद्वञ्चितवामनेत्रा = तेन अञ्जनेन, वञ्चितं तद्वञ्चितं, वामं च तत् नेत्र वामनेत्र, तद्वञ्चित वामनेत्र यस्याः सा तद्विञ्चितवामनेत्रा । प्रतिश्रुत्यादानमिह वञ्चनमुच्यते । यदाह भोजराजः—

"अदानं च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादान च वञ्चनम् ॥" इति ।

उभयोरपि नेत्रयोरविशेषेणाञ्जनार्पणस्य सङ्कल्पितत्वात् प्रतिश्रुत्यादानमिह सञ्जातम् । वहन्ती = वहतीति वहन्ती, शतृप्रत्ययः । वातायनसनिकर्षं = वातायनस्य संनिकर्षः वातायनसनिकर्षः, त वातायनसन्निकर्षम् , "वातायन गवाक्षः" इत्यमरः । दक्षिणग्रहण सम्भ्रमात् व्युत्क्रमद्योतनार्थम् । "सव्य हि पूर्वं मनुष्या अञ्जत" इति श्रुतेः ।

**भावार्थः**—अन्या काचन पुरवधूः प्रथम दक्षिणं नयनमञ्जनेनालङ्कृत्य यावत् वामं नयनमञ्जनेनालङ्करोति, तावदेव हरागमनकलकलं श्रुत्वा त्वरया प्रकृतं

वामनयनाञ्जनं परित्यज्याञ्जनार्पणार्थमुद्धृता कूचिकां तथैव करेण बिभ्रती गवाक्ष-समीप जगामेति भावः ।

**भाषा**—कोई अपनी दाहिनी आँख में काजल लगा चुकी थी, बाईं आँख अभी बाकी ही थी, किन्तु शिव के दर्शन की उत्सुकता से हाथ में शलाका लिये हुई दर्शन मार्ग तक गई ।

कस्याश्चिदौत्सुक्यातिशयमाह—

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाऽऽभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥६०॥**

**गति-वेगसे नीवी छुटी उसको न बांध सकी चली ।**
**पकड़ी रही कर से मची थी शम्भु दर्शन खल बली ॥**

**अन्वयः**—अन्या जालान्तरप्रेषितदृष्टिः सती प्रस्थानभिन्ना नीवीं न बबन्ध । नाभिप्रविष्टाऽऽभरणप्रभेण हस्तेन वासः अवलम्ब्य तस्थौ ।

**व्याख्या**—अन्या = अपरा पुरसुन्दरी, जालान्तरप्रेषितदृष्टिः = गवाक्षविवर प्रेरितनयना सती, प्रस्थानभिन्ना = गमनगलिता, नीवीं=वस्त्रग्रन्थिं, न बबन्ध= न अबध्नात् । किन्तु-नाभिप्रविष्टाभरणप्रभेण=नाभिगतकङ्कणरत्नकान्तिना, हस्तेन=करेण, वासः = वस्त्रम् , अवलम्ब्य=धृत्वा, तस्थौ = स्थितवती ।

**व्युत्पत्तिः**—जालान्तरप्रेषितदृष्टिः = जालस्य अन्तरं जालान्तर, तस्मिन् प्रेषिते जालान्तरप्रेषिते, ते दृष्टी यया सा जालान्तरप्रेषितदृष्टिः । प्रस्थानभिन्ना = प्रस्थानेन भिन्ना प्रस्थानभिन्ना, ता प्रस्थानभिन्ना, नीवी = "नीवी परिपणे ग्रन्थौ स्त्रीणा जघनवाससि" इति विश्वः । नाभिप्रविष्टाऽऽभरणप्रभेण=नाभिं प्रविष्टा नाभि-प्रविष्टा, अभरणाना प्रभा आभरणप्रभा । नाभिप्रविष्टा अभरणप्रभा यस्य सः नाभि-प्रविष्टाऽऽभरणप्रभः, तेन नाभिप्रविष्टाभरणप्रभेण ।

**भावार्थः**—अन्या काचन स्त्री गवाक्षप्रसारितदृष्टिः सती महेश्वरदर्शनौत्सुक्यवशात् शीघ्रगमनवेगगलितबन्धनामधोवस्त्रग्रन्थिं नाबध्नात् । किन्तु नाभिप्रदेशमध्यगतकङ्कणरत्नकान्तिना करेणाधोवस्त्रमवलम्ब्यैव स्थिताऽभूदिति भावः ।

**भाषा**—कोई स्त्री महेश्वर के दर्शन को उत्सुकता से गमन के वेग से छुटी हुई नीवी को बाँध न सकी, किन्तु नाभि प्रदेश तक जिसके कङ्कण की कान्ति व्याप्त थी, ऐसे हाथ से अधो वस्त्र को पकड़ कर खड़ी थी ।

अन्यस्याः सम्भ्रमवशाद् रशनापरित्यागोऽपि सञ्जात इत्याह—

**अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।**
**कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलाऽर्पितसूत्रशेषा ॥ ६१**

**अर्द्धाचित रसना उठी सत्वर गिरे पग पग रतन ।**
**अङ्गुष्ठ जड में सूत्र ही अवशेष था मणि सब पतन ॥**

**अन्वयः**—सत्वरम् उत्थितायाः कस्याश्चित् अर्धाचिता रसना दुर्निमिते पदे पदे गलन्ती सती तदानीम् अङ्गुष्ठमूलार्पितसूत्रशेषा आसीत् ।

**व्याख्या**—सत्वरं=सवेगम्, उत्थितायाः=कृतोत्थानायाः, कस्याश्चित्=रमण्याः, अर्धाचिता=अर्धगुम्फता, मणिभिरिति शेषः । रसना=मेखला, दुर्निमिते=दुर्निक्षिप्ते, पदे पदे=प्रतिपद, गलन्ती=गलद्रत्ना सती, तदानीं=तस्मिन्नवसरे, अङ्गुष्ठमूलाऽर्पितसूत्रशेषा=अङ्गुष्ठमूललगितसूत्राऽवशेषा, आसीत्-अभवत् ।

**व्युत्पत्तिः**—सत्वर=त्वरया सहित यथा तथा सत्वरं, क्रि० वि० । "संभ्रमस्त्वरा" इति "सत्वरं चपल तूर्णमविलम्बितमाशु च" इति चाऽमरः । अर्धाचिता=अर्धं यथा तथा आचिता अर्धाचिता, "सुप्सुपा" समासः । दुर्निमिते=दुःखेन निमिते दुर्निमिते, "सुप्सुपा" समासः । "डुमिञ् प्रक्षेपणे" इति धातोः कर्मणि क्तः । पदे पदे="सर्वस्य द्वे" इति वीप्साया द्विर्भावः । गलन्ती=गलतीति गलन्ती, शतृप्रत्ययः । अङ्गुष्ठमूलाऽर्पितसूत्रशेषा=अङ्गुष्ठस्य मूलम् अङ्गुष्ठमूल, तस्मिन् अर्पितम् अङ्गुष्ठमूलाऽर्पित, तत् सूत्रमेव शेषः यस्याः सा अङ्गुष्ठमूलार्पित सूत्रशेषा ।

**भावार्थः**—कुत्राप्युपविश्य रशनामणिगुम्फनार्थं पादाङ्गुष्ठे सूत्रैकदेशमुपनिबध्य पदं प्रसार्य रशनामणिगुम्फनव्यापृतायाः, पुनश्च हरगमनकोलाहलश्रवणात् तथैव तूर्णं कृतोत्थानायाः कस्याश्चिदङ्गनायाः सम्भ्रमेण निक्षिप्तेषु सर्वेष्वपि पदावस्थानेषु गलन्मणिःसा रशनाऽवलोकनमार्गप्राप्तिपर्यन्तं पादाङ्गुष्ठमूलेबद्धसूत्रमात्रावशिष्टा समजायतेति भाव ।

**भाषा**—कोई स्त्री जो अपनी करधनी में मणियों को पिरो रही थी, इतने में शङ्करके आनेका कोलाहल सुनकर उन्हे देखने गयी । पग २ पर मणियों के दाने गिर जाने से आलोक मार्ग तक केवल पैर के अङ्गूठे में बधा हुआ सूत्र ही बच गया ।

इत्थमुपगताना पुरसुन्दरीणा महेश्वरदर्शनप्रकारं भङ्ग्यन्तरेणाह—

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राऽऽभरणा इवाऽऽसन् ॥६२॥**

मद-गन्ध-मय चल-नेत्र-अलि से युक्त वदन रहे सुघर ।
आलोक वह शतपत्र भूषित सम हुआ सुरभित प्रवर ॥

**अन्वयः**—सान्द्रकुतूहलाना तासाम् आसवगन्धगर्भैः विलोलनेत्रभ्रमरैः मुखैः व्याप्तान्तराः गवाक्षाः सहस्रपत्राऽऽभरणाः इव आसन् ।

**व्याख्या**—सान्द्रकुतूहलाना = निबिडकौतुकाना, तासा = पुरसुन्दरीणाम्, आसवगन्धगर्भैः=मद्यसौरभगर्भैः, विलोलनेत्रभ्रमरैः = चपलनयनमधुकरैः, मुखैः= आननैः, व्याप्ताऽन्तराः=छन्नाऽवकाशाः, गवाक्षाः=वातायनानि, सहस्रपत्राऽऽभरणाः इव = कमलाऽलङ्काराः इव, आसन् = अभवन् ।

**व्युत्पत्तिः**—सान्द्रकुतूहलाना = सान्द्र कुतूहल यासा ताः सान्द्रकुतूहलाः, तासा सान्द्रकुतूहलाना, "कौतूहल कौतुक च कुतुकं च कुतूहलम्" इत्यमरः । आसवगन्धगर्भैः = आसवस्य गन्धः आसवगन्धः, सः गर्भे येषा तानि आसवगन्धगर्भाणि, तैः आसवगन्धगर्भैः । विलोलनेत्रभ्रमरैः = विशेषेण लोलानि विलोलानि, तानि नेत्राणि एव भ्रमराः येषु तानि विलोलनेत्रभ्रमराणि, तैः विलोलनेत्रभ्रमरैः । व्याप्ताऽन्तराः=व्याप्तम् अन्तर येषा ते व्याप्तान्तराः । गवाक्षाः=गवाम् अक्षीणि इव गवाक्षाः । सहस्रपत्राऽऽभरणाः = सहस्र पत्राणि येषा तानि सहस्रपत्राणि, "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः । सहस्रपत्राणि आभरणानि येषा ते सहस्रपत्राभरणाः, अत्रोत्प्रेक्षाऽलङ्कारः ।

**भावार्थः**—महेश्वरदर्शनेऽतीवोत्सुकाना तासा पुरसुन्दरीणा मधुगन्धयुक्तैश्चञ्चलनयनषट्पदैर्वदनैर्निरवकाशीकृतमध्यानि वातायनानि कमलालङ्कृतानीवाऽभूवन्निति भावः ।

**भाषा**—महेश्वर के दर्शन के लिये अतीव उत्सुक उन स्त्रियों के मधुगन्ध युक्त मुख और चंचल भ्रमर के समान आँखों द्वारा खिड़कियाँ कमलोसे अलङ्कृत बन गईं ।

इत्थं पुरवधूवृत्तान्तमुपसंहृत्य प्रकृतं महेश्वरवृत्तान्तमेव प्रस्तौति—

**तावत्पताकाऽऽकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।**
**प्रासादशृङ्गाणि दिवाऽपि कुर्वञ्ज्योत्स्नाऽभिषेकद्विगुणद्युतीनि ॥ ६३ ॥**

शिव से दिवस मे ज्योति से प्रासाद रंग द्विगुण हुआ ।
तोरण पताका व्याप्त पथ पर शम्भु–गमन सगुण हुआ ॥

**अन्वयः**—तावत् इन्दुमौलिः दिवाऽपि प्रासादशृङ्गाणि ज्योत्स्नाऽभिषेकद्विगुणद्युतीनि कुर्वन् पताकाऽऽकुलम् उत्तोरणं राजपथ प्रपेदे ।

**व्याख्या**—तावत्=तस्मिन् अवसरे, इन्दुमौलिः चन्द्रशेखरः, दिवापि=दिनेऽपि, प्रासादशृङ्गाणि = धवलगृहाऽग्राणि, ज्योत्स्नाऽभिषेकद्विगुणद्युतीनि=चन्द्रिकास्नपनद्विरावृत्तकान्तीनि, कुर्वन् = कुर्वाणः, पताकाऽऽकुलम्=ध्वजव्याकीर्णम् , उत्तोरणम् = उच्छ्रिततोरणं, राजपथं = राजमार्गं, प्रपेदे = प्राप्तवान् ।

**व्युत्पत्तिः**—इन्दुमौलिः = इन्दुः मौलौ यस्य सः इन्दुमौलिः । प्रासादशृङ्गाणि=प्रासादाना शृङ्गाणि प्रासादशृङ्गाणि, तानि । ज्योत्स्नाऽभिषेकद्विगुणद्युतीनि=ज्योत्स्नाया अभिषेकः ज्योत्स्नाऽभिषेकः, "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । द्वौ गुणौ यस्या सा द्विगुणा । ज्योत्स्नाऽभिषेकेण द्विगुणा ज्योत्स्नाभिषेकद्विगुणा, सा द्युतिर्येषा तानि ज्योत्स्नाऽभिषेकद्विगुणद्युतीनि, तानि । "गुणस्त्वावृत्ति शब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । कुर्वन्=करोतीति कुर्वन् , शतृप्रत्ययः । पताकाकुलं = पताकाभिः आकुल पताकाकुल., त पताकाकुलम् । उत्तोरणम् = उन्नतः तोरणः यस्मिन् स उत्तोरणः, तम् उत्तोरण, "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमर । राजपथं = राज्ञः पन्था राजपथस्तं राजपथम् , "ऋक्पूरब्धूः पथामानक्षे" इत्यप्रत्ययः समासान्तः ।

**भावार्थः**—यावदित्थं पुरवधूवृत्तान्त प्रस्तुतस्तावद् चन्द्रशेखरः सुधाधवलानि प्रासादशिरोगृहाणि शिरश्चन्द्रचन्द्रिकया द्विगुणितधावल्यानि समाचरन् सन् उत्क्षिप्ततोरण ध्वजपङ्क्तिसङ्कुल राजमार्गं प्रापेति भाव ।

**भाषा**—पुर की स्त्रियाँ इस तरह शकर को देखने के लिये लालायित थी, तव तक शम्भु ने सुधा से धवल प्रासाद शृङ्गों को अपने शिर के चन्द्र की चान्द्रिका से और भी अधिक प्रकाशित करते हुए, ध्वजतोरण से सुसज्जित राजमार्ग में प्रवेश किया ।

अथ पुरसुन्दरीणा महेश्वरदर्शनौत्सुक्य वर्णयति—

**तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥**

उस दर्शनीय त्रिनेत्र को पुर की स्त्रियां लखने लगीं ।
अवशेष इन्द्रिय वृत्ति दृग में आ सुदर्शन में पगीं ॥

**अन्वयः**—एकदृश्यं तं नयनैः पिबन्त्यः नार्यः विषयान्तराणि न जग्मुः । तथा हि–आसा शेषेन्द्रियवृत्तिः सर्वात्मना चक्षुः प्रविष्टा इव ।

**व्याख्या**—एकदृश्यम् = एकदर्शनीयं, तम् = महेश्वरं, नयनैः = लोचनैः, पिबन्त्यः = सतृष्णमवलोकयन्त्यः, लक्षणयाऽऽगतोऽयमर्थः, लोचने पानक्रियाऽनुपपत्तेः । नार्यः=पुरसुन्दर्यः, विषयान्तराणि = अन्यान् विषयान्, शब्दस्पर्शगन्धरसादीनिति शेषः । न जग्मुः = न प्रापुः, तत्तदिन्द्रियैस्तत्तद्विषयं च जगृहुरित्यर्थः । तथा हि–तासा = पुरसुन्दरीणा, शेषेन्द्रियवृत्तिः = अवशिष्टकरणप्रवृत्तिः, सर्वात्मना = स्वरूपकात्स्न्र्येन, चक्षुः = लोचनं, प्रविष्टा इव=प्रवेशं कृतवती इव ।

**व्युत्पत्तिः**—एकदृश्यम्=द्रष्टुं योग्य. दृश्यः, एकश्चासौ दृश्यः एकदृश्य', तम् एकदृश्यं । पिबन्त्यः = पिबन्तीति पिबन्त्यः, "पा पाने" इति धातोः शतृप्रत्ययः, तदन्तात् स्त्रीप्रत्ययविवक्षायाम् "उगितश्च" इति ङीप् प्रत्ययः । विषयान्तराणि = अन्ये विषया' विषयान्तराणि, तानि । रूपकसमासः । शेषेन्द्रियवृत्तिः = शेषाणि च तानि इन्द्रियाणि शेषेन्द्रियाणि, तेषा वृत्तिः शेषेन्द्रियवृत्तिः । सर्वात्मना = सर्वश्चाऽसौ आत्मा सर्वात्मा, तेन सर्वात्मना ।

अत्र श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाऽशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्वविषयाऽधिगमः किं न स्यादित्युत्प्रेक्षालङ्कारः ।

**भावार्थः**—दर्शनीयप्रधानं तं हर नेत्रैः सतृष्णमवलोकयन्त्यः पुरसुन्दर्यो महेश्वररूपव्यतिरिक्तानीन्द्रियान्तरविषयभूतानि शब्दस्पर्शगन्धरसादीनि भावान्तराणि तत्तदिन्द्रियैर्न जगृहुः । तथा हि–आसा पुरसुन्दरीणा नेत्रव्यतिरिक्ताना श्रोत्रादीनाश्रवणादिरूपा प्रवृत्तिः स्वरूपकात्स्न्र्येन चक्षुरिन्द्रिय प्रविष्टेवासीदिति भावः।

**भाषा**—दर्शनीय शंकर जी को आखों से देखती हुई स्त्रियों ने तन्मयता के कारण अन्य विषयों पर ध्यान नहीं दिया, मानो उनकी सारी इन्द्रियाँ आँखों मे ही प्रविष्ट हो गईं ।

अथ पौराऽङ्गनावचनान्याह—

**स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाऽपि तप्तम् ।**
**या दास्यमप्यस्य लभेत नारी सा स्यात्कृताऽर्था किमुताऽङ्कशय्याम् ॥६५॥**

कोमल उमा ने शम्भु–हित जो तप किया वह है अमल ।
दासी बने कृत कृत्य वह दी अंक में जीवन सफल ॥

**अन्वयः**—पेलवया अपि अपर्णया एतदर्थं दुश्चरं तप तप्तं स्थाने । या नारी अस्य दास्यम् अपि लभेत, सा कृतार्था स्यात् , या अङ्कशय्या लभेत सा किमुत ।

**व्याख्या**—पेलवया अपि = कोमलया अपि, अपर्णया=पार्वत्या, एतदर्थम्= शिवाऽर्थं, दुश्चर = दुष्कर, तपः, तप्तम् = आचरित, स्थाने = युक्तम् । या नारी= या स्त्री, अस्य = शिवस्य, दास्यम् अपि = दासीत्वम् अपि, लभेत = पाप्नुयात् । सा = नारी, कृतार्था स्यात = कृतकृत्या भवेत् , या = स्त्री, अङ्कशय्याम्=उत्सङ्ग-शयनं, लभेत = प्राप्नुयात् , सा = नारी, किमुत = किमु वक्तव्यम् ।

**व्युत्पत्तिः**—अपर्णया = अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका" इत्यमरः । एतदर्थम् = एतस्मै इदम् एतदर्थं, चतुर्थीतत्पुरुषः । "अर्थेन नित्य-समासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति समासः । दुश्चरं = दुःखेन चरितुं शक्य दुश्चरम् । दास्य = दास्या भावो दास्य, तत् , ष्यञ्प्रत्ययः । कृतार्था=कृतः अर्थ. यया सा कृतार्था । अङ्कशय्याम् = अङ्क एव शय्या अङ्कशय्या, ताम् अङ्क शय्याम् । कैमुतिकन्यायेन अर्थापत्तिरलङ्कारः ।

**भावार्थः**—प्रकृतिकोमलयापि पार्वत्या एतादृशवरप्राप्त्यर्थमत्यन्तदुष्करं तपस्तप्तमिति यत्तदुचितमेव कृतम् । या स्त्री अस्य महेश्वरस्य दासीत्वमपि प्राप्नुयात् , सा स्त्री कृतकृत्या भवेत् , या पुनरस्योत्सङ्गे शयन लभेत, सा कृता-र्थेति किमु वक्तव्यमिति भाव ।

**भाषा**—प्रकृति से सुकुमार पार्वती ने ऐसे वर के लिये जो तप किया, वह उचित ही था, जो स्त्री इस शकर की दासी का पद प्राप्त करेगी, वह भी कृतकृत्य हो जायेगी, और जो उसके गोद में शयन करेगी, उसका क्या कहना ।

अन्यासा वचनप्रकारान्तराण्याह—

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६६ ॥**

शिव-पार्वती की जो न विधि जोड़ा मिला देते विमल ।
तो रूप के निर्माण का सब यत्न ही होता विफल ॥

**अन्वयः**—स्पृहणीयशोभम् इद द्वन्द्व परस्परेण न अयोजयिष्यत् चेत् , प्रजाना पत्युः अस्मिन् द्वये रूपविधानयत्नः विफलः अभविष्यत् ।

**व्याख्या**—स्पृहणीयशोभम् = अभिलषणीयच्छवि, सर्वैरिति शेषः । इद द्वन्द्वम् = इद मिथुनं, परस्परेण=मिथः, न अयोजयिष्यत् चेत् = नाऽमेलयिष्यत्

यदि, प्रजाना पत्युः = ब्रह्मणः, अस्मिन् = एतस्मिन् , द्वये = द्वन्द्वे, गौरीशङ्कररूपे मिथुने इत्यर्थः । रूपविधानयत्नः = सौन्दर्यनिर्माणप्रयासः, विफलः = निष्फलः, अभविष्यत् = भवेत् ।

**व्युत्पत्तिः**—स्पृहणीयशोभं स्पृहयितुं योग्या स्पृहणीया, अनीयर् प्रत्ययः । स्पृहणीया शोभा यस्य तत् स्पृहणीयशोभ, तत् । द्वन्द्व="स्त्रीपुंसोर्मिथुन द्वन्द्वम्" इत्यमरः । "द्वन्द्व रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाऽभिव्यक्तिषु" इति निपातः । अयोजयिष्यत् । अभविष्यत् , इत्युभयत्रापि "लिङ्निमित्ते लृङ् क्रियाऽऽतिपत्तौ" इति लृङ् । प्रजाना=प्रजायन्त इति प्रजाः, तासा प्रजाना, डप्रत्ययः । द्वये = द्वौ अवयवौ यस्य तत् द्वयं, तस्मिन् द्वये, तयप् तस्याऽयजादेशः । रूपविधानयत्नः=रूपस्य विधानं रूपविधानं, तस्मिन् यत्नः रूपविधानयत्नः । विफलः= विगतं फलं यस्मात् इति विफलः ।

**भावार्थः**—सर्वैराशास्यमानसौन्दर्यमिदमुमामहेश्वररूपं मिथुनं प्रजापतिर्यदि नामेलयिष्यत् , तर्हि तस्याऽस्मिन् मिथुने लोकोत्तरसौन्दर्यनिर्माणप्रयासः एतदनुरूपस्त्रीपुंसान्तराभावात् निष्फलोऽभविष्यदिति भावः ।

**भाषा**—परस्पर सराहने लायक सुन्दर पार्वती और शङ्कर का यदि विवाह नहीं होता, तो इन दोनों के रूप बनाने में ब्रह्मा का परिश्रम असफल हो जाता ।

उक्तमर्थमुपपादयितुं महेश्वरस्य लावण्यातिशयमाहुः—

**न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमाऽऽयुधस्य ।**
**व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥**

**संरम्भ से शिव ने मदन का देह दाह न है किया ।**
**उसने निरख कर शम्भु छवि निज गात्र भस्म स्वयं किया ॥**

**अन्वय**—आरूढरुषा अनेन कुसुमायुधस्य शरीरं न दग्धं नूनम् । किन्तु कामः अमु देवम् उदीक्ष्य व्रीडात् स्वयम् एव सन्न्यस्तदेहः, इति मन्ये ।

**व्याख्या**—आरूढरुषा = प्ररूढकोपेन, अनेन = शिवेन, कुसुमायुधस्य = कुसुमेषोः, कामस्येत्यर्थः । शरीर = वपुः, न दग्ध नूनं=न भस्मीकृत ध्रुवम् । किन्तु—कामः = मदनः, अमु=पुरोवर्तिनं, देवं = शिवम् , उदीक्ष्य = दृष्ट्वा, व्रीडात् = लज्जायाः, हेतोः । स्वयमेव = आत्मनैव, सन्न्यस्तदेहः=सन्त्यक्तशरीरः, इति = एवं, मन्ये = विचारयामि ।

**व्युत्पत्तिः**—आरूढरुषा = आरूढा रुट् यस्य सः आरूढरुट्, तेन आरूढ

रुषा, "कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । कुसुमाऽऽयुधस्य= कुसुमानि आयुधानि यस्य सः कुसुमाऽऽयुधः, तस्य कुसुमायुधस्य । व्रीडात्= "व्रीड लज्जायाम" इति धातोः "गुरोश्च हल." इत्यप्रत्ययः, तत. "अजाद्यत-ष्टाप्" इति टाप्प्रत्ययः । "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इति वदतोऽमरसिंहस्य तात्पर्यं व्रीडाशब्दस्य प्रायिकप्रयोगसूचनार्थं, न तु अकाराऽन्तव्रीडशब्दाऽभावद्योतनार्थमिति ज्ञेयम् । अत्र तु "भावे" इति सूत्रविहितघञन्तो व्रीडशब्दः, स च प्रयोगे क्वाचित्को वेदनीयः ।

"गण्डूषगर्जभुजगागरहारकीलः ज्वालाजटारभसवर्तकगर्धशृङ्गाः ।

व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समामयाश्च ॥"

इति स्त्रीपुंलिङ्गकथने रभसः । "व्रीडोऽस्त्रीबे त्रपा लज्जा" इति च तेनोक्तम् । सन्न्यस्तदेहः=सम्यक् न्यस्त सन्न्यस्त, "कुगतिप्रादयः" इति गतिसमासः । सन्न्यस्तं देह येन सः सन्न्यस्तदेहः, "अर्धर्चादयः पुंसि च" इति देहपदस्य पुन्नपुंसकलिङ्गत्वम् । अत्रोत्प्रेक्षालङ्कारः । मन्ये शब्दोऽयम् उत्प्रेक्षावाचकः । तथा चोक्तं साहित्यदर्पणे—"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।" इति । अनेन श्लोकेन पुरसुन्दरीणा स्वपक्षभूतस्य मन्मथस्य दाहेन जनिताया महेश्वरविषयाया असूयाया. प्रशमो दर्शितः ।

**भावार्थः**—असौ हरः कोपमधिष्ठाय कामदेवस्य शरीरं भस्मसात् नैवाकरोत् । किन्तु अस्य महेश्वरस्य लोकोत्तरसुन्दर शरीरमवेक्ष्य सञ्जातलज्जः कामदेव. स्वयमेव स्वशरीर योगाग्निना भस्मसादकरोदिति मन्यामहे वयमिति भावः ।

**भाषा**—शकर ने क्रोध करके काम के शरीर को नहीं भस्म किया, वल्कि उसी ने लज्जा वश शम्भु की सुन्दरता देखकर योगाग्नि द्वारा अपने शरीर को जला दिया ।

अथैतादृशेन महेश्वरेण सञ्जातसम्बन्धस्य स्वामिनो हिमालयस्यापि प्रकृष्टतरमभ्युदयं प्रदर्शयन्ति—

**अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।**

**मूर्धानमालि ! क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥६८॥**

भाग्य से सम्बन्ध शिव का शिर रहा ऊँचा विमल ।

अब और ऊंचे भाव से धारण करेंगे भू अचल ॥

**अन्वयः**—हे आलि ! शैलराजः दिष्ट्या मनोरथप्रार्थितम् अनेन ईश्वरेण

सम्बन्धम् उपेत्य, क्षितिधारणोच्चम् मूर्धानम् उच्चैस्तरं वक्ष्यति ।

**व्याख्या**—हे आलि = हे सखि !, शैलराजः = पर्वतेश्वरः । हिमालय इत्यर्थः । दिष्ट्या = भाग्येन, मनोरथप्रार्थितम् = इच्छाविषयीकृतम्, अनेन = पुरोवर्तिना, ईश्वरेण = शङ्करेण, सम्बन्धं = जामातृलक्षणम्, उपेत्य = प्राप्य, क्षितिधारणोच्चं = पृथ्वीधारणोन्नत, मूर्धानं = शिरः, उच्चैस्तरम् = उन्नततर, वक्ष्यति = धारयिष्यति ।

**व्युत्पत्तिः**—आलिः = "आलिः सखी वयस्या च" इत्यमरः । शैलराजः = शैलाना राजा शैलराजः, समासाऽन्तष्टच्प्रत्ययः । मनोरथप्रार्थितं = मनोरथैः प्रार्थितः मनोरथप्रार्थितः, त मनोरथप्रार्थित । "प्रार्थना याच्ञाऽवरोधयोः" इति कोषः। क्षितिधारणोच्चं = क्षितेर्धारण क्षितिधारण, तेन उच्चः क्षितिधारणोच्चः, तं क्षितिधारणोच्चं । मूर्धानम् = "उत्तमाऽङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । उच्चैस्तरम् = अतिशयेन उच्चैर्यथा तथा उच्चैस्तरम्, उच्चैरिति अव्ययात् तरप्प्रत्ययः । मूर्ध्नः द्रव्यत्वात् न आमुप्रत्ययाऽन्तो निपातः । वक्ष्यति = वहतेर्लृट् ।

**भावार्थः**—हे सखि ! हिमालयोऽयमन्यैरत्यन्तदुष्करस्य क्षितिमण्डलधारणस्यानायासेन क्रियमाणत्वादिदानीमेवाभिमानोन्नतमात्मशिरश्चिराभिलषितस्य महेश्वरसम्बन्धस्य लाभानन्तरमत्युन्नततत्वेन धारयिष्यतीति भावः ।

**भाषा**—हे सखि ! यह हिमालय भगवान शकर का अभिलषित सम्बन्ध प्राप्त करके, पृथ्वी धारण करने से उच्च शिर को और भी अधिक उच्चतर करेगा।

अथ पुरवधूवृत्तान्तमुपसंहृत्य महेश्वरस्य हिमवत्पुरप्राप्तिप्रकारमाह—

**इत्यौषधिप्रस्थविलासिनीनां शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः ।**
**केयूरचूर्णीकृतलाजमुष्टिं हिमाऽऽलयस्याऽऽलयमाससाद ॥ ६६ ॥**

**पुर की स्त्रियों के शम्भु वर वे गान सुनते मधु सदन ।**
**केयूर चूर्ण सुलाज मय पहुंचे हिमालय के भवन ॥**

**अन्वयः**—त्रिनेत्रः इति ओषधिप्रस्थविलासिनीना श्रोत्रसुखाः कथाः शृण्वन्, केयूरचूर्णीकृतलाजमुष्टिं हिमाऽऽलयस्य आलयम् आससाद ।

**व्याख्या**—त्रिनेत्रः = त्र्यम्बकः, इति = इत्थम्, ओषधिप्रस्थविलासिनीनां = हिमाऽऽलयपुरसुन्दरीणा, श्रोत्रसुखाः = श्रवणमधुराः, कथाः = आलापान्, शृण्वन् = आकर्णयन्, केयूरचूर्णीकृतलाजमुष्टिं = अङ्गदपिष्टलाजाञ्जलिं, हिमालयस्य = हिमवतः, आलयं = भवनम्, आससाद = प्राप ।

**व्युत्पत्तिः**—त्रिनेत्रः=त्रीणि नेत्राणि यस्य स त्रिनेत्रः। ओषधिप्रस्थविलासिनीनां=विलसन्तीति विलासिन्यः, "वौ कषलसकत्थस्रम्भः" इति घिनुण्प्रत्ययः, तदन्तात् स्त्रीत्वविवक्षाया "ऋन्नेभ्यो ङीप्" इति ङीप्। ओषधिप्रस्थस्य विलासिन्यः ओषधिप्रस्थविलासिन्यः, तासाम् ओषधिप्रस्थविलासिनीनां। श्रोत्रसुखाः=सुखयन्तीति सुखाः, श्रोत्रयोः सुखा इति श्रोत्रसुखाः, ताः। शृण्वन्=शृणोतीति शृण्वन्, "श्रु श्रवणे" इति धातोः शतृप्रत्ययः। केयूरचूर्णीकृतलाजमुष्टि=अचूर्णाः चूर्णा यथा सम्पद्यन्ते तथा कृताः चूर्णीकृताः, च्विप्रत्ययः। लाजानां मुष्टयः लाजमुष्टयः। केयूरैः चूर्णीकृताः केयूरचूर्णीकृताः। केयूरचूर्णीकृताः लाजमुष्टयः यस्मिन् सः केयूरचूर्णीकृतलाजमुष्टिः, तं केयूरचूर्णीकृतलाजमुष्टिम्। "भवनेऽवकीर्णा आचारलाजा अन्तराले एवाऽङ्गदैश्चूर्णपेषं पिष्यन्त" इति पुरन्ध्रीजनसम्बन्धाऽतिशयोक्तिः। अनेन सम्मर्द उक्तः। हिमालयस्य=हिमस्य आलयः हिमालयः, तस्य हिमालयस्य। आलय="गृहाः पुंसि च भूम्न्येव निकाय्यनिलयाऽऽलयाः" इत्यमरः।

**भावार्थः**—महेश्वरः ओषधिप्रस्थनगरसुन्दरीणां पूर्वोक्तप्रकारानन्याश्च श्रवण, मधुरानालापान् आकर्णयन् सन्, जनसम्मर्दवशात् केयूरसंघट्टनेन चूर्णीभूतपुरवधूजनावकीर्णलाजाञ्जलिं हिमालयस्य भवनं सम्प्रापेति भावः।

**भाषा**—इस तरह ओषधिप्रस्थ की स्त्रियों की श्रुति-मधुर कथाओं को सुनते हुए महेश्वर हिमालय के घर में पहुँचे, जहाँ पर आचारार्थ छोड़े गये लाजा भीड़ में लोगों के विजायट के बीच पड़कर चूर्ण हो जाते थे।

अथ महेश्वरस्य वाहनावतारं प्रदर्शयन् भवनमध्यप्रवेशमाह—

**तत्राऽवतीर्याऽच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्ष्णः।**
**क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥**

हरि हाथ के अवलम्ब से शिव शरद घन भास्वान सम।
वृष से उतर विधि क्रान्त पहुँचे अचल कक्षों में सहम ॥

**अन्वयः**—तत्र अच्युतदत्तहस्तः "शरद्घनात् दीधिमान् इव" उक्ष्णः अवतीर्य कमलासनेन पूर्वं क्रान्तानि अद्रिपतेः कक्ष्यान्तराणि विवेश।

**व्याख्या**—तत्र=हिमवदालये, अच्युतदत्तहस्त=विष्णुदत्तकरः, विष्णुविस्तीर्णहस्ताऽवलम्बः सन्नित्यर्थः। शरद्घनात्=शरन्मेघात्, शरद्विशेषणान्मेघस्य शुभ्रत्व गम्यते। दीधितिमान् इव=सूर्य इव, उक्ष्णः=वृषात्=अवतीर्य=अव-

रुह्य, कमलाऽऽसनेन = ब्राह्मणा, पूर्वम् = अग्रे, क्रान्तानि = प्रविष्टानि, अद्रिपतेः= हिमाऽऽलस्य, कक्ष्यान्तराणि = गेहप्रकोष्ठान्तराणि, विवेश = प्रविष्टवान् ।

**व्युत्पत्तिः**— अच्युतदत्तहस्तः = दत्तः हस्तः यस्मै स दत्तहस्तः, अच्युतेन दत्तहस्ताः अच्युतदत्तहस्तः, "पीताऽम्बरोऽच्युतः शार्ङ्गी" इत्यमरः । शरद्घनात्= शरदः घनः शरद्घनः, तस्मात् शरद्घनात् । दीधितिमान् = दीधितयः सन्ति यस्य स दीधितिमान् , प्राशस्त्ये मतुप्प्रत्ययः । उक्ष्णः = "उक्षा भद्रो बलीवर्द" इत्यमरः । कमलाऽऽसनेन = कमलम् आसनं यस्य सः कमलाऽऽसनः, तेन कमला सनेन, "विरिञ्चिः कमलाऽऽसनः" इत्यमरः । अद्रिपतेः=अद्रीणा पतिः अद्रिपतिः, तस्य अद्रिपतेः । कक्ष्यान्तराणि = अन्याः कक्ष्याः कक्ष्यान्तराणि, तानि ! "कक्ष्या कच्छवरत्राया काञ्च्या गेहप्रकोष्ठके" इति यादवः । अत्रोपमालङ्कारः ।

**भावार्थः**—हिमालयस्य भवने "सूर्यः शरत्कालमेघादिव" महेश्वरः स्ववाहनभूताद् वृषभात् नारायणेनादरेण वितीर्णं हस्तमवलम्ब्य कृतावतारः सन् , सबहुमानमग्रेसरतां प्रापितेन ब्राह्मणा पूर्वमुपगतानि हिमालयस्य भवनप्रकोष्ठान्तराणि प्रविष्टवानिति भावः ।

**भाषा**—वहाँ शम्भु ने विष्णु के हाथ के सहारे से "शरत काल के मेघ से सूर्य के समान" बैल से उतर कर, पहले ही से ब्रह्मा से अधिष्ठित हिमालय के घर पर के कमरे में प्रवेश किया ।

इन्द्रादीनामपि हिमालयभवनप्राप्तिमाह—

**तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च ।**
**गणाश्च गिर्यालयमभ्यगच्छन्प्रशस्तमारम्भमवोत्तमाऽर्थाः ॥७१॥**

**इन्द्रादि ने सप्तर्षि ने गण ने किया पीछे गमन ।**
**जैसे सफल आरम्भ को करते प्रयोजन अनुगमन ॥**

**अन्वयः**—तम् अन्वक् इन्द्रप्रमुखाः देवाः, सप्तर्षिपूर्वाः परमर्षयः, गणाश्च "उत्तमाऽर्थाः प्रशस्तम् आरम्भम् इव" गिर्यालयम् अभ्यगच्छन् ।

**व्याख्या**—तं = शिवम् , अन्वक् = अनुपदम् , इन्द्रप्रमुखाः = इन्द्रप्रधानाः, देवाः = सुराः, सप्तर्षिपूर्वाः = सप्तर्षिप्रभृतयः, परमर्षयः = सनकाऽऽदिमहर्षयः, गणाश्च = प्रमथाश्च, उत्तमाऽर्थाः = महाप्रयोजनाः, प्रशस्तं = प्रकृष्टम् , अमोघमित्यर्थः । आरम्भम् इव=उपायम् इव, गिर्यालयं = हिमालयमन्दिरम् , अभ्यगच्छन्=अभ्यगमन् , प्राविशन्नित्यर्थः ।

व्युत्पत्तिः—अन्वक् = अन्वगन्वक्षमनुगेऽनुपद क्लीबमव्ययम्" इत्यमरः । इन्द्रप्रमुखाः = इन्द्रः प्रमुखः येषा ते इन्द्रप्रमुखाः । सप्तर्षिपूर्वाः = सप्त ऋषयः, सप्तर्षयः, "दिक्संख्ये सज्ञायाम्" इति समासः । सप्तर्षयः पूर्वे येषा ते सप्तर्षिपूर्वाः, "न बहुव्रीहौ" इति सर्वनामसंज्ञाप्रतिषेध. । परमर्षयः = परमा ऋषयः परमर्षयः, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति तत्पुरुष. । उत्तमाऽर्थाः = उत्तमाश्च ते अर्थाः उत्तमार्थाः । प्रशस्त = प्रकर्षेण शस्तः प्रशस्तः, तं प्रशस्तम् । आरम्भम्=आरम्यत इत्यारम्भः, तम् आरम्भम् । गिर्यालय=गिरेः आलयः, गिर्यालयः, त गिर्यालयम् ।

भावार्थः—इन्द्रादयो देवा, सप्तर्षिप्रमुखा महर्षयश्च, प्रमथादिगणाश्च "महाप्रयोजनाः सफलं व्यापारमिव" महेश्वरानुपदं हिमालयमन्दिर प्राविशन् इति भावः।

भाषा—इसके बाद इन्द्रादि देव, सप्तर्षिप्रमुख महर्षि और सभी गण "महान् प्रयोजन सफल व्यापार की तरह" शंकर के पीछे पीछे हिमालय के घर में आये।

इत्थमुपगतभवनस्य महेश्वरस्य मधुपर्काद्युपायनमाह—

**तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।**
**नवे दुकूले च नगोपनीतं प्रत्यग्रहीत्सर्वममन्त्रवर्जम् ॥ ७२ ॥**

उपविष्ट आसन पर रतन, जल, गव्य मधु मय ले लिया ।
आनीत गिरो से नव्य पट भी ग्रहण शङ्कर ने किया ॥

अन्वयः—तत्र ईश्वरः विष्टरभाक् यथावत् सरत्नम् अर्घ्यं, मधुमत् गव्यं, नवे दुकूले च इति सर्वं नगोपनीतम् अमन्त्रवर्जम् प्रत्यग्रहीत् ।

व्याख्या—तत्र = हिमवन्मन्दिरे, ईश्वरः = शिवः, विष्टरभाक् = आसनगतः, उपविष्टः सन् इत्यर्थः । यथावत् = यथार्हम्, विधिवदित्यर्थः । सरत्नम् = रत्नसहितम्, अर्घ्यम्=अर्घार्थं जलं, मधुमत्=क्षौद्रयुक्त, गव्यं च = दधि च, मधुपर्कमित्यर्थः । नवे = नूतने, दुकूले च=क्षौमे च, इति=पूर्वोक्तं, सर्वं=सम्पूर्णं, नगोपनीतं=हिमालयानीतम्, अमन्त्रवर्जं=समन्त्रकम्, प्रत्यग्रहीत्=स्वीचकार ।

व्युत्पत्तिः—विष्टरभाक्=विष्टरं भजतीति विष्टरभाक्, ण्विप्रत्ययः । सरत्नं = रत्नैः सहितं सरत्नम् । अर्घ्यम् = अर्घार्थम् उदकम् अर्घ्यं तत्, "पादार्घाभ्यां च इति यत् । मधुमत्=मधु अस्मिन् अस्तीति मधुमत्, तत् । मतुप्प्रत्ययः । गव्यं=गवि भव गव्यं, तत् "दधिमधुनी सर्पिर्वा मध्वलाभे" इत्याश्वलायनगृह्यसूत्रात् । दुकूले = "क्षौमं दुकूलम्" इत्यमरः । नगोपनीतं = नगेन

उपनीतं नगोपनीतं, तत् । अमन्त्रवर्जम्=मन्त्रान् वर्जयित्वा मन्त्रवर्जम्, "द्वितीयाया च" इति णमुल्प्रत्ययः । न मन्त्रवर्जम् यथा तथा अमन्त्रवर्जम् ।

**भावार्थः**—हिमवन्मन्दिरे विष्टरोपविष्टो हरो रत्नसहितमर्घ्यम्, माक्षिकसहित दधि, नूतने परिधानीयोत्तरीयवसने चेति सर्वं हिमालयप्रदत्तं समन्त्रं प्रतिगृहीतवानिति भावः ।

**भाषा**—वहाँ आसन पर बैठे हुए शंकर ने हिमालय प्रदत्त रत्न-सहित अर्घ्य, माक्षिक-सहित दधि और नये वस्त्रों का विधिपूर्वक ग्रहण किया ।

अथ महेश्वरस्य पार्वतीसामीप्यप्राप्तिमाह—

**दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।**
**वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥**

अवरोध जन गिरिजा-निकट लाये त्रिदृग को इस तरह ।
वेला-निकट शशि-किरण लातीं सिन्धु को हैं जिस तरह ॥

**अन्वयः**—दुकूलवासाः सः विनीतैः अवरोधरक्षैः "स्फुटफेनराजिः उदन्वान् नवैः चन्द्रपादैः वेलासमीपम् इव" वधूसमीप निन्ये ।

**व्याख्या**—दुकूलवासाः=क्षौमधारी, सः=शिवः, विनीतैः=नम्रैः, अवरोधरक्षैः=अन्तःपुररक्षकैः, स्फुटफेनराजिः=व्यक्तडिण्डीरपङ्क्तिः, उदन्वान्=समुद्रः, नवैः=प्रत्यग्रैः, अचिरोदितैरित्यर्थः । चन्द्रपादैः=चन्द्रकिरणैः, वेलासमीपम्=समुद्रसीमासमीपम्, इव, वधूसमीपं=पार्वतीसकाशं, निन्ये=नीतः ।

**व्युत्पत्तिः**—दुकूलवासाः=दुकूलं वासो यस्य स दुकूलवासाः । अवरोधरक्षैः=अवरोधान् रक्षन्तीति अवरोधरक्षाः, तैः अवरोधरक्षैः, कर्मण्यणप्रत्ययः । "शुद्धान्तश्चावरोधश्च" इत्यमरः । स्फुटफेनराजिः=फेनाना राजिः फेनराजिः, "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । स्फुटा फेनराजिर्यस्य सः स्फुटफेनराजिः । उदन्वान्=उदकम् अस्याऽस्तीति उदन्वान्, "उदन्वानुदधौ च" इति निपातनात्साधुः । "उदन्वानुदधिः सिन्धुः" इत्यमरः । चन्द्रपादैः=चन्द्रस्य पादाः चन्द्रपादाः, तैः चन्द्रपादैः । वेलासमीपं=वेलायाः समीपं वेलासमीपं, वधूसमीपं=वध्वाः समीपं वधूसमीपम् । अत्रोपमालङ्कारः ।

**भावार्थः**—मधुपर्कादिदानान्तरं परिधृतनगोपनीतदुकूलः स हरः प्रवणैरन्तःपुरकुशलैर्जनैः "प्रकटफेनपङ्क्तिः समुद्रोऽचिरोदितैश्चन्द्रकिरणैर्वेलासकाशमिव" पार्वत्याः समीपं प्रापितोऽभूदिति भावः ।

**भाषा**—इसके बाद चन्द्र किरणों द्वारा वेला के समीप प्राप्त होने वाले फेन युक्त समुद्र की तरह, स्वच्छ दुकूलधारी शंकर अन्तःपुर-जनोंसे पार्वती के समीप पहुचाये गये ।

पार्वतीपरिसरे महेश्वरस्य प्रसादातिशयं वर्णयति—

**तस्या प्रवृद्धाऽऽननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।**
**प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ७४ ॥**

शिव-मुदित गिरिजा-विधु-वदन-सम कान्ति मय थे इस तरह ।
शुचि-कुमुद-मय-जल-सहित आश्विन काल होता जिस तरह ॥

**अन्वयः**—प्रवृद्धाऽऽननचन्द्रकान्त्या तया कुमार्या शरदा लोक इव संसृज्यमानः शिवः प्रफुल्लचक्षुःकुमुदः प्रसन्नचेतःसलिलः अभूत् ।

**व्याख्या**—प्रवृद्धाऽऽननचन्द्रकान्त्या = विवृद्धमुखेन्दुशोभया, तया = पूर्वोक्तया, कुमार्या = पार्वत्या, शरदा = शरत्कालेन, लोक इव=जन इव, ससृज्यमानः संगच्छमानः, शिवः = शङ्करः, प्रफुल्लचक्षु.कुमुदः = विकचनेत्रकैरवः, प्रसन्नचेतः-सलिल. = निर्मलीकृतचित्तजलः, अभूत्=अभवत् ।

**व्युत्पत्तिः**—प्रवृद्धाऽऽननचन्द्रकान्त्या = प्रकर्षेण वृद्धः, प्रवृद्धः, "सुप्सुपा" इति समास. । आननं चन्द्र इव इति आननचन्द्रः, "उपमित व्याघ्रादिभिः सामान्याऽप्रयोगे" इति उपमितसमासः । आननचन्द्रस्य=चन्द्रसदृशस्याननस्य, आननसदृशस्य चन्द्रस्य च, कान्तिः आननचन्द्रकान्तिः । प्रवृद्धा आननचन्द्रकान्तिः यस्याः सा प्रवृद्धाऽऽननचन्द्रकान्तिः, तया प्रवृद्धाऽऽननचन्द्रकान्त्या । प्रफुल्ल-चक्षुःकुमुद.=चक्षूंषि कुमुदानि इव चक्षुःकुमुदानि, उपमितसमासः । प्रफुल्लं चक्षुः-कुमुदं = कुमुदसदृश चक्षुःसदृश कुमुदं च, यस्य सः प्रफुल्लचक्षुःकुमुदः । प्रसन्नचेतःसलिलः=चेतः सलिलम् इव चेतःसलिलम्, उपमितसमासः । "चित्त तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः । प्रसन्न चेतःसलिलं=सलिलसदृशं चेतः, चेतःसदृश सलिल च, यस्य स. प्रसन्नचेत सलिलः । अत्राप्युपमालङ्कारः ।

**भावार्थः**—प्रवर्धमानमुखेन्दुशोभया लोकोत्तरगुणविशिष्टया पार्वत्या सङ्गच्छमानो हरः "शरदा संसृज्यमानो लोक इव" विकसितनेत्रकुमुदो निर्मलमानसजलश्चासीदिति भावः ।

**भाषा**—शरद काल के आगमन से लोक के समान, पार्वती के चन्द्रानन की शोभा से शंकर जी के नेत्र-कुमुद खिल गये, और मन सलिल की तरह

निर्मल होगया।

चिराभिलषितदर्शनयोस्तयोरुमामहेश्वरयोः परस्परदर्शने शृङ्गारचेष्टा वर्णयति—

**तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि।**
**ह्रीयन्त्रणां तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि॥ ७५॥**

सानन्द संगति से अमित कातर-त्रपा-पूरित हिया।
वर के बधू के नेत्र ने लज्जा सरस अनुभव किया॥

**अन्वयः**—तयोः समापत्तिषु कातराणि किञ्चित् व्यवस्थापितसंहृतानि अन्योन्यलोलानि विलोचनानि तत्क्षण ह्रीयन्त्रणाम् अन्वभूवन्।

**व्याख्या**—तयोः=वधूवरयोः, उमामहेश्वरयोरित्यर्थः। समापत्तिषु=यदृच्छया सगतिषु, कातराणि=अधीराणि, किंचित्=ईषत्, व्यवस्थापितसंहृतानि= स्थिरीकृतनिवर्तितानि, अन्योन्यलोलानि=मिथःसतृष्णानि, विलोचनानि=नेत्राणि, तत्क्षण=तस्मिन् अवसरे, ह्रीयन्त्रणा=लज्जासङ्कोचम्, अन्वभूवन्= अनुबभूवुः।

**व्युत्पत्तिः**—तयोः=सा च स च तौ, तयोः तयोः। कातराणि="अधीरे कातरः" इत्यमरः। व्यवस्थापितसंहृतानि=पूर्वं व्यवस्थापितानि पश्चात् संहृतानि व्यवस्थापितसंहृतानि, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति समासः। अन्योन्यलोलानि=अन्योन्यस्मिन् लोलानि अन्योन्यलोलानि, "लोलश्चलसतृष्णयोः" इत्यमरः। तत्क्षण=सः क्षणः यस्मिन् कर्मणि तद् यथा तथा तत्क्षण, क्रि० वि०। ह्रीयन्त्रणा=ह्रियः यन्त्रणा, ह्रीयन्त्रणा, तां ह्रीयन्त्रणाम्।

**भावार्थः**—उमामहेश्वरयोः यदृच्छया परस्परसमागमेषु चकितानि, पूर्वं किञ्चित् स्थिरीकृतानि पुनस्तदानीमेव लज्जया व्यावर्तितानि चान्योन्यं प्रति सतृष्णानि कटाक्षविक्षेपादिनयनकर्माणि तस्मिन् क्षणे कामपि लज्जायन्त्रणामनुबभूवुरिति भावः।

**भाषा**—पार्वती और शङ्कर के चचंल नेत्र क्षण भर के लिये मिल जाते थे, और फिर हट जाते थे। इस तरह दोनों ने उस समय लज्जा का अनुभव किया।

अथ तयोः पाणिग्रहण वर्णयति—

**तस्याः करं शैलगुरूपनीतं जग्राह ताम्राऽङ्गुलिमष्टमूर्त्तिः।**
**उमातनौ गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम्॥ ७६॥**

शंकित मदन शिव से उमा-उर में अदेह प्रथम हुआ।

हिम गिरि-गृहीत उमा-त्रिहग का पाणि ग्रहण सुवर हुआ ॥

**अन्वयः**—अष्टमूर्तिः तच्छङ्किनः उमातनौ गूढतनोः स्मरस्य पूर्वं प्ररोहम् इव स्थित, शैलगुरूपनीत ताम्राङ्गुलिं तस्याः करं जग्राह ।

**व्याख्या**—अष्टमूर्तिः = शङ्करः, तच्छङ्किनः = हरशङ्किनः, हरभीतस्येत्यर्थः । अत एव-उमातनौ = पार्वतीशरीरे, गूढतनोः = गुप्तशरीरस्य, स्मरस्य = कामस्य, पूर्वं = प्रथम, प्ररोहम् इव = अङ्कुरम् इव, स्थितमिति शेषः । शैलगुरूपनीतं=हिमवत्प्रापित, यद्वा हिमवत् पुरोहितप्रापित, ताम्राऽङ्गुलिं = रक्ताऽङ्गुलिं, तस्याः = पार्वत्याः, करं = पाणिं, जग्राह = गृहीतवान् ।

**व्युत्पत्तिः**—अष्टमूर्त्तिः = अष्टौ मूर्तयः यस्य सः अष्टमूर्त्तिः । तच्छङ्किनः = तस्मात् शङ्कते तच्छील इति तच्छङ्की, तस्य तच्छङ्किनः, णिनिः । उमातनौ = उमायाः तनुः उमातनुः, तस्याम् उमातनौ, "त्रिया मूर्तिस्तनुस्तनूः" इत्यमरः । गूढतनोः गूढा तनुर्यस्य सः गूढतनुः, तस्य गूढतनोः । शैलगुरूपनीतं = शैलानां गुरुः शैलगुरुः, यद्वा शैलस्य गुरु. शैलगुरुः, तेन उपनीतः शैलगुरूपनीतः, तं शैलगुरूपनीत, ताम्राऽङ्गुलिं=ताम्रा अङ्गुलयः यस्य स ताम्राङ्गुलि , तं ताम्राङ्गुलिम् । अत्रोत्प्रेक्षया दर्शनमात्रेणैव मनोविकारहेतुत्व ध्वन्यते ।

**भावार्थः**—हरः स्वस्माद् भीतस्यात एव—पार्वतीशरीरेणाच्छन्नशरीरस्य कामदेवस्य प्रथमोद्गतमङ्कुरमिव स्थित हिमवत्पुरोधसा प्रसारित रक्ताङ्गुलिमुमाया हस्तं समन्त्रं गृहीतवानिति भावः ।

**भाषा**—महादेव के भय से पार्वती के शरीर में छिपे हुए कामदेव के प्रथम अङ्कुर के समान, हिमालय के पुरोहित से प्रसारित लाल उँगलियों वाले पार्वती के हाथ को शङ्कर ने पकड़ा ।

प्रवृद्धरागयोस्तयोः पाणिसमागमकाले जायमानान् सात्वीकविकारानाह—

**रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाऽङ्गुलिः पुङ्गवकेतुरासीत् ।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥७७॥**

पुलकित हुई गिरिजा, महेश्वर की भिगी अँगुली युगल ।
उद्वाह से स्मर-वृत्ति दोनों में हुई सम अति अमल ॥

**अन्वयः**—उमायाः रोमोद्गमः प्रादुरभूत् । पुङ्गवकेतुः स्विन्नाङ्गुलिः आसीत् । पाणिसमागमेन तयोः मनोभवस्य वृत्तिः समं विभक्ता इव अभूत् ।

**व्याख्या**—उमायाः = पार्वत्याः, रोमोद्गमः=रोमाञ्चः, प्रादुरभूत्=प्रादुर्बभूव ।

पुङ्गवकेतुः = वृषध्वजः, स्विन्नाऽङ्गुलिः = आर्द्राऽङ्गुलिः, आसीत् = अभूत् । पाणिसमागमेन = करसंस्पर्शेन कर्त्रा, तयोः = वधूवरयोः, मनोभवस्य = कामस्य वृत्तिः = अवस्थितिः, समं = तुल्यं, विभक्ता इव = विभागीकृता इव, समीकृता इवेत्यर्थः ।

**व्युत्पत्तिः**—रोमोद्गमः = रोम्णाम् उद्गमः रोमोद्गमः, "तनूरुहं रोम लोम" इत्यमरः । पुङ्गवकेतुः = पुमान् गौः पुङ्गवः = वृषभ इत्यर्थः । गोरतद्धितलुकि" इति टच् । पुङ्गवः केतु = चिह्न, यस्य सः पुङ्गवकेतुः । स्विन्नाऽङ्गुलिः= स्विन्नाः अङ्गुलयः यस्य सः स्विन्नाङ्गुलिः, पाणिसमागमेन=पाण्योः समागमः पाणिसमागमः, तेन पाणिसमागमेन, मनोभवस्य = मनसि भवः मनोभवः, तस्य मनोभवस्य, वृत्तिः = वर्तन वृत्तिः, "वृतु वर्तने" इति धातोः "स्त्रियां क्तिन्" इति क्तिन्प्रत्ययः । अत्रोत्प्रेक्षालङ्कारः । स्वेदरोमाञ्चप्रादुर्भावेन सात्त्विकभावस्य प्रकाशो द्योतते ।

सात्त्विकास्तु—

> "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
> वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥" इति ।

**भावार्थः**—पार्वत्या रोमाञ्चः प्रकाशमानोऽभूत् । हरः प्रस्वेदयुक्तकराङ्गुलिरासीत् । पाणिग्रहणसमये कामदेवव्यापाराः परस्परं करयोः समागमेन तस्मिन् गौरीशङ्करयोर्मिथुने समविभागाः कृता इवासन्निति भावः ।

**भाषा**—पाणि-ग्रहण करने के समय पार्वती को रोमाञ्च और शङ्कर के अङ्गुलियों में प्रस्वेद हुआ । इस समय मानो कामदेव का व्यापार दोनों के ऊपर समान हुआ ।

पाणिग्रहणानन्तरं कृतकृत्योस्तयोः कान्तिविशेषं वर्णयति—

> **प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।**
> **सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥७८॥**
>
> उद्वाह से पर वर-वधू इनसे सुधा होते महा ।
> तब शम्भु गौरी कान्ति को क्या और जाय अधिक कहा ॥

**अन्वयः**—यत् प्रयुक्तपाणिग्रहणम् अन्यत् वधूवरं अनयोः सानिध्ययोगात् अग्र्या कान्तिं पुष्यति । तदानीम् तस्य उभयस्य श्रीः किं कथ्यते ।

**व्याख्या**—यत्=यस्मात् कारणात् प्रयुक्तपाणिग्रहणं = प्रारब्धविवाहम्, अन्यत् = लौकिकं, वधूवर = दम्पती, अनयोः=पार्वतीशिवयोः, सानिध्ययोगात्=

सामीप्यात् , अग्र्याम् = उत्तमा, कान्ति = शोभा, पुष्यति = पुष्णाति। तदानीं= पाणिग्रहणसमये, तस्य उभयस्य = पार्वतीशिवरूपस्य मिथुनस्य, श्रीः = शोभा, किं कथ्यते = किम् अभिधीयते।

**व्युत्पत्तिः**—यत् = पदमिदं यच्छब्दप्रतिरूपकमव्ययम्। प्रयुक्तपाणिग्रहणं= पाणेर्ग्रहणं पाणिग्रहणं, "पञ्चशाख. शयः पाणिः" इत्यमरः। प्रयुक्त प्राणिग्रहणं यस्य तत् प्रयुक्तपाणिग्रहणम्, अनयोः=इयं च अय च इमौ, तयोः अनयोः, एक· शेष·। सानिध्ययोगात् = सनिधेर्भावः सानिध्य, ष्यञ्प्रत्ययः। सानिध्यस्य योगः सानिध्ययोगः, तस्मात् सानिध्ययोगात्। अग्र्याम् = अग्रे भाव अगया, ताम् अग्रयाम्।

**भावार्थः**—यदुमामहेश्वरयोः सन्निधानयोगमात्रेण लौकिकमिथुन कृतविवाह सत् लोकोत्तरा शोभामनुभवति। तस्यैव उमामहेश्वरमिथुनस्य स्वयं विवाहसमये शोभा कथं वर्ण्यत इति भावः।

**भाषा**—विवाह काल में पार्वती और शङ्कर, स्मरण मात्र ही से लौकिक वधू वर की शोभा बढाते हैं, तब जहाँ स्वयं पार्वती और शङ्कर का विवाह हो रहा है, उसकी शोभा का वर्णन कैसे हो सकता है।

पाणिग्रहणानन्त विहितमग्निप्रदक्षिण वर्णयति—

**प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे।**
**मेरोरुपान्तेष्विव वर्त्तमानमन्योन्यसंसक्तमहस्त्रियामम्॥ ७९॥**

वे युगल अग्नि-प्रदक्षिणा से इस तरह शोभित हुए।
स्थित मेरु परि सर में निशा दिन जिस तरह शोभित हुए॥

**अन्वयः**—तन्मिथुनम् उदर्चिषः कृशानोः प्रदक्षिणप्रक्रमणात् मेरोः उपान्तेषु वर्त्तमानम् अन्योन्यसंसक्तम् अहस्त्रियामम् इव चकासे।

**व्याख्या**—तन्मिथुनं = तद्द्वन्द्वं, पार्वतीमहेश्वरमिथुनमित्यर्थः। उदर्चिषः= उन्नतज्वालस्य, कृशानोः=अग्नेः, प्रदक्षिणप्रक्रमणात्=प्रदक्षिणीकरणात् , मेरोः= हेमाद्रेः, उपान्तेषु = परिसरेषु, वर्तमानम्=आवर्तमानं, मेरुं प्रदक्षिणीकुर्वत् इत्य र्थः। अन्योन्यससक्तम् = परस्परसंगतम्। पदमेतम् मिथुनस्यापि विशेषणम्। अहस्त्रियामम् इव = रात्रिन्दिवम् इव, चकासे = शुशुभे।

**व्युत्पत्तिः**—तन्मिथुनं=तयोर्मिथुनं तन्मिथुनं, "स्त्रीपुंसोर्मिथुनं द्वन्द्वम्" इत्य- मरः। उदर्चिषः = उद्गता अर्चिः यस्य स उदर्चिः, तस्य उदर्चिषः। कृशानोः =

"कृशानुः पावकोऽनलः" इत्यमरः । प्रदक्षिणप्रक्रमणात्=प्रदक्षिणं च तत् प्रक्रमणं प्रदक्षिणप्रक्रमणं, तस्मात् प्रदक्षिणप्रक्रमणात् । वर्तमानं=वर्तते इति वर्तमानं, शानच्प्रत्ययः मुगागमश्च । अन्योन्यसंसक्तम्=अन्योन्येन ससक्तम् अन्योन्यससक्तम् । अहस्त्रियामम्=त्रयः यामाः यस्याः सा त्रियामा, "त्रियामा क्षणदा क्षपा" इत्यमरः । अहश्च त्रियामा च अहस्त्रियामं, समाहारे द्वन्द्वैकवद्भावः । "घस्रो दिनाऽहनी" इत्यमरः । अत्रोपमालङ्कारः ।

**भावार्थः**—इन्धनादिभिः प्रदीप्तस्याग्नेः प्रदक्षिणीकरणात् तदुमामहेश्वराभिधानं द्वन्द्वं, महामेरोरुपान्तेषु परिवर्तमानं परस्परसङ्गतं रात्रिन्दिवमिव शुशुभेतरामिति भावः ।

**भाषा**—इन्धनादि से प्रदीप्त अग्नि की प्रदक्षिणा करते हुए पार्वती और शङ्कर इस तरह शोभित हुए, मानो मेरु पर्वत के उपान्त भाग में रात और दिन घूम रहे हो ।

लाजाहोमं च वर्णयति—

**तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताऽक्षौ ।**
**स कारयामास वधूं पुरोधास्तस्मिन्समिद्धाऽर्चिषि लाजमोक्षम् ॥ ८० ॥**

यह भी पुरोहित ने करा कर तीन वार क्रिया समल ।
फिर पार्वती के हाथ लाजा होम करवाया विमल ॥

**अन्वयः**—सः पुरोधाः अन्योन्यसस्पर्शनिमीलिताऽक्षौ तौ दम्पती वह्निं त्रिः परिणीय, समिद्धाऽर्चिषि तस्मिन् वधू लाजमोक्षं कारयामास ।

**व्याख्या**—सः=पूर्वोक्तः, प्रसिद्धो वा, पुरोधा=पुरोहितः, अन्योन्यसंस्पर्शनिमीलिताक्षौ=परस्परस्पर्शसुखसङ्कुचितनेत्रौ, तौ=पूर्वोक्तौ, दम्पती=जम्पती, गौरीशङ्करौ इत्यर्थः । वह्निम्=अग्निं, त्रिः=त्रिवारम् , परिणीय=परितो नीत्वा, प्रदक्षिणत्रयं कारयित्वेत्यर्थः । समिद्धाऽर्चिषि=प्रदीप्तज्वाले, तस्मिन्=वह्नौ, वधूं=पार्वतीं, लाजमोक्षं=लाजविसर्गम् , कारयामास=कारितवान् ।

**व्युत्पत्तिः**—पुरोधाः=पुरस्तादेव हित विधत्त इति पुरोधाः, "पुरोधास्तु पुरोहित." इत्यमरः । अन्योन्यसंस्पर्शनिमीलिताक्षौ=सम्यक् स्पर्शः संस्पर्शः, अन्योन्यस्य संस्पर्शः अन्योन्यसंस्पर्शः । निमीलिते अक्षिणी ययोस्तौ निमीलिताक्षौ, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्प्रत्ययः । अन्योन्यसस्पर्शेन निमीलिताऽक्षौ अन्योन्यसंस्पर्शनिमीलिताक्षौ, तौ । दम्पती=जाया च पतिश्च दम्पती,

तौ । जायाशब्दस्य दभावो निपातितः । "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः । त्रिः="द्वित्रिभ्यः सुच्" इति सुच् । परिणीय="णीञ् प्रापणे"इति द्विकर्मकाद्धातोः ल्यप् । समिद्धाऽर्चिषि = सम्यक् इद्धा समिद्धा, सा अर्चिः यस्य सः समिद्धाऽर्चिः, तस्मिन् समिद्धार्चिषि । लाजमोक्षं=लाजाना मोक्षः लाजमोक्षः, तं लाजमोक्षं । "हृक्रोरन्यतरस्याम्" इति विकल्पादणि कर्तुः कर्मत्वम् ।

**भावार्थः**—स हिमालयपुरोहित परस्परकरग्रहणजनितसुखसम्मीलितनेत्रौ तौ भार्यापती विवाहसाक्षिभूतस्याग्नेः प्रदक्षिणत्रय कारयित्वा, प्रदीप्तज्वाले तस्मिन्नाग्नौ पार्वतीं लाजाहोम कारितवानिति भावः ।

**भाषा**—परस्पर स्पर्श के कारण निमीलित नेत्र वाले पार्वती और शङ्कर को तीन बार धधकती हुई आग की प्रदक्षिणा करवा कर, पार्वती द्वारा पुरोहित ने अग्नि में लावा का हवन करवाया ।

सदाचारप्राप्त लाजधूमग्रहण वर्णयति—

**स लाजधूमाऽञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।**
**कपोलसंसर्पिशिखः स तस्या मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥**

शुचि धूम लाजा का वदन में पार्वती के चल गया ।
सुकपोल व्याप्त उमा–श्रवण का अमल उत्पल बन गया ॥

**अन्वयः**—सा गुरुपदेशात् इष्टगन्ध लाजधूमाऽञ्जलिं वदनं निनाय । कपोलसंसर्पिशिखः स तस्याः मुहूर्त्तकर्णोत्पलता प्रपेदे ।

**व्याख्या**—सा = वधूः, पार्वतीत्यर्थः । गुरूपदेशात् = पुरोहितोपदेशात्, इष्टगन्ध = घ्राणतर्पणगन्ध, लाजधूमाऽञ्जलिं = भ्रष्टधान्यधूम्रहस्तसम्पुट, वदनं = मुखं, निनाय = अनैषीत् । कपोलसंसर्पिशिखः = गण्डप्रसर्पिशिखः, सः = धूमः, तस्याः = पार्वत्याः, मुहूर्तकर्णोत्पलता = क्षणश्रोत्रनीलकमलता, प्रपेदे = प्राप्तवान् ।

**व्युत्पत्तिः**—गुरूपदेशात्=गुरोः उपदेशः गुरूपदेशः, तस्मात् गुरूपदेशात्, इष्टगन्ध=इष्टः गन्धः यस्य स इष्टगन्धः, तम् इष्टगन्ध । लाजधूमाऽञ्जलिं = लाजाना धूमा लाजधूमाः, तेषाम् अञ्जलिः लाजधूमाञ्जलिः, त लाजधूमाञ्जलिम्, "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी । कपोलसंसर्पिशिखः= कपोलयोः संसर्पिण्यः, कपोलसंसर्पिण्यः, ताः शिखा यस्य सः कपोलसंसर्पिशिखः । मुहूर्तकर्णोत्पलता = कर्णस्य उत्पलं कर्णोत्पलं, तस्य भावः कर्णोत्पलता, मुहूर्त्तं यथा तथा कर्णोत्पलता मुहूर्तकर्णोत्पलता, ता मुहूर्तकर्णोत्पलताम् । "लाजाञ्जलिं

विसृज्य धूमाग्रं समाजिघ्रेदिति" प्रयोगवृत्तिकारवचनमत्र प्रमाणम् । अत्र निदर्शनाऽलङ्कारः । तल्लक्षणं यथा—

"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥" इति ।

**भावार्थः**—सा पार्वती पुरोहितनियोगात् सुरभिगन्ध लाजहोमजनितं धूम कराञ्जलिना निजाननमानीयाघ्रासीत् । असौ धूमाञ्जलिर्गण्डप्रदेशोर्ध्वभागसंसक्ताग्रः सन् , पार्वत्याः क्षणमात्रं कर्णालङ्कारभूतनीलोत्पलत्वं प्रापेति भावः ।

**भाषा**—पार्वती ने पुरोहित की आज्ञा से लाजा-होम जनित सुगन्धित धूम को करांजलि द्वारा सूँघा, वह धूम कपोल के ऊपर कान के पास जाकर क्षण भर के लिये उसका कर्ण-भूषण बन गया ।

लाजधूमग्रहणावसरे पार्वतीमुखस्य शोभा वर्णयति—

**तदीषदार्द्रारुणगण्डलेखमुच्छ्वासकालाऽञ्जनरागमक्ष्णोः ।**
**वधूमुखं क्लान्तयवाऽवतंसमाचारधूमग्रहणाद्बभूव ॥ ८२ ॥**

आचार के उस धूम से कुछ आर्द्र मुखड़ा हो गया ।
सुन्दर कपोल अरुण तथा दृग शिथिल अञ्जन हो गया ॥

**अन्वयः**—तत् वधूमुखम् आचारधूमग्रहणात् ईषदार्द्राऽरुणगण्डलेखम् अक्ष्णोः उच्छ्वासिकालाऽञ्जनराग क्लान्तयवाऽवतंसं बभूव ।

**व्याख्या**—तत् = पूर्वोक्तं, वधूमुखं = पार्वतीमुखम् , आचारधूमग्रहणात् = आचारप्राप्तधूमपरिग्रहात् , ईषदार्द्राऽरुणगण्डलेखं = किञ्चित्स्विन्नरक्तकपोलस्थलम् , अक्ष्णोः = नेत्रयोः, उच्छ्वासिकालाऽञ्जनरागम् = उद्गच्छत्कज्जलरागं, क्लान्तयवाऽवतंसं = म्लानयवाऽङ्कुरं, बभूव = अभवत् ।

**व्युत्पत्तिः**—वधूमुख = वध्वा मुखं वधूमुखम् । आचारधूमग्रहणात् = धूमस्य ग्रहण धूमग्रहणम् , आचारेण धूमग्रहणम् आचारधूमग्रहण, तस्मात् आचारधूमग्रहणात् । ईषदार्द्राऽरुणगण्डलेखम् = आर्द्रे च ते अरुणे आर्द्राऽरुणे, ईषच्च ते आर्द्रारुणे ईषदार्द्राऽरुणे । गण्डयोर्लेखे गण्डलेखे । ईषदार्द्राऽरुणे गण्डलेखे यस्य तत् ईषदार्द्राऽरुणगण्डलेखं । "किञ्चिदीषन्मनागल्पे" इत्यमरः । उच्छ्वासिकालाऽञ्जनरागम् = कालं च तत् अञ्जनं कालाऽञ्जन, तस्य रागः कालाऽञ्जनरागः । उच्छ्वासी कालाऽञ्जनरागः यस्य तत् उच्छ्वासिकालाञ्जनरागं । क्लान्तयवाऽवतंसं = यवानाम् अवतंसः यवाऽवतंसः, क्लान्तः यवाऽवतंसः यस्य तत् क्लान्त यवावतंसम् ।

**भावार्थः**—सदाचारप्राप्तादीषदुष्णस्य तस्य धूमस्य ग्रहणात् तदानीं पार्वत्याः मुखं खिन्नाऽरुणगण्डमीषदुच्छूनाञ्जननयनं परिम्लानयवाङ्कुरावतंसं चाभूदिति भावः ॥

**भाषा**—आचार प्राप्त कुछ उष्ण उस धूम के ग्रहण से पार्वती का मुख स्वेद युक्त और अरुण हो गया। आँखों का काला अञ्जन फैल गया, और कान पर निहित यवाङ्कुर मलिन हो गया।

सहधर्मचरणविधानमप्याह—

**वधूं द्विजः प्राह तवैष वत्से ! वह्निर्विवाहं प्रति कर्मसाक्षी ।**
**शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ८३ ॥**

**बोला पुरोहित पार्वती से, कर्म साक्षी है अनल ।**
**आनन्द से शिव साथ धर्माचार करना अमल ॥**

**अन्वयः**—हे वत्से ! एष वह्निः तव विवाहं प्रति कर्मसाक्षी, भर्त्रा शिवेन सह मुक्तविचारया त्वया धर्मचर्या कार्या इति द्विजः वधूं प्राह।

**व्याख्या**—हे वत्से = हे पुत्रि !, एषः=पुरोवर्ती, वह्नि = अग्निः, तव = भवत्याः, विवाहं प्रति = पाणिग्रहणं प्रति, विवाहकर्मणीत्यर्थः । कर्मसाक्षी=कर्म-द्रष्टा, अस्तीति शेषः । भर्त्रा = पत्या, शिवेन सह = शङ्करेण समं, मुक्तविचारया= निर्विचारया, सदसच्चिन्तामपहायेत्यर्थः । त्वया = भवत्या, धर्मचर्या=धर्माऽऽचरणं, कार्या=कर्त्तव्या, इति=इत्थम्, द्विजः=पुरोहितः, वधूं=पार्वतीं, प्राह = अब्रवीत् ।

**व्युत्पत्तिः**—विवाहं = "विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्" इत्यमरः । कर्मसाक्षी = साक्षात् द्रष्टा साक्षी, कर्मणः साक्षी कर्म-साक्षी । भर्त्रा = बिभर्त्तीति भर्ता, तेन भर्त्रा, मुक्तविचारया = मुक्तः विचारः यया सा मुक्ताविचारा, तया मुक्तिविचारया । धर्मचर्या = चरणं चर्या, धर्मस्य चर्या धर्मचर्या । कार्या = कर्तुं योग्या कार्या, "ऋहलोर्ण्यत्" इति ण्यत् । अयं च प्राजापत्यविवाहो द्रष्टव्यः । यथाऽऽह भगवान्मनुः—

"सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥" इति । ३ । ३० ।

**भावार्थः**—"एषोऽग्निस्तव विवाहकर्मणः प्रथमः साक्षी भवति । भर्त्रा हरेण सह त्वया सदसच्चिन्तामपहाय धर्मानुष्ठानं कर्तव्य" मिति पुरोहितः पार्वतीमुवाचेति भावः ।

**भाषा**—पुरोहित ने पार्वती से कहा—हे वत्से! यह अग्नि तुम्हारे और शङ्कर के विवाह का साक्षी है। तुम अपने पति शिव के साथ विना विचार के धर्म का आचरण करना।

पार्वत्याः पुरोहितवचनानुष्ठानोपादानप्रकारमाह—

**आलोचनाऽन्तं श्रवणे वितत्य पीतं गुरोस्तद्वचनं भवान्या।**
**निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या॥ ८४॥**

सादर पुरोहित के वचन मृदु को लिया सुन इस तरह।
है ग्रीष्म-जलती भूमि घन-जल पान करती जिस तरह॥

**अन्वयः**—भवान्या आलोचनाऽन्तं श्रवणे वितत्य तत् गुरोः वचनं "निदाघकालोल्बणतापया पृथिव्या प्रथमं माहेन्द्रम् अम्भ इव" पीतम्।

**व्याख्या**—भवान्या = पार्वत्या, आलोचनान्त = नेत्राऽन्तपर्यन्तं, श्रवणे = श्रोत्रे, वितत्य = विस्तार्य, तत् = पूर्वोक्तं, गुरोः = पुरोहितस्य, वचनं = वचः, सहधर्मचर्याविधायकमित्यर्थः। निदाघकालोल्बणतापया = ग्रीष्मसमयोत्कटसन्तापया, पृथिव्या = धरित्र्या, प्रथमम् = आद्यं, माहेन्द्र = पार्जन्यम्, अम्भ इव = जलम् इव, पीतम् = स्वीकृतम्, अत्यादरेण शुश्रावेत्यर्थः।

**व्युत्पत्तिः**—भवान्या=भवस्य पत्नी भवानी, तया भवान्या। "इन्द्रवरुणभवशर्वरुद्रमृडहिमाऽरण्ययवयवनमातुलाचार्याणामानुक्" इति ङीष् आनुगागमश्च। आलोचनाऽन्तं=लोचनस्य अन्तः लोचनान्तः, लोचनान्तात् आ आलोचनाऽन्तम्; "आङ् मर्यादाऽभिविध्योः" इत्यव्ययीभावः। वचनं=भाषितं वचनं वचः" इत्यमरः। निदाघकालोल्बणतापया = निदाघस्य कालः निदाघकालः। उल्बणः पातः यस्याः सा उल्बणतापा, निदाघकालेऽ ल्बणतापा निदाघकालोल्बणतापा, तया निदाघकालोल्बणतापया। माहेन्द्र = महाश्चाऽसौ इन्द्रः महेन्द्रः, तस्य इदं माहेन्द्रम्। अत्रोपमालङ्कारः।

**भावार्थः**—पार्वत्या पुरोहितस्य सहधर्मचर्याविधायकं तद्वचनं नेत्रान्तपर्यन्त कर्णौ विस्तार्य "ग्रीष्मकालोत्कटसन्तापया पृथिव्या महेन्द्रस्य वर्षजमाद्यं जलमिव" महतादरेणाऽङ्गीकृतमिति भावः।

**भाषा**—पार्वती ने पुरोहित के वचन को आँखों तक विस्तृत करणों द्वारा सुना, और ग्रीष्मकाल से संतप्त पृथ्वी के प्रथम जल बिन्दु की तरह, बहुत आदर से ग्रहण किया।

ध्रुवसन्दर्शनमाह—

**ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।**
**सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥**

ध्रुव-दर्शनार्थं उमेश ने सामोद गिरिजा से कहा ।
तब पार्वती-लोचन उसे क्षण लज्जया लखता रहा ॥

**अन्वयः**—प्रियदर्शनेन ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना ह्रीसन्नकण्ठी सा कथमपि आननम् उन्नमय्य दृष्ट इति उवाच ।

**व्याख्या**—प्रियदर्शनेन = अभीष्टाऽवलोकनेन, ध्रुवेण = सनातनेन, भर्त्रा = पत्या, शिवेनेत्यर्थः । ध्रुवदर्शनाय=औत्तानपादिनक्षत्राऽवलोकनाय, प्रयुज्यमाना= प्रेर्यमाणा, ह्रीसन्नकण्ठी = लज्जाहीनस्वरा, सा = पार्वती, कथमपि = कृच्छ्रेण, आननं = मुखम् , उन्नमय्य = ऊर्ध्वं कृत्वा, दृष्टः = अवलोकितः, इति=एवम् , उवाच = अकथयत् ।

**व्युत्पत्तिः**—प्रीणातीति प्रिय, कप्रत्ययः । प्रियं दर्शनं यस्य सः प्रियदर्शनः, तेन प्रियदर्शनेन । ध्रुवेण = "शाश्वतस्तु ध्रुवे नित्यसदातनसनातनाः" इत्यमरः । ध्रुवदर्शनाय = ध्रुवस्य दर्शनं ध्रुवदर्शन, तस्मै ध्रुवदर्शनाय, "ध्रुव औत्तानपादि स्यात्" इत्यमरः । प्रयुज्यमाना = प्रयुज्यते इति प्रयुज्यमाना, कर्मणि यक् , तदन्तात् शानच् , दृश्यतामिति प्रेर्यमाणेत्यर्थः । ह्रीसन्नकण्ठी=सन्नः कण्ठः यस्याः सा सन्नकण्ठी, ह्रिया सन्नकण्ठी ह्रीसन्नकण्ठी, "मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा" इत्यमर. । अत्र ध्रुवसन्दर्शनमरुन्धतीसप्तर्षीणामप्युपलक्षणम् । तथा चोक्तमाश्वलायनगृह्यसूत्रे—"ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेत्" इति । १, ७, २२,

**भावार्थः**—लोकोत्तरसौन्दर्यत्वादिष्टदर्शनेन शाश्वतेन पत्या इरेणोत्तरदिशास्थितध्रुवनक्षत्रस्यावलोकनाय प्रेर्यमाणा सा पार्वती लज्जानिरुद्धकण्ठस्वरा सती कथञ्चिद् वदनमुत्क्षिप्यावलोकितो ध्रुव इति तं प्रति जगादेति भावः ।

**भाषा**—ध्रुव दर्शन के लिये पति द्वारा आज्ञा पाई हुई पार्वती मुख ऊपर करके लज्जा से "देखा" ऐसा धीरे से बोली ।

शास्त्रविहितं कर्म परिसमाप्य रूढिप्रसिद्धं लौकिकं कर्म वर्णयति । तत्रादौ सकलपूज्यस्य ब्रह्मणः प्रणाममाह—

**इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।**
**प्रणेमतुस्तौ पितरौ प्रजानां पद्माऽऽसनस्थाय पितामहाय ॥ ८६ ॥**

विधि वित् पुरोहित ने युगल-उद्वाह करवाया अमल ।
शिव पार्वती ने प्रेम से विधि को प्रणाम किया विमल ॥

**अन्वयः**—इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ प्रजाना पितरौ तौ पद्मासनस्थाय पितामहाय प्रणेमतुः ।

**व्याख्या**—इत्थम् = अनेन प्रकारेण, विधिज्ञेन = कर्मविधानज्ञेन, शास्त्रज्ञेनेत्यर्थः । पुरोहितेन=पुरोधसा, हिमाऽऽलयस्येत्यर्थः । प्रयुक्तपाणिग्रहणोपचारौ = कृतविवाहकर्माणौ, प्रजाना=जनाना = पितरौ = मातापितरौ, तौ=पार्वतीपरमेश्वरौ, कर्तृभूतौ, पद्माऽऽसनस्थाय = कमलाऽऽसनोपविष्टाय, पितामहाय = ब्रह्मणे, प्रणेमतुः = नमश्चक्रतुः ।

**व्युत्पत्तिः**—इत्थम् = अनेन प्रकारेण इति इत्थम् , "इदमस्थमुः" इति थमुप्रत्ययः । विधिज्ञेन = विधिं जानातीति विधिज्ञः, तेन विधिज्ञेन, कप्रत्ययः । विधिर्विधाने दैवे च" इत्यमरः । प्रयुक्तपाणिग्रहणोपचारौ = पाणेर्ग्रहणं पाणिग्रहणं, तस्य उपचारः, पाणिग्रहणोपचारः । प्रयुक्तः पाणिग्रहणोपचारः ययोस्तौ प्रयुक्तपाणिग्रहणोपचारौ । प्रजाना = प्रजायन्त इति प्रजाः, तासा प्रजाना, डप्रत्ययः । "प्रजा स्यात्सन्ततौ जने" इत्यमरः । पितरौ=माता च पिता च पितरौ, "पिता मात्रा" इत्येकशेषः, मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ" इत्यमरः । पद्माऽऽसनस्थाय = पद्मानाम् आसन पद्माऽऽसन, तस्मिन् तिष्ठतीति पद्माऽऽसनस्थः, तस्मै पद्मासनस्थाय, कप्रत्ययः । पितामहाय=पितृणा पिता पितामहः, तस्मै पितामहाय, "पितृव्यमातुलमातामहपितामहाः" इति निपातनात् "मातृपितृभ्या पितरिडामहच्" इति वार्तिकात् साधुः । पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च" इति विश्वः । क्रियाग्रहणाच्चतुर्थी ।

**भावार्थः**—शास्त्रज्ञेन हिमवत्पुरोधसा पूर्वोक्तप्रकारेण निर्वर्तितविवाहसंस्कारौ तौ पार्वतीपरमेश्वरौ कमलासनोपविष्टाय ब्रह्मणे नमश्चक्रतुरिति भावः ।

**भाषा**—इस तरह शास्त्रज्ञ पुरोहित के द्वारा विवाह संस्कार सम्पूर्ण होने पर, पार्वती और शंकर ने कमल के आसन पर बैठे हुए ब्रह्मा को प्रणाम किया ।

परमेष्ठिन आशीर्वादप्रकारमाह—

**वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि ! वीरप्रसवा भवेति ।**
**वाचस्पतिः सन्नपि सोऽष्टमूर्तौ त्वाशास्यचिन्तास्तिमितो बभूव ॥ ८७ ॥**

तुम वीर पुत्र जनो कहा विधि ने उमा से हर्ष से ।

पर कह सके शिव को न कुछ लख ज्वलित निज उत्कर्ष से ॥

**अन्वयः**—वधूः विधात्रा "हे कल्याणि ! वीरप्रसवा भव" इति प्रतिनन्द्यते स्म । सः वाचस्पतिः सन् अपि अष्टमूर्तौ तु आशास्यचिन्तास्तिमितः बभूव ।

**व्याख्या**—वधूः = कन्या, पार्वतीत्यर्थः । विधात्रा = ब्रह्मणा, हे कल्याणि = हे शोभने ! वीरप्रसवा = वीरसूः भव = भूयाः, इति इत्थ, प्रतिनन्द्यते स्म = आशास्यते स्म । सः = विधाता, वाचस्पतिः सन् अपि = वागीश्वरः सन् अपि, अष्टमूर्तौ तु = शिवे तु, आशास्यचिन्तास्तिमितः = आकाङ्क्षयविचारमन्दः, बभूव = अभवत् ।

**व्युत्पत्तिः**— विधात्रा = "विधाता विश्वसृङ् विधिः" इत्यमरः । वीरप्रसवा = वीरः = लोकोत्तरप्रतापः, प्रसवः = पुत्रो, यस्याः सा वीरप्रसवा, वाचस्पतिः = वाचः पतिः वाचस्पतिः, कस्कादिषु पाठात्साधुः । सन् = अस्तीति सन्, "अस भुवि" इति धातोः शतृप्रत्ययः । अष्टमूर्तौ = अष्टौ मूर्तयः यस्य सः अष्टमूर्तिः, तस्मिन् अष्टमूर्तौ । आशास्यचिन्तास्तिमितः = आशास्ये चिन्ता आशास्यचिन्ता, तस्या स्तिमितः आशास्यचिन्तास्तिमितः ।

**भावार्थः**—ब्रह्मदेवस्ता पार्वतीं "हे शोभने ! त्वं वीरसूर्भूयाः" इति ननाथे । सः ब्रह्मा वाण्याः पतिः सन्नपि हरस्याकाङ्क्षयविचारमूढोऽभवदिति भावः ।

**भाषा**—ब्रह्मा ने पार्वती को वीर-प्रसविनी होने के लिये आशीर्वाद दिया, किन्तु वाचस्पति होने पर भी निरीह शङ्कर के आशीर्वाद के विषय में मन्द पड़ गये ।

लोकोपचारसिद्धमार्द्राक्षतारोपणमप्याह—

**क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकाऽऽसनस्थौ ।**
**जायापती लौकिकमेषणीयमार्द्राऽक्षतारोपणमन्वभूताम् ॥ ८८ ॥**

चतुरस्र वेदी पर गये जिस पर कनक आसन रहा ।
आर्द्राक्षता-रोपण कलित अनुभव किया सुख से महा ॥

**अन्वयः**—तौ जायापती पश्चात् क्लृप्तोपचारां चतुरस्रवेदीम् एत्य, कनकाऽऽसनस्थौ सन्तौ लौकिकम् एषणीयम् आर्द्राऽक्षतारोपणम् अन्वभूताम् ।

**व्याख्या**—तौ = पूर्वोक्तौ, जायापती = वधूवरौ, गौरीशङ्करौ इत्यर्थः । पश्चात् = प्रणामाऽनन्तरं, क्लृप्तोपचारां = रचितपुष्परचनादिं, चतुरस्रवेदीं = चतुष्कोणमण्डपम्, एत्य = प्राप्य, कनकाऽऽसनस्थौ = सुवर्णविष्टरस्थितौ सन्तौ, लौकिकं = लोकविहितम्, अत एव—एषणीयम् = आशास्यम् "आर्द्राक्षतारोपणम् = क्लिन्नाऽक्षतारोपणम्, अन्वभूताम् = अनुभूतवन्तौ ।

**व्युत्पत्तिः**—जायापती=जाया च पतिश्च जायापति, "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः । क्लृप्तोपचारां=क्लृप्ताः उपचाराः यस्या सा क्लृप्तोपचारा, तां क्लृप्तोपचारा, चतुरस्रवेदीं = चतस्रः अस्रयः यस्या सा चतुरस्रा, सा चाऽसौ वेदी चतुरस्रवेदी, तां चतुरस्रवेदीं । कनकाऽऽसनस्थौ=कनकस्य आसनं कनकाऽऽसनं तस्मिन् तिष्ठतः इति कनकासनस्थौ, लौकिकं =लोके भवं लौकिकं, तत् , "तत्र भवः" इति ठक्प्रत्ययः, "ठस्येकः" इति तस्य इगादेशः । एषणीयम् = "इष इच्छायाम्" इति धातोः अनीयर्प्रत्ययः । "लौकिकाऽऽचार मनसाऽपि न लङ्घयेत्" इति शास्त्रात् अवश्यकर्तव्यमित्यर्थः । आर्द्राक्षताऽऽरोपणम् = आर्द्राश्च ते अक्षताः आर्द्राऽक्षताः, "लाजाः पुंभूम्नि चाऽक्षताः" इत्यमरः । आर्द्राऽक्षतानाम् आरोपणम् आर्द्राऽक्षताऽऽरोपणं, तत् । उक्तं च भोजराजेन—

"सहरिद्रजलेनाक्तो मङ्गल्यस्तण्डुलाक्षतः" इति ।

**भावार्थः**—तौ पार्वतीमहादेवौ वृद्धजनाभिवादनान्तरं गन्धोदकप्रोक्षणपुष्पमालालम्बनपूर्णकलशादिभिरलङ्कृतं चतुरस्रमण्डपं प्राप्य, सुवर्णमयासने चोपविश्य, सदाचारप्राप्त बन्धुजनैश्चिकीर्षमाणं सहरिद्रजलार्द्रं स्वाङ्गेषु तण्डुलाक्षताव· करणमनुबभूवतुरिति भावः ।

**भाषा**—इसके बाद पुष्पशोभित चतुरस्रवेदी पर स्थित कनकासन पर बैठे हुए दोनों ने लौकिक रीति के अनुसार अपने शरीर पर जल से आर्द्र पीत-अक्षत का अनुभव किया ।

अथ तदवसरे देवैः क्रियमाणः पार्वतीपरमेश्वरयोः सेवाप्रकारश्चतुर्भिः श्लोकैर्वर्ण्यते । तत्रादौ लक्ष्म्याः सेवाप्रकारमाह—

**पत्राऽन्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम् ।**
**तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलाऽऽतपत्रम् ॥ ८९ ॥**

**पत्रान्त-रत जल-बिन्दु से मोती सुछवि फीकी रही ।**
**श्री ने कमल के छत्र को रक्खा वधू वर पर सही ॥**

**अन्वयः**—लक्ष्मीः पत्राऽन्तलग्नैः जलबिन्दुजालैः आकृष्टमुक्ताफलजालशोभम् आयतनालदण्डं कमलाऽऽतपत्रम् तयोः उपरि आधत्त ।

**व्याख्या**—लक्ष्मीः = कमला, पत्राऽन्तलग्नैः = दलप्रान्तलग्नैः, जलबिन्दुजालैः = अम्बुपृषतवृन्दैः, आकृष्टमुक्ताफलजालशोभम् = आहृतमौक्तिकफलवृन्दकान्ति, आयतनालदण्डं = दीर्घनालदण्डं, कमलाऽऽतपत्रं = पद्मच्छत्रं, तयोः =

पार्वतीशिवयोः । उपरि = ऊर्ध्वभागे, आधत्त = दधौ ।

**व्युत्पत्तिः**—लक्ष्मीः = "लक्ष्मीः पद्माऽऽलया पद्मा कमला श्रीहरिप्रिया" इत्यमरः । पत्राऽन्तलग्नैः = पत्राणाम् अन्ताः पत्राऽन्ताः, तेषु लग्नानि पत्राऽन्तलग्नानि, तैः पत्रान्तलग्नैः, जलबिन्दुजालैः = जलाना बिन्दवः जलबिन्दवः, "पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्" इत्यमरः । जलबिन्दूना जालानि जलबिन्दुजालानि, तैः जलबिन्दुजालैः । आकृष्टमुक्ताफलजालशोभम् = मुक्ता एव फलानि मुक्ताफलानि, रूपकसमासः। मुक्ताफलाना जालं मुक्ताफलजालं=प्रान्तलम्बी मुक्ताकलाप इत्यर्थः । तेन शोभा मुक्ताफलजालशोभा । आकृष्टा मुक्ताफलजालशोभा येन तत् आकृष्टमुक्ताफलजालशोभ, तत् । आयतनालदण्डम्=नालम् एव दण्डः नालदण्डः, रूपकसमासः । आयतः नालदण्डः यस्य तत् आयतनालदण्डं, तत् । कमलाऽऽतपत्र = आतपात्त्रायते इति आतपत्रं, कमलमेव आतपत्रं कमलाऽऽतपत्र, तत् ।

**भावार्थः**—लक्ष्मीः स्वयमेव मूर्तिमती सती तयोरुमामहेश्वरयोरुपरि पत्रान्तलम्बमानजलबिन्दुमुक्ताकलापशोभित दीर्घनालदण्डं कमलमय श्वेतच्छत्रं दधाविति भावः ।

**भाषा**—मूर्तिमती स्वयं लक्ष्मी ने पत्तों के नोकों पर लटकते हुए मोती के समान जलबिन्दु से शोभित, दीर्घनाल दण्ड युक्त, कमलरूप श्वेतच्छत्र को धारण किया।

सरस्वत्याः सेवाप्रकारमाह—

**द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥**

शुभ शारदा ने शुद्ध वाङ्मय से किया आदर अमल ।
संस्कार पूत वरेण्य वर की शुचि वधू-स्तुति की विमल ॥

**अन्वयः**—सरस्वती द्विधाप्रयुक्तेन वाङ्मयेन तन्मिथुनं नुनाव । संस्कारपूतेन वरेण्य वर, सुखग्राह्यनिबन्धनेन वधू नुनाव ।

**व्याख्या**—सरस्वती = भारती, वाग्देवीत्यर्थः । द्विधाप्रयुक्तेन=प्रकारद्वयोच्चारितेन, संस्कृतप्राकृतभाषोच्चारितेनेत्यर्थः । वाङ्मयेन = शब्दसमूहेन, तन्मिथुनं = तद्द्वन्द्व, पार्वतीशिवौ इत्यर्थः । नुनाव = तुष्टाव । संस्कारपूतेन = शास्त्रव्युत्पत्तिपवित्रेण, संस्कृतेनेत्यर्थः । वरेण्य = वरणीय, प्रशंसनीयमित्यर्थः । वर = वोढारं, शिवमित्यर्थः । सुखग्राह्यनिबन्धनेन = सुबोधरचनया, प्राकृतभाषयेत्यर्थः । वधूं = पार्वतीं, नुनाव = तुष्टाव.

**व्युत्पत्तिः**—सरस्वती = "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरः। द्विधाप्रयुक्तेन = द्वाभ्यां प्रकाराभ्यां द्विधा, "संख्याया विधार्थे धा" इति धाप्रत्ययः। वाङ्मयेन = वाचां समूहः वाङ्मयं, तेन वाङ्मयेन। तन्मिथुनं = तयोर्मिथुनं तन्मिथुनं, तत्, नुनाव = "णू स्तुतौ" इति धातोर्लिट्। संस्कारपूतेन = संस्कारेण = व्याकरणानुसारेण, पूतं = प्रकृतिप्रत्ययविभागशुद्धं, संस्कारपूतं, तेन संस्कारपूतेन, वाङ्मयविशेषणं चैतत्। वरेण्यं = व्रियते इति वरेण्यः, तं वरेण्यं, "वृञ् वरणे" इति धातोः "वृञ एण्यः" इति औणादिक एण्यप्रत्ययः। सुखग्राह्यनिबन्धनेन = ग्रहीतुं शक्यं ग्राह्यं, ण्यत्प्रत्ययः। सुखेन ग्राह्यं सुखग्राह्यं, तत् निबन्धनं = रचना, यस्य तत् सुखग्राह्यनिबन्धनं, तेन सुखग्राह्यनिबन्धनेन, इदमपि वाङ्मयविशेषणम्।

**भावार्थः**—मूर्तिमती वाग्देवता च श्लाघ्यं भर्तारं महेश्वरं प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेन, नवोढां पार्वतीं सुखबोध्यप्रबन्धेन प्राकृतेनेत्थं द्विविधप्रकारेण वाङ्मयेन लोकोत्तरं तत् स्त्रीपुरुषयुग्मं तुष्टावेति भावः।

**भाषा**—मूर्तिमती स्वयं सरस्वती ने संस्कृत और प्राकृत दोनों भाषा में बोल कर, प्रकृति-प्रत्यय मय शुद्ध संस्कृत से शङ्कर की, और सुबोध रचना वाली प्राकृत भाषा से पार्वती की स्तुति किया।

अप्सरसां सेवाप्रकारमाह—

**तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।**
**अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताऽङ्गहारम्॥ ११॥**

प्रति बद्ध राग रसान्तरों में सन्धि में व्यंजित अमल।
क्षण अप्सरा-सुप्रयोग-आद्य मनोज्ञ को देखा विमल॥

**अन्वयः**—तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागं ललिताऽङ्गहारम् आद्यम् अप्सरसां प्रयोगं मुहूर्तम् अपश्यताम्।

**व्याख्या**—तौ = दम्पती, सन्धिषु = मुखप्रतिमुखगर्भविमर्शनिर्वहणेषु पञ्च सन्धिषु, व्यञ्जितवृत्तिभेदं = स्फुटीकृतकैशिक्यादिवृत्तिविशेषं, रसान्तरेषु = शृङ्गाराऽऽदिरसेषु, प्रतिबद्धरागं = निबद्धवसन्ताऽऽदिरागं, ललिताङ्गहारं = सुकुमाराऽङ्गविक्षेपम्, आद्यम् = आदौ भवम्, अप्सरोजनोपक्रममित्यर्थः। अप्सरसाम् = उर्वश्यादीनां, प्रयोगं = रूपकम्, नाटकमित्यर्थः। मुहूर्तं = कञ्चित्क्षणम्, अपश्यताम् = दृष्टवन्तौ।

**व्युत्पत्तिः**—सन्धिषु = "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः । इति पञ्चाऽस्य भेदाः स्युः" इति साहित्यदर्पणम् ॥ व्यञ्जितवृत्तिभेद=वृत्तीनां भेदः वृत्तिभेदः, व्यञ्जितः वृत्तिभेदः यस्मिन् स व्यञ्जितवृत्तिभेदः, तं व्यञ्जितवृत्तिभेदं । रसाऽऽनुगुण्येन इति शेषः । तदुक्तं विश्वनाथ कविराजेन—

"शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।
स्युर्नायकाऽऽदिव्यापारविशेषा नाटकाऽऽदिषु ॥" इति ।

रसाऽन्तरेषु = अन्ये रसाः रसाऽन्तराणि, तेषु रसान्तरेषु, "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः । तथा चोक्तं साहित्यदर्पणे—

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥" इति ।

प्रतिबद्धरागं = प्रतिबद्धाः=प्रतिनियमेन प्रवर्तिताः, रागाः=वसन्तललितादयः, यस्मिन् सः प्रतिबद्धरागः, तं प्रतिबद्धरागं । यस्मिन् रसे यो रागो विहितः, तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाऽऽह काहलः—

"रौद्रेऽद्भुते तथा वीरे पुरागेण प्रगीयते ।
शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः ॥
भयानके च बीभत्से शान्ते गेयो नपुंसके ॥" इति ।

ललिताऽङ्गहारं = ललितः अङ्गहारः यस्मिन् स ललिताऽङ्गहारः, तं ललिताङ्गहारम्, "अङ्गहारोऽङ्गविक्षेपः" इत्यमरः । आद्यम् = आदौ भवः आद्यः, तम् आद्यं । प्रयोगं=प्रयुज्यते इति प्रयोगः, तं प्रयोगं, मुहूर्तं = "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । अपश्यता="पाघ्राध्मा०" इत्यादिना दृशेः पश्याऽऽदेशः ।

अत्राद्यशब्देन भरतशास्त्रप्रसिद्धा काचन कथा प्रतिपादिता भवति । तथा हि-पुरा किल ब्रह्मणः सकशात् भरतस्ताण्डवं शिक्षयामास । ततः परं लास्यशिक्षा प्रार्थितवान् । ब्रह्मा त्वेवमाह—"लास्यप्रयोगस्य कैशिकीभूयिष्ठत्वात्, कैशिक्याश्च पुरुषैः प्रयोक्तुमशक्यत्वात् लास्यं तव न शिक्षणीयम्" इत्युक्त्वा तत्प्रयोगार्थमप्सरसः सृष्ट्वा तासां ललितं लास्यं शिक्षयामास । तेन च लास्यस्याऽप्सरोजनोपक्रमत्वमुक्तं भवति, तत एव प्रयोगस्याद्यत्वमिति साम्प्रदायिकाः ।

**भावार्थः**—तौ पार्वतीपरमेश्वरौ मुखप्रतिमुखगर्भविमर्शनिर्वहणेषु पञ्चस-

निघषु रसानुगुण्येन, स्फुटीकृतकैशिक्यारभटीसात्वतीभारतीति चतुर्विधवृत्तिविशेषं शृङ्गारादिरसविशेषेषु प्रतिनियतवसन्तललितादिरागं मधुराङ्गविक्षेप रूपकान्तरप्रकृतिभूतं मेनकादिदिव्याङ्गनाभिः प्रयुज्यमान नाटक क्षणकालं ददृशतुरिति भाव ।

**भाषा**—पार्वती और शङ्कर ने पञ्च सन्धियों में व्यंजित वृत्ति भेद वाले, शृङ्गारादि रस विषयक राग से युक्त, और अभिनय पूर्ण, अप्सराओं के द्वारा खेले गये नाटक को क्षण भर देखा ।

इन्द्रादिदेवाना सेवाप्रकारमाह—

**देवास्तदन्ते हरमूढभार्यं किरिटबद्धाऽञ्जलयो निपत्य ।**
**शापाऽवसाने प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥**

अवसान में कर के प्रणाम वधू तथा वर का अमर ।
करने लगे स्मर अर्थ शिव से प्रार्थना अतिशय प्रवर ॥

**अन्वयः**—देवाः तदन्ते ऊढभार्यं हरं किरीटबद्धाऽञ्जलयः सन्तः निपत्य शापाऽवसाने प्रतिपन्नमूर्तेः पञ्चशरस्य सेवा ययाचिरे ।

**व्याख्या**—देवाः = सुराः, इन्द्रादय इत्यर्थः । तदन्ते = प्रयोगदर्शनाऽन्ते, ऊढभार्यं=परिणीतदारं, कृतोद्वाहमित्यर्थः । हरं=स्मरहरं, किरीटबद्धाऽञ्जलयः = मौलिबद्धकरसम्पुटाः सन्तः, निपत्य=प्रणम्य, शापाऽवसाने=शापाऽन्ते, प्रतिपन्नमूर्तेः=प्राप्तशरीरस्य, पञ्चशरस्य=कामदेवस्य, सेवा=परिचर्यां, ययाचरे=प्रार्थितवन्तः ।

**व्युत्पत्तिः**—देवाः=दीव्यन्तीति देवाः, पचाद्यच् । तदन्ते = तस्य अन्तः तदन्तः, तस्मिन् तदन्ते । ऊढभार्यम्=ऊढा भार्या येन स ऊढभार्यः, तम् ऊढभार्यम् । "भार्या जायाऽथ पुंभूम्नि दाराः" इत्यमरः । किरीटबद्धाऽञ्जलयः = किरीटेषु बद्धाः किरीटबद्धाः, ते अञ्जलयः येषा ते किरीटबद्धाञ्जलयः, शापाऽवसाने=शापस्य अवसानं शापाऽवसान, तस्मिन् शापावसाने । प्रतिपन्नमूर्तेः = प्रतिपन्ना मूर्तिर्येन सः प्रतिपन्नमूर्तिः, तस्य प्रतिपन्नमूर्तेः । पञ्चशरस्य = पञ्च शराः यस्य सः पञ्चशरः, तस्य पञ्चशरस्य । ययाचिरे = "दुह्याच्पच्०" इत्यादिना द्विकर्मकत्वम् ॥

**भावार्थः**—इन्द्रादयो देवा नाटकदर्शनावसाने कृतविवाहं महेश्वर मुकुटश्लिष्टकराञ्जलयः सन्तः प्रणिपत्य, शापसमाप्तौ प्रतिलब्धशरीरस्य, कामदेवस्य सम्भोगारम्भे तदुचितशरप्रयोगरूपा शुश्रूषा प्रार्थयामासुरिति भावः ।

**भाषा**—नाटक के अन्त में इन्द्रादि देवताओं ने विवाहित शंकर को किरीट

बद्ध अञ्जलि से प्रणाम करके, शाप के अवसान में प्राप्त-शरीर कामदेव की सेवा के लिये प्रार्थना की।

इत्थमभ्यर्थितस्य महेश्वरस्य प्रवृत्तिमाह—

**तस्याऽनुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।**
**कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥ ९३ ॥**

शंकर-विमन्यु मनोज शर स्वीकार आदर से किया ।
कालज्ञ-सफल स्वकीय प्रभु से समय पर जो कह दिया ॥

**अन्वयः**—विमन्युः भगवान् आत्मनि अपि तस्य सायकाना व्यापारम् अनुमेने । तथा हि–कार्यविद्भिः कालप्रयुक्ता भर्तृषु विज्ञापना सिद्धिम् एति खलु ।

**व्याख्या**—विमन्युः = विगतकोपः, भगवान् = शिवः, आत्मनि अपि = स्वस्मिन् अपि, तस्य = कामस्य, सायकाना = शराणा, व्यापार=क्रियाम्, अनुमेने = अङ्गीचक्रे । तथा हि–कार्यविद्भिः = कार्यज्ञैः, अथवा कालविद्भिः=अवसरज्ञैः, कालप्रयुक्ता = योग्याऽवसरानुष्ठिता, भर्तृषु = स्वामिषु विषये, विज्ञापना = विज्ञप्तिः, सिद्धिं=फलनिष्पत्तिम्, एति खलु=प्राप्नोति खलु=सफला भवतीत्यर्थः ।

**व्युत्पत्तिः**—विमन्युः = विगतः मन्युः यस्य स विमन्युः । सायकाना = "शरे खड्गे च सायकः–" इत्यमरः । कार्यविद्भिः = कार्यं विदन्तीति कार्यविदः, तैः कार्यविद्भिः । कालप्रयुक्ता=काले प्रयुक्ता कालप्रयुक्ता, भर्तृषु=बिभ्रतीति भर्तारः, तेषु भर्तृषु, वैषयिकीयं सप्तमी । तृच्प्रत्ययः । अत्र श्लोकेऽर्थान्तरन्यासाऽलङ्कारः ।

**भावार्थः**—पार्वतीपरणयानन्तर विगतक्रोधो महेश्वरः स्वस्मिन्नपि कामस्य प्रहाररूपा प्रवृत्तिमभ्यनुज्ञातवान् । अवसरज्ञानकुशलैर्भृत्यैस्तत्तदवसरे स्वामिषु कृताभ्यर्थना निश्चयेन फलसिद्धिं प्राप्नोतीति भाव ।

**भाषा**—पार्वती से विवाह कर लेने पर प्रसन्न चित्त शंकर ने अपने ऊपर कामदेव के प्रहारो के व्यापार को अनुमति दी । अवसर जानने वाले चतुर भृत्यों द्वारा स्वामी से की गई प्रार्थना निश्चय सिद्ध होती है ।

इत्थं प्रतिपादितं विवाहोत्सवमुपसंहरति—

**अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य**
**क्षितिधरपतिकन्यामाददानः करेण ।**
**कनककलशयुक्तं भक्तिशोभासनाथं**
**क्षितिविरचितशय्यं कौतुकाऽगारमागात् ॥ ९४ ॥**

सुर-गण बिदा कर शम्भु कर से पार्वती को ले अमल ।
कंचन-कलश-मय पुष्प-विरचित शयन गृह आये विमल ॥

**अन्वयः**—अथ इन्दुमौलिः तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्या करेण आददानः सन्, कनककलशयुक्तं भक्तिशोभासनाथं क्षितिविरचितशय्यं कौतुकाऽगारम् आगात् ।

**व्याख्या**—अथ = अनन्तरम्, इन्दुमौलिः = शिवः, तान् विबुधगणान् = तान् सुरसमूहान्, विसृज्य = प्रेष्य, क्षितिधरपतिकन्या = पार्वतीं, करेण=हस्तेन, आददानः=गृह्णन् सन्, कनककलशयुक्तं=सुवर्णघटसहितं, मङ्गलाऽर्थमिति शेषः । भक्तिशोभासनाथ=पुष्पादिरचनाशोभित, क्षितिविरचितशय्यं = स्थण्डिलकल्पित-तल्पं, कौतुकाऽगारं = शय्यागृहम्, आगात् = जगाम ।

**व्युत्पत्तिः**—इन्दुमौलिः=इन्दुः मौलौ यस्य स इन्दुमौलिः । विबुधगणान्= विबुध्यन्ते इति विबुधाः, तेषा गणाः विबुधगणाः, तान् विबुधगणान् । क्षितिधरप-तिकन्या = धरन्तीति धराः, क्षितेर्धराः, क्षितिधराः, "क्षोणी ज्या काश्यपी क्षितिः" इत्यमरः । क्षितिधराणा पतिः क्षितिधरपतिः, तस्य कन्या क्षितिधरपतिकन्या, ता क्षितिधरपतिकन्याम् । आददानः = आदत्ते इति आददानः । कनककलश-युक्तं=कनकस्य कलशः कनककलशः, तेन युक्त कनककलशयुक्तं, तत् । भक्तिशो-भासनाथं = भक्तीना शोभा भक्तिशोभा, तया सनाथं भक्तिशोभासनाथं, तत् । क्षितिविरचितशय्य=क्षितौ विरचिता क्षितिविरचिता, सा शय्या यस्मिन् तत् क्षिति-विरचितशय्यं, तत् । अत्राऽर्थे पारस्कराऽऽचार्य आह—"त्रिरात्रमक्षाराऽलवणा-शिनौ स्यातामधः शयीयाता संवत्सरं न मिथुनमुपेयाता द्वादशरात्रं षड्रात्रं त्रिरा-त्रमन्ततः" इति । कौतुकाऽगारं = कौतुकस्य अगारं कौतुकाऽगारं, तत् । "भव-नाऽगारमन्दिरम्" इत्यमरः ।

**भावार्थः**—कामदेवानुग्रहानन्तरं महेश्वरस्तानिन्द्रादिदेवगणान् स्वस्थानगम-नायाज्ञप्य पार्वतीं हस्ते गृहीत्वा मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं पुष्पादिरचित-शोभायुक्तं भूप्रदेशकल्पितशयनीयं शयनमन्दिरं जगामेति भावः ।

**भाषा**—इसके बाद शंकर इन्द्रादि देवों को विदा करके, हाथ से पार्वती को पकड़ कर, कनककलश से युक्त, पुष्पसुसज्जित, पृथ्वी पर रचित शय्या वाले शयन मे गये ।

अथ सम्भोगवर्णनस्योत्तरसर्गस्य बिन्दुमुपक्षिपति—

**नवपरिणयलज्जाभूषणां तत्र गौरीं**
**वदनमपहरन्तीं तत्कृताक्षेपमीशः ।**
**अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्**
**प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥**

भूषण त्रपा हो वक्र सखियों को हटा सत्कार से ।
एसी अपर्णा हस पडी शिव-प्रमथ वदन विकार से ॥

**अन्वयः**—तत ईशः नवपरिणयलज्जाभूषणा तत्कृताक्षेप वदनम् अपहरन्तीं शयनसखीभ्यः अपि कथञ्चित् दत्तवाचं गौरी प्रथममुखविकारैः गूढ हासयामास ।

**व्याख्या**—तत्र=कौतुकाऽगारे, ईशः =शिवः, नवपरिणयलज्जाभूषणा= नूतनविवाहत्रपाऽलङ्काराम् , अत एव—तत्कृताऽऽक्षेप=शिवकृताऽऽकर्षण, उन्नमितमिति यावत् , वदनं=मुखम् , अपहरन्तीं=साचीकुर्वन्तीं, शयनसखीभ्यः अपि=स्वीयवयस्याभ्यः अपि, विस्रब्धसखीभ्य इत्यर्थः । कथञ्चित्=कृच्छ्रेण, दत्तवाच=दत्तोत्तरा, गौरीं=पार्वतीं, प्रमथमुखविकारैः=गणाऽऽननविकृतिभिः, गूढम्=अप्रकाशं, हासयामास=हासयति स्म ।

**व्युत्पत्तिः**—तत्र=तस्मिन् इति तत्र, "सप्तम्यास्त्रल्" इति त्रल् । ईशः= ईष्टे इति ईशः, "शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः" इत्यमरः । नवपरिणयलज्जाभूषणा=नवश्चाऽसौ परिणयः नवपरिणयः, "तथा परिणयोद्वाहोपयामाः पाणिपीडनम्" इत्यमरः । नवपरिणेन लज्जा नवपरिणयलज्जा, सा भूषण यस्याः सा नवपरिणयलज्जाभूषणा, तां नवपरिणयलज्जाभूषणा । तत्कृताऽऽक्षेपं=कृतः आक्षेपः यस्य तत् कृताक्षेपं, तेन कृताऽऽक्षेपं तत्कृताऽऽक्षेपं, तत् । अपहरन्तीम्= अपहरतीति अपहरन्ती, ताम् अपहरन्तीं, शतृप्रत्ययः । शयनसखीभ्यः=शयने सख्यः शयनसख्यः, ताभ्यः शयनसखीभ्यः । दत्तवाचं=दत्ता वाक् यया सा दत्तवाक् ता दत्तवाचं । गौरी="षिद्गौरादिभ्यश्च" इति ङीष् । "उमा कात्यायनी गौरी काली हैमवतीश्वरी" इत्यमरः । प्रमथमुखविकारैः=प्रमथाना=पारिषदाना, मुखानि प्रमथमुखानि, "प्रमथाः स्युः पारिषदाः" इत्यमरः । प्रमथमुखाना विकाराः प्रमथमुखविकाराः, तैः प्रमथमुखविकारैः । प्रमथाश्च हास्यरसाऽधिदेवताः । यथाऽऽह भगवान्भरतः—"शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः"